श्री भगवद्विखनोमुनिप्रणीतं

# श्रीवैखानसगृह्यसूत्रम्

द्वितीयं सम्पुटम्

श्री श्रीनिवासमखिवेदान्तदेशिकैः विरचितया
श्रीसूत्रतात्पर्यचिन्तामण्याख्यया व्याख्यया समलङ्कृतम्

वैयाकरणपञ्चानन
आकुलमन्नाडु श्री रों. पार्थसारथिभट्टाचार्यैः
संशोधितम्

तिरुमल तिरुपति देवस्थानम्, तिरुपति।
1997

**VAIKHANASA GRUHYA SUTRAM - VOL. II**

Commentator :

**SRINIVASAMAKHI VEDANTHADESIKA**

EDITED BY:

**AKULAMANNADU ROMPICHERLA PARTHA SARATHY BHATTACHARYA**

T.T.D. Religious Publications Series No. 495





First Edition : 1967
Re-Print : 1997

**Price : Rs. 45/-**

Copies: 1,000



*Published By:*

M.K.R. Vinayak, I.A.S.,
*Executive Officer,*
Tirumala Tirupati Devasthanams,
Tirupati - 517 507.

Printed At :
**Gayathri Art Printers**
5-9-33, Basheerbagh
Hyderabad-500029.
Phone : 230210

# FOREWORD

*The Vedas are acknowledged as the fountainhead of our culture and heritage. They have six auxiliaries or Vedangas viz., Siksha, Vyakarana, Chandas, Nirukta, Jyotisha and Kalpasutra. Among them, the Kalpa Sutra occupies a very prominent place as it deals extensively with Yajnas and Yagas and other rituals. The Kalpasutras are further divided into 1. Srauta sutras, 2. dharma sutras and 3. gṛhya sutras. Unlike other sutras, gṛhya sutras pertain to the religious rites, daily as well as occasional, to be observed by the householders.*

*Though there are disparate gṛhya sutras for those who follow different traditions and systems the gṛhya sutras of Sage Sri Vikhanasa are considered more ancient and authoritative. It is said the sage, an incarnation of Lord Brahma codified them at the behest of Sriman Narayana. The gṛhya sutras of Sri Vikhanasa Maharshi have an added significance at Tirumala. The mode of rituals in the temple of Lord Venkateswara is done in accordance with the Vaikhanasa agamas. As such, the gṛhya sutras of Sri Vikhanasa serve as a useful manual to the archakas for their daily worship.*

*The present publication in two volumes is a reprint of the book published in 1967. The text contains Srinivasa Dikshita's 'Sutra Tatparya Chintamani' as it sets at rest many divergent views with elaborate discussion and cogent arguments.*

***Executive Officer***
***T.T.Devasthanams, Tirupati***

## अथ त्रिंशः खण्डः

अथ वर्षवर्धनम् ॥ १ ॥

अथेत्यादि । अथ—नामकरणानन्तरम् । आयुष्यवर्षा वर्धन्तेऽनेनेति वर्षवर्धनम् । संस्काराणां मध्ये पठितत्वात् अकरणे प्रायश्चित्तविधानाच्चेदं नित्यम् ।

दारकस्य जन्मनक्षत्रं यद्दैवत्यं सास्य देवता प्रधाना भवति ॥ २

दारकस्येत्यादि । दारकस्य कुमारस्य । जन्मनक्षत्रं यद्दैवत्यं—कृत्तिकासु जातस्याग्निः—रोहिण्यां जातस्य प्रजापतिः इत्यादि । इतरे अंग-देवताः । स्वजन्मनक्षत्राधिपतयो देवाः ब्राह्मणाश्च पूजनीयाः ।

स्मृतिः— 'सर्वैः स्वजन्मदिवसे स्नातैर्मंगलवारिभिः ।
गुरुदेवाश्च विप्राश्च पूजनीयाः प्रयत्नतः ॥

स्वनक्षत्रञ्च पितरस्तथा देवाः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः' । इति

आयुष्याभिवृद्ध्यर्थमश्वमेधफलावाप्तेश्च कर्तव्यम् ।

तस्मादाघारं हुत्वा तदादि देवतानक्षत्राणि च जुहुयात् ॥ ३ ॥

'अग्नये कृत्तिकाभ्यः—प्रजापतये रोहिण्यै—सोमाय मृग-शीर्षाय—रुद्राय आर्द्रायै—अदित्यै पुनर्वसुभ्यां—बृहस्पतये तिष्याय—सर्पेभ्यः आश्रेषाभ्यः—पितृभ्यो मघाभ्यः—अर्यम्णे फल्गुनीभ्यां—भगाय फल्गुनीभ्यां—सवित्रे हस्ताय—त्वष्ट्रे चित्रायै—वायवे निष्ट्यायै—इन्द्राग्निभ्यां विशाखाभ्यां—मित्राय अनूराधेभ्यः—इन्द्राय ज्येष्ठायै—प्रजापतये मूलाय—अद्भ्यः अषाढाभ्यः—विश्वेभ्यो देवेभ्यः अषाढाभ्यः—ब्रह्मणे अभिजिते—

विष्णवे श्रोणायै – वसुभ्यः श्रविष्ठाभ्यः – वरुणाय शतभिषजे – अज एक-पदे प्रोष्ठपदेभ्यः – अहिर्बुध्न्यै प्रोष्ठपदेभ्यः – पूष्णे – रेवत्यै – अश्विभ्यां अश्वयुग्भ्यां – यमाय अपभरणीभ्यः स्वाहा । व्याहृतिः ॥ ४ ॥

होमप्रकारः कथमित्याकांक्षायामाह **अग्नय इत्यादि अपभरणीभ्य-स्स्वाहा** इत्यन्तेन ।

**स्मृतिः** – 'सौरे मासे तिथिर्नो चेत् चान्द्रमासस्तु गृह्यते ।
तिथिर्नक्षत्रमेकस्मिन् मासि द्विदिनभाग्यदि ॥
तिथिः पूर्वा तु कर्तव्या जन्मनक्षत्रमन्ततः ।
एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।
तत्राद्ये पितृकार्याणि दैवकार्याणि चोत्तरे' ॥ इति

कर्तव्यानीत्यन्वयः ।

**संग्रहे** – 'यस्मिन् मासे द्विनक्षत्रं तिथिर्वा संभवेद्यदि ।
पित्र्यं पूर्वे तु कर्तव्यं जन्मर्क्षमपरे तथा' ॥ इति

**व्याघ्रपादः** – 'यस्मिन् राशिगते सूर्ये विपत्तिरुपपद्यते ।
तेषां तत्रैव कर्तव्याः पिंडदानोदकक्रियाः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने विंशः खण्डः

## अथ एकत्रिंशः खण्डः

आर्षभं वैरवणमग्नीषोमीयं वैष्णवं धातादि मूलहोमं यद्देवादि-कूश्माण्डहोममासावित्रव्रतबन्धात् जुहोति ॥ १ ॥

आर्षभमित्यादि । ऋषभपदघटितमन्त्रद्वयसंग्राहार्थमार्षभमित्युक्तम् ।
[1] यद्देवाः, देवेभ्य आदित्येभ्यः—देवा जीवनकाम्या, विश्वेभ्यो देवेभ्यः—ऋतेन द्यावापृथिवी, द्यावापृथिवीभ्यां सरस्वत्यै—इन्द्राग्नी मित्रावरुणौ, इन्द्राग्नीमित्रावरुण सोमधातृबृहस्पतिभ्यः—सजातशँसात्, अग्नये जातवेदसे, यद्वाचा यन्मनसा, अग्नये गार्हपत्याय—येन त्रितः ज्योतिषे, यत्कुसीदं, अग्नये—यन्मयि माता, अग्नये गार्हपत्यायपय—यदा पिपेष, अग्नये—यदन्तरिक्षं, अग्नये गार्हपत्याय, यदाशसा, अग्नये गार्हपत्याय—अतिक्रामामि, अग्नये—त्रिते देवाः, अग्नये गार्हपत्याय—दिवि जाताः, अद्भ्यः शुन्धनीभ्यः—यदापो नक्तं, अद्भ्यो हिरण्य-वर्णाभ्यः—इमं मे वरुण, तत्त्वायामि, वरुणाय—त्वं नो अग्ने, सत्वं नो नो अग्ने, अग्नीवरुणाभ्यां—त्वमग्ने, अग्नये अयसे ।

यददीव्यं, अग्नीन्द्राभ्यां—यद्धस्ताभ्यां, उग्रं पश्याराष्ट्रभृद्भ्यामप्सरोभ्यां—उग्रं पश्ये राष्ट्रभृत्, उग्रं पश्याराष्ट्रभृद्भ्यां—अवते, उदुत्तमं, इमं मे वरुण, तत्त्वायामि, वरुणाय—त्वं नो अग्ने, सत्वं नो अग्ने, अग्नीवरुणाभ्यां—संकुसुको, निर्यक्ष्मं, दुश्शँसानु—देवेभ्यः संवर्चसा पयसा, त्वष्ट्रे—आयुष्टे विश्वतः, अग्नये—आयुर्दा अग्ने, आयुर्दायाग्नये—इममग्न आयुषे, अग्नीवरुणादितिविश्वभ्यो देवेभ्यः—अग्न आयूँषि, अग्ने पवस्व, अग्निः ऋषिः पवमानः, अग्नये पवमानाय—अग्ने जातान्, सहसा जातान्, अग्नये जातवेदसे—अग्ने यो नोऽभितः, अग्नये वृत्रघ्ने—अग्ने योनः, अग्नये—यो नश्शपात्, उषोनिसृग्भ्यां—यो नस्सपत्नः, देवेभ्यः—यो मां द्वेष्टि, यो अस्मभ्यं, अग्नये जातवेदसे—सँशितं, ब्रह्मणे—

---

1. अत्र आदित्येभ्यः देवेभ्य इदं न मम' इत्यादि उद्देश्यत्यागबोधकं वचनं प्रयोक्तव्यं न वेति विचारः पञ्चदशखण्डे १४८ पुटे द्रष्टव्यः ।

उदेषां, अग्नये – पुनर्मनः, अग्नये वैश्वानराय । एवं यद्देवादिकूश्मांडहोमं जुहुयात् । 'यद्देवादेवहेळनं यददीव्यन्नृणमहं, बभूव आयुष्टे विश्वतो दध'दित्येतैराज्यं जुहुत वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत यदर्वाचीनमेनो-भ्रूणहत्यायास्तस्मान्मोक्ष्यध्वे' इतीत्यादि केचिदच्छिद्रपाठोक्तमपि कुर्वन्ति ।

भृगुः— 'यद्देवादि चतुस्सूक्तैः जुहुयादाज्यमन्वहम् ।
वैश्वानरायेति जपन्नुपतिष्ठेत पावकम्' ॥ इति

यद्देवाः, आदित्येभ्यः – देवा जीवनं, अग्नये गार्हपत्याय – ऋतेन द्यावापृथिवीभ्यां सरस्वत्यै – सजातशँसात् जातवेदसे – यद्वाचा, अग्नये गार्ह-पत्याय–यद्धस्ताभ्यां, अदीव्यन्नृणं यन्मयि मातादयः उक्ताः। अत्र **बोधायनः** । समित्पाणिर्यजमानाय लोकेऽवस्थाय (?) वैश्वानराय प्रतिवेदयाम' इति द्वादशर्चेन सूक्तेनोपस्थाय 'यन्मया मनसा वाचा कृतमेनः कदाचन । सर्वस्मान्मेलिंतो मोग्धि त्वँ हि वेत्थ यथातथं स्वाहे' ति समिधमभ्याधाय वरं ददाति' इति । **आसा-वित्वव्रतबन्धात्** जुहोति । **आसावित्वव्रतबन्धात्** उपनयनपर्यन्तं । जन्ममासे जन्मनक्षत्रे जुहुयादित्यर्थः । अत्र **बोधायनः**– 'अथ संवत्सरे षट्सु षट्सु मासेषु, चतुर्षु मासेषु, ऋतौ ऋतौ, मासि मासि वा कुमारस्य जन्मनक्षत्रे कुर्यादि' ति ॥

**[1]उपनीतस्य च तत्र तत्र व्रतसूक्तानि ॥ २ ॥**

**उपनीत**स्येत्यादि । उपनयननक्षत्रस्य च द्वितीयजन्म (नक्षत्र) त्वात् यस्मिन् नक्षत्रे व्रतसूक्तानि भवन्ति तत्र तत्र (उपनीतस्य) कुर्यादित्यर्थः ॥

**वेदस्नातस्य यदह्नि विवाहो भवति मासिके वार्षिके वाह्नि तस्मिन् , यत् स्त्रिय आहुः पारंपर्यागतं शिष्टाचारं तत् करोति ॥ ३ ॥**

वेदस्नातस्येत्यादि । **वेदस्नातस्य** – समावृत्तस्य । **यदह्नि** – समा-वर्तितदिवसे विवाहो भवति । तस्मिन् नक्षत्रे गृहस्थस्य, **मासिके वार्षिके वा**

1. उपनीतस्य समावर्तनपर्यन्तं, उपनयननक्षत्रे तत्कालव्रतसूक्तानि पूर्वं हुत्वा पूर्ववत् कूश्माण्डहोमान्तं जुहुयात् इति ग्रन्थाक्षरमुदितकोशे टिप्पणी ।

मासे मासे संवत्सरे वा । अह्नि – न रात्रौ । तस्मिम् । यत् स्त्रिय इत्यादि । स्त्रियः पारम्पर्यागतं शिष्टाचारं यमाहुः, तं कुर्यात् । कुलवृद्धाः स्त्रियः यदाहुः तदपि तत्तत्काले कुर्यादिति भावः । 'य एव लौकिकाः त एव वैदिकाः' । इति

'येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गः तेन गच्छन् न रिष्यति'॥ इति स्मृतिः

शिष्टाचारविषये बोधायनः – 'प्रत्यक्कालकाद्वनात् दक्षिणेन हिमवन्त-मुदक्पारियात्रमेतदार्यावर्तं तस्मिन् य आचारः सः प्रमाणम् । गंगायमुनयोरन्तर-मित्येके । अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति ।

'पश्चात्सिन्धुर्विधरणी सूर्यस्योदयनं पुनः ।
यावत् कृष्णा विधावन्ति तावद्धि ब्रह्मवर्चसम्' ॥ इति

मनुः — 'धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ।
द्वितीयं धर्मशास्त्रञ्च तृतीयं लोकसंग्रहः ॥

आसमुद्रात्तु वै पूर्वमासमुद्रात्तु दक्षिणात् ।
हिमवद्विन्ध्ययोर्मध्ये आर्यावर्तं प्रचक्षते' ॥

'सरस्वतीदृषद्वत्योः देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशमार्यावर्तं प्रचक्षते ॥

तस्मिन् देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां सदाचारस्स उच्यते ॥

कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाश्शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरम्' ॥

'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परम् ॥
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः' ॥ इति

**तथाऽग्निष्टोमादियज्ञानामाधाननक्षत्र वर्षान्ते करोति ॥ ४ ॥**

तथेत्यादि। तथा पूर्वोक्तप्रकारेण। आधाननक्षत्रे सर्वयज्ञानां आधान नक्षत्र एव कुर्यात्। आवश्यकत्वाभिप्रायेणैवमुक्तम्। नित्यत्वाभिप्रायेण वर्षान्ते इत्युक्तं इति न पौनरुक्त्यम्।

**तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रविवर्षेणाधिकान्यधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति ॥ ५ ॥**

तदेवमित्यादि। तत्–वक्ष्यमाणब्रह्मशरीरत्वकारणात्। एवं उक्त प्रकारेण। वर्तमानस्य–प्रवर्तयतः। अष्टमासेत्यादि मासशब्दविवरणं सिद्धान्तशिरोमणौ।

'मस्यन्ते परिमीयन्ते स्वकाला वृद्धिहानितः।
मासा एते सुता नाम शतं तिथिसमन्विताः॥
वसन्त्यृषन्तो वर्षेषु प्रस्तावेषु चतुर्विधाः।
ऋषिरित्येरमरणे (?) वर्षत्वं तेषु तेन च' ॥ इति

रविवर्षादीनां लक्षणं गर्गः।

'चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रविर्यावत्कालं मासस्स भास्करः॥
चान्द्रसावनसौराणां मासानां च प्रभेदतः।
चान्द्रसावनसौराः स्युः त्रयस्संवत्सरा अपि' ॥ इति

स्मृत्यन्तरे — 'चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा।
शुक्लपक्षादिकं मासं नांगीकुर्वन्ति केचन' ॥ इति

स्मृत्यन्तरे — 'गर्भे वार्धुषिके भृत्ये प्रेतकृत्येऽनुमासिके।
सर्वदानानि होमाश्च सावने मासि कीर्तिताः॥
श्रौतस्मार्तानि कर्माणि मासोक्तानि व्रतानि च।
तिलदानादिदानानि चान्द्रे मासे वदन्ति हि ॥

एकोत्तरषष्ट्युक्तशतत्रयदिनानि च ।
तावत्परिमितः कालो गुरोर्मासस्तु वत्सरः ॥

चतुर्विंशत्युत्तराणि शतत्रयदिनानि च ।
नाक्षत्रवत्सरः प्रोक्तः आयुर्दाये प्रशस्यते' ॥ इति

ज्यौतिषे — 'सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते' ॥ इति

ब्रह्मसिद्धान्ते — 'सौरेणाब्दस्तु मानेन यथा भवति भार्गव ।
सावने तु तथा मासे दिनषट्कं न पूर्यते ॥

दिनराशाश्च ते राम प्रोक्तस्संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन च ॥

एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ।
एकोद्दिष्टे विवाहादौ ऋणादौ सौरसावनौ ॥
सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः' ॥ इति

पितामहः — 'दैवे कर्मणि पित्र्ये च चान्द्रो मासः प्रशस्यते' ॥ इति

श्रीभारते: — 'पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ।
एकोद्दिष्टे विवाहादावृणादौ सौरसावनौ ॥
सदैव पितृकार्यादौ मासश्चान्द्रमसः स्मृतः' ॥ इति

सत्यव्रतः — 'विवाहव्रतयज्ञेषु सौरमासः प्रशस्यते ।
पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाऽऽब्दिकं' ॥ इति

बृहस्पतिः — 'रवेरप्युदये मानं चान्द्रं स्यात्पितृकर्मणि ।
यज्ञे सावनमित्याहुः राका सर्वव्रतादिषु' ॥ इति

ज्यौतिषे — ' द्वात्रिंशन्मासदिवसाः षोडशाथ घटीत्रयम् ।
विनाड्यः पञ्चपञ्चाशत् कालोऽयं त्वधिमासकः ॥

ग्रन्थान्तरे — ' द्वात्रिंशद्भिर्गतैर्मासैः दिनैष्षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्येकोऽधिमासकः ' ॥ इति

स्मृत्यन्तरे — ' सृष्टेः कारणभूतौ तौ सूर्याचन्द्रमसौ मिथः ।
तयोर्गतिवशात्कालः सर्वदा परिवर्तते ॥

ऊर्ध्वप्रदेशवर्ती च मन्दगामी दिवाकरः ।
अध.प्रदेशवर्ती च शीघ्रगामी निशाकरः ॥

तयोर्गतिवशाद्देशे मंडलस्य रवेरधः ।
व्यवस्थितममानं स्यात्सकलं शशिमंडलम् ' ॥ इति

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासौ सर्वकर्मसु निन्दितौ ॥

पर्वद्वयं संक्रमयोर्यदि स्यात् पर्वान्तरे संक्रमणद्वयञ्च ।
संसर्पकांहस्पतिमाससंज्ञौ सूर्येन्दुगत्या त्वधिमाससंज्ञौ ॥ इति

मासेषु द्वादशादित्याः तपन्ते हि यथाक्रमम् ।
नपुंसकोऽधिके मासः मंडलं तपते रवेः ॥ इति

शातातपः — ' मंडलान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋतैर्यातुधानाद्यैस्समाक्रान्तो विनाशकैः ॥

मलिम्लुचैस्समाक्रान्तः सूर्यसंक्रान्तिवर्जितः ।
मलिम्लुचं विजानीयात् गर्हितं सर्वकर्मसु ' ॥ इति

ज्यौतिषे — ' कन्यागतेऽथ वा सूर्ये वृश्चिके वाऽथ धन्वनि ।
मकरे वाऽथ मीने वा नाधिमासो विधीयते ' ॥ इति

ब्रह्मसिद्धान्ते — ' अमावास्यापरिच्छिन्नो मासस्स्यात् ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ' ॥ इति

अगस्त्यः — 'नष्टेन्दूर्वा यदा मध्ये द्वे संक्रान्ती यदा भवेत् ।
अंहस्पतिस्तथाऽऽद्यः स्यात् संसर्पः परतस्तथा' ॥ इति

सत्यव्रतः — 'राशिद्वयं यत्र मासे संक्रमेत दिवाकरः ।
नाधिमासो भवेदेषः मलमासस्तु केवलम्' ॥ इति

श्रीधरः — 'अमा च पूर्णिमा चैव यन्मासे युगलं भवेत् ।
यस्मिन् न दृश्यते वाऽपि चौलकर्मादि वर्जयेत् ॥

द्वितीयपूर्णिमायुक्तं विषमासं वदन्ति हि ।
पूर्णिमा च न दृश्येत मलमासः प्रकीर्तितः ॥

एकमासे द्वये पूर्णे दर्शस्यैकस्य संभवे ।
अग्निज्वालेति विख्याता सर्वकर्मविनाशिनी ॥

'अंहस्पतिरवन्तीषु संसर्पः कोसलेषु च ।
अधिमासस्तु पांचाले अन्यत्र तु न दोषभाक्' ॥ इति

**अशीतिवर्षाणीत्यादि** । अष्टमासाधिकत्र्यशीतिवर्षाणि सौरमासेन, अधिकानीत्युक्तत्वात् । सौरमानेन यदा अष्टमासयुक्तवर्षत्रयाधिकाशीतिवर्षाणि **अधिगच्छेयुः** भवन्ति । तदा (चान्द्रमान) **दृष्टसहस्रचन्द्रो भवति** । अस्मिन् पक्षे (सौरपक्षे) मासचतुष्टयाधिकदर्शनं भवति ॥[1]

**तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते ॥ ६ ॥**

**तमेनमित्यादि** । उक्तप्रकारेण वर्तमानमेनम् । **क्रियायुक्तं** वर्षवर्धन-क्रियायुक्तं **ब्रह्मशरीरमित्याचक्षते** । यद्वा – सहस्रचन्द्रजीविनं क्रियायुक्तं ब्रह्मविदा समानशरीरमित्याचक्षते ।

1. चान्द्रमानरीत्या तु अष्टमासाधिकाशीतिवर्षेषु दृष्टसहस्रचन्द्रो भवति । तथा हि :— अष्टमासाधिकाशीतिवर्षाणां माससंख्याक्रमेण अष्टाधिकषष्ट्युपेतनवशतं (९६८) इन्दवो जायन्ते । 'पंचमे पंचमे वर्षे द्वौ मासौ अधिमासकौ' इति वचनात् द्वात्रिंशदधिकमासास्सन्ति । तावन्तः इन्दवः जायन्ते । आहत्य सहस्रमिन्दवः भवन्ति । इति

मृष्टान्नदाता तरुणोऽग्निहोत्री
वेदान्तवित् चन्द्रसहस्रदर्शी ।
मासोपवासी च पतिव्रता च
षड्जीवलोके मम वन्दनीयाः ' ॥

इति भगवतोक्तम् । यद्वा क्रियायुक्तं -शताभिषेकक्रियायुक्तम् ।

**तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पूर्ववत् हुत्वा तथैव 'कपिल इवे'ति वृद्धस्य, वृद्धाया वा वदन् अक्षतोदकादीन् मूर्ध्न्यादध्यात् ॥ ७ ॥**

**तस्मादित्यादि । तस्मात्** वैष्णवत्वसंभवात् हेतोः ।

'न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः
सितमनसं तमवेहि विष्णुभक्तम् ' ॥

इति विष्णुपुराणस्मरणात् स्वकर्मानुष्ठानाद्धि वैष्णत्वसंभवः ।

एवं — आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवो नः कुले जातः स नस्सन्तारयिष्यति ॥

इत्यादिना पुत्रादीनां वैष्णवत्वसंभवेन पितृपितामहादीनामुत्तरणस्मरणाच्च तस्मादित्युक्तम् । **नान्दीमुखं कृत्वा** । अष्टादशसंस्कारेषु वर्षवर्धनस्यानन्तर्भावात् पृथक्त्वेन नान्दीमुखग्रहणम् । **शुक्लपक्षे शुद्धेऽहनीत्यादि** । उदगयने आपूर्यमाणपक्षे पुण्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्तिमृद्धिमिति वाचयित्वा औपासनाग्नावाघारं हुत्वा । **पूर्ववत्** नामकरणवत् स्विष्टाकारान्तं हुत्वा पञ्चवारुणं प्राजापत्यं स्विष्टाकारञ्च हुत्वा पूर्ववत् **अक्षतोदकादीन्** पाणिभ्यां गृहीत्वा 'कपिल इवे'ति मन्त्रेण वृद्धस्य वृद्धाया वदन् अक्षतोदकपुष्पादीन् मूर्ध्नि आदद्ध्यात् ॥

अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकम् ।
यत्तु पापस्य शान्त्यर्थं दीयते विदुषां करे ॥

नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ।
अपत्यविजयैश्वर्यस्वर्गार्थं यत्प्रदीयते ॥

दानं तत्काम्यमाख्यात ऋषिभिः धर्मचिन्तकैः ।
ईश्वरप्रीणनार्थं यत् ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद्विमलं शुभम् ' ॥ इति

देवलः — 'द्विहेतु षडनुष्ठानं षडंगं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥

नाल्पत्वं न बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धाश्रद्धे च दानानां वृद्धिक्षयकरे हिते ' ॥ इति **द्विहेतु** ।

धर्मश्चार्थश्च कामश्च व्रीलाहर्षभयानि च ।
**अनुष्ठान**निदानानि षडेतानि प्रचक्षते ॥

पात्रेभ्योदीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्मबुद्ध्या यत् **धर्मदानं** तदुच्यते ॥

प्रयोजनमपेक्ष्यैव यत्प्रसंगात् प्रदीयते ।
**तदर्थदान**मित्याहुः हैतुकं फलहेतुकम् ॥

स्त्रीपानमृगयाक्षाणां प्रसंगात् यत्प्रदीयते ।
अनर्हेषु च रागेण **कामदानं** तदुच्यते ॥

संसदि व्रीलया वाऽर्थो अर्थिभ्यो वा प्रयाचितः ।
प्रदीयते च यद्दानं **व्रीलादान**मिति स्मृतम् ॥

दृष्ट्वा प्रयाणे श्रुत्वा वा हर्षाद्यद्यत् प्रयच्छति ।
**हर्षदान**मिति प्राहुः दानं तद्धर्मचिन्तकाः ॥

रिक्तेभ्यश्चाप्यरिक्तेभ्यो वस्त्रतंडुलमृष्टभाक् ।
अपूपानि फलादीनि बालेभ्यो यद्दानि च ॥

आक्रोशनार्थं हिंसानां प्रतीकाराय यद्भवेत् ।
दीयते तापकर्तृभ्यो भयदानं तदुच्यते ॥

दाता प्रतिगृहीता वा श्रद्धा देयश्च धर्मयुक् ।
देशकालौ च दानानामंगान्येतानि षड्विदुः ॥

अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्यदिनकर्मा च षड्भिर्दाता प्रशस्यते ॥

शौचं शुद्धिर्महाप्रीतिरर्थिनां दर्शनं तथा ।
सत्कृतिश्चानसूया च दानश्रद्धेत्युदाहृताः ॥

यद्यत्र दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥

अवस्था देशकालानां पात्रदात्रोश्च संपदः ।
हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाप्यन्यथा भवेत् ॥ इति षडंगम्[1]

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड्विपाकयुगुद्दिष्टं षडेतानि विपाककम् ॥

नास्तिकस्तेनहिंस्रेभ्यः चोराय पतिताय च ।
पिशुनभ्रूणहर्तृभ्यः प्रदत्तं दुष्फलं भवेत् ॥

महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
परबाधाकृतं दानं स्थितमप्यूनतां व्रजेत् ॥

यथोक्तमपि यद्दत्तं चित्तेन कलुषेन तु ।
तत्तु संकल्पदोषेण दानं तुल्यफलं भवेत् ॥

युक्तांगैः सकलैः षड्भिः दानं स्याद्विपुलोदयम्' ।
अनुक्रोशवशाद्दत्तं दानमक्षय्यतां व्रजेत् ॥

1. षडङ्गेषु प्रतिगृहीतृदेययोः विवरणं न दत्तम् ।

[1] नवोत्तमानि, चत्वारि मध्यमानि विधानतः ।
अधमानि विशेषाणि त्रिविधत्वमिदं विदुः ॥
अन्नं विद्यावधूस्त्रीणां गोभूमश्वा(?)श्वहस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥
दद्यादाच्छादनं वासः परिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेष्यदानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ? ॥
बहुत्वादर्थजातानां संख्या शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ।
तामसानां फलं भुङ्क्ते.... तत्त्वे मानवस्सदा ॥
वर्णसंकरभावेन वार्धके यदि वा पुनः ।
बाल्ये वा दासभावे वा नात्र कार्या विचक्षणा ॥ इति
'एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते ।
दस्युभिर्मुषितेनेव प्रतिग्राहकयाचकौ' ॥ इति त्रिनाशम्

बृहस्पतिः — 'अतोऽयं सात्त्विकं दानमुदपूर्वन्तु शान्तिकम् ।
आशिषा पौष्टिकं विद्यात् त्रिविधं दानलक्षणम्' ॥ इति

मनुः 'येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तेन तेन हि भावेन प्राप्नोति प्रतिपूजनम्' ॥ इति

नारदः — 'आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ।
पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ॥
अन्नप्रदानञ्चारामाः पूर्तमित्यभिधीयते' ॥ इति

व्यासः — 'मातापित्रोश्च यद्दत्तं भ्रातृस्वसृसुतासु च ।
जायात्मजेषु यद्दत्तं सोऽनिन्द्यस्वर्गसंक्रमः ॥

1. पूर्वोपात्तदेवलवचने 'चतुष्प्रकार'मित्यस्य विवरणं नदत्तम् ।

पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

न केवलं ब्राह्मणानां दानं सर्वत्र शस्यते ।
भगिनी भागिनेयानां मातुलानां पितृष्वसोः ।
दरिद्राणाञ्च बन्धूनां दत्तं कोटिगुणं भवेत् ' ॥ इति

दक्षः — 'मातापित्रोर्गुरोर्मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तमक्षय्यमुच्यते ॥

हृतस्वा हृतदायाश्च ये विप्रा देशविप्लवे ।
अथार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ' ॥ इति

छागलेयः — 'प्रख्यापनं प्रार्थ्य धनं प्रश्नपूर्वं प्रतिग्रहः ।
याजनाध्यापने वादः षड्विधो वेदविक्रयः ' ॥ इति

शातातपः — 'प्रश्नपूर्वन्तु यो दद्यात् ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ' ॥ इति

स्मृत्यन्तरे — 'भविष्यत्यनेदानं वर्तमाने तु संक्रमे ।
अतीते च व्यतीपाते अन्येषु च यथेच्छया ' ॥ इति

शातातपः — 'कुर्यात्सदाऽयने मध्ये विषुवत्यां विषूवति ।
षडशीत्यामन्त्यमतो दानादिविषयः स्मृताः ' ॥ इति

वृद्धवसिष्ठः — 'वृषवृश्चिककुंभेषु सिंहे चैव यथा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ॥

कन्यायां मिथुने मासे (मीने?) धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः ' ॥ इति

याज्ञवल्क्यः — 'शतमिन्दुक्षये दानं सहस्रन्तु रविक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ' मिति ॥

भारद्वाजः — 'अश्रोत्रियः श्रोत्रियो वा अपात्रं पात्रमेव वा ।
विप्रब्रुवो वा विप्रो वा ग्रहणे दानमर्हति ' ॥ इति

गोदासीकन्यकाश्चैव तिष्ठन्नेव प्रयोजयेत् ।
वालं केशे तथा हस्तं न्यस्य हस्ते जलं क्षिपेत् ।
कर्णेऽजं पशवस्सर्वे ग्राह्या पुच्छे विचक्षणैः '' ॥

गृह्णीयान्महिषं शृंगे खरं वै पृष्ठभागतः ' ।
'व्यतीपाते वैधृतौ च दत्तमक्षयकृतद्भवेत ' ॥ इति

कालनिर्णये — 'कर्कटो मकरस्सिंहः कुंभोऽलिर्वृषभस्तुला ।
मेषः कन्या धनुर्मीनौ मिथुनश्चेति संक्रमाः ॥

द्वादशात्र क्रमाद्विद्यात् अयने दक्षिणोत्तरे ।
चत्वारोनन्तदा विष्णुपदास्स्युर्दक्षिणोत्तरे ॥

विषुवे तत्परे द्वौ तु चत्वारस्तदनन्तराः ।
षडशीतिमुखाः प्रोक्ताः त्रिंशत्पूर्वास्तु कर्कटे ॥

नाडिका मकरे तु स्युः पुण्या विंशतिरन्तराः ।
चतुर्ष्वनन्तराद्र्ध्वं प्राक् च षोडश षोडश ॥

संक्रमेषु च पुण्याः स्युः संक्रान्त्यां विषुवाह्वयोः ।
दश प्राक् दश पश्चैव पुण्याः स्युः षडशीतिषु ॥

षष्टिर्नाड्योह्यतीतासु पुण्यदा इति कीर्तिताः ।
संक्रमेऽहन्यहः कृत्स्नं पुण्यं स्नानादिकर्मसु ॥

अर्वाङ् निशि तथा निशाचेत् (?) भवेदावर्तनात्परः ।
कालं पुरातनस्याह्नः ऊर्ध्वञ्चेदुत्तरेऽहनि ॥

आवर्तनादधः कालात् निशीथसमये यदि ।
पूर्वोत्तराहर्द्वितयं पुण्यमाहुर्मनीषिणः ॥

प्रत्यूषे वा निशीथे वा यदि कर्कटसंक्रमः ।
पूर्वस्मिन्नह्नि कुर्वीत स्नानदानादिकं नरः ॥

प्रदोषे वा निशीथे वा माकरः संक्रमो यदि ।
पराह्ण एव सर्वत्र पुण्याः सन्निधिनाडिकाः ॥

स्नायात् श्राद्धञ्च दानञ्च विदध्यात् संक्रमेष्वपि ।
अयने विषुवद्विष्णुपद्योस्तु षडशीतिषु ॥

सदा मध्ये चापगमे कुर्यात् स्नानादिकं नरः ।
विष्णुपद्याह्वयेष्वत्र स्नानदानादिकं कृतम् ॥

सहस्रगुणमुद्दिष्टं षडशीतिमुखेषु च ।
विषुवत्ययने लक्षगुणं कोटिगुणं भवेत् ॥

तत्तत्संक्रान्तिपूर्वेषु तद्वदेवायनेष्वपि ।
मकरस्यायनेऽप्यादौ कालः स्नानादिनिश्चयः ॥

राहुदर्शनसंक्रान्तिविषुवात्ययवृद्धिषु ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते' ॥ इति

पराशरः — 'पुत्रजन्मनि यज्ञे च विषुवे संक्रमे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि' ॥ इति

ब्राह्मे — 'उपक्रमे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
पुण्यं कोटिगुणं मध्ये मूर्तकाले (?) त्वनन्तकम्' ॥ इति

स्मृत्यन्तरे — 'कार्मुकन्तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' ॥ इति

वृद्धगार्ग्यः — 'यदाऽस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' ॥ इति

'अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ' ॥ इति

स्मृत्यन्तरे – 'मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिका प्रोक्ता संकान्तिस्सप्तधा नृप ॥

मंदाऽध्वरेषु (?) विज्ञेया वृद्धौ मंदाकिनी तथा ।
क्षिप्रे ध्वांक्षीति जानीयात् उग्रे घोरा प्रकीर्तिता ॥

चरैर्महोदरी ज्ञेया क्रूरैः ऋक्षैश्च राक्षसी ।
मिश्रिता चैव विज्ञेया मिश्रैः ऋक्षैश्च संक्रमे ॥

द्विचतुःपञ्चसप्ताष्टनवद्वादश एवच ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥

ग्रन्थान्तरे - 'प्रत्यूषे कर्कटे भानुः प्रदोषे मकरं यदि ।
संक्रमेत् षष्टिनाड्यस्तु पुण्याः पूर्वोत्तराः स्मृताः ॥ इति

संक्रमस्तु निशीथे स्यात् षड्यामाः पूर्वपश्चिमाः ।
संक्रान्तिकालो विज्ञेयस्तत्र दानादिकं चरेत् ॥

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रकाः ॥

तिथीनामन्तिमो भागः तिथिकर्मसु पूजितः ।
ऋक्षाणां पूर्वभागः स्यात् ऋक्षकर्मसु पूजित ' ॥ इति

**अश्वमेधफलावाप्त्यै वर्षवर्धनमिति विज्ञायते ॥ १३ ॥**

**अश्वमेधेत्यादि ।** एकविंशतिपर्यन्तानामुत्तारकत्वसूचनार्थमश्वमेधफल-ग्रहणम्

'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः ।
ब्रह्महत्याश्वमेधाभ्यां नापरं पापपुण्ययोः ' ॥ वचनात्

अश्वमेधविषये—**बोधायनः**। 'दश पूर्वान् दशापरान् आत्मानञ्चैक-विंशतिकं पुनाति; तेषां पुत्रपौत्राः षष्टिर्वर्षसहस्राणि स्वर्गे लोके महीयन्ते' इति।

अथ गृह्यपरिशिष्टोक्तमप्यत्र लिख्यते। यथा—

'शताभिषेकं पूर्वाह्णे पुण्याहं द्विजभोजनम्।
स्थंडिलं चतुरश्रं वै यवैः अरत्निद्वयान्वितम्॥

कृत्वा पद्मं विलिख्यात्र लाजपुष्पाक्षतैर्युतम्।
सौवर्णान् मृण्मयांस्ताम्रान् राजतान्वा चतुर्दिशम्॥

मध्ये च विन्यसेत्कुंभान् वारिपूर्णान् सवस्त्रकान्।
गन्धपुष्पस्वर्णरत्नपवित्राण्येषु निक्षिपेत्॥

मध्यादावाहयेत्तेषु ब्रह्माणञ्च प्रजापतिम्।
परमेष्ठिनं हिरण्यगर्भं चतुर्मुखं चतुर्दिशम्॥

आसनं पाद्यमाचामं नमोन्तैर्नामभिर्ददेत्।
'आपो हिरण्य पवमानैः' संप्रोक्ष्य स्नानमाचरेत्॥

वस्त्राभरणपुष्पाद्यैः नैवेद्यान्तैः समर्च्य च।
आघारान्ते तु नक्षत्रहोममप्यार्षभादिना॥

हुत्वा तन्नाममन्त्रैश्च मूलहोमं पुनर्हुनेत्।
चरुणा 'ऽऽयुष्ट—आयुर्दे' त्याज्येन ब्रह्मसूक्ततः॥

प्राजापत्यं तथा ब्राह्मं वैष्णवं विष्णुसूक्तकम्।
'अग्ने नये' ति सूक्तञ्च षडृचापि सतन्त्रकम्॥

अष्टादशर्चमन्तं तु तथा पुरुषसूक्तकम्।
मृगाराख्यं तृतीयं स्यात् 'अग्नेर्मन्व' इतीरितः॥

'यावामिन्द्रे' ति चत्वारः सानुषंगाश्चतुर्थकाः।
'योवामिन्द्रे' ति चैवाष्टौ तादृशा एव पञ्चमः॥

'तनूस्तये'ति पूर्वेषां चतुर्णामनुषज्यते ।
ब्रह्मादिरुत्तरेषान्तु आदितस्त्रिपदोर्द्वयोः ॥

द्विपात्सु च चतुष्पात्सु पशुष्वित्युभयत्र च ।
पवमानानुवाकश्च षष्ठः कूश्माण्ड [1] उत्तरः ॥

'वैश्वानरो न ऊत्ये' ति सूक्तमष्टममष्टमः ।
एतानष्टौ घृतान्नेन हुनेत्पापापनुत्तये' ॥

स्थालीपाकाज्यभागान्तेऽग्नौ पवित्रादिकैर्गणैः ।
सप्ताहान्ते घृतान्नेन हुत्वा तु सवनत्रयम् ॥

मौनी व्रती हविष्याशी पूर्णपात्रं चतुष्पथे ।
'सिंहेम' इति चावेक्ष्य प्रास्यं नेक्षेद्द्विषां दिशि ॥

उपस्थाय 'सहस्रे' ति दक्षिणाभिर्द्विजार्चनम् ।
मुच्यते सर्वपापेभ्यो महतः पातकादपि ॥

गणहोमविधिस्त्वेष कूश्मांडस्तु प्रवक्ष्यते ।
अमायां पूर्णमास्यां वा केशश्मश्रूणि वापयेत् ॥

षण्मासञ्च चतुर्विंशद्द्वादशाष्टौ त्र्यहन्तु वा ।
ब्रह्मचारी हविष्याशी स्थालीपाकोक्तवच्चरुम् ॥

आघारकाज्यभागान्ते भूर्भुवस्सुवरोमिति ।
हुत्वा तत्सवितुरित्याज्यं यद्देवाद्यनुवाककान् ॥

यद्देवाद्या अच्छिद्रोक्ता

त्रीन् 'सिंहे–व्याघ्र' इति चतस्रश्चरुराहुतिः ।
अग्नेभ्याग्ने अंगिरश्च पुनरूर्जा सहेति च ॥

समित्पाणिर्वैश्वानरायेत्युपस्थाय तु दक्षिणे ।
समिदग्नौ निधायानूयाजमित्यादि पूर्ववत् ॥

---

1. उत्तरः — सप्तमः इति भावः ।

धार्ये त्रिषवणं कुर्यात् सर्वपापैः प्रमुच्यते ।
कूष्मांडगणहोमांस्तु कुर्याद्वै दोषशान्तये ॥

सकृत्तथा दशाब्दं वा हुत्वा ऋषभवैरयोः ।
अग्नीषोमीयं वैष्णवञ्च धातादीन् मूलहोमकम् ॥

यद्वाग्नेनयादींश्च ब्रह्मणे प्रजापतये ।
परमेष्ठिने हिरण्यगर्भाय मूलहोमं पुनर्हुनेत ॥

चरुणायुष्ट आयुर्दत्याज्येन ब्रह्मसूक्ततः ।
प्राजापत्यं तथा ब्राह्मं वैष्णवं विष्णुसूक्तकम् ॥

हुत्वाऽग्नेः कलशानाञ्च पूर्ववद्विष्टरे स्थितम् ।
कृत्वा वृद्धं तथा वृद्धां कर्ता वै सुसमाहितः ॥

दूर्वाक्षतसुगन्धांबुपुष्पाण्यादाय मूर्धनि ।
सकृदादाय हस्ताभ्यां वृद्धस्य कपिलेति च ॥

सनंकेति च वृद्धायाः मन्त्रलिंगं समुन्नयन् ।
आयुष्ट आयुर्दा इत्याभ्यां शुद्धोदैरभिषिच्य च ॥

पुनश्च 'या सुगन्धा' द्यैः प्रधानकलशोदकैः ।
अभिषिच्यावशिष्याथ याः प्राचीत्यादिभिस्ततः ॥

चतुर्दिक्स्थैर्यथालिंगं या ऊर्जेति प्रधानतः ।
दंपती अभिषिच्यैव वस्त्रं विप्राय दापयेत ॥

वस्त्राभरणगन्धाद्यैरलंकृत्योद्वयादिभिः ।
आदित्यं समुपस्थाय कुर्यादाज्यावलोकनम् ॥

स्वर्णादिपात्रे सम्भृते ससुवर्णं स्वकाकृतिम् ।
पश्येदायुरसीत्युक्त्वा तद्दद्यात् ब्राह्मणाय वै ॥

([1]अक्षतोदकपुष्पगन्धान् पाणिभ्यामादाय वृद्धस्य वृद्धाया वा वदन् देहांगसन्धौ शिरसि च क्षिपेत्। कपिल इवेत्यादिवदन्नित्यर्थः। स्त्रीपक्षे धर्मसंधा धर्मशरीरिणी भवेति वदेत्। अथाभिषिच्यावलोकनं कृत्वा सर्वा इष्टदेवताः तद्ग्रामालयदेवता नारायणाद्यास्तत्रावाहिता वा। 'विष्णुर्वै सर्वा देवता' इति श्रुतेः सर्वदेवमयं विष्णुमेव आसनाद्यैः विशेषेणार्चयेत्। कबलमात्र बलिः। यद्वा बलिशब्द उपहारपरः। अपूपोपदंशघृताद्यैस्समाहितानन्नेन ब्राह्मणांस्तर्पयेत्। भोजनान्ते दक्षिणाश्च दद्यात्। विवाहवत् ग्रामप्रदक्षिणं कृत्वा प्रदक्षिणस्य 'प्राचीरेवती मधुमतीरापस्स्रवन्तु शुक्राः ता म आपश्शिवास्सन्तु दुष्कृतं प्रवहन्तु मे' इत्यादिजपः।)

'सर्वदेवांश्च विष्णुं वाऽभ्यर्चयित्वा निवेद्य च।
भोजयेद्द्विप्रसाहस्रं यथेष्टं दक्षिणां ददेत्॥

ग्रामं प्रदक्षिणीकृत्य विवाह इव मन्त्रतः।
सायं गोमयसंलिप्ते स्थंडिले प्रागुदक्प्लवे॥

प्राची रेखा द्विपञ्चाशत् संख्यया तत्र संलिखेत्।
उदीचीश्च तथा रेखा द्वाविंशत्संख्यया लिखेत्॥

मध्ये वीथीस्तत्र हित्वा शिष्टे पदसहस्रके।
प्रत्येकं शालिपिष्टेन पूर्णचन्द्राकृतीः पुनः॥

कृत्वा निधाय तन्मध्ये रजतं कूर्चमेव वा।
सोममावाह्य सर्वत्र श्वेतैः कुमुदपत्रकैः॥

राजतैश्चोपकरणैः षोडशैरुपचारकैः।
अभ्यर्च्य दक्षिणे तस्य रोहिणीगणमर्चयेत॥

1. 'अक्षतोदके'त्यारभ्य 'इत्यादि जपः' इत्यन्तं कुण्डलितं वाक्यजातं एतत्खण्डे व्याख्यातपूर्वाणां सप्तमाष्टमनवमसूत्राणां सारार्थप्रतिपादकमिति, यद्यपि तत्रैव निवेशनीयम्। अथापि मातृकाभूततालकोशे अत्रैव विद्यमानत्वात् आज्याव-लोकनानन्तरं सर्वदेवतापूजादिकथनात् आज्यावलोकनस्य तत्रानुक्तत्वाच्च यथा मातृकं अनन्वितमपि अत्रैव निवेशितम्।

वामे चानावृष्टिगणमभ्यर्च्याथ निवेदयेत् ।
वर्षवर्धनमित्युक्तमश्वमेधफलप्रदम् ' ॥ इति

वर्षवर्धनं शताभिषेक इत्येकार्थाविति कैश्चिद्व्याख्यातम् -सत्यम् । पृथक्त्वेन प्रतिपादनात् पृथगेव गृह्यपरिशिष्टे उक्तत्वात् 'वर्षवर्धन' मित्यारभ्य उपसंहारे 'वर्षवर्धनमिति विज्ञायते' इत्युक्तत्वाच्च वर्षवर्धनमिति पृथग्व्यवहारः ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने एकविंशः खण्डः ।

## अथ द्वाविंशः खण्डः

**अथ षष्ठे मास्यन्नप्राशनम् ॥ १ ॥**

अथेति । वर्षवर्धनानन्तरम् । यद्वा पञ्चममासानन्तरम् षष्ठे मासीति युग्ममासानामुपलक्षणम् ।

गृह्यः · 'षष्ठादियुग्ममासेषु अर्वाक् संवत्सराच्छिशोः ।
अन्नस्य प्राशनं कुर्यान्मासं नक्षत्रमिष्यते ' ॥ इति

ज्यौतिषे — 'नवान्नाशन उद्वाहे नाम कृत्वा (?) मघाः शुभाः ।
नवास्त्र (?) वस्त्रमैन्द्राग्नौ विद्यारंभे तु रौद्रभम् ॥

'आदित्यतिष्यवसुसौम्यमघानिलाश्वि-
मित्राजविष्णुवरुणोत्तरपौष्णचित्राः ।

बालान्नभोजनविधौ दशमे विशुद्धे
चित्रां (?) विहाय नवमीं तिथयश्शुभाः स्युः ' ॥ इति

बृहस्पतिः — 'भुक्तौ स्वस्थाः शशी लग्नेप्यजमीनाल्यधोमुखाः ।
वर्जनीया नवान्नेतु खस्थजीवझषौ शुभौ ' ॥ इति

गार्ग्यः — 'मृतौ कुजं स्मरे शुक्रं भुक्तौ यत्नेन वर्जयेत् ।
फलपूर्णप्रसूतानां क्रमेणाग्रयणे हिताः ॥
मीनालिमेषा अन्यत्तु नवभुक्तिवदिष्यते ' ॥ इति

**शुक्लपक्षे दिने शुद्धे तत्राज्येनाघारः ॥ २ ॥**

शुक्लपक्ष इत्यादि । शुद्धे दोषरहिते । यद्वा – युग्मभागे तत्र पूर्वोक्त-गुणयुक्ते 'एन कुमारमन्नप्राशनकर्मणा संस्करिष्यामि ' इति संकल्प्य आघारं हुत्वा ।

**धातादिमूलहोमं पूर्ववत् त्रिवृत्प्राशनम् ॥ ३ ॥**

धातादीति । **पूर्ववत्** जातकर्मवत् ।

**प्राङ्मुखं मंगलयुक्तं कुमारं विष्टरमारोप्य, 'भूरपा'मिति पायसमन्नं प्राशयेत् ॥ ४ ॥**

**'योगे योगे तवस्तर' मित्याचमनं ददाति ॥ ५ ॥**

**आश्वलायनः** । 'षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामः तृतीये ब्रह्मवर्चसकामः घृतोदनं तेजस्कामः दधिमधुघृतं (श्रम) मिश्रमन्नं प्राशयेत् ।' इति

**मार्कंडेयः** — 'देवतापुरतस्तस्य धात्र्युत्संगगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रेऽथ कांचने ॥

मध्वाज्यकनकोपेतं पाययेत्पायसं ततः ।
तस्याग्रतोऽथ विन्यस्य शिल्पभांडानि सर्वशः ॥

शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ।
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति' ॥ इति

**अथ प्रवासागमनम् ॥ ६ ॥**

अथेत्यादि । **अथ** अन्नप्राशनानन्तरम् । **प्रवासागमनम्** — बालग्रहादिदोषनिवारणार्थं तदधिपस्य स्कन्दस्य पूजामुद्दिश्य गत्वा आगमनम् । 'सेनानीनामहं स्कन्दः' इति भगवतैवोक्तत्वात् ।

'एवं मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ।
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ।
तेषां प्रशमनं कुर्यात् स्नानं धूपं तथा जपम् ॥

बलिकर्मोपहारैश्च स्कन्दस्येज्या विशेषतः ।
एवमेवार्चितास्सर्वे प्रयच्छन्ति शुभं नृणाम् ॥

आयुर्दीर्घञ्च राजेन्द्र! सम्यक् पूज्य नमस्कृता:' ॥

ऊर्ध्वन्तु षोडशाद्वर्षात् ये भवन्ति .... .... ॥

तानहं संप्रवक्ष्यामि'

इत्यारभ्य सर्वाण्युक्तानि स्कन्दपूजारूपेण ।

**पुष्पापूपदक्षिणादिसंभारान् कुमारञ्च गृहीत्वा 'कनिक्र'दादिना आलयं गुहस्य गच्छेत् ॥ ७ ॥**

पुष्पेत्यादि । कनिक्रदादिना । आदिशब्देन अप्रतिरथबन्धुभिश्च सह गच्छेत् ।

**प्रदक्षिणमर्चनं प्रणामो गुहस्य ॥ ८ ॥**

प्रदक्षिणमित्यादि । फलापूपतांबूलादीनि निवेद्य दक्षिणां दत्वा ।

**तच्छिष्टेन पुष्पादिना 'गुहस्य शेष' मिति तन्नाम ऊहित्वा बालमलंकृत्य शान्तिं वाचयित्वा निवर्तयेत् ॥ ९ ॥**

तच्छिष्टेनेत्यादि । शान्तिशब्देन पुण्याहम् । यद्वा. शन्नो मित्रादि ।

**प्रोष्यागतं 'सोमस्य त्वा' इत्यंकमारोप्य 'आयुषे वर्चसे' इति पिता मूर्ध्नि जिघ्रति ॥ १० ॥**

**वृषभं नमस्कृत्य दक्षिणपाणेः सांगुष्ठमंगुलीर्गृहीत्वा कनिष्ठिकादि 'अग्निरायुष्मा' नित्यादिकैः विसर्जनम् ॥ ११ ॥**

**'आयुष्टे विश्वतः–प्रतिष्ठ वायौ' इति दक्षिणादिकर्णयोर्जपनम् ॥ १२ ॥**

**उदङ्मुखं ब्रह्मादिदेवानां गुरूणाञ्च प्रणामं कारयेत् । पादोदकं दत्वा ॥ १३ ॥**

उदङ्मुखमित्यादि । गुरूणामित्यादि । बहुवचनं—

'पिता माता तथाऽऽचार्यो मातुलः श्वशुरोऽग्रजः ।
वर्णज्येष्ठः पितृव्यश्च मातामहपितामहौ ।
तत्पत्न्यः सोदरः पित्रोः धात्री च गुरवः स्मृताः ॥

इत्युक्तानां ग्राहकम् । पित्रादीनां प्रणामं कारयेत् । **पादोदकं**—पित्रादीनां पादोदकं । यद्वा विष्णोस्तद्भक्तानां वा ।

वाराहे — 'पिबेत्पादोदकं यस्तु वैष्णवानां ममापि वा ।
न तत्राचमनं कुर्यात् यथा सोमे द्विजोत्तमः ॥
विष्णोः पादोदकं देवि शिरसा धारयन् पिबन् ।
यो नरो वसुधे! नित्यं स याति परमां गतिम्' ॥ इति

**अथ पूर्ववत् सगुडभक्षस्यान्नस्य सपिंडैः श्रोत्रियैस्सह भोजनं स्वस्तिवाचनम् ॥ १४ ॥**

**अथेत्यादि** । पाठक्रमादर्थक्रमो बलीयानिति पुण्याहानन्तरं (स्वस्तिवाचनानन्तरं) भोजनम् ।

**पिंडवर्धनमिति विज्ञायते ॥ १५ ॥**

**पिंडवर्धनमित्यादि** । प्रोष्यागतमित्यारभ्य पिंडवर्धनमिति केचिद्वदन्ति । अव्यवधानेनोक्तत्वात् पुण्याहं द्विजभोजनं च पिण्डवर्धनमिति केचित् । पिंडशब्देन शरीरमुच्यते ।

**श्रीविष्णुपुराणे** — 'पिंडः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः' इति ।

समस्तदोषनिरसनद्वारा आयुष्याभिवृद्धिरिति यावत् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने द्वाविंशः खण्डः ।

## अथ त्रयोत्रिंशः खण्डः

अथ वर्षे प्रथमे तृतीये वा चौलकम् ॥ १ ॥

अथेत्यादि। अथ पिंडवर्धनानन्तरम्। वा शब्दः कालान्तरपरः

बृहस्पतिः — 'तृतीयाब्दे शिशोर्गर्भात् जन्मनो वा विशेषतः।
पञ्चमे सप्तमे वापि स्त्रियः पुंसो यथा सम' मिति ॥

शंखः — 'तृतीये वर्षे चूडाकर्म पञ्चमे वा'। इति

बृहस्पतिः — 'क्षौरेणैवाऽयुषो वृद्धिः कृतेन समये कृते।
अशुभे समये चैव कृतमायुःक्षयाय च ॥

तस्मात् सम्यक् परीक्ष्यैव कर्तव्यं क्षौरमायुषे।
बुधैरायुष्यमित्युक्तं चूडाकर्मेति केश्चन' ॥ इति

अन्यत्र — 'गर्भिण्यां मातरि शिशोः क्षौरं सूनोर्न कारयेत्।
षष्ठाब्दे षोडशाब्दे च विवाहाब्दे तथैव च ॥

अन्तर्वत्न्याञ्च जायायां क्षौरं कुर्वन् विनश्यति।
रात्रौ क्षौरं न कर्तव्यं न जल्पेन्न प्रसञ्जयेत्।
यद्यवश्यं प्रसक्तश्चेदायुःकर्मेति कीर्तयेत्' ॥

कालान्तरपरत्वेन निषेधमाह —

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्।
पञ्चाब्दात् प्रागथोर्ध्वन्तु गर्भिण्यामपि वापयेत् ॥

शताभिषेकेऽप्येवं स्यात् कालो वेदव्रतेष्वपि।
अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात्पुनः शुभे' ॥ इति

गार्ग्यः — 'पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत् ।
शस्त्रेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् ॥

सवनात्प्रथमे वर्षे तृतीये पञ्चमेऽपि वा ।
दामोदरमतं ह्येतत् सप्तमे चौलमिष्यते' ॥

तृतीयेऽब्दे त्रियंशोने पञ्चमे चोत्तरायणे ।
गर्भाद्वा चौलकं कुर्यात् न षष्ठे जन्मतः शिशोः ॥

नाक्षत्रात् प्रथमे वर्षे तृतीये पञ्चमेऽपि वा ।
सप्तमे चौलकं कुर्यादिति काश्यपभाषितम्' ॥ इति

चौलं सूनोर्मातरि गर्भवत्यां पुरस्तादथ पञ्चमात् स्यात् (?) । **चौलकं**- चूडाकर्म ।

**उत्तरायणे पक्ष आपूर्यमाणे पुन्नाम्न्याघारः ॥ २ ॥**

**उत्तरायण** इत्यादि । उत्तरायणपदेन शुभतिथिवारनक्षत्रादयो गृह्यन्ते

बृहस्पतिः — 'शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरम् ।
अशुभोऽन्त्यत्रिभागः स्यात् कृष्णे भागत्रये कृते ।
अन्त्यभागोऽपि सत्कर्मरते चन्द्रे शुभावहः' ॥ इति

वसिष्ठः — 'द्वितीया च तृतीया च सप्तमी पञ्चमी तथा ।
दशम्येकादशी चैव पूज्या तद्वत् त्रयोदशी ॥

षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
प्रतिपत्पञ्चदश्यौ च निन्दिता द्वादशी तथा' ॥

अर्कार्किभूमिपुत्राणामंशके दिवसोदये ।
द्रेक्काणकालहोरायां क्षौरं विपरिवर्जयेत्' ॥ इति

बृहस्पतिः — 'सोमवारः सिते पक्षे पूज्यः कृष्णे तु गर्हितः ।
बुधवारोऽशुभः पापग्रहयुक्तः न्वये भवेत् ।

अस्तगे च द्वयोर्योगे समीपस्स्याद्गुणान्वितः ।
पापग्रहाणां वाराद्यौ विप्राणान्तु शुभो रवेः ॥

क्षत्रियाणां क्षमासूनोः विट्छूद्राणां शनेः शुभः ।
हस्ताश्विनी विष्णुपौष्णश्रविष्ठादित्यपुष्यकाः ॥

सौम्यः चित्रेति च क्षौरे ह्युत्तमा नव तारकाः ।
त्रीण्युत्तराणि वायव्यरोहिणीवारुणास्तथा ॥
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः' । इति

वसिष्ठः 'नैधने जन्मनक्षत्रे वैनाशे चन्द्रमाष्टके ।
विपत्करे वधे क्षौरं प्रत्यरेऽपि विवर्जयेत् ॥

आद्यांशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः ।
वधे त्याज्यः तृतीयांशः शेषांशेष्वपि शोभनम् ॥

जन्माष्टमे विधौ याते क्षौरमायुःक्षयाय च ।
तस्मात् चन्द्राष्टमं वर्ज्यं सर्वदा क्षौरकर्मणि ॥

आक्रेकरश्च मत्स्यश्च बुधशुक्रेन्दुराशयः ।
क्षौरकर्मणि पूज्याः स्युः शेषास्त्याज्यास्स्वभावतः ॥
व्याधिशोकप्रदौ सिंहवृश्चिकौ क्षौरकर्मणि ॥

अतीव दुःखदो मेषः चापो राजभयप्रदः ।
कुंभः कुलविनाशाय कथितः क्षुरकर्मणि ॥

शुभैर्युक्ताः शुभैर्दृष्टा यद्यप्येते ग्रहाः शुभाः ।
शुभैर्युक्तोऽपि दृष्टोऽपि न शुभः कुंभदग्रहः' ॥ इति ।

आक्रेकरो मकरः ।

**मूलहोमान्ते मंगलयुक्तमग्नेरपरस्यां कुमारमुपवेश्योत्तरे साक्षतं गोशकृच्छरावे गृहीत्वा माता ब्रह्मचारी वा धारयेत् ॥ ३ ॥**

मूलहोमेत्यादि । माता ब्रह्मचारी वा । 'मातृदेवो भवे'ति श्रुतेः माता । व्रतनिष्ठत्वात् ब्रह्मचारी ।

'शिवो नामासि' इति ग्रहणं क्षुरस्य ॥ ४ ॥

'शिवानो भवथ' इति शिलायां तीक्ष्णीकरणम् ॥ ५ ॥

'गोदानमुनक्तु' इति गवादिदक्षिणाकरणम् ॥ ६ ॥

गोदानमित्यादि । गोदानमित्युक्तत्वात् आचार्यस्य वा अन्यस्य वा अंगत्वेन गवादिदक्षिणादानम् । 'गोदानं विधायेति' श्रौते उक्तत्वात् तद्वदेवात्रापि केचिद्वदन्ति । तदसत् । गवादिदक्षिणाकरणमित्युक्तत्वात् । पित्रादिभ्यो न कुर्यादिति भास्करेण व्याख्यातम् । तन्न । 'पितुश्शतगुणं दान' मित्युक्तत्वात्, यागादिषु दक्षिणाप्रतिग्रहयोग्यतासंभवात् पित्रादीनामपि कर्तुमुचितम् ।

'आप उन्दन्तु' इत्यपां सेकं शिरसि ॥ ७ ॥

'ओषधे त्रायस्वैनं' इति साक्षताङ्कुरदर्भौ प्रागुत्तराग्रौ मस्तके स्थापयेत् ॥ ८ ॥

'स्वधिते मैनँ हिँसीः' इति क्षुरं निधाय 'ऊर्ध्वाग्रा ओषधीः' इति 'येनावपत्' इति 'येन पूषा' इति 'असावायुषा' इति पूर्वादिप्रदक्षिणं दर्भं सरोमाणं छित्वा 'ज्योक् च सूर्यं दृशे' इति चूडां विभजेत् ॥ ९ ॥

स्वधित इत्यादि । 'असावायुषा' इति मन्त्रे असावित्यत्र संबुद्ध्या कुमारस्य नामग्रहणम् । छित्वा—छित्वा शरावे निदध्यात् । चूडामित्येकवचननिर्देशादेकाचूडा मुख्या ।

ऋषिक्रमेण स्वस्यैकार्षद्व्यार्षत्र्यार्षपञ्चार्षसप्त (र्षा) र्षाच्चूलां विभजेत् ॥ १० ॥

अनुदितस्यैकाम् ॥ ११ ॥

**ऋषिक्रमेणेत्यादि** । अत्र **बोधायनः** । 'एकशिखो द्विशिखस्त्रिशिखः पञ्चशिखो वा यथैषां कुलधर्मः स्या' दिति ।

लौगाक्षिः — 'तृतीये वर्षेऽस्य भूयिष्ठां चूडां कारयेत् । दक्षिणतः कमुजा (?) वासिष्ठानां, बामतो भारद्वाजानां, उभयतोऽत्रिकश्यपानां, मुंडा भृगवः, पञ्चचूडा आंगिरसो वाजिमेके मंगलार्थशिखिनोऽन्ये यथाकुलधर्मं वा' इति। **अनुदितस्य**-द्वितीये जन्मन्यनुत्पन्नस्य ।

आश्वलायनः — 'प्रच्छिद्य प्रच्छिद्य प्रागग्रान् शमीपर्णैः सह मात्रे प्रयच्छति' इति ।

**'इदमहममुष्य' इत्युदुंबरदर्भयोर्मूले गोष्ठे वा आच्छादयेत् ॥ १२**

**इदमहमित्यादि** । माता च तानादाय। अमुष्य गोविन्दशर्मणः पाप्मानमपगृह्णामि इत्यूहः ।

> 'कर्मण्यधिकृता ये च वैदिके ब्राह्मणादयः ।
> तैश्च धार्यमिदं सूत्रं क्रियांगं तद्धि वै स्मृतम्' ॥

इतिवत् (कैश्चित्) कर्मांगत्वात्, उपनयनात्पूर्वमेव शिखा प्रतिपादिता ॥

**स्नातं वस्त्रादिनाऽलंकृत्य उपवेश्य दक्षिणे, पञ्च प्रायश्चित्तादि धातादि पञ्च वारुणं मूलहोमं हुत्वा पुण्याहं कृत्वा नापितायान्नदानं, गवादिदक्षिणां गुरवे, सुराणां पूजनं तर्पणं ब्राह्मणानामन्नेन करोति ॥ १३**

**स्नातमित्यादि** – मूलहोमं हुत्वा अन्तहोमं कुर्यात् । प्राणशरीरेन्द्रिय-मनःपुरुषगतदोषनिवृत्त्यर्थमित्यवगम्यते । श्रुतिः । प्राणानामहमित्यग्निः । तनु वा अहमिति वायुः । चक्षुषोऽहमित्यादित्यः । चन्द्रमा मनसः' इत्यग्न्यादय एव गन्धर्वा इत्यवगम्यमानत्वात् ,

> 'षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ।
> एवमेनश्शमं याति बीजगर्भसमुद्भवम्' ॥

इति मनुस्मरणाच्च अच्छिद्रतादोषनिवृत्त्यर्थं अविस्मरणात् अन्यस्यापि संभावित-दोषनिवृत्त्यर्थं च पञ्चप्रायश्चित्तमुक्तम् । 'पन्याः पतिशीलनम्' इत्यहः । पतिशब्देन पित्रादयः ।

'मला दुःखाज्ञानमयाः प्रकृतेस्ते न चात्मनः' ॥ इति

गवादिदक्षिणां । आदिशब्देन हिरण्यवस्त्रादि । निष्केणाचार्यस्य दद्यात् । सुराणां विष्ण्वादीनाम् - पूजनं, 'ग्रहायत्ता लोकयात्रा' इत्युत्तरत्र वक्ष्यमाणत्वात् ग्रहपूजाद्यपि कुर्यात् ।

इत्यष्टादश संस्काराः शारीराः शारीराः ॥ १४ ॥

अथातः पाणिग्रहणं, मातुरन्नपिंडां, ततः महस्नातायाः विश्वा उतस्त्वयेति, अथ चतुर्थीवासः, अत ऊर्ध्वं पर्वणि स्थालीपाकेन, पचने वाऽऽग्रयणेऽथ, नदेवं त्रिरात्रं, अथ त्रिरात्रमृतौ, अथ गृहीतगर्भलिङ्गानि, अथ गर्भाधानादि चतुर्थे मासि, अथ गर्भाधानादष्टमे मासि, अथ विष्णुबलिः, अथ जातकर्मव्याख्यास्यामः, छुल्ल्यां कपालं, अथ दास्नु-सवनं, येते शतं, अथ दशमे द्वादशे वाऽह्नि, अथ नामकरणं, अथ वर्षवर्धनं, आर्षभं वैरवणं, अथ षष्ठे मास्यन्नप्राशनं, अथ वर्षे प्रथमे त्रयोविंशतिः ॥ १५ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने त्रयोविंशः खण्डः ।

॥ तृतीयप्रश्नः समाप्तः ॥

प्रथमः पटलः (प्रथमः खण्डः) ऋतुसंगमनवर्जम्। वर्जने संस्काराणां कथञ्चित् साद्यस्कत्वं उह्यते। ऋतुसंगमनवत् निषेकजातकर्मोत्थानपारायण-व्रतबन्धविसर्गाणाम्। 'जातकर्मोत्थानयोर्नान्दीमुखं वर्जये' दिति प्रायश्चित्ते-वक्ष्यमाणत्वात्। नान्दीमुखमिति कर्मनाम। कालमाह—श्वः कर्तासीति। श्वः—परेद्युः कर्ताऽस्मि इति ध्यात्वा संस्कारोद्दिष्टदिनात्पूर्वस्मिन्नेव दिने श्रोत्रियान् प्रायश्चित्तविदश्चाचार्यप्रमुखानाहूय गंधाद्यैस्तानभ्यर्च्य कर्मावेद्य तैरनुज्ञातः तदुक्त-कृच्छ्राण्याचरित्वा 'एतत्कर्म करिष्यामी' ति संकल्प्य कुर्यात्। गर्भाधानादि-संस्कारादीनां पूर्वेद्युः नान्दी भवति। नन्दन्त्यस्मिन् देवाः पितरश्चेति नान्दीति संज्ञा भवति। तस्या मुखं प्रधानं सर्वे देवाः पितरश्च, यस्य देवता भवन्ति तत् सर्व-देवपितृदेवत्यं नान्दीमुखम्। किमिदमिति वैशद्यार्थं तस्य नामान्तरमाह—अभ्युदय-श्राद्धमिति। अभ्युदेति सन्तोषस्तेषामस्मादित्यभ्युदयम्। श्रद्धया क्रियत इति श्राद्धम्, तच्च तदित्यभ्युदयश्राद्धम्। पैतृकमप्यत्र सर्वं दैविकवत्करोति—शुभकर्मांगभूतत्वात्। पूर्वेद्युः—नान्दीमुखदिनात्पूर्वस्मिन्नेव दिने। युग्मानित्यादि। विश्वेदेवार्थं द्वौ प्रपिता-महादिपित्रर्थं द्वौ—ब्राह्मणान्, एवं च चतुरः। पित्रर्थं मातुःपित्रर्थं द्वाविति केचित्। तथोक्तं प्रायश्चित्ते। अद्यत इत्यन्नं भक्षणार्हम्। तेनान्नेन नालिकेरादिफलेन परिवेष्य। परिवेषणं वरणं, धातूनामनेकार्थत्वात्। अथ अपरेद्युः पूर्वाह्णे तेषु स्नातेष्वागतेषु नान्दीमुखं करिष्य इति संकल्प्य विश्वेभ्यो देवेभ्यो जुष्टं पितृभ्यो जुष्टं निर्वपामीति तण्डुलैरेव चरुं बह्वन्नमपूपादिकं च पाचयित्वा पूर्ववदाघारं हुत्वा अन्ते अग्नेः पश्चिमतो विश्वेषां देवानामुदगन्तमग्नेर्दक्षिणतः प्रागन्तं पितृणामिलां भूमिमभ्युक्ष्य मंडलानि पात्रस्थानानि सर्वेषां चतुरश्राण्युपलिप्य गोमयवारिणा उपलेपनं कृत्वा आसनानि पीठानि दर्भादींश्च यवैश्च व्रीहिभिश्च निधाय तेष्वासनेषु प्राङ्मुखान् विश्वेदेवान् उदङ्मुखान् पितॄनासयित्वा तेषां करेषु नान्दीमुखा विश्वेदेवाः प्रियन्तामिति विश्वेदेवानां नान्दीमुखाः पितरः प्रियन्तामिति पितृणाञ्च क्रमेण यवोदकं दत्वा आसीनान् विश्वेदेवान् पितॄंश्च पुष्पाद्यैः पुष्पगन्धाक्षताद्यैः यथोपपादं, यथासम्भवं पुष्पगन्धवस्त्राभरणाद्यैर-

लंकरोति । शुक्लबलिः—श्वेतान्नम् । शुक्लानि चत्वारि यत्र तत् चतुश्शुक्लम् । एतच्छुक्लचतुष्टयं हस्तेनादाय कबलमात्रं गृहीत्वा अग्नेर्दक्षिणतः संमीपे पूर्ववत् प्रागन्तान्यष्टमण्डलान्युपलिप्यासनानि प्रत्येकमुत्तराग्रं निधाय तेष्वग्न्यादि-देवानावाह्य चतुर्थ्यन्तेन तत्तन्नाम्ना अग्नये नमः इत्यादिना प्रत्येकमभ्यर्च्य बलिं ददाति । (इति प्रथमः खंडः)

(अथ द्वितीयः खण्डः) अग्नये चतुश्शुक्लबलिं निवेदयामि इत्यादि चतुर्थ्यन्तेन तत्तन्नाम्ना बलिं चरुमन्नमपूपं पैष्टिकादिकं । आदिशब्देन व्यञ्जनफल-सक्तवः । यथोपपादं निवेद्य आचमनं तांबूलञ्च दद्यात् । उदकपूरणार्थं कुंभमुदकुंभं, प्रक्षाल्य तन्तुना परिवेष्ट्य धारास्वित्यद्भिरापूर्य पाप्मनः यजमानस्य पापानामपहत्यै विनाशाय अश्वत्थादिकिसलयैस्सह पवित्रं कुशादिदर्भकूर्चमाभरणं हिरण्यं सरत्नमंगुलीयादिकं कुंभे निदधाति । ततो वस्त्राभ्यामावेष्ट्याग्नेः पूर्वस्यामन्यत्र वा धान्योपरि सुरक्षितं तं निदधाति । प्रतिसरा—रक्षाबन्धनसूत्रम् । कुतपस्य श्वेतकं-बलादेः दुकूलस्य श्वेतपट्टवस्त्रादेर्वा तत्रासंभवे कर्पासस्य वा सूत्राणि गृहीत्वा तैः त्रिरावर्त्य त्रिगुणीकृतैः उत्पादितां त्रिवृतां प्रतिसरां कृत्वा तां हेमादिपात्रे तंडुलो-परि पुष्पादिमंगलद्रव्याण्यपि तया सह संभृत्य—आधाय अग्निमुपसमाधाय जुहुयात् । अग्निर्देवता यासामृचस्ताः अग्निदेवत्याः । तथाऽन्यत्र । पैतृकं—पैतृकहोममुपवीती । सामान्यतः सामान्याकारेण अग्न्यादीनां नामभिः ताभ्योऽ-ग्न्यादिभ्यो देवताभ्यो जुहोति । सर्वेषामाज्येनैव होमः कर्तव्यः । वैश्वदेवपैतृक-होमावाज्यचरुभ्यां कर्तव्यौ । पात्रेषु भोजनभाजनेषु दैविकं पैतृकमित्याज्यं विभज्य अभिघार्य उपस्तीर्य विश्वेदेवपात्रयोरन्नादि सर्वं द्विर्द्विर्दत्वा तथा देवशेषं विश्वेदेवदत्तावशिष्टमन्नादिकं पितृभ्यः प्रागन्तमुदङ्मुखानां पात्रेषु पश्चिमादिप्रागन्तं यथा स्यात्तथा दत्वा तदनन्तरं विश्वेदेवादीनां दक्षिणपाणे-रंगुष्ठेन तत्तत्पात्रेषु दत्तं चरुं होमावशिष्टाद्यन्नं—चरुं स्पर्शयति । ततो नमस्कृत्य विश्वेदेवादीनभिवन्द्य क्षीरेण दध्ना वा मिश्रितं श्वेतमन्नं ब्राह्मणान् विश्वेदेवादीनुक्तान् तथा अग्न्याद्यर्थमन्यान् ब्राह्मणानपि यथातृप्ति भोजयेत् । अनुत्थितेभ्यः भोजनानन्तरं आचमनार्थमनुत्थितेभ्यः विश्वेदेवादिभ्यः सकाशात्

समूह्य भुक्तभाजनादिकं वहिर्निक्षिप्य शोधयित्वा आचान्तान् कृताचमनांस्तान् अनुमान्य दक्षिणाभिर्यथाशक्ति संभाव्य तैरनुज्ञातः तां प्रतिसरां अभिमृश्य पाणिना संस्पृश्य अभिमन्त्र्य प्रतिसरां रक्षार्थं पुरुषस्य दक्षिणहस्ते स्त्रीणां वामहस्ते च बध्नाति । पूर्वं नान्दीमुखेभ्यः पितृभ्यस्स्वधा नमः इत्यादिभिर्मन्त्रैः पित्रादीनां विसर्जनम् । ते च स्वधाऽस्त्विति प्रतिवदेयुः । ततः विश्वेभ्यो देवेभ्यः स्वाहा नमः इति विश्वेदेवविसर्जनञ्च कार्यम् । ते च स्वाहाऽस्त्विति प्रतिब्रूयुः । तेन मन्त्रवत्साधितेन कुंभजलेन अपरेद्युः यजमानः स्नायात् — कर्मान्ते कौतुकं त्यक्त्वा स्नायात् । तन्मध्ये तद्विनाशे पुण्याहान्ते पूर्ववत् बन्धयेत् । स्नानं नियतं—'पाप्मनोऽपहत्या' इति वचनात् । यद्वा—तदानीमेव 'या सुगन्धा रसा वर्णा' इति कुंभजलेनाभ्युक्षणं कुर्यात् । तथा श्रौते वक्ष्यते । इति प्रथमः पटलः (इति द्वितीयः खंडः)

अथ द्वितीयः पटलः (अथ तृतीयः खण्डः) अथ गर्भाधानादीत्यादि । सर्वाश्रमाणामादित्वादुपनयनस्य उद्देशक्रममुल्लंघ्य आदावुपनयनोपदेशः । उपनीतस्यैव कर्माधिकार इति ज्ञापनार्थम् । गर्भाधानकालमारभ्य पञ्चमे वर्षे ब्रह्मवर्चसकामं पुत्रमुपनयीत ब्राह्मणः । तथा अष्टमे नवमे च कामनाभेदे कुर्यात् । ततो विकल्पोक्तिः । सकाममकामं वा गर्भाष्टम एवोपनयीत । 'अष्टमे ब्राह्मणमुपनयीत' इति श्रुतिः । 'गायत्र्या ब्राह्मणमसृजत' इति गायत्र्याः प्रथमपादाक्षरसंख्याकालः प्रतिपादितः । सप्तमे अष्टमाक्षरस्य संग्रहदर्शनात् गर्भाधानाद्यष्टमे वर्षे इत्युक्तम् । वसन्ते इति । बलाबलमविचिन्त्य कुर्यात् — श्रुत्युक्तत्वात् । अन्यत्र गुरुबलान्वित एव काले उपनयीत । तद्वत् क्षत्रियवैश्ययोः । 'सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमे अन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाम' मित्यापस्तंबः । 'सप्तमे ब्राह्मणस्य नवमे राजन्यस्य एकादशे वैश्यस्य' इति पैठीनसिः । पञ्चमे ब्राह्मणमुपनयीत गर्भाष्टमे वा, राजन्यस्य गर्भद्वादशे, वैश्यस्य गर्भषोडशे वा' इति गौतमः । 'पञ्चमे नवमे वा ब्राह्मणस्य षष्ठे द्वादशे वा राजन्यस्य अष्टमे चतुर्दशे वा वैश्यस्य' इत्यंगिराः । मुख्यकालासंभवे कालावधिमाह — आषोडशादित्यादिना । वाशब्दः गौणत्वबोधनार्थः । अतीते — गौण-

कालस्याप्यतिक्रमे । पुनर्गर्भाधानादीति । पूर्वकृतमपि गर्भाधानादि चौलकान्तं हुत्वा यथाशक्ति हिरण्यादिकं प्रायश्चित्तोक्तवत् दत्वा । (इति तृतीयः खंडः)

(अथ चतुर्थः खंडः) ब्राह्मणादीनां सावित्रीप्राणायामव्याहृतिसमिदाधानानां पार्थक्यमित्थं द्रष्टव्यम् । ब्राह्मणस्य सावित्री – ओंभूर्भुवस्सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् 'इति । प्राणायामः – 'ओं भूर्भुवस्सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्' इति । व्याहृतिः – ओं भूर्भुवस्सुवस्स्वाहा' इति । अष्टाभिस्समिद्भिः, त्रिभिर्मन्त्रैः समिधामाधानम् । राजन्यस्य सावित्री – ओंभूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । प्राणायामः – ओं भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ओं तेजो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्' इति । व्याहृतिः – 'ओं भूर्भुवस्स्वाहा' इति । समिदाधानम् – चतसृभिस्समिद्भिः द्वाभ्यां मन्त्राभ्यां होमः । वैश्यस्य सावित्री, ओं भूस्तत्सवितुर्वरेणीयं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्' इति । प्राणायामः – 'ओं भूस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । व्याहृतिः – ओं भूस्स्वाहा' इति । समिदाधानम् – एकयैव समिधा एकेन मन्त्रेण होमः । इति द्वितीयः पटलः (इति चतुर्थः खण्डः)

तृतीयः पटलः । (अथ पञ्चमः खण्डः) प्रोष्ठपदेत्यादि । पूर्वस्मिन् खंडे उपनयनकालकथने ऋतुप्राशस्त्यमुक्त्वा इदानीमुचितनक्षत्राण्याह । तत्र वसन्तर्तौ शुक्लपक्षे कृष्णपक्षे वा आदशम्या रिक्तानानध्यायतिथीन् विहाय अन्ये शुभतिथयः शुभवासराः शुभानि । प्रोष्ठपदादि नक्षत्राणि वा पुन्नामानि, शुभयोगाः शुभकरणानि ज्योतिश्शास्त्र प्रोक्तानि गृह्णीयात् । दर्भादीति । आदिशब्देन कूर्चगोमयलाजापूप क्षुरादिः यैरर्थैरन्तेऽपि गृह्यन्ते । आचान्तं – तूष्णीं कृताचमनम् । मंगलयुक्त शुभ्रमाल्याभरणादिशोभनद्रव्यैरलंकृतम् । आसयित्वा – आचार्यस्य दक्षिणभागे नैर्ऋत्यामागनं प्राङ्मुखमासयित्वा । प्रागुत्तराग्रौ – प्रागग्रौ द्वावुत्तराग्रौ द्वौ एकैकस्योपरि निक्षिप्य तूष्णीं क्षुरमादाय तीक्ष्णीकृत्य । गोशकृद्युक्त इति । गोशकृद्युक्त शरावं माता ब्रह्मचारी वा तस्योत्तरे धारयेत् । छेदनानन्तरं तत्र दर्भ-

शेषमपि तत्र निक्षिपति । सर्वत्र आगलाद्वपति । नाधो जात्रोः । कक्षादि न वपति । शरावमुदुबरमूले गोष्ठे वा गूहयेत् । वपनं शिखां भ्रुवौ च वर्जयित्वा पादनखपर्यन्तं भवति । स्नात्वेत्यादि । नद्यादिषु स्नात्वा कृताचमनं पूर्वेद्युः साधितेन कुंभतोयेन स्नापयित्वा आचान्तं पुण्याहं वाचयित्वा कुमारैः सह कृतभोजनं यजमानस्य दक्षिणपार्श्वे आसयित्वा वस्त्रं ददातीत्यन्वयः । 'य आकृन्तन्' इति मन्त्रं वाचयित्वा अन्तःपुच्छं कौपीनं धारयित्वा वस्त्रमावेष्टयति । तथा मेखलां तन्मन्त्रं वाचयित्वा त्रिः परिवीय आर्षक्रमेण परिवेष्ट्य ग्रन्थिं कृत्वा अग्रमुपगूहयति । उत्तरीय – संव्यानम् । 'परीद' मन्त्रं परिहितवासोऽनुमन्त्रणार्थे बोधायनेनोक्तः । तत्तन्मन्त्रं वाचयित्वा यज्ञोपवीतादिधारणम् । कृष्णाजिनमुपवीतवत् धार्यम् । पूर्वमिव पवित्रमपि धारयति' (इति पञ्चमः खण्डः)

(अथ षष्ठः खडः) ततः – आसन्ने मुहूर्ते सदस्यैरनुज्ञातः बाहू-कुमारस्य बाहू दक्षिणवामहस्तौ, स्वस्य दक्षिणोत्तराभ्यां पाणिभ्यामालभ्य संगृह्य उत्तरे स्वस्योत्तरे पार्श्वे प्राङ्मुखो गुरुः प्राङ्मुखं कुमारमुपनयीत–समीपं नयेत् । विसर्जयति मन्त्रान्ते । आचारं–ब्रह्मचर्यधर्मान् शिक्षयति । हृदयं – हृदयस्पर्शनं– हृदयदेशस्पर्शनम् । प्रशंसति – मंगलानि प्रयुंक्ते । आचारशिक्षणे यथामन्त्र-लिंगं प्रत्युत्तरमपि वाचयति । असाविति संबुद्ध्या वटोर्नामनिर्देशः । 'असावपोशान' इत्युक्ते – 'अपोऽश्नामि तथा' इति प्रतिवचनम् । समिध आधेहि-आदधामि । कर्म कुरु – कर्म करोमि । मा दिवा स्वप्सीः – न स्वपामि दिवा – भैक्षाचर्यं चर–भैक्षां चरमि । सदाऽरण्यात्समिध आहर–आहरामि । उदकुंभञ्चाहर– आहरामि । आचार्याधीनो वेदमधीष्व – अध्येष्ये । मम हृदयं हृदयं तेऽस्तु – तथाऽस्तु । मम चित्तं चित्तेनान्वेहि – अनुगच्छामि । मम वाचमेकमना जुषस्व-जुषे । बृहस्पतिस्त्वां नियुनक्तु मह्यम् – तथाऽस्तु । मामेवानु संरभस्व । संरभे । मयि चित्तानि सन्तु ते – सन्तु । मयि सामीप्यमस्तु ते -- अस्तु । मह्यं वाक् नियच्छताम् – नियच्छामि । प्राणानां ग्रन्थिरसि – असि । स मा विस्रसः – न विस्रसामि । सर्वत्र 'तथा करोमि' इति वा प्रतिवचनम् । कनिष्ठाद्यंगुल्यग्राणां पर्यायेण – क्रमात ग्रहण, तथा विसर्जनञ्च । प्रदक्षिणमग्नेः प्रणामञ्च कारयित्वा

निवेशनम् । 'राष्ट्रभृदसि' इति कूर्चं यथालिंगं दद्यात् । शन्नमिन्द्रिवत्यत्रापि आदित्यस्यैव प्रदक्षिणनमस्कारौ । शिष्यमभिमुखमासयति । उत्तमांगं – शिरः स्पृष्ट्वा 'अधीहि भो' इति तेन प्रार्थितो गुरुः 'अथाह सावित्री' मिति शिष्यमनुशास्ति, 'गणानां' त्वेति गणमुख्यप्रणामः । दक्षिणकर्णे जप्त्वाऽध्यापयति । इति तृतीयः पटलः । (इति षष्ठः खण्डः)

अथ चतुर्थः पटलः । (अथ सप्तमः खण्डः) सावित्रव्रतबन्धं करिष्ये इति संकल्पः । मन्त्रलिंगात् सविता देवता यस्य व्रतस्य तत् सावित्रं – तच्च तद्व्रतम् । ब्रह्मचारी जुहोति – मन्त्रलिंगात् । शिष्यं योजयेत् । आचार्यनियोजनानन्तरं यावत्समावर्तनं तावत्पर्यन्तं समिदाधानं करिष्ये इति संकल्प्य समिदाधानमारभते शिष्यः । साधावेन पाणिना परिमार्जनम् । (इति सप्तमः खण्डः)

(अथ अष्टमः खण्डः) अन्तर्होमो हूयते इत्यादि । ब्रह्मचारी भवति । 'सावित्रव्रतादूर्ध्वं' मित्यादिभिरनन्तरावस्थाः धर्मे वक्ष्यन्ते । इति चतुर्थः पटलः । (इत्यष्टमः खंडः)

अथ पञ्चमः पटलः । (अथ नवमः खण्डः) पारायणं – वेदाध्ययनं, तदर्थानि व्रतानि पारायणव्रतानि । उपनयनादूर्ध्वं चतुर्थे तत्रासंभवे पञ्चमे सप्तमे वा अहनि सावित्रव्रतविसर्जनं प्राजापत्यव्रतबन्धञ्च कुर्यात् । पुन्नामनक्षत्राणि मृगशीर्षमूलशतभिषगादीनि । 'स प्राजापत्यं सावित्रं त्रिरात्र' मिति स्मृतिः (?) । नद्यादिजलसमीपे गृहे गोशालायां वा गुरुः पूर्ववदुपनयनाग्नावाघारं कृत्वा अग्निं परिस्तीर्य धातादिपूर्वं सावित्रव्रतसूक्तमाज्येन हुत्वा । 'अग्ने व्रतपत' इति पञ्चभिर्मन्त्रैः समिद्भिर्होमः । आज्येन व्याहृतिहोमः । वस्त्रदण्डादीनीत्यादिशब्देन मेखलोपवीतकृष्णाजिनानि गृह्यन्ते । सावित्रव्रतविसर्जनान्तरं प्राजापत्यव्रतबन्ध उच्यते, धातादि पूर्वमित्यादिना । वार्षिकं प्राजापत्यव्रतबन्धमित्यादि । व्रतबन्धकालादारभ्य आसंवत्सरमेव तद्व्रतकालः । 'प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठे' दिति धर्मे वक्ष्यते । यद्यद्व्रतं पूर्वं बध्नाति काले तत्तद्व्रतं विसृज्य अन्यदितरदनन्तरं व्रतं बध्नाति । सर्वत्र होमं कृत्वा तत्तद्व्रतं बद्ध्वा तत्तत्काण्डाध्ययनं कृत्वा तदन्ते तद्व्रतं विसृज्य अन्यद् व्रतं बध्नीयादित्यर्थः । (इति नवमः खण्डः)

(अथ दशमः खण्डः) अत्र खण्डे व्रतक्रमः, क्रमात् सूक्तपाठनक्रमश्चोच्यते (इति दशमः खण्डः)

(अथैकादशः खण्डः) 'इति व्रतपारायणं विज्ञायते' इति सूत्रात् अस्य ब्राह्मव्रतविसर्गान्ते प्रोक्तस्य शुक्रियव्रतस्य पारायणव्रतमर्यादात्वात् विलक्षणसंस्कारपरिकर्मितत्वाच्च पृथगुपादानम्। रेफायति–हिंसति। (इत्येकादशः खण्डः)

(अथ द्वादशः खण्डः) वेदान् वेदौ वेदं वेत्यादि। वेदान् ऋग्यजुस्सामसुखान्, वेदावृग्यजुषी, वेदमृग्वेदं वा–स्वसूत्रं यद्वेदमूलं स्वसूत्रेण सहितं स्वशाखामध्यापयति। अन्तराऽप्येवमिति। उपनयनमासाऽषाढमासयोर्मध्ये। अध्यापयितुकामः एवंप्रकारेण हुत्वाऽध्यापयेत्। अर्धाधिकपञ्चमान् अर्धाधिकषष्ठान्वा मासान् तूर्ष्णीं स्थित्वा आगामि पौषे माघे वा मासे उपाकर्मोक्ततिथिषु ग्रामाद्बहिर्जलसमीपे उपाकर्मवत् होमं व्रतविसर्गञ्च हुत्वा अध्यायान् विसृजेत्। अथ श्रावणे पौर्णमास्यामित्यादि। पूर्ववदाधारं हुत्वा अग्निं परिस्तीर्य शिष्यं वापयित्वा पूर्वव्रतबन्धं धातादि पञ्चवारुणं मूलहोमं स्विष्टाकारान्तं जुहोति। अस्मिन्नेवाग्नौ सावित्र्या पालाशादिसमिधां सहस्रं जुहोति। अध्ययनपारायणायेति। वेदाध्ययनपरिपूरणाय भवति श्रावणमुपाकर्म। इति पञ्चमः पटलः। (इति द्वादशः खण्डः)

अथ षष्ठः पटलः। (अथ त्रयोदशः खण्डः) उदगयने – उत्तरायणे। आघारं हुत्वा–शुक्रियव्रतबन्धवत् धातादिहोमः। वस्त्रावगुण्ठनं – वेष्टनं। 'इमं स्तोम' मिति प्रधानो मन्त्रः। अमन्त्रवत् नापितवपनम्। शीताः स्वाभाविकाः–उष्णाः–अग्नितप्ताः, यथा शरीरस्य हितं तथा मिश्रीकृत्य तैः प्रोक्षयतीति यत्तदेतत् स्नातकं कर्म। पूर्वं – यथापूर्वं, 'इमं स्तोम' मिति प्रधानामाहुतिं हुत्वा आदित्यस्योदयात् पूर्वं ब्राह्मव्रतं पूर्वबद्धं विसृज्य तदानीमेव शुक्रियव्रतबन्धविसर्गौ कुर्यात्, न षाण्मासिकं त्रैमासिकं वा स्यादित्येके वदन्ति। (इति त्रयोदशः खंडः)

(अथ चतुर्दशः खंडः) आभरणादीनि कुंडलमणिहारांगुलीयकादीनि। आदिशब्देन पुष्पांजनदर्पणदंडछत्रपादुकामेखलोपवीताजिनवाहनमधुपर्कादीनि

संगृह्णन्ते । पूर्ववत्–उपनयनोक्तवत् । बदरेण सुवर्णेन वेति । निस्स्वधनिकयोरयं विकल्पः । कृतान्–तत्तदाकृत्या रचितान् । आच्छाद्य–पर्णेन प्रच्छाद्य । (इति चतुर्दशः खण्डः)

(अथ पञ्चदशः खण्डः) धारयन् वामेन पाणिना गृह्णन् । ग्रन्थिताभरणोपरि स्रावयन् । कण्ठमामुच्य–कण्ठे आबद्ध्य । (इति पञ्चदशः खण्डः)

(अथ षोडशः खण्डः) कन्याप्रदः स्नातकस्य पादौ प्रक्षालयति । स वरः । तद्धस्तं कन्याप्रदस्य हस्तं । आददीत–गृह्णीयात् । कन्याप्रदात्रा दत्तं मधुपर्कं स्नातकः प्राश्नीयात् । आचम्याऽचामेत्–आचमनं कृत्वा पुनराचामेत् । धेनुं बद्ध्वा सवत्सां गां अग्रतोऽवस्थाप्य धेनुमभिमृश्य विसर्जयति । तामाचार्यो गृह्णीयात् । इति विशेष इत्येके इत्यादि (इति षोडशः खण्डः)

अथ सप्तदशः खण्डः) ब्राह्मणभोजनं–स्नातकव्रताङ्गम् । ब्राह्मणानष्टभ्योऽहीनान् । स्नातकव्रताङ्ग होमः । एवमापाणिग्रहणान्नित्यं सायं प्रातः होमः । बान्धवैः ज्ञातिभिस्सजातीयैर्वा एकपंक्त्युपविष्टैः सह भोजनम् । धाम–पैष्टिकसहितं भोजनम् । (इति सप्तदशः खण्डः)

(अथ अष्टादशः खण्डः) अथ प्राणाग्निहोत्रविधानम् । स्वयं ज्योतिः–स्वयं प्रकाशः आत्मा–परमात्मा यजमानः, यष्टा भवति । सर्वत्र रूपणं ज्ञेयम् । अस्य प्राणाग्निहोत्रस्य फलं–प्रयोजनं, ओमिति–ओंकारस्य परब्रह्मरूपिणः प्रणवस्या अर्थस्य इदमस्य वाचकमिति विज्ञानस्य अवाप्तिः प्राप्तिः । तदेवमित्यादि । तत्–तस्मात्कारणात् । एवम्–अनेन प्रकारेण बान्धवैः सह भुक्त्वा गच्छन्तं तीर्थयात्रार्थं व्रजन्तं स्नातकम् । ऋणत्रयान्मुक्तोऽनृणो यो द्विजः ब्रह्मपदं परब्रह्मस्वरूपिपदं स्थानमभ्येति अभिगच्छति । यः क्रमेण गर्भाधानादिसंस्कारैः संस्कृतः ब्रह्मचारी भूत्वा वेदव्रतान्याचरित्वा दारान् संगृह्य सन्तानं लब्ध्वा सोमयाजी भवति स एवानृणो ब्रह्मपदमभ्येति नान्यथेति सान्त्ववचनपूर्वमुक्त्वा मालादिः वारयेत् । दारसंग्रहणार्थं रुन्धेत् । वीप्सा परिसमाप्तौ । इति षष्ठः पटलः (इत्यष्टादशः खंडः)

## इति द्वितीयः प्रश्नः

प्रथमः पटलः (प्रथमः खण्डः) अथातः पाणिग्रहणम् । अतः – यतः ऋणत्रयापकरणं विवाहसंस्कारेणैव साध्यं पूर्वं चोदितं – अत इत्यर्थः । धर्मे एवमुक्तम् । 'अग्न्यर्थं पुत्रार्थञ्च ब्राह्मणादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यात् । आसुरादिष्वसत्पुत्रा जायन्ते । तस्मादासुरेण गान्धर्वेण वा विवाहे कृते चान्द्रायणं चरित्वा अग्निमाधाय ब्राह्मं त्रयस्त्रिंशद्‌द्रैष्णवं सावित्रीमाग्नेयं शैतमावर्त्य हुत्वा ब्राह्मादिष्वेकेन पुनर्विवाहं कुर्यात् । आसुराद्विगुणं गान्धर्वे गान्धर्वाद्विगुणं राक्षसे राक्षसाद्विगुणं पैशाचे प्रायश्चित्तं करोति । आसुराद्यैः शस्तैः क्षत्रियवैश्यौ विवाहं कुर्याताम् । पूर्वेषामभावे परेण । 'ब्राह्मणेना-सुरगान्धर्वौ च विधिना कर्तव्यावित्येके । होमं हुत्वा राक्षसपैशाचौ चेत्यपरे ।' इत्यादि । आर्षादि विवाहेषु पर्वभेदेन फलतारतम्यमाह 'यस्मात् त्रीन् पूर्वा' नित्यादिना व्युत्क्रमेण । सर्वत्र 'आत्मान' मिति संबद्ध्यते । पावयेत्–तारयेत्, स्वर्गस्थान् कुर्यादित्यर्थः । इति प्रथमः पटलः (इति प्रथमः खंडः)

अथ द्वितीयः पटलः (अथ द्वितीयः खण्डः) मातुरसपिंडामित्यादि । 'पुरुषस्य सपिंडता षष्ठपुरुषावधिः कन्यायाः त्रिपुरुषावधि' रिति सूत्रकारः । सपिंडव्यतिरिक्ता असपिंडाः । लक्षणसंपन्नां सामुद्रिकशास्त्रोक्तशुभचिह्नैर्युक्ताम् । नग्नि-कामिति वयोवस्थोच्यते अष्टवर्षा – नववर्षा वेति । तदलाभे गौरीं वा अनाप्तार्तवां दशवर्षामेकादशवर्षां वा कन्यकां वरयित्वा । ब्राह्मविधानेन विवाहकालात् प्रागेव शुभे मुहूर्ते अलंकृत्य पुण्याहं वाचयित्वा ब्राह्मणसन्निधौ 'इदमित्थ'मिति परस्परमुभय-वादिनौ संभाष्य देवदत्तपुत्राय भार्गवगोत्राय यज्ञदत्तशर्मणे वराय इमां कन्यकां दास्यामीति कन्यापिता – यज्ञदत्तसुतां काश्यपगोत्रां श्रीदेवीनाम्नीमिमां कन्यां वृणे मम पुत्रायेति वरपिता च अंगुलीयकं पुष्पमालिकां वा दद्यात् । पञ्चाहेषु – प्रात-स्संगवादिभेदेन पञ्चधा विभक्ते शुभे समये । परिशुद्ध्यै – पावनार्थं वधूगृहे भूतं महान्तमोदनं सपिंडैः कन्यापितुः ज्ञातिभिः सह एकपंक्त्यां वरपिता भुञ्जीत । यस्मादित्यादि । यस्मात् स वंशः पूतो भवति तस्मात् भोजनमुक्तम् । कनिक्रदादि-

नेत्यादि। आसन्ने मुहूर्ते वस्त्राभरणगन्धमाल्याद्यैरलंकृतो वरः वाहनं रथमश्वं गजमान्दोलिकां वा अलंकृत्य समावर्तनोक्तमन्त्रैः अध्यारूढो बान्धवैः सह पुण्यपण्यांगनादिभिरिक्षुदण्डकदलीक्रमुकनारिकेलादिशोभनद्रव्यधारिणीभिश्च सह मंगलगीतवाद्यघोषणपुरस्सरं कनिक्रदादिवेदवादनसमन्वितः कन्यागृहं गच्छेत्। आगतं वरं कन्याप्रदः प्राङ्मुखमासयित्वा समावर्तनोक्तवत् मधुपर्कमाचमनान्तं कृत्वा कन्यादानं करिष्य इति संकल्प्य वस्त्राभरणादिना यथाशक्त्यलंकृतां कन्यामुन्नतासनस्थां प्रत्यङ्मुखीं कारयेत्। वरस्तां कन्यामीक्षित्वा—समीक्ष्य कन्यया स्वयमीक्ष्यमाणः प्रतिवीक्षितस्सन् आसीत। गुरुणा आचार्येण अग्निमुखे कृते आघारे कृते सति उदकेन तां कन्यामाहरते—प्रतिगृह्णाति। कन्याप्रदः उदङ्मुखः प्राङ्मुखाय वराय प्रत्यङ्मुखीं कन्यां तोयधारापुरस्सरं ददाति। 'केशवशर्मणो नप्त्रे नाराणशर्मणः पौत्राय माधवशर्मणः पुत्राय भारद्वाजगोत्राय गोविन्दशर्मणे वराय—विष्णुशर्मणो नप्त्रीं मधुसूदनशर्मणः पौत्रीं त्रिविक्रमशर्मणः मम पुत्रीं भार्गवगोत्रीं श्रीदेवीनाम्नीं कन्यां सालंकारां धर्मप्रजासंपत्त्यर्थं ब्रह्मतृप्त्यै ददामि' इत्येवं त्रिःकृत्वः उच्चार्य साक्षतहिरण्यतोयधारां वरस्य हस्ते दद्यात्। स वरः 'प्रजापतिः स्त्रिया' मित्युदकधारापुरस्सरं कन्यां प्रतिगृह्णाति। दानफलसिद्ध्यर्थं यथाशक्ति दक्षिणाञ्च ददामि इत्येतद्विधानं ब्राह्मदैवप्राजापत्यानामेव। आर्षादिविवाहेषु प्रकारान्तरमाह, वस्त्रगन्धाभरणादीनीति। आदिशब्देन पुष्पदामाक्षतकदलीनारिकेलादिमंगलद्रव्याणि गृह्यन्ते। पात्रेष्वेतानि संभृत्य पुण्यपण्यांगनादिभिर्वाहयित्वा कन्यागृहं बान्धवैस्सहितो गत्वा अन्तः प्रविश्य मधुपर्कं गृहीत्वा पूर्ववदन्योन्याभिवीक्षणं च कृत्वा 'तेज आयु' रिति वस्त्रादिना तामलंकृत्य प्रजापतिस्सोममित्या भरणमंगलसूत्रादिकमारोप्य पूर्ववत् हरणम् (इति द्वितीयः खण्डः)

(अथ तृतीयः खण्डः) ततः सहस्नातया वध्वा इत्यादि। एवं कृत्वा वरो वध्वा उत्तरतस्तिष्ठन् समावर्तनकालधृतमेखलाजिने विसृज्य आचम्य द्वितीययज्ञोपवीतं धृत्वा। ततः, अनन्तरं जायापती स्नानं कुर्याताम्। अवगाहनस्नानं कर्तुमशक्यश्चेत् उभयोर्मन्त्रस्नानम्। आत्मना सह स्नातायाः वध्वाः। यत्र

गुरुणा कृताघारोऽग्निस्तिष्ठति तामग्निशालामागत्य आसने प्राङ्मुखं यथा, तथा आसयित्वा। ततः अग्निं परिस्तीर्य जुहुयात्। स्पर्शयति। स्पर्शनं वरः कारयति। पाणिग्रहणं विसर्जनमाचमनञ्च। अञ्जलिमभिघार्य तस्या भ्राता अञ्जलौ लाजाना-पूरयेत्। 'तस्याः सोदर्यो लाजानावपतीत्येके समामनन्ती' त्यापस्तंबवचनात्। तदभावे अन्येन योनिबन्धुना पूरयेत्। पुनरभिघार्य तदंजलिं स्वपाणिभ्यां गृहीत्वा लाजांजलिना उत्तरपार्श्वतो जुहोति, कठिनद्रव्यत्वात्। पुरोडाशवत्सर्वेत्र चर्वादिकठिनहोमद्रव्याणां पार्श्वत एव होमः। आज्यादिद्रव्याणामग्रतो होमः। अत्र पक्षान्तरमाह प्रत्यङ्मुख' इत्यादि। (इति तृतीयः खंडः)

(अथ चतुर्थः खण्डः) अग्निप्रदक्षिणं जायापत्योः। त्रिपर्यायं लाजहोमः। ततो मूलहोमः। पुनः परिस्तीर्य। गृहप्रवेशहोमं संकल्प्य पुनः परिषेचनम्। उक्तहोमकरणम्। अथ सप्तपदक्रमणम्। अग्नेरपरस्यां प्रस्तरादपरतः प्रोक्ष्य, अन्यो-न्यमसंस्पृष्टान् दर्भानास्तीर्योदगग्रान् सप्त बर्हिषो वध्वा सह, वरः दक्षिणेन पादेन तान् बर्हिषः पर्यायेण पश्चिमादिपूर्वान्तमाक्रम्य एकैकस्योपरि पादं विक्षिप्यासप्तमं, बर्हिर्गत्वा निवर्तेत। ततः आसित्वा आसीनाया हृदयमभिमृशति। पुण्याहं स्वस्तिघोषेण वाचयित्वा—पुण्याहमन्त्रान्तर्गतद्रविणोदादिमन्त्राणां घोषो ध्वनिः तेन सह। अरुन्धतीत्यादिमन्त्रैः स्तोमारोपणम्। चत्वारि स्तोमानि—अक्षतपुष्पदूर्वांकुर-गन्धानां समूहः स्तोमः। आरोपणं—क्षेपणम्। इति पाणिग्रहणम्। इति शब्दः, क्रियापरिसमाप्तौ। पाणिग्रहणं स्तोमारोपणान्तमेवेति। पक्षान्तरं ध्रुवदर्श-नान्तमिति। गार्हस्थ्यं धर्मं—धर्मोक्तमनुतिष्ठतीति विज्ञायते। इति द्वितीयः पटलः (इति चतुर्थः खण्डः)

अथ तृतीयः पटलः। (अथ पञ्चमः खण्डः)। अथ चतुर्थीवासः। चतसृषु रात्रिषु वासोऽत्रेति चतुर्थीवासः। वैवाहिकमग्निमरण्यादौ समारोप्य तमग्निं वधूञ्च सह आदाय वरो वधूगृहात्स्वगृहमासन्नं चेत् तं प्रविशति—नो चेत् वधूगृह एव चतुर्थीवाससंकल्पः कर्तव्यः। प्राच्यामर्धे वास्तुविहिते गृहभागे औपासनाग्निकुंडं कृत्वा पूर्ववदुल्लेखनादीनि कृत्वा तत्र अग्निं समादधीत। तदुक्तं प्रायश्चित्ते। वा इति कटमुच्यते। आसीनः संकल्पयति। 'अत्राहं पत्न्या सह त्रिरात्रं ब्रह्मचर्येण

स्थास्यामी,' ति संकल्पः । आनक्षत्रदर्शनात् वाचंयमौ मौनिनौ अन्यतरानुपेतौ अनन्वितावितरेतरं निषीदेताम् । उदिते नक्षत्रे गृहात् निर्गत्य प्राचीं दिशं गत्वा तामुपस्थाय ततः चन्द्रं सप्तर्षीन् कृत्तिकादिनक्षत्राणि अरुन्धतीञ्च ध्रुवञ्च स्वयं दृष्ट्वा पत्नीञ्च दर्शयित्वा दंपती उपतिष्ठेयाताम् । श्रपणं – पचनम् । अभिघार्य, घृतेन । अग्निमुपसमाधाय – परिसमूह्य, जुहूमुपस्तीर्य चरुं द्विरवदाय 'हव्यवाह' मिति पुरोनुवाक्यामनुद्रुत्य 'स्विष्टमग्नि' मिति मन्त्रेण यजेत । श्रोत्रियमाचार्यादिकं तर्पयित्वा भोजयित्वा तस्मै ऋषभं वत्सतरं पुण्याहोक्तदानमन्त्रैः दद्यात् । अनृणः– ऋणाद्विमुक्तः । इति तृतीयः पटलः (इति पञ्चमः खण्डः) ।

अथ चतुर्थः पटलः । (अथ षष्ठः खण्डः) । स्थालीपाक आग्नेयः । 'पत्न्यासह नित्यौपासनमारप्स्ये तेन यावज्जीवं यक्ष्ये' इति संकल्पप्रकारः । नित्यं, सायं प्रातः । अग्निहोत्रहविषा अन्येनेति वा वाशब्दार्थः । हस्तेन पश्चतो जुहुयात् । अग्न्यन्तरसंसर्ग इति । गृहदाहाग्न्यादि संगृह्यते । अनुगते – उत्सन्ने वा । कृच्छ्रं – प्राजापत्यं पादकृच्छ्रं वा । 'औपासने अजस्रे वर्तमाने त्र्यहे होमे विच्छिन्ने पतिरेकोपवासं कृत्वा तत्पुनराधानं करोति । सद्योऽनुगते क्षिप्रं त्र्यहाभ्यन्तरे अग्निं ध्यात्वा तद्भस्म 'अयं ते योनि' रिति समिधमारोप्य 'उद्बुध्यस्वे' ति लौकिकाग्नौ समिधं निधाय पूर्ववत् प्रायश्चित्तं हुत्वा नित्यं जुहुयात् । अनुगते त्र्यहे अतीते अन्येनाग्निनापि संसर्गे पत्नी प्राजापत्यं पादकृच्छ्रं वा पतिरेकोपवासंकृत्वा पुनराधानं कुर्यात्' इति सूत्रम् । यद्यकृते स्थालीपाके अग्नावनुगते पुनर्विवाहः कर्तव्यः । उदक्या – रजस्वला । अशुचिरस्पृश्यः – शुनकशूद्रादिः । आदिशब्देन सूतिकादिः । 'अनालंभुक्या अग्नयः स्पृष्टा नश्येयुः' इत्यादिना श्रौतप्रायश्चित्ते वक्ष्यते । वियोगे पक्षस्य – पक्षप्रवासे । (इति षष्ठः खण्डः)

(अथ सप्तमः खण्डः) । पचनं, छुल्ल्यादिः । तस्मिन् । आवसथ्ये – गृहे तिष्ठतीत्यावसथ्यः – औपासनाग्निः । तत्र वा । वैश्वदेवार्थं गृहीतं चरुमोदनं अभिघार्य चतुर्धा विभज्य विश्वदेवदेवताप्रधानत्वात् वैश्वदेवम् । 'अग्नये' इत्यादि व्याहृत्यान्तहोमो गृहदेवताभ्यो बलिहरणादिकं देवयज्ञः । पितृभ्यो दक्षिणान्तं

पश्चिमान्तं वा बलिहरणं प्राचीनावीती दद्यात् । अयं पितृयज्ञः । तत उपवीती अप उपस्पृशेत् । भुवंगौ – द्वारबन्धस्य अन्धः स्थितयोः दक्षिणोत्तरपट्टिकयोरधिदेवौ । छुल्ल्याः हसन्त्याः । पक्षयोः मृत्पिंडयोः । पेषण्यां शिलायां, तत्पुत्रिकायां पेषण्योरुभयोरिति । हुतशेषं षोढा विभज्य मन्त्रोक्तानां प्रत्येकमेकीकृत्य वा निर्वपति । बलिकाले सर्वत्र पूर्वमुदकं ततो बलिं पुनरुदकञ्च दद्यात् । आचम्य, पूर्ववत् परिषेचनम् । भूष्णुकामा – वर्धिष्णुः । भर्तर्यशक्तौ प्रवसति वा रात्रौ दिवा वा होमं विना अमन्त्रकं तत्तत् स्थाने बलिं दद्यात् । तदुक्तं प्रायश्चित्ते । 'रात्रावमन्त्रकं बलिहरणं पत्नी वा करोति' इति । अयं भूतयज्ञः । वैश्वदेवकाले प्राप्तमतिथिमन्नादिना शक्त्या तर्पयेदिति मनुष्ययज्ञः । अत्र विशेषः । रात्रौ विवाहश्चेत् अकृत्वा अन्तहोमं अग्निं विना वध्वा सह वरो वधूगृहं प्रविश्य पूर्ववत् चतुर्थीव्रतं संकल्प्य चन्द्रादिदर्शनं कृत्वा तदानीमेव पूर्ववत् स्थालीपाकादीन् कुर्यात् । दिवा विवाहश्चेदन्तहोमं कृत्वा वैवाहिकं कर्म परिसमाप्य तस्यामेव रात्र्यामग्निं वध्वा सह आदाय चतुर्थीव्रतं संकल्प्य ध्रुवदर्शनान्तं कृत्वा पश्चादाघारं हुत्वा आग्नेयस्थालीपाकादीन् कुर्यात् । अपररात्र्यां विवाहश्चेत् तदा वैवाहिकं कर्म परिसमाप्य तदानीमेव चतुर्थीव्रतं संकल्प्य आग्नेयस्थालीपाकादीन् कुर्यात् । प्रागुदयाच्चेदिदं परेऽहनि रात्र्यां चतुर्थीवासादिकं कर्तव्यम् । अथवा चतुर्थेऽहन्येव रात्र्यां स्थालीपाकादीन् कुर्यात् । इति तृतीयः पटलः (इति सप्तमः खण्डः)

अथ चतुर्थः पटलः (अथ अष्टमः खण्डः) तदेवं यथोक्तं चतुर्थीव्रतं; तस्मात् । हविष्यं क्षारलवणवर्जमोदनम् । चतुर्थीवासोक्तचर्मादिशायिनौ च स्याताम् । अलंकृत्य पत्नीं स्वयं चालंकृत्य प्राच्यामुदीच्यां वा चतुर्थीवासास्तरणे उपवेश्य – शाययित्वा । उपगच्छेत् – समीपं गच्छेत् । 'सुप्रजास्त्वाये' त्यादिना मतान्तरेण उपगमनादिकमुच्यते । (इति अष्टमः खण्डः)

(अथ नवमः खण्डः) उक्तो निषेकः संस्कारः । अथ त्रिरात्रमित्यादि । निषेकानन्तरं यदा आर्तवं पश्यति तदा मलवद्वासाः स्यात् । धौतवस्त्रादि न धारयेत् । स्नानादीनि वर्जयेत् । आदिशब्देन तैलाभ्यञ्जनदन्तधावनभूविलेखन-

श्री भगवद्विखनोमुनिप्रणीतं

# श्रीवैखानसगृह्यसूत्रम्

द्वितीयं सम्पुटम्

## श्री श्रीनिवासमखिवेदान्तदेशिकैः विरचितया
## श्रीसूत्रतात्पर्यचिन्तामण्याख्यया व्याख्यया समलङ्कृतम्

वैयाकरणपञ्चानन
आकुलमन्नाडु श्री रों. पार्थसारथिभट्टाचार्यैः
संशोधितम्

तिरुमल तिरुपति देवस्थानम्, तिरुपति।
1997

**VAIKHANASA GRUHYA SUTRAM - VOL. II**

Commentator :

**SRINIVASAMAKHI VEDANTHADESIKA**

EDITED BY:

**AKULAMANNADU ROMPICHERLA PARTHA SARATHY BHATTACHARYA**

T.T.D. Religious Publications Series No. 495





First Edition : 1967
Re-Print : 1997

**Price : Rs. 45/-**

Copies: 1,000



*Published By:*

M.K.R. Vinayak, I.A.S.,
*Executive Officer,*
Tirumala Tirupati Devasthanams,
Tirupati - 517 507.

Printed At :
**Gayathri Art Printers**
5-9-33, Basheerbagh
Hyderabad-500029.
Phone : 230210

## FOREWORD

*The Vedas are acknowledged as the fountainhead of our culture and heritage. They have six auxiliaries or Vedangas viz., Siksha, Vyakarana, Chandas, Nirukta, Jyotisha and Kalpasutra. Among them, the Kalpa Sutra occupies a very prominent place as it deals extensively with Yajnas and Yagas and other rituals. The Kalpasutras are further divided into 1. Srauta sutras, 2. dharma sutras and 3. gṛhya sutras. Unlike other sutras, gṛhya sutras pertain to the religious rites, daily as well as occasional, to be observed by the householders.*

*Though there are disparate gṛhya sutras for those who follow different traditions and systems the gṛhya sutras of Sage Sri Vikhanasa are considered more ancient and authoritative. It is said the sage, an incarnation of Lord Brahma codified them at the behest of Sriman Narayana. The gṛhya sutras of Śri Vikhanasa Maharshi have an added significance at Tirumala. The mode of rituals in the temple of Lord Venkateswara is done in accordance with the Vaikhanasa agamas. As such, the gṛhya sutras of Sri Vikhanasa serve as a useful manual to the archakas for their daily worship.*

*The present publication in two volumes is a reprint of the book published in 1967. The text contains Srinivasa Dikshita's 'Sutra Tatparya Chintamani' as it sets at rest many divergent views with elaborate discussion and cogent arguments.*

**Executive Officer**
**T.T.Devasthanams, Tirupati**

## अथ त्रिंशः खण्डः

अथ वर्षवर्धनम् ॥ १ ॥

अथेत्यादि । अथ — नामकरणानन्तरम् । आयुष्यवर्षा वर्धन्तेऽनेनेति वर्षवर्धनम् । संस्काराणां मध्ये पठितत्वात् अकरणे प्रायश्चित्तविधानाच्चेदं नित्यम् ।

दारकस्य जन्मनक्षत्रं यद्देवत्यं सास्य देवता प्रधाना भवति ॥ २

दारकस्येत्यादि । दारकस्य कुमारस्य । जन्मनक्षत्रं यद्देवत्यं — कृत्तिकासु जातस्याग्निः — रोहिण्यां जातस्य प्रजापतिः इत्यादि । इतरे अंग-देवताः । स्वजन्मनक्षत्राधिपतयो देवाः ब्राह्मणाश्च पूजनीयाः ।

स्मृतिः — 'सर्वैः स्वजन्मदिवसे स्नातैर्मंगलवारिभिः ।
गुरुदेवाश्च विप्राश्च पूजनीयाः प्रयत्नतः ॥

स्वनक्षत्रञ्च पितरस्तथा देवाः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात्कर्तव्यश्च महोत्सवः' । इति

आयुष्याभिवृद्ध्यर्थमश्वमेधफलावाप्त्यै च कर्तव्यम् ।

तस्मादाघारं हुत्वा तदादि देवतानक्षत्राणि च जुहुयात् ॥ ३ ॥

'अग्नये कृत्तिकाभ्यः — प्रजापतये रोहिण्यै — सोमाय मृग-शीर्षाय — रुद्राय आर्द्रायै — अदित्यै पुनर्वसुभ्यां — बृहस्पतये तिष्याय — सर्पेभ्यः आश्रेषाभ्यः — पितृभ्यो मघाभ्यः — अर्यम्णे फल्गुनीभ्यां — भगाय फल्गुनीभ्यां — सवित्रे हस्ताय — त्वष्ट्रे चित्रायै — वायवे निष्टयायै — इन्द्राग्निभ्यां विशाखाभ्यां — मित्राय अनूराधेभ्यः — इन्द्राय ज्येष्ठायै — प्रजापतये मूलाय — अद्भ्यः अषाढाभ्यः — विश्वेभ्यो देवेभ्यः अषाढाभ्यः — ब्रह्मणे अभिजिते —

विष्णवे श्रोणायै – वसुभ्यः श्रविष्ठाभ्यः – वरुणाय शतभिषजे – अज एक-पदे प्रोष्ठपदेभ्यः – अहिर्बुध्न्यै प्रोष्ठपदेभ्यः – पूष्णे – रेवत्यै – अश्विभ्यां अश्वयुग्भ्यां – यमाय अपभरणीभ्यः स्वाहा । व्याहृतिः ॥ ४ ॥

होमप्रकारः कथमित्याकांक्षायामाह अग्नय इत्यादि अपभरणीभ्य-स्स्वाहा इत्यन्तेन ।

स्मृतिः — 'सौरे मासे तिथिर्नो चेत् चान्द्रमासस्तु गृह्यते ।
तिथिर्नक्षत्रमेकस्मिन् मासि द्विदिनभाग्यदि ॥

तिथिः पूर्वा तु कर्तव्या जन्मनक्षत्रमन्ततः ।
एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।
तत्राद्ये पितृकार्याणि दैवकार्याणि चोत्तरे' ॥ इति

कर्तव्यानीत्यन्वयः ।

संग्रहे — 'यस्मिन् मासे द्विनक्षत्रं तिथिर्वा संभवेद्यदि ।
पित्र्यं पूर्वे तु कर्तव्यं जन्मर्क्षमपरे तथा' ॥ इति

व्याघ्रपादः — 'यस्मिन् राशिगते सूर्ये विपत्तिरुपपद्यते ।
तेषां तत्रैव कर्तव्याः पिंडदानोदकक्रियाः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने विंशः खण्डः

## अथ एकत्रिंशः खण्डः

आर्षभं वैरवणमग्नीषोमीयं वैष्णवं धातादि मूलहोमं यद्देवादि-कूश्माण्डहोममासावितव्रतबन्धात् जुहोति ॥ १ ॥

आर्षभमित्यादि। ऋषभपदघटितमन्त्रद्वयसंग्राहार्थमार्षभमित्युक्तम्। [1]यद्देवाः, देवेभ्य आदित्येभ्यः–देवा जीवनकाम्या, विश्वेभ्यो देवेभ्यः–ऋतेन द्यावापृथिवी, द्यावापृथिवीभ्यां सरस्वत्यै–इन्द्राग्नी मित्रावरुणौ, इन्द्राग्नीमित्रावरुण सोमधातृबृहस्पतिभ्यः–सजातशँसात्, अग्नये जातवेदसे, यद्वाचा यन्मनसा, अग्नये गार्हपत्याय–येन त्रितः ज्योतिषे, यत्कुसीदं, अग्नये–यन्मयि माता, अग्नये गार्हपत्यायपय–यदा पिपेष, अग्नये–यदन्तरिक्षं, अग्नये गार्हपत्याय, यदाशसा, अग्नये गार्हपत्याय–अतिक्रामामि, अग्नये–त्रिते देवाः, अग्नये गार्हपत्याय–दिवि जाताः, अद्भ्यः शुन्धनीभ्यः–यदापो नक्तं, अद्भ्यो हिरण्य-वर्णाभ्यः–इमं मे वरुण, तत्त्वायामि, वरुणाय–त्वं नो अग्ने, सत्वं नो नो अग्ने, अग्नीवरुणाभ्यां–त्वमग्ने, अग्नये अयसे।

यददीव्यं, अग्नीन्द्राभ्यां–यद्धस्ताभ्यां, उग्रं पश्याराष्ट्रभृद्भ्यामप्सरोभ्यां–उग्रं पश्ये राष्ट्रभृत्, उग्रं पश्याराष्ट्रभृद्भ्यां–अवते, उदुत्तमं, इमं मे वरुण, तत्त्वायामि, वरुणाय–त्वं नो अग्ने, सत्वं नो अग्ने, अग्नीवरुणाभ्यां–संकुसुको, निर्यक्ष्मं, दुरशँसानु–देवेभ्यः संवर्चसा पयसा, त्वष्ट्रे–आयुष्टे विश्वतः, अग्नये–आयुर्दा अग्ने, आयुर्दायाग्नये–इममग्न आयुषे, अग्नीवरुणादितिविश्वभ्यो देवेभ्यः–अग्न आयूँषि, अग्ने पवस्व, अग्निः ऋषिः पवमानः, अग्नये पवमानाय–अग्ने जातान्, सहसा जातान्, अग्नये जातवेदसे–अग्ने यो नोऽभितः, अग्नये वृत्रघ्ने–अग्ने योनः, अग्नये–यो नश्शपात्, उषोनिसृग्भ्यां–यो नस्सपत्नः, देवेभ्यः–यो मां द्वेष्टि, यो अस्मभ्यं, अग्नये जातवेदसे–सँशितं, ब्रह्मणे–

---

1. अत्र आदित्येभ्यः देवेभ्य इदं न मम' इत्यादि उद्देश्यत्यागबोधकं वचनं प्रयोक्तव्यं न वेति विचारः पञ्चदशखण्डे १४८ पुटे द्रष्टव्यः।

उदेषां, अग्नये – पुनर्मनः, अग्नये वैश्वानराय। एवं यद्देवादिकूश्माण्डहोमं जुहुयात्। 'यद्देवादेवहेळनं यददीव्यन्नृणमहं, बभूव आयुष्टे विश्वतो दध' दित्येतैराज्यं जुहुत वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत यदर्वाचीनमेनो-भ्रूणहत्यायास्तस्मान्मोक्ष्यध्वे' इतीत्यादि केचिदच्छिद्रपाठोक्तमपि कुर्वन्ति।

भृगुः – 'यद्देवादि चतुस्सूक्तैः जुहुयादाज्यमन्वहम्।
वैश्वानरायेति जपन्नुपतिष्ठेत पावकम्' ॥ इति

यद्देवाः, आदित्येभ्यः – देवा जीवनं, अग्नये गार्हपत्याय – ऋतेन द्यावापृथिवीभ्यां सरस्वत्यै – सजातशँसात् जातवेदसे – यद्वाचा, अग्नये गार्ह-पत्याय–यद्धस्ताभ्यां, अदीव्यन्नृणं यन्मयि मातादयः उक्ताः। अत्र **बोधायनः**। समित्पाणिर्यजमानाय लोकेऽवस्थाय (?) वैश्वानराय प्रतिवेदयाम' इति द्वादशर्चेन सूक्तेनोपस्थाय ''यन्मया मनसा वाचा कृतमेनः कदाचन। सर्वस्मान्मेलितो मोग्धि त्वँ हि वेत्थ यथातथं स्वाहे' ति समिधमभ्याधाय वरं ददाति' इति। **आसा-वित्रव्रतबन्धात्** जुहोति। **आसावित्रव्रतबन्धात्** उपनयनपर्यन्तं। जन्ममासे जन्मनक्षत्रे जुहुयादित्यर्थः। अत्र **बोधायनः** – 'अथ संवत्सरे षट्सु षट्सु मासेषु, चतुर्षु मासेषु, ऋतौ ऋतौ, मासि मासि वा कुमारस्य जन्मनक्षत्रे कुर्यादि' ति ॥

**[1]उपनीतस्य च तत्र तत्र व्रतसूक्तानि ॥ २ ॥**

**उपनीतस्येत्यादि**। उपनयननक्षत्रस्य च द्वितीयजन्म (नक्षत्र) त्वात् यस्मिन् नक्षत्रे व्रतसूक्तानि भवन्ति तत्र तत्र (उपनीतस्य) कुर्यादित्यर्थः ॥

**वेदस्नातस्य यदह्नि विवाहो भवति मासिके वार्षिके वाह्नि तस्मिन्, यत् स्त्रिय आहुः पारंपर्यागतं शिष्टाचारं तत् करोति ॥ ३ ॥**

वेदस्नातस्येत्यादि। **वेदस्नातस्य** – समावृत्तस्य। **यदह्नि** – समा-वर्तनदिवसे विवाहो भवति। तस्मिन् नक्षत्रे गृहस्थस्य, **मासिके वार्षिके वा**

1. उपनीतस्य समावर्तनपर्यन्तं, उपनयननक्षत्रे तत्कालव्रतसूक्तानि पूर्वं हुत्वा पूर्ववत् कूश्माण्डहोमान्तं जुहुयात् इति ग्रन्थाक्षरमुद्रितकोशे टिप्पणी।

मासे मासे संवत्सरे वा। अह्नि – न रात्रौ। तस्मिम्। यत् स्त्रिय इत्यादि। स्त्रियः पारम्पर्यागतं शिष्टाचारं यमाहुः, तं कुर्यात्। कुलवृद्धाः स्त्रियः यदाहुः तदपि तत्तत्काले कुर्यादिति भावः। 'य एव लौकिकाः त एव वैदिकाः'। इति

'येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गः तेन गच्छन् न रिष्यति'॥ इति स्मृतिः

शिष्टाचारविषये बोधायनः – 'प्रत्यक्कालकाद्वनात् दक्षिणेन हिमवन्तमुदक्पारियात्रमेतदार्यावर्तं तस्मिन् य आचारः सः प्रमाणम्। गंगायमुनयोरन्तरमित्येके। अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति।

'पश्चात्सिन्धुर्विधरणी सूर्यस्योदयनं पुनः।
यावत् कृष्णा विधावन्ति तावद्धि ब्रह्मवर्चसम्'॥ इति

मनुः — 'धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः।
द्वितीयं धर्मशास्त्रञ्च तृतीयं लोकसंग्रहः॥

आसमुद्रात्तु वै पूर्वमासमुद्रात्तु दक्षिणात्।
हिमवद्विन्ध्ययोर्मध्ये आर्यावर्तं प्रचक्षते'॥

'सरस्वतीदृषद्वत्योः देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशमार्यावर्तं प्रचक्षते॥

तस्मिन् देशे य आचारः पारंपर्यक्रमागतः।
वर्णानां सान्तरालानां सदाचारस्स उच्यते॥

कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाश्शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरम्'॥

'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परम्॥
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः'॥ इति

**तथाऽग्निष्टोमादियज्ञानामाधाननक्षत्रे वर्षान्ते करोति ॥ ४ ॥**

तथेत्यादि । तथा पूर्वोक्तप्रकारेण । आधाननक्षत्रे सर्वयज्ञानां आधान नक्षत्र एव कुर्यात् । आवश्यकत्वाभिप्रायेणैवमुक्तम् । नित्यत्वाभि-प्रायेण वर्षान्ते इत्युक्तं इति न पौनरुक्त्यम् ।

**तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रविवर्षेणाधि-कान्यधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति ॥ ५ ॥**

तदेवमित्यादि । तत्—वक्ष्यमाणब्रह्मशरीरत्वकारणात् । एवं उक्त प्रकारेण । वर्तमानस्य—प्रवर्तयतः । अष्टमासेत्यादि मासशब्दविवरणं सिद्धान्तशिरोमणौ ।

'मस्यन्ते परिमीयन्ते स्वकाला वृद्धिहानितः ।
मासा एते सुता नाम शतं तिथिसमन्विताः ॥

वसन्त्यृषन्तो वर्षेषु प्रस्तावेषु चतुर्विधाः ।
ऋषिरित्येरमरणे (?) वर्षत्वं तेषु तेन च' ॥ इति

रविवर्षादीनां लक्षणं गर्गः ।

'चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासस्स भास्करः ॥

चान्द्रसावनसौराणां मासानां च प्रभेदतः ।
चान्द्रसावनसौराः स्युः त्रयस्संवत्सरा अपि' ॥ इति

स्मृत्यन्तरे— 'चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा ।
शुक्लपक्षादिकं मासं नांगीकुर्वन्ति केचन' ॥ इति

स्मृत्यन्तरे— 'गर्भे वार्धुषिके भृत्ये प्रेतकृत्येऽनुमासिके ।
सर्वदानानि होमाश्च सावने मासि कीर्तिताः ॥

श्रौतस्मार्तानि कर्माणि मासोक्तानि व्रतानि च ।
तिलदानादिदानानि चान्द्रे मासे वदन्ति हि ॥

एकोत्तरषष्टियुक्तशतत्रयदिनानि च ।
तावत्परिमितः कालो गुरोर्मासस्तु वत्सरः ॥

चतुर्विंशत्युत्तराणि शतत्रयदिनानि च ।
नाक्षत्रवत्सरः प्रोक्तः आयुर्दाये प्रशस्यते' ॥ इति

ज्यौतिषे — 'सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते' ॥ इति

ब्रह्मसिद्धान्ते — 'सौरेणाब्दस्तु मानेन यथा भवति भार्गव ।
सावने तु तथा मासे दिनषट्कं न पूर्यते ॥

दिनरात्राश्च ते राम प्रोक्तस्संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन च ॥

एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥

स चाधिमासकः प्रोक्तः काम्यकर्मसु गर्हितः ।
एकोद्दिष्टे विवाहादौ ऋणादौ सौरसावनौ ॥
सदैव पितृकृत्यादौ मासश्चान्द्रमसः स्मृतः' ॥ इति

पितामहः — 'दैवे कर्मणि पित्र्ये च चान्द्रो मासः प्रशस्यते' ॥ इति

श्रीभारते: — 'पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ।
एकोद्दिष्टे विवाहादावृणादौ सौरसावनौ ॥
सदैव पितृकार्यादौ मासश्चान्द्रमसः स्मृतः' ॥ इति

सत्यव्रतः — 'विवाहव्रतयज्ञेषु सौरमासः प्रशस्यते ।
पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाऽऽब्दिकं' ॥ इति

बृहस्पतिः — 'रवेरप्युदये मानं चान्द्रं स्यात्पितृकर्मणि ।
यज्ञे सावनमित्याहुः राका सर्वव्रतादिषु' ॥ इति

ज्यौतिषे — 'द्वात्रिंशन्मासदिवसाः षोडशाथ घटीत्रयम् ।
विनाड्यः पञ्चपञ्चाशत् कालोऽयं त्वधिमासकः ॥

ग्रन्थान्तरे — 'द्वात्रिंशद्भिर्गतैर्मासैः दिनैष्षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्येकोऽधिमासकः' ॥ इति

स्मृत्यन्तरे — 'सृष्टेः कारणभूतौ तौ सूर्याचन्द्रमसौ मिथः ।
तयोर्गतिवशात्कालः सर्वदा परिवर्तते ॥

ऊर्ध्वप्रदेशवर्ती च मन्दगामी दिवाकरः ।
अधःप्रदेशवर्ती च शीघ्रगामी निशाकरः ॥

तयोर्गतिवशाद्देशे मंडलस्य रवेरधः ।
व्यवस्थितममानं स्यात्सकलं शशिमंडलम्' ॥ इति

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
संसर्पांहस्पती मासौ सर्वकर्मसु निन्दितौ ॥

पर्वद्वयं संक्रमयोर्यदि स्यात् पर्वान्तरे संक्रमणद्वयञ्च ।
संसर्पकांहस्पतिमाससंज्ञौ सूर्येन्दुगत्या त्वधिमाससंज्ञौ ॥ इति

मासेषु द्वादशादित्याः तपन्ते हि यथाक्रमम् ।
नपुंसकोऽधिके मासः मंडलं तपते रवेः ॥ इति

शातातपः — 'मंडलान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋतैर्यातुधानाद्यैस्समाक्रान्तो विनाशकैः ॥

मलिम्लुचैस्समाक्रान्तः सूर्यसंक्रान्तिवर्जितः ।
मलिम्लुचं विजानीयात् गर्हितं सर्वकर्मसु' ॥ इति

ज्यौतिषे — 'कन्यागतेऽथ वा सूर्ये वृश्चिके वाऽथ धन्वनि ।
मकरे वाऽथ मीने वा नाधिमासो विधीयते' ॥ इति

ब्रह्मसिद्धान्ते — 'अमावास्यापरिच्छिन्नो मासस्स्यात् ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः' ॥ इति

अगस्त्यः -- 'नष्टेन्दुर्वा यदा मध्ये द्वे संक्रान्ती यदा भवेत् ।
अंहस्पतिस्तथाऽऽद्यः स्यात् संसर्पः परतस्तथा' ॥ इति

सत्यव्रतः — 'राशिद्वयं यत्र मासे संक्रमेत दिवाकरः ।
नाधिमासो भवेदेषः मलमासस्तु केवलम्' ॥ इति

श्रीधरः -- 'अमा च पूर्णिमा चैव यन्मासे युगलं भवेत् ।
यस्मिन् न दृश्यते वाऽपि चौलकर्मादि वर्जयेत् ॥

द्वितीयपूर्णिमायुक्तं विषमासं वदन्ति हि ।
पूर्णिमा च न दृश्येत मलमासः प्रकीर्तितः ॥

एकमासे द्वये पूर्णे दर्शस्यैकस्य संभवे ।
अग्निज्वालेति विख्याता सर्वकर्मविनाशिनी ॥

'अंहस्पतिरवन्तीषु संसर्पः कोसलेषु च ।
अधिमासस्तु पांचाले अन्यत्र तु न दोषभाक्' ॥ इति

**अशीतिवर्षाणीत्यादि** । अष्टमासाधिकत्र्यशीतिवर्षाणि सौरमासेन, अधिकानीत्युक्तत्वात् । सौरमानेन यदा अष्टमासयुक्तवर्षत्रयाधिकाशीतिवर्षाणि **अधिगच्छेयुः** भवन्ति । तदा (चान्द्रमान) **दृष्टसहस्रचन्द्रो भवति** । अस्मिन् पक्षे (सौरपक्षे) मासचतुष्टयाधिकदर्शनं भवति ॥[1]

**तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते ॥ ६ ॥**

**तमेनमित्यादि** । उक्तप्रकारेण वर्तमानमेनम् । **क्रियायुक्तं** वर्षवर्धन-क्रियायुक्तं ब्रह्मशरीरमित्याचक्षते । यद्वा – सहस्रचन्द्रजीविनं क्रियायुक्तं ब्रह्मविदा समानशरीरमित्याचक्षते ।

1. चान्द्रमानरीत्या तु अष्टमासाधिकाशीतिवर्षेषु दृष्टसहस्रचन्द्रो भवति । तथा हि :-- अष्टमासाधिकाशीतिवर्षाणां माससंख्याक्रमेण अष्टाधिकषष्ट्युपेतनवशतं (९६८) इन्दवो जायन्ते । 'पंचमे पंचमे वर्षे द्वौ मासौ अधिमासकौ' इति वचनात् द्वात्रिंशदधिकमासास्सन्ति । तावन्तः इन्दवः जायन्ते । आहत्य सहस्रमिन्दवः भवन्ति । इति

मृष्टान्नदाता तरुणोऽग्निहोत्री
वेदान्तवित् चन्द्रसहस्रदर्शी ।
मासोपवासी च पतिव्रता च
षड्जीवलोके मम वन्दनीयाः' ॥

इति भगवतोक्तम् । यद्वा क्रियायुक्तं -शताभिषेकक्रियायुक्तम् ।

**तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पूर्ववत् हुत्वा तथैव 'कपिल इवे'ति वृद्धस्य, वृद्धाया वा वदन् अक्षतोदकादीन् मूर्ध्न्यादध्यात् ॥ ७ ॥**

**तस्मादित्यादि । तस्मात्** वैष्णवत्वसंभवात् हेतोः ।

'न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः
सितमनसं तमवेहि विष्णुभक्तम्' ॥

इति विष्णुपुराणस्मरणात् स्वकर्मानुष्ठानाद्धि वैष्णत्वसंभवः ।

एवं — आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ।
वैष्णवो नः कुले जातः स नस्सन्तारयिष्यति ॥

इत्यादिना पुत्रादीनां वैष्णवत्वसंभवेन पितृपितामहादीनामुत्तरणस्मरणाच्च तस्मादित्युक्तम् । **नान्दीमुखं कृत्वा** । अष्टादशसंस्कारेषु वर्षवर्धनस्यानन्तर्भावात् पृथक्त्वेन नान्दीमुखग्रहणम् । **शुक्लपक्षे शुद्धेऽहनीत्यादि** । उदगयने आपूर्यमाणपक्षे पुण्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्तिमृद्धिमिति वाचयित्वा औपासनाग्नावाघारं हुत्वा । **पूर्ववत्** नामकरणवत् स्विष्टाकारान्तं हुत्वा पञ्चवारुणं प्राजापत्यं स्विष्टाकारञ्च हुत्वा पूर्ववत् **अक्षतोदकादीन्** पाणिभ्यां गृहीत्वा 'कपिल इवे'ति मन्त्रेण वृद्धस्य वृद्धाया वदन् अक्षतोदकपुष्पादीन् मूर्ध्नि आदद्ध्यात् ॥

अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकम् ।
यत्तु पापस्य शान्त्यर्थं दीयते विदुषां करे ॥

नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ।
अपत्यविजयैश्वर्यस्वर्गार्थं यत्प्रदीयते ॥

दानं तत्काम्यमाख्यात ऋषिभिः धर्मचिन्तकैः ।
ईश्वरप्रीणनार्थं यत् ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद्विमलं शुभम्' ॥ इति

देवलः – 'द्विहेतु षडनुष्ठानं षडंगं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥

नाल्पत्वं न बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धाश्रद्धे च दानानां वृद्धिक्षयकरे हिते' ॥ इति **द्विहेतु** ।

धर्मश्चार्थश्च कामश्च व्रीलाहर्षभयानि च ।
**अनुष्ठान**निदानानि षडेतानि प्रचक्षते ॥

पात्रेभ्योदीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्मबुद्ध्या यत् **धर्मदानं** तदुच्यते ॥

प्रयोजनमपेक्ष्यैव यत्प्रसंगात् प्रदीयते ।
**तदर्थदान**मित्याहुः हैतुकं फलहेतुकम् ॥

स्त्रीपानमृगयाक्षाणां प्रसंगात् यत्प्रदीयते ।
अनर्हेषु च रागेण **कामदानं** तदुच्यते ॥

संसदि व्रीलया वाऽर्थो अर्थिभ्यो वा प्रयाचितः ।
प्रदीयते च यद्दानं **व्रीलादान**मिति स्मृतम् ॥

**दृष्ट्वा** प्रयाणे श्रुत्वा वा हर्षाद्यद्यत् प्रयच्छति ।
**हर्षदान**मिति प्राहुः दानं तद्धर्मचिन्तकाः ॥

रिक्तेभ्यश्चाप्यरिक्तेभ्यो वस्त्रतन्दुलमृष्टभाक् ।
अपूपानि फलादीनि बालेभ्यो यद्ददानि च ॥

आक्रोशनार्थं हिंसानां प्रतीकाराय यद्भवेत् ।
दीयते तापकर्तृभ्यो भयदानं तदुच्यते ॥

दाता प्रतिगृहीता वा श्रद्धा देयश्च धर्मयुक् ।
देशकालौ च दानानामंगान्येतानि षड्विदुः ॥

अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्यदिनकर्मा च षड्भिर्दाता प्रशस्यते ॥

शौचं शुद्धिर्महाप्रीतिरर्थिनां दर्शने तथा ।
सत्कृतिश्चानसूया च दानश्रद्धेत्युदाहृताः ॥

यद्यत्र दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः ।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥

अवस्था देशकालानां पात्रदात्रोश्च संपदः ।
हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाप्यन्यथा भवेत् ॥ इति षडंगम्[1]

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड्विपाकयुगुद्दिष्टं षडेतानि विपाककम् ॥

नास्तिकस्तेनहिंस्रेभ्यः चोराय पतिताय च ।
पिशुनभ्रूणहर्तृभ्यः प्रदत्तं दुष्फलं भवेत् ॥

महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
परबाधाकृतं दानं स्थितमप्यूनतां व्रजेत ॥

यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु ।
तत्तु संकल्पदोषेण दानं तुल्यफलं भवेत् ॥

युक्तांगैः सकलैः षड्भिः दानं स्याद्विपुलोदयम्[1] ।
अनुक्रोशवशाद्दत्तं दानमक्षय्यतां व्रजेत् ॥

---

1. षडङ्गेषु प्रतिगृहीतृदेययोः विवरणं न दत्तम् ।

[1]नवोत्तमानि, चत्वारि मध्यमानि विधानतः ।
अधमानि विशेषाणि त्रिविधत्वमिदं विदुः ॥

अन्नं विद्यावधूस्त्रीणां गोभूमश्वा(?)श्वहस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥

दद्यादाच्छादनं वासः परिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥

उपानत्प्रेष्यदानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ? ॥

बहुत्वादर्थजातानां संख्या शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ।
तामसानां फलं भुङ्क्ते.... तत्त्वे मानवस्सदा ॥

वर्णसंकरभावेन वार्धके यदि वा पुनः ।
बाल्ये वा दासभावे वा नात्र कार्या विचक्षणा ॥ इति

'एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते ।
दस्युभिर्मुषितेनेव प्रतिग्राहकयाचकौ' ॥ इति त्रिनाशम्

बृहस्पतिः — 'अतोऽयं सात्त्विकं दानमुदपूर्वन्तु शान्तिकम् ।
आशिषा पौष्टिकं विद्यात् त्रिविधं दानलक्षणम्' ॥ इति

मनुः — 'येन येन हि भावेन यद्यद्दानं प्रयच्छति ।
तेन तेन हि भावेन प्राप्नोति प्रतिपूजनम्' ॥ इति

नारदः — 'आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ।
पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ॥
अन्नप्रदानञ्चारामाः पूर्तमित्यभिधीयते' ॥ इति

व्यासः — 'मातापित्रोश्च यद्दत्तं भ्रातृस्वसृसुतासु च ।
जायात्मजेषु यद्दत्तं सोऽनिन्द्यस्वर्गसंक्रमः ॥

1. पूर्वोपात्तदेवलवचने 'चतुष्प्रकारमित्यस्य विवरणं नदत्तम् ।

पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

न केवलं ब्राह्मणानां दानं सर्वत्र शस्यते ।
भगिनी भागिनेयानां मातुलानां पितृष्वसोः ।
दरिद्राणाञ्च बन्धूनां दत्तं कोटिगुणं भवेत् ' ॥ इति

दक्षः — 'मातापित्रोर्गुरोर्मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तमक्षय्यमुच्यते ॥

हृतस्वा हृतदायाश्च ये विप्रा देशविप्लवे ।
अथार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ' ॥ इति

छागलेयः — 'प्रख्यापनं प्रार्थ्यं धनं प्रश्नपूर्वं प्रतिग्रहः ।
याजनाध्यापने वादः षड्विधो वेदविक्रयः ' ॥ इति

शातातपः — 'प्रश्नपूर्वन्तु यो दद्यात् ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ' ॥ इति

स्मृत्यन्तरे — 'भविष्यत्ययने दानं वर्तमाने तु संक्रमे ।
अतीते च व्यतीपाते अन्येषु च यथेच्छया ' ॥ इति

शातातपः — 'कुर्यात्सदाऽयने मध्ये विषुवत्यां विषूवति ।
षडशीत्यामन्त्यमतो दानादिविधयः स्मृताः ' ॥ इति

वृद्धवसिष्ठः — 'वृषवृश्चिककुंभेषु सिंहे चैव यथा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ॥

कन्यायां मिथुने मासे (मीने?) धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः ' ॥ इति

याज्ञवल्क्यः — 'शतमिन्दुक्षये दानं सहस्रन्तु रविक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ' इति ॥

भारद्वाजः – 'अश्रोत्रियः श्रोत्रियो वा अपात्रं पात्रमेव वा ।
विप्रब्रुवो वा विप्रो वा ग्रहणे दानमर्हति ' ॥ इति

गोदासीकन्यकाश्चैव तिष्ठन्नेव प्रयोजयेत् ।
बालं केशे तथा हस्तं न्यस्य हस्ते जलं क्षिपेत् ।
कर्णेऽजं पशवस्सर्वे ग्राह्या पुच्छे विचक्षणैः ' ॥

गृह्णीयान्महिषं शृंगे खरं वै पृष्ठभागतः ' ।
'व्यतीपाते वैधृतौ च दत्तमक्षयकृतद्भवेत ' ॥ इति

कालनिर्णये – 'कर्कटो मकरस्सिंहः कुंभोऽलिर्वृषभस्तुला ।
मेषः कन्या धनुर्मीनौ मिथुनश्चेति संक्रमाः ॥

द्वादशात्र क्रमाद्विद्यात् अयने दक्षिणोत्तरे ।
चत्वारोनन्तदा विष्णुपदास्स्युर्दक्षिणोत्तरे ॥

विषुवे तत्परे द्वौ तु चत्वारस्तदनन्तराः ।
षडशीतिमुखाः प्रोक्ताः त्रिंशत्पूर्वास्तु कर्कटे ॥

नाडिका मकरे तु स्युः पुण्या विंशतिरन्तराः ।
चतुर्ष्वनन्तरादूर्ध्वं प्राक् च षोडश षोडश ॥

संक्रमेषु च पुण्याः स्युः संक्रान्त्यां विषुवाह्वयोः ।
दश प्राक् दश पञ्चैव पुण्याः स्युः षडशीतिषु ॥

षष्टिर्नाड्योऽह्यतीतासु पुण्यदा इति कीर्तिताः ।
संक्रमेऽहन्यहः कृत्स्नं पुण्यं स्नानादिकर्मसु ॥

अर्वाङ् निशि तथा निशाचेत्(?) भवेदावर्तनात्परः ।
कालं पुरातनस्याह्नः ऊर्ध्वञ्चेदुत्तरेऽहनि ॥

आवर्तनादधः कालात् निशीथसमये यदि ।
पूर्वोत्तराहर्द्वितयं पुण्यमाहुर्मनीषिणः ॥

प्रत्यूषे वा निशीथे वा यदि कर्कटसंक्रमः ।
पूर्वस्मिन्नह्नि कुर्वीत स्नानदानादिकं नरः ॥

प्रदोषे वा निशीथे वा भास्करः संक्रमो यदि ।
पराह्न एव सर्वत्र पुण्याः सन्निधिनाडिकाः ॥

स्नायात् श्राद्धञ्च दानञ्च विदध्यात् संक्रमेष्वपि ।
अयने विषुवद्विष्णुपद्योस्तु षडशीतिषु ॥

सदा मध्ये चापगमे कुर्यात् स्नानादिकं नरः ।
विष्णुपद्याह्वयेष्वत्र स्नानदानादिकं कृतम् ॥

सहस्रगुणमुद्दिष्टं षडशीतिमुखेषु च ।
विषुवत्ययने लक्षगुणं कोटिगुणं भवेत् ॥

तत्तत्संक्रान्तिपूर्वेषु तद्वदेवायनेष्वपि ।
मकरस्यायनेऽप्यादौ कालः स्नानादिनिश्चयः ॥

राहुदर्शनसंक्रान्तिविषुवात्ययवृद्धिषु ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते' ॥ इति

पराशरः — 'पुत्रजन्मनि यज्ञे च विषुवे संक्रमे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि' ॥ इति

ब्राह्मे — 'उपक्रमे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
पुण्यं कोटिगुणं मध्ये मूर्तकाले (?) त्वनन्तकम्' ॥ इति

स्मृत्यन्तरे — 'कार्मुकन्तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' ॥ इति

वृद्धगार्ग्यः — 'यदाऽस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वाऽर्धरात्रे वा स्नानं दानं परेऽहनि' ॥ इति

'अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः' ॥ इति

स्मृत्यन्तरे – 'मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिका प्रोक्ता संक्रान्तिस्सप्तधा नृप ॥

मंदाऽध्वरेषु (?) विज्ञेया वृद्धौ मंदाकिनी तथा ।
क्षिप्रे ध्वांक्षीति जानीयात् उग्रे घोरा प्रकीर्तिता ॥

चोरैर्महोदरी ज्ञेया क्रूरैः ऋक्षैश्च राक्षसी ।
मिश्रिता चैव विज्ञेया मिश्रैः ऋक्षैश्च संक्रमे ॥

द्विचतुःपञ्चसप्ताष्टनवद्वादश एवच ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥

ग्रन्थान्तरे – 'प्रत्यूषे कर्कटे भानुः प्रदोषे मकरं यदि ।
संक्रमेत् षष्टिनाड्यस्तु पुण्याः पूर्वोत्तराः स्मृताः ॥ इति

संक्रमस्तु निशीथे स्यात् षड्यामाः पूर्वपश्चिमाः ।
संक्रान्तिकालो विज्ञेयस्तत्र दानादिकं चरेत् ॥

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रकाः ॥

तिथीनामन्तिमो भागः तिथिकर्मसु पूजितः ।
ऋक्षाणां पूर्वभागः स्यात् ऋक्षकर्मसु पूजित' ॥ इति

**अश्वमेधफलावाप्त्यै वर्षवर्धनमिति विज्ञायते ॥ १३ ॥**

**अश्वमेधेत्यादि ।** एकविंशतिपर्यन्तानामुत्तारकत्वसूचनार्थमश्वमेधफल-ग्रहणम् ।

'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः ।
ब्रह्महत्याश्वमेधाभ्यां नापरं पापपुण्ययोः' ॥ इति वचनात्

अश्वमेधविषये—बोधायनः । 'दश पूर्वान् दशापरान् आत्मानञ्चैकविंशतिकं पुनाति; तेषां पुत्रपौत्राः षष्टिर्वर्षसहस्राणि स्वर्गे लोके महीयन्ते' इति ।

अथ गृह्यपरिशिष्टोक्तमप्यत्र लिख्यते । यथा —

'शताभिषेकं पूर्वाह्णे पुण्याहं द्विजभोजनम् ।
स्थंडिलं चतुरश्रं वै यवैः अरत्निद्वयान्वितम् ॥

कृत्वा पद्मं विलिख्यात्र लाजपुष्पाक्षतैर्युतम् ।
सौवर्णान् मृण्मयांस्ताम्रान् राजतान्वा चतुर्दिशम् ॥

मध्ये च विन्यसेत्कुंभान् वारिपूर्णान् सवस्त्रकान् ।
गन्धपुष्पस्वर्णरत्नपवित्राण्येषु निक्षिपेत् ॥

मध्यादावाहयेत्तेषु ब्रह्माणञ्च प्रजापतिम् ।
परमेष्ठिनं हिरण्यगर्भं चतुर्मुखं चतुर्दिशम् ॥

आसनं पाद्यमाचामं नमोन्तैर्नामभिर्ददेत् ।
'आपो हिरण्य पवमानैः' संप्रोक्ष्य स्नानमाचरेत् ॥

वस्त्राभरणपुष्पाद्यैः नैवेद्यान्तैः समर्च्य च ।
आघारान्ते तु नक्षत्रहोममप्यार्षभादिना ॥

हुत्वा तन्नाममन्त्रैश्च मूलहोमं पुनर्हुनेत् ।
चरुणा 'ऽऽयुष्ट—आयुर्दे' त्याज्येन ब्रह्मसूक्ततः ॥

प्राजापत्यं तथा ब्राह्मं वैष्णवं विष्णुसूक्तकम् ।
'अग्ने नये'ति सूक्तञ्च षड्चापि सतन्त्रकम् ॥

अष्टादशर्चमन्तं तु तथा पुरुषसूक्तकम् ।
मृगाराख्यं तृतीयं स्यात् 'अग्नेर्मन्व' इतीरितः ॥

'यावामिन्द्रे' ति चत्वारः सानुषंगाश्चतुर्थकाः ।
'योवामिन्द्रे' ति चैवाष्टौ तादृशा एव पञ्चमः ॥

'तनूस्तये'ति पूर्वेषां चतुर्णामनुषज्यते ।
ब्रह्मादिरुत्तरेषान्तु आदितस्त्रिपदोर्द्वयोः ॥

द्विपात्सु च चतुष्पात्सु पशुष्वित्युभयत्र च ।
पवमानानुवाकश्च षष्ठः कूश्माण्ड [1] उत्तरः ॥

'वैश्वानरो न ऊत्ये' ति सूक्तमष्टममष्टमः ।
घृतानष्टौ घृतान्नेन हुनेत्यापापनुत्तये' ॥

स्थालीपाकाज्यभागान्तेऽग्नौ पवित्रादिकैर्गणैः ।
सप्ताहान्ते घृतान्नेन हुत्वा तु सवनत्रयम् ॥

मौनी व्रती हविष्याशी पूर्णपात्रं चतुष्पथे ।
'सिंहेम' इति चावेक्ष्य प्रास्यं नेक्षेद्द्विषां दिशि ॥

उपस्थाय 'सहस्र' ति दक्षिणाद्यैर्द्विजार्चनम् ।
मुच्यते सर्वपापेभ्यो महतः पातकादपि ॥

गणहोमविधिस्त्वेष कूश्मांडस्तु प्रवक्ष्यते ।
अमायां पूर्णमास्यां वा केशश्मश्रूणि वापयेत् ॥

षण्मासञ्च चतुर्विंशद्द्वादशाष्टौ त्र्यहन्तु वा ।
ब्रह्मचारी हविष्याशी स्थालीपाकोक्तवच्चरुम् ॥

आघारकाज्यभागान्ते भूर्भुवस्सुवरोमिति ।
हुत्वा तत्सविरित्याज्यं यद्देवाद्यनुवाककान् ॥

यद्देवाद्या अच्छिद्रोक्ताः

त्रीन् 'सिंहे व्याघ्र' इति चतस्रश्चरुराहुतिः ।
अग्नेभ्याग्ने अंगिरश्च पुनरूर्जा सहेति च ॥

समित्पाणिर्वैश्वानरायेत्युपस्थाय तु दक्षिणे ।
समिदग्नौ निधायानूयाजमित्यादि पूर्ववत् ॥

---

1. उत्तरः — सप्तमः इति भावः ।

धार्ये त्रिषवणं कुर्यात् सर्वपापैः प्रमुच्यते ।
कूष्मांडगणहोमांस्तु कुर्याद्वै दोषशान्तये ॥

सकृत्तथा दशाब्दं वा हुत्वा ऋषभवैरयोः ।
अग्नीषोमीयं वैष्णवञ्च धातादीन् मूलहोमकम् ॥

यद्देवाग्नेनयार्दाश्च ब्रह्मणे प्रजापतये ।
परमेष्ठिने हिरण्यगर्भाय मूलहोमं पुनर्हुनेत ॥

चरुणायुष्ट आयुर्दैत्याज्येन ब्रह्मसूक्ततः ।
प्राजापत्यं तथा ब्राह्मं वैष्णवं विष्णुसूक्तकम् ॥

हुत्वाऽग्नेः कलशानाञ्च पूर्ववद्विष्टरे स्थितम् ।
कृत्वा वृद्धं तथा वृद्धां कर्ता वै सुसमाहितः ॥

दूर्वाक्षतसुगन्धांबुपुष्पाण्यादाय मूर्धनि ।
सकृदादाय हस्ताभ्यां वृद्धस्य कपिलेति च ॥

समंकेति च वृद्धायाः मन्त्रलिंगं समुन्नयन् ।
आयुष्ट आयुर्दा इत्याभ्यां शुद्धोदैरभिषिच्य च ॥

पुनश्च 'या सुगन्धा' द्यैः प्रधानकलशोदकैः ।
अभिषिच्यावशिष्याथ याः प्राचीत्यादिभिस्ततः ॥

चतुर्दिक्कस्थैर्यथालिंगं या ऊर्जेति प्रधानतः ।
दंपती अभिषिच्यैव वस्त्रं विप्राय दापयेत ॥

वस्त्राभरणगन्धाद्यैरलंकृत्योद्वयादिभिः ।
आदित्यं समुपस्थाय कुर्यादाज्यावलोकनम् ॥

स्वर्णादिपात्रे सघृते ससुवर्णे स्वकाकृतिम् ।
पश्येदायुरसीत्युक्त्वा तद्दद्यात् ब्राह्मणाय वै ॥

('अक्षतोदकपुष्पगन्धान् पाणिभ्यामादाय वृद्धस्य वृद्धाया वा वदन् देहांगसन्धौ शरसि च क्षिपेत् । कपिल इवेत्यादिवदन्नित्यर्थः । स्त्रीपक्षे धर्मसंधा धर्मशरीरिणी भवेति वदेत् । अथाभिषिच्याज्यावलोकनं कृत्वा सर्वा इष्टदेवताः तदग्रमालयदेवता नारायणाद्यास्तत्रावाहिता वा । 'विष्णुर्वै सर्वा देवता' इति श्रुतेः सर्वदेवमयं विष्णुमेव आसनाद्यैः विशेषेणार्चयेत् । कबलमात्र बलिः । यद्वा बलिशब्द उपहारपरः । अपूपोपदंशघृताद्यैस्समाहितानन्नेन ब्राह्मणांस्तर्पयेत् । भोजनान्ते दक्षिणाश्च दद्यात् । विवाहवत् ग्रामप्रदक्षिणं कृत्वा प्रदक्षिणस्य 'प्राचीरेवती मधुमतीरापस्स्रवन्तु शुक्राः ता म आपश्शिवास्सन्तु दुष्कृतं प्रवहन्तु मे' इत्यादिजपः ।)

'सर्वदेवांश्च विष्णुं वाऽभ्यर्चयित्वा निवेद्य च ।
भोजयेद्द्विप्रसाहस्रं यथेष्टं दक्षिणां ददेत् ॥

ग्रामं प्रदक्षिणीकृत्य विवाह इव मन्त्रतः ।
सायं गोमयसंलिप्ते स्थंडिले प्रागुदञ्चते ॥

प्राची रेखा द्विपञ्चाशत् संख्यया तत्र संलिखेत् ।
उदीचीश्च तथा रेखा द्वाविंशत्संख्यया लिखेत् ॥

मध्ये वीथीस्तत्र हित्वा शिष्टे पदसहस्रके ।
प्रत्येकं शालिपिष्टेन पूर्णचन्द्राकृतीः पुनः ॥

कृत्वा निधाय तन्मध्ये रजतं कूर्चमेव वा ।
सोममावाह्य सर्वत्र श्वेतैः कुमुदपत्रकैः ॥

राजतैश्चोपकरणैः षोडशैरुपचारकैः ।
अभ्यर्च्य दक्षिणे तस्य रोहिणीगणमर्चयेत् ॥

1. 'अक्षतोदके'त्यारभ्य 'इत्यादि जपः' इत्यन्तं कुण्डलितं वाक्यजातं एतत्खण्डे व्याख्यातपूर्वाणां सप्तमाष्टमनवमसूत्राणां सारार्थप्रतिपादकमिति, यद्यपि तत्रैव निवेशनीयम् । अथापि मातृकाभूततालकोशे अत्रैव विद्यमानत्वात् आज्याव-लोकनानन्तरं सर्वदेवतापूजादिकथनात् आज्यावलोकनस्य तत्रानुक्तत्वाच्च यथा मातृकं अनन्वितमपि अत्रैव निवेशितम् ।

वामे चानावृष्टिगणमभ्यर्च्याथ निवेदयेत् ।
वर्षवर्धनमित्युक्तमश्वमेधफलप्रदम्' ॥ इति

वर्षवर्धनं शताभिषेक इत्येकार्थाविति कैश्चिद्व्याख्यातम्-सत्यम् । पृथक्त्वेन प्रतिपादनात् पृथगेव गृह्यपरिशिष्टे उक्तत्वात् 'वर्षवर्धन'मित्यारभ्य उपसंहारे 'वर्षवर्धनमिति विज्ञायते' इत्युक्तत्वाच्च वर्षवर्धनमिति पृथग्व्यवहारः ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ तृतीयप्रश्ने एकविंशः खण्डः ।

## अथ द्वाविंशः खण्डः

**अथ षष्ठे मास्यन्नप्राशनम् ॥ १ ॥**

अथेति । वर्षवर्धनानन्तरम् । यद्वा पञ्चममासानन्तरम् । षष्ठे मासीति युग्ममासानामुपलक्षणम् ।

गृह्यः — 'षष्ठादियुग्ममासेषु अर्वाक् संवत्सराच्छिशोः ।
अन्नस्य प्राशनं कुर्यान्मासं नक्षत्रमिष्यते' ॥ इति

ज्योतिषे — 'नवान्नाशन उद्वाहे नाम कृत्वा (?) मघाः शुभाः ।
नवान्नं (?) वस्त्रमैन्द्राग्नौ विद्यारंभे तु रौद्रभम् ॥

'आदित्यतिष्यवसुसौम्यमघानिलाश्वि-
मित्राजविष्णुवरुणोत्तरपौष्णचित्राः ।

बालान्नभोजनविधौ दशमे विशुद्धे
चित्रां (?) विहाय नवमीं तिथयश्शुभाः स्युः' ॥ इति

बृहस्पतिः — 'भुक्तौ स्वस्थाः शशी लग्नेप्यजमीनाल्यधोमुखाः ।
वर्जनीया नवान्नेतु खस्थजीवझषौ शुभौ' ॥ इति

गार्ग्यः — 'मृतौ कुजं सरे शुक्रं भुक्तौ यत्नेन वर्जयेत् ।
फलपूर्णप्रसूतानां क्रमेणाग्रयणे हिताः ॥
मीनालिमेषा अन्यत्तु नवभुक्तिवदिष्यते' ॥ इति

**शुक्लपक्षे दिने शुद्धे तत्राज्येनाघारः ॥ २ ॥**

शुक्लपक्ष इत्यादि । शुद्धे दोषरहिते । यद्वा – युग्मभागे तत्र पूर्वोक्त-गुणयुक्ते 'एनं कुमारमन्नप्राशनकर्मणा संस्करिष्यामि' इति संकल्प्य आघारं हुत्वा ।

**धातादिमूलहोमं पूर्ववत् त्रिवृत्प्राशनम् ॥ ३ ॥**

**धातादीति** । **पूर्ववत्** जातकर्मवत् ।

**प्राङ्मुखं मंगलयुक्तं कुमारं विष्टरमारोप्य, 'भूरपा'मिति पायसमन्नं प्राशयेत् ॥ ४ ॥**

**'योगे योगे तवस्तर'मित्याचमनं ददाति ॥ ५ ॥**

**आश्वलायनः** । 'षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामः तृतीये ब्रह्मवर्चसकामः घृतोदनं तेजस्कामः दधिमधुघृतं (श्रम) मिश्रमन्नं प्राशयेत् ।' इति

**मार्कंडेयः** — 'देवतापुरतस्तस्य धात्र्युत्संगगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रेऽथ कांचने ॥

मध्वाज्यकनकोपेतं पाययेत्पायसं ततः ।
तस्याग्रतोऽथ विन्यस्य शिल्पभांडानि सर्वशः ॥

शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ।
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति' ॥ इति

**अथ प्रवासागमनम् ॥ ६ ॥**

**अथेत्यादि** । **अथ** अन्नप्राशनानन्तरम् । **प्रवासागमनम्** – बालग्रहादिदोषनिवारणार्थं तदधिपस्य स्कन्दस्य पूजामुद्दिश्य गत्वा आगमनम् । 'सेनानीनामहं स्कन्दः' इति भगवतैवोक्तत्वात् ।

'एवं मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ।
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ।
तेषां प्रशमनं कुर्यात् स्नानं धूपं तथा जपम् ॥

बलिकर्मोपहारैश्च स्कन्दस्येज्या विशेषतः ।
एवमेवार्चितास्सर्वे प्रयच्छन्ति शुभं नृणाम् ॥

आयुर्दीर्घञ्च राजेन्द्र! सम्यक् पूज्य नमस्कृताः' ॥

ऊर्ध्वन्तु षोडशाद्वर्षात् ये भवन्ति .... .... ॥

तानहं संप्रवक्ष्यामि'

इत्यारभ्य सर्वाण्युक्तानि स्कन्दपूजारूपेण ।

**पुष्पापूपदक्षिणादिसंभारान् कुमारञ्च गृहीत्वा 'कनिक्र' दादिना आलयं गुहस्य गच्छेत् ॥ ७ ॥**

पुष्पेत्यादि । कनिक्रदादिना । आदिशब्देन अप्रतिरथबन्धुभिश्च सह गच्छेत् ।

**प्रदक्षिणमर्चनं प्रणामो गुहस्य ॥ ८ ॥**

प्रदक्षिणमित्यादि । फलापूपतांबूलादीनि निवेद्य दक्षिणां दत्वा ।

**तच्छिष्टेन पुष्पादिना 'गुहस्य शेष' मिति तन्नाम ऊहित्वा बालमलंकृत्य शान्तिं वाचयित्वा निवर्तयेत् ॥ ९ ॥**

तच्छिष्टेनेत्यादि । शान्तिशब्देन पुण्याहम् । यद्वा, शन्नो मित्रादि ।

**प्रोष्यागतं 'सोमस्य त्वा' इत्यंकमारोप्य 'आयुषे वर्चसे' इति पिता मूर्ध्नि जिघ्रति ॥ १० ॥**

**वृषभं नमस्कृत्य दक्षिणपाणेः सांगुष्ठमंगुलीर्गृहीत्वा कनिष्ठिकादि 'अग्निरायुष्मा' नित्यादिकैः विसर्जनम् ॥ ११ ॥**

**'आयुष्टे विश्वतः – प्रतिष्ठ वायौ' इति दक्षिणादिकर्णयोर्जपनम् ॥ १२ ॥**

**उदङ्मुखं ब्रह्मादिदेवानां गुरूणाञ्च प्रणामं कारयेत् । पादोदकं दत्वा ॥ १३ ॥**

उदङ्मुखमित्यादि । गुरूणामित्यादि । बहुवचनं—

'पिता माता तथाऽऽचार्यो मातुलः श्वशुरोऽग्रजः ।
वर्णज्येष्ठः पितृव्यश्च मातामहपितामहौ ।
तत्पत्न्यः सोदरः पित्रोः धात्री च गुरवः स्मृताः ॥

इत्युक्तानां ग्रहणम् । पित्रादीनां प्रणामं कारयेत् । **पादोदकं**— पित्रादीनां पादोदकं । यद्वा विष्णोस्तद्भक्तानां वा ।

वाराहे — 'पिबेत्पादोदकं यस्तु वैष्णवानां ममापि वा ।
न तत्राचमनं कुर्यात् यथा सोमे द्विजोत्तमः ॥
विष्णोः पादोदकं देवि शिरसा धारयन् पिबन् ।
यो नरो वसुधे! नित्यं स याति परमां गतिम्' ॥ इति

**अथ पूर्ववत् सगुडभक्षस्यान्नस्य सपिंडैः श्रोत्रियैस्सह भोजनं स्वस्तिवाचनम् ॥ १४ ॥**

**अथेत्यादि** । पाठक्रमादर्थक्रमो बलीयानिति पुण्याहानन्तरं (स्वस्तिवाचनानन्तरं) भोजनम् ।

**पिंडवर्धनमिति विज्ञायते ॥ १५ ॥**

**पिंडवर्धनमित्यादि** । प्रोष्यागतमित्यारभ्य पिंडवर्धनमिति केचिद्वदन्ति । अव्यवधानेनोक्तत्वात् पुण्याहं द्विजभोजनं च पिण्डवर्धनमिति केचित् । पिंडशब्देन शरीरमुच्यते ।

**श्रीविष्णुपुराणे** — 'पिंडः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः' इति ।

समस्तदोषनिरसनद्वारा आयुष्याभिवृद्धिरिति यावत् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ तृतीयप्रश्ने द्वाविंशः खण्डः ।

---

## अथ त्रयोविंशः खण्डः

अथ वर्षे प्रथमे तृतीये वा चौलकम् ॥ १ ॥

अथेत्यादि । अथ पिंडवर्धनानन्तरम् । वा शब्दः कालान्तरपरः

बृहस्पतिः — 'तृतीयाब्दे शिशोर्गर्भात् जन्मनो वा विशेषतः ।
पञ्चमे सप्तमे वापि स्त्रियः पुंसो यथा मम' मिति ॥

शंखः — 'तृतीये वर्षे चूडाकर्म पञ्चमे वा' । इति

बृहस्पतिः — 'क्षौरेणैवाऽयुषो वृद्धिः कृतेन समये कृते ।
अशुभे समये चैव कृतमायुःक्षयाय च ॥

तस्मात् सम्यक् परीक्ष्यैव कर्तव्यं क्षौरमायुषे ।
बुधैरायुष्यमित्युक्तं चूडाकर्मेति केश्चन' ॥ इति

अन्यत्र — 'गर्भिण्यां मातरि शिशोः क्षौरं सूनोर्न कारयेत् ।
पञ्चाब्दे षोडशाब्दे च विवाहाब्दे तथैव च ॥

अन्तर्वत्न्याञ्च जायायां क्षौरं कुर्वन् विनश्यति ।
रात्रौ क्षौरं न कर्तव्यं न जल्पेन्न प्रसज्जयेत् ।
यद्यवश्यं प्रसक्तश्चेदायुःकर्मेति कीर्तयेत्' ॥

कालान्तरपरत्वेन निषेधमाह —

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चाब्दात् प्रागथोर्ध्वन्तु गर्भिण्यामपि वापयेत् ॥

शताभिषेकेऽप्येवं स्यात् कालो वेदव्रतेष्वपि ।
अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्यात्पुनः शुभे' ॥ इति

गार्ग्यः — 'पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत् ।
गर्भेण मृत्युमाप्नोति तस्मात् क्षौरं विवर्जयेत् ॥

प्रसवात्प्रथमे वर्षे तृतीये पञ्चमेऽपि वा ।
दामोदरमतं ह्येतत् सप्तमे चौलमिष्यते' ॥

तृतीयेऽब्दे त्रियंशोने पञ्चमे चोत्तरायणे ।
गर्भाद्वा चौलकं कुर्यात् न षष्ठे जन्मतः शिशोः ॥

नाक्षत्रात् प्रथमे वर्षे तृतीये पञ्चमेऽपि वा ।
सप्तमे चौलकं कुर्यादिति काश्यपभाषितम्' ॥ इति

चौलं सूनोर्मातरि गर्भवत्यां पुरस्तादथ पञ्चमात् स्यात् (?)। **चौलकं**—चूडाकर्म ।

**उत्तरायणे पक्ष आपूर्यमाणे पुन्नाम्न्याधारः ॥ २ ॥**

**उत्तरायण** इत्यादि । उत्तरायणपदेन शुभतिथिवारनक्षत्रादयो गृह्यन्ते ।

बृहस्पतिः — 'शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरम् ।
अशुभोऽन्त्यत्रिभागः स्यात् कृष्णे भागत्रये कृते ।
अन्त्यभागोऽपि सत्कर्मरते चन्द्रे शुभावहः' ॥ इति

वसिष्ठः — 'द्वितीया च तृतीया च सप्तमी पञ्चमी तथा ।
दशम्येकादशी चैव पूज्या तद्वत् त्रयोदशी ॥

षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
प्रतिपत्पञ्चदश्यौ च निन्दिता द्वादशी तथा' ॥

अर्कार्किभूमिपुत्राणामंशके दिवसोदये ।
द्रेक्काणकालहोरायां क्षौरं विपरिवर्जयेत्' ॥ इति

बृहस्पतिः — 'सोमवारः सिते पक्षे पूज्यः कृष्णे तु गर्हितः ।
बुधवारोऽशुभः पापग्रहयुक्ते कुजे भवेत् ।

अस्तगे च द्वयोर्योगे समीपस्स्याद्गुणान्वितः ।
पापग्रहाणां वारादौ विप्राणान्तु शुभो रवेः ॥

क्षत्रियाणां क्षमासूनोः विट्छूद्राणां शनेः शुभः ।
हस्ताश्विनी विष्णुपौष्णश्रविष्ठादित्यपुष्यकाः ॥

सौम्यः चित्रेति च क्षौरे ह्युत्तमा नव तारकाः ।
त्रीण्युत्तराणि वायव्यरोहिणीवारुणास्तथा ॥
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः' । इति

वसिष्ठः — 'नैधने जन्मनक्षत्रे वैनाशे चन्द्रमाष्टके ।
विपत्करे वधे क्षौरं प्रत्यरेऽपि विवर्जयेत् ॥

आद्यांशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः ।
वधे त्याज्यः तृतीयांशः शेषांशेष्वपि शोभनम् ॥

जन्माष्टमे विधौ याते क्षौरमायुःक्षयाय च ।
तस्मात् चन्द्राष्टमं वर्ज्यं सर्वदा क्षौरकर्मणि ॥

आकेकरश्च मत्स्यश्च बुधशुक्रेन्दुराशयः ।
क्षौरकर्मणि पूज्याः स्युः शेषास्त्याज्यास्स्वभावतः ॥
व्याधिशोकप्रदौ सिंहवृश्चिकौ क्षौरकर्मणि ॥

अतीव दुःखदो मेषः चापो राजभयप्रदः ।
कुंभः कुलविनाशाय कथितः क्षुरकर्मणि ॥

शुभैर्युक्ताः शुभैर्दृष्टा यद्यप्येते ग्रहाः शुभाः ।
शुभैर्युक्तोऽपि दृष्टोऽपि न शुभः कुंभदग्रहः' ॥ इति ।

आ..करो मकरः ।

**मूलहोमान्ते मंगलयुक्तमग्नेरपरस्यां कुमारमुपवेश्योत्तरे साक्षतं गोशकृच्छरावे गृहीत्वा माता ब्रह्मचारी वा धारयेत् ॥ ३ ॥**

**मूलहोमे**त्यादि। माता ब्रह्मचारी वा। 'मातृदेवो भवे'ति श्रुतेः माता। व्रतनिष्ठत्वात् ब्रह्मचारी।

**'शिवो नामासि' इति ग्रहणं क्षुरस्य ॥ ४ ॥**

**'शिवानो भवथ' इति शिलायां तीक्ष्णीकरणम् ॥ ५ ॥**

**'गोदानमुनक्तु' इति गवादिदक्षिणाकरणम् ॥ ६ ॥**

**गोदानमित्यादि**। गोदानमित्युक्तत्वात् आचार्यस्य वा अन्यस्य वा अंगत्वेन गवादिदक्षिणादानम्। 'गोदानं विधायेति' श्रौते उक्तत्वात् तद्वदेवात्रापि केचिद्वदन्ति। तदसत्। गवादिदक्षिणाकरणमित्युक्तत्वात्। पित्रादिभ्यो न कुर्यादिति **भास्करेण** व्याख्यातम्। तन्न। 'पितुश्शतगुणं दान'मित्युक्तत्वात्, यागादिषु दक्षिणाप्रतिग्रहयोग्यतासंभवात् पित्रादीनामपि कर्तुमुचितम्।

**'आप उन्दन्तु' इत्यपां सेकं शिरसि ॥ ७ ॥**

**'ओषधे त्रायस्वैनं' इति साक्षताङ्कुरदर्भौ प्रागुत्तराग्रौ मस्तके स्थापयेत् ॥ ८ ॥**

**'स्वधिते मैनँ हिँसीः' इति क्षुरं निधाय 'ऊर्ध्वाग्रा ओषधीः' इति 'येनावपत्' इति 'येन पूषा' इति 'असावायुषा' इति पूर्वादिप्रदक्षिणं दर्भं सरोमाणं छित्वा 'ज्योक् च सूर्यं दृशे' इति चूडां विभजेत् ॥ ९ ॥**

**स्वधित** इत्यादि। 'असावायुषा' इति मन्त्रे असावित्यत्र संबुद्ध्या कुमारस्य नामग्रहणम्। **छित्वा**–छित्वा शरावे निदध्यात्। चूडामित्येकवचननिर्देशादेकाचूडा मुख्या।

**ऋषिक्रमेण स्वस्यैकार्षद्व्यार्षत्र्यार्षपञ्चार्षसमा (र्षा) र्षाञ्चूलां विभजेत् ॥ १० ॥**

**अनुदितस्यैकाम् ॥ ११ ॥**

**ऋषिक्रमेणेत्यादि** । अत्र **बोधायनः** । 'एकशिखो द्विशिखस्त्रि-शिखः पञ्चशिखो वा यथैषां कुलधर्मः स्या' दिति ।

लौगाक्षिः — 'तृतीये वर्षेऽस्य भूयिष्ठां चूडां कारयेत् । दक्षिणतः कमुजा (?) वासिष्ठानां, वामतो भारद्वाजानां, उभयतोऽत्रिकश्यपानां, मुंडा भृगवः, पञ्चचूडा आंगिरसो वाजिमेके मंगलार्थशिखिनोऽन्ये यथाकुलधर्मं वा' इति। **अनुदितस्य**-द्वितीये जन्मन्यनुत्पन्नस्य ।

आश्वलायनः — 'प्रच्छिद्य प्रच्छिद्य प्रागग्रान् शमीपर्णैः सह मात्रे प्रयच्छति' इति ।

**'इदमहममुष्य' इत्युदुंबरदर्भयोर्मूले गोष्ठे वा आच्छादयेत् ॥ १२**

**इदमहमित्यादि** । माता च तानादाय। अमुष्य गोविन्दशर्मणः पाप्मानमपगृह्णामि इत्यूहः ।

'कर्मण्यधिकृता ये च वैदिके ब्राह्मणादयः ।
तैश्च धार्यमिदं सूत्रं क्रियांगं तद्धि वै स्मृतम्' ॥

इतिवत् (कैश्चित्) कर्मांगत्वात्, उपनयनात्पूर्वमेव शिखा प्रतिपादिता ॥

**स्नातं वस्त्रादिनाऽलंकृत्य उपवेश्य दक्षिणे, पञ्च प्रायश्चित्तादि धातादि पञ्च वारुणं मूलहोमं हुत्वा पुण्याहं कृत्वा नापितायान्नदानं, गवादिदक्षिणां गुरवे, सुराणां पूजनं तर्पणं ब्राह्मणानामन्नेन करोति ॥ १३**

**स्नातमित्यादि** — मूलहोमं हुत्वा अन्तहोमं कुर्यात् । प्राणशरीरेन्द्रिय-मनःपुरुषगतदोषनिवृत्त्यर्थमित्यवगम्यते । श्रुतिः । प्राणानामहमित्यग्निः । तनु वा अहमिति वायुः । चक्षुषोऽहमित्यादित्यः । चन्द्रमा मनसः' इत्यग्न्यादय एव गन्धर्वा इत्यवगम्यमानत्वात्,

'षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ।
एवमेनश्शमं याति बीजगर्भसमुद्भवम्' ॥

इति मनुस्मरणाच्च अविज्ञातदोषनिवृत्त्यर्थं अविज्ञातस्यापि संभावित-दोषनिवृत्त्यर्थं च पञ्चप्रायश्चित्तमुक्तम् । 'अन्याः पतिकृतान्' इत्युक्तेः । पतिशब्देन पिताऽत्र ।

'मला दुःखाज्ञानमयाः प्रकृतेस्ते न चात्मनः' ॥ इति

गवादिदक्षिणां । आदिशब्देन हिरण्यवस्त्रादि । निर्दिष्टान्नं दद्यात् । सुराणां विष्ण्वादीनाम् - पूजनं, 'ग्रहायत्ता लोकयात्रा' इत्युत्तरत्र वक्ष्यमाणत्वात् ग्रहपूजाद्यपि कुर्यात् ।

इत्यष्टादश संस्काराः शारीराः शारीराः ॥ १४ ॥

अथातः पाणिग्रहणं, मातुलपिंडां, ततः महस्नातायाः विश्वा उतत्यमेति, अथ चतुर्थीवासः, अत ऊर्ध्वं पर्वणि स्थालीपाकेन, पचने वाऽऽश्रमस्थे, तदेवं त्रिरात्रं, अथ त्रिरात्रमृतौ, अथ गृहीतगर्भचिह्नानि, अथ गर्भाधानादि चतुर्थे मासि, अथ गर्भाधानादष्टमे मासि, अथ विष्णुबलिः, अथ जातः मेध्याख्यास्यतः, छुल्ल्यां कपाले, अथ वाम्नु-सवनं, येते शतं, अथ दशमे द्वादशे वाऽह्नि, अथ नामकरणं, अथ पर्पवर्धनं, आर्षभं वैरवणं, अथ षष्ठे मास्यन्नप्राशनं, अथ वर्षे प्रथमे त्रयोविंशतिः ॥ १५ ॥

इति श्रीमत्कौशिकवंशेन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण

श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने

तात्पर्यचिन्तामणौ तृतीयप्रश्ने त्रयोविंशः खण्डः ।

॥ तृतीयप्रश्नः समाप्तः ॥

प्रथमः पटलः (प्रथमः खण्डः) ऋतुसंगमनवर्जम्। वर्जने संस्काराणां कथञ्चित् साद्यस्कत्वं उच्यते। ऋतुसंगमनवत् निषेकजातकर्मोत्थानपारायण-व्रतबन्धविसर्गाणाम्। 'जातकर्मोत्थानयोर्नान्दीमुखं वर्जये' दिति प्रायश्चित्ते-वक्ष्यमाणत्वात्। नान्दीमुखमिति कर्मनाम। कालमाह – श्वः कर्तास्मीति। श्वः – परेद्युः कर्ताऽस्मि इति ध्यात्वा संस्कारोद्दिष्टदिनात्पूर्वस्मिन्नेव दिने श्रोत्रियान् प्रायश्चित्तविदश्चाचार्यप्रमुखानाहूय गंधाद्यैस्तानभ्यर्च्य कर्मविद्य तैरनुज्ञातः तदुक्त-कृच्छ्राण्याचरित्वा 'एतत्कर्म करिष्यामी' ति संकल्प्य कुर्यात्। गर्भाधानादि-संस्कारादीनां पूर्वेद्युः नान्दी भवति। नन्दन्त्यस्मिन् देवाः पितरश्चेति नान्दीति संज्ञा भवति। तस्या मुखं प्रधानं सर्वे देवाः पितरश्च, यस्य देवता भवन्ति तत् सर्व-देवपितृदेवत्यं नान्दीमुखम्। किमिदमिति वैशद्यार्थं तस्य नामान्तरमाह – अभ्युदय-श्राद्धमिति। अभ्युदेति सन्तोषस्तेषामस्मादित्यभ्युदयम्। श्रद्धया क्रियत इति श्राद्धम्, तच्च तदित्यभ्युदयश्राद्धम्। पैतृकमप्यत्र सर्वं दैविकवत्करोति–शुभकर्मांगभूतत्वात्। पूर्वेद्युः–नान्दीमुखदिनात्पूर्वस्मिन्नेव दिने। युग्मानित्यादि। विश्वेदेवार्थं द्वौ प्रपिता-महादिपित्रर्थं द्वौ–ब्राह्मणान्, एवं च चतुरः। पित्रर्थं मातुःपित्रर्थं द्वाविति केचित्। तथोक्तं प्रायश्चित्ते। अद्यत इत्यन्नं भक्षणार्हम्। तेनान्नेन नालिकेरादिफलेन परिवेष्य। परिवेषणं वरणं, धातूनामनेकार्थत्वात्। अथ अपरेद्युः पूर्वाह्णे तेषु स्नातेष्वागतेषु नान्दीमुखं करिष्य इति संकल्प्य विश्वेभ्यो देवेभ्यो जुष्टं पितृभ्यो जुष्टं निर्वपामीति तण्डुलैरेव चरुं बह्वन्नमपूपादिकं च पाचयित्वा पूर्ववदाघारं हुत्वा अन्ते अग्नेः पश्चिमतो विश्वेषां देवानामुदगन्तमग्नेर्दक्षिणतः प्रागन्तं पितॄणामिलां भूमिमभ्युक्ष्य मंडलानि पात्रस्थानानि सर्वेषां चतुरश्राण्युपलिप्य गोमयवारिणा उपलेपनं कृत्वा आसनानि पीठानि दर्भादींश्च यवैश्च व्रीहिभिश्च निधाय तेष्वासनेषु प्राङ्मुखान् विश्वेदेवान् उदङ्मुखान् पितॄनासयित्वा तेषां करेषु नान्दीमुखा विश्वेदेवाः प्रियन्तामिति विश्वेदेवानां नान्दीमुखाः पितरः प्रियन्तामिति पितॄणाञ्च क्रमेण यवोदकं दत्वा आसीनान् विश्वेदेवान् पितॄंश्च पुष्पाद्यैः पुष्पगन्धाक्षताद्यैः यथोपपादं, यथासम्भवं पुष्पगन्धवस्त्राभरणाद्यैर-

लंकरोति । शुक्लबलिः—श्वेतान्नम् । शुक्लानि चत्वारि यत्र तत् चतुरश्शुक्लम् । एतच्छुक्लचतुष्टयं हस्तेनादाय कबलमात्रं गृहीत्वा अग्नेर्दक्षिणतः संमीपे पूर्ववत् प्रागन्तान्यष्टमण्डलान्युपलिप्यासनानि प्रत्येकमुत्तराग्रं निधाय तेष्वग्न्यादि-देवानावाह्य चतुर्थ्यन्तेन तत्तन्नाम्ना अग्नये नमः इत्यादिना प्रत्येकमभ्यर्च्य बलिं ददाति । (इति प्रथमः खंडः)

(अथ द्वितीयः खण्डः) अग्नये चतुरश्शुक्लबलिं निवेदयामि इत्यादि चतुर्थ्यन्तेन तत्तन्नाम्ना बलिं चरुमन्नमपूपं पैष्टिकादिकं । आदिशब्देन व्यञ्जनफल-सक्तवः । यथोपपादं निवेद्य आचमनं तांबूलञ्च दद्यात् । उदकपूरणार्थं कुंभमुदकुंभं, प्रक्षाल्य तन्तुना परिवेष्ट्य धारास्वित्यद्भिरापूर्य पाप्मनः यजमानस्य पापानामपहत्यै विनाशाय अश्वत्थादिकिसलयैस्सह पवित्रं कुशादिदर्भकूर्चमाभरणं हिरण्यं सरत्नमंगुलीयादिकं कुंभे निदधाति । ततो वस्त्राभ्यामावेष्ट्याग्नेः पूर्वस्यामन्यत्र वा धान्योपरि सुरक्षितं तं निदधाति । प्रतिसरा—रक्षाबन्धनसूत्रम् । कुतपस्य श्वेतकं-बलादेः दुकूलस्य श्वेतपट्टवस्त्रादेर्वा तत्रासंभवे कर्पासस्य वा सूत्राणि गृहीत्वा तैः त्रिरावर्त्य त्रिगुणीकृतैः उत्पादितां त्रिवृतां प्रतिसरां कृत्वा तां हेमादिपात्रे तंडुलो-परि पुष्पादिमंगलद्रव्याण्यपि तया सह संभृत्य—आधाय अग्निमुपसमाधाय जुहुयात् । अग्निर्देवता यासामृचस्तां अग्निदेवत्याः । तथाऽन्यत्र । पैतृकं—पैतृकहोममुपवीती । सामान्यतः सामान्याकारेण अग्न्यादीनां नामभिः ताभ्योऽ-ग्न्यादिभ्यो देवताभ्यो जुहोति । सर्वेषामाज्येनैव होमः कर्तव्यः । वैश्वदेवपैतृक-होमावाज्यचरुभ्यां कर्तव्यौ । पात्रेषु भोजनभाजनेषु दैविकं पैतृकमित्याज्यं विभज्य अभिघार्य उपस्तीर्य विश्वेदेवपात्रयोरन्नादि सर्वं द्विर्द्विर्दत्वा तथा देवशेषं विश्वेदेवदत्तावशिष्टमन्नादिकं पितृभ्यः प्रागन्तमुदङ्मुखानां पात्रेषु पश्चिमादिप्रागन्तं यथा स्यात्तथा दत्वा तदनन्तरं विश्वेदेवादीनां दक्षिणपाणे-रंगुष्ठेन तत्तत्पात्रेषु दत्तं चरुं होमावशिष्टाद्यन्नं—चरुं स्पर्शयति । ततो नमस्कृत्य विश्वेदेवादीनभिवन्द्य क्षीरेण दध्ना वा मिश्रितं श्वेतमन्नं ब्राह्मणान् विश्वेदेवादीनुक्तान् तथा अग्न्याद्यर्थमन्यान् ब्राह्मणानपि यथातृप्ति भोजयेत् । अनुत्थितेभ्यः भोजनानन्तरं आचमनार्थमनुत्थितेभ्यः विश्वेदेवादिभ्यः सकाशात्

समूह्य भुक्तभाजनादिकं बहिर्निक्षिप्य शोधयित्वा आचान्तान् कृताचमनांस्तान् अनुमान्य दक्षिणाभिर्यथाशक्ति संभाव्य तैरनुज्ञातः तां प्रतिसरां अभिमृश्य पाणिना संस्पृश्य अभिमन्त्र्य प्रतिसरां रक्षार्थं पुरुषस्य दक्षिणहस्ते स्त्रीणां वामहस्ते च बध्नाति। पूर्वं नान्दीमुखेभ्यः पितृभ्यस्स्वधा नमः इत्यादिभिर्मन्त्रैः पित्रादीनां विसर्जनम्। ते च स्वधाऽस्त्विति प्रतिवदेयुः। ततः विश्वेभ्यो देवेभ्यः स्वाहा नमः इति विश्वेदेवविसर्जनञ्च कार्यम्। ते च स्वाहाऽस्त्विति प्रतिब्रूयुः। तेन मन्त्रवत्साधितेन कुंभजलेन अपरेद्युः यजमानः स्नायात्—कर्मान्ते कौतुकं त्यक्त्वा स्नायात्। तन्मध्ये तद्विनाशे पुण्याहान्ते पूर्ववत् बन्धयेत्। स्नानं नियतं—'पाप्मनोऽपहत्या' इति वचनात्। यद्वा—तदानीमेव 'या सुगन्धा रसा वर्णा' इति कुंभजलेनाभ्युक्षणं कुर्यात्। तथा श्रौते वक्ष्यते। इति प्रथमः पटलः (इति द्वितीयः खंडः)

अथ द्वितीयः पटलः (अथ तृतीयः खण्डः) अथ गर्भाधानादीत्यादि। सर्वाश्रमाणामादित्वादुपनयनस्य उद्देशक्रममुल्लंघ्य आदावुपनयनोपदेशः। उपनीतस्यैव कर्माधिकार इति ज्ञापनार्थम्। गर्भाधानकालमारभ्य पञ्चमे वर्षे ब्रह्मवर्चसकामं पुत्रमुपनयीत ब्राह्मणः। तथा अष्टमे नवमे च कामनाभेदे कुर्यात्। ततो विकल्पोक्तिः। सकाममकामं वा गर्भाष्टम एवोपनयीत। 'अष्टमे ब्राह्मणमुपनयीत' इति श्रुतिः। 'गायत्र्या ब्राह्मणमसृजत' इति गायत्र्याः प्रथमपादाक्षरसंख्याकालः प्रतिपादितः। सप्तमे अष्टमाक्षरस्य संग्रहदर्शनात् गर्भाधानाद्यष्टमे वर्षे इत्युक्तम्। वसन्ते इति। बलाबलमविचिन्त्य कुर्यात्—श्रुत्युक्तत्वात्। अन्यत्र गुरुबलान्वित एव काले उपनयीत। तद्वत् क्षत्रियवैश्ययोः। 'सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमे अन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशे भ्रातृव्यवन्तं षोडशे सर्वकाम' मित्यापस्तंबः। 'सप्तमे ब्राह्मणस्य नवमे राजन्यस्य एकादशे वैश्यस्य' इति पैठीनसिः। पञ्चमे ब्राह्मणमुपनयीत गर्भाष्टमे वा, राजन्यस्य गर्भद्वादशे, वैश्यस्य गर्भषोडशे वा' इति गौतमः। 'पञ्चमे नवमे वा ब्राह्मणस्य षष्ठे द्वादशे वा राजन्यस्य अष्टमे चतुर्दशे वा वैश्यस्य' इत्यंगिराः। मुख्यकालासंभवे कालावधिमाह—आषोडशादित्यादिना। वाशब्दः गौणत्वबोधनार्थः। अतीते—गौण-

कालस्याप्यतिक्रमे । पुनर्गर्भाधानादीति । पूर्वकृतमपि गर्भाधानादि चौलकान्तं हुत्वा यथाशक्ति हिरण्यादिकं प्रायश्चित्तोक्तवत् दत्वा । (इति तृतीयः खंडः)

(अथ चतुर्थः खंडः) ब्राह्मणादीनां सावित्रीप्राणायामव्याहृतिसमिदाधानानां पार्थक्यमित्थं द्रष्टव्यम् । ब्राह्मणस्य सावित्री – ओंभूर्भुवस्सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ' इति । प्राणायामः – ' ओं भूर्भुवस्सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ओमापोज्योती-रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ' इति । व्याहृतिः – ओं भूर्भुवस्सुवस्स्वाहा ' इति । अष्टाभिस्समिद्भिः, त्रिभिर्मन्त्रैः समिधामाधानम् । राजन्यस्य सावित्री – ओंभूर्भुवस्त-त्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । प्राणायामः – ओं भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ओं तेजो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ' इति । व्याहृतिः – ' ओं भूर्भुवस्स्वाहा ' इति । समिदाधानम् – चतसृभिस्समिद्भिः द्वाभ्यां मन्त्राभ्यां होमः । वैश्यस्य सावित्री, ओं भूस्तत्सवितुर्वरेणीयं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ' इति । प्राणायामः – ' ओं भूस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । व्याहृतिः – ओं भूस्स्वाहा ' इति । समिदाधानम् – एकयैव समिधा एकेन मन्त्रेण होमः । इति द्वितीयः पटलः (इति चतुर्थः खण्डः)

तृतीयः पटलः । ( अथ पञ्चमः खण्डः ) प्रोष्ठपदेत्यादि । पूर्वस्मिन् खंडे उपनयनकालकथने ऋतुप्राशस्त्यमुक्त्वा इदानीमुचितनक्षत्राण्याह । तत्र वसन्तर्तौ शुक्लपक्षे कृष्णपक्षे वा आदशम्या रिक्तानध्यायतिथीन् विहाय अन्ये शुभतिथयः शुभवासराः शुभानि । प्रोष्ठपदादि नक्षत्राणि वा पुन्नामानि, शुभयोगाः शुभकरणानि ज्योतिश्शास्त्र प्रोक्तानि गृह्णीयात् । दर्भादीति । आदिशब्देन कूर्चगोमयलाजापूप क्षुरादिः यैरर्थान्तेऽपि गृह्यन्ते । आचान्तं – तूष्णीं कृताचमनम् । मंगलयुक्तं शुभ्रमाल्याभरणादिशोभनद्रव्यैरलंकृतम् । आसयित्वा – आचार्यस्य दक्षिणभागे नैर्ऋत्यामाग्नेः प्राङ्मुखमासयित्वा । प्रागुत्तराग्रौ – प्रागग्रौ द्वावुत्तराग्रौ द्वौ एकैकस्योपरि निक्षिप्य तूष्णीं क्षुरमादाय तीक्ष्णीकृत्य । गोशकृद्युक्त इति । गोश-कृद्युक्तं शरावं माता ब्रह्मचारी वा तस्योत्तरे धारयेत् । छेदनानन्तरं सर्वं दर्भ-

शेषमपि तत्र निक्षिपति । सर्वत्र आगलाद्वपति । नाधो जात्रोः । कक्षादि न वपति । शरावमुदुम्बरमूले गोष्ठे वा गूहयेत् । वपनं शिखां भ्रुवौ च वर्जयित्वा पादनखपर्यन्तं भवति । स्नात्वेत्यादि । नद्यादिषु स्नात्वा कृताचमनं पूर्वेद्युः साधितेन कुंभतोयेन स्नापयित्वा आचान्तं पुण्याहं वाचयित्वा कुमारैः सह कृतभोजनं यजमानस्य दक्षिणपार्श्वे आसयित्वा वस्त्रं ददातीत्यन्वयः । 'य आकृन्तन्' इति मन्त्रं वाचयित्वा अन्तःपुच्छं कौपीनं धारयित्वा वस्त्रमावेष्टयति । तथा मेखलां तन्मन्त्रं वाचयित्वा त्रिः परिवीय आर्षक्रमेण परिवेष्ट्य ग्रन्थिं कृत्वा अग्रमुपगूहयति । उत्तरीय – संव्यानम् । 'परीद' मन्त्रं परिहितवासोऽनुमन्त्रणार्थे बोधायनेनोक्तः । तत्तन्मन्त्रं वाचयित्वा यज्ञोपवीतादिधारणम् । कृष्णाजिनमुपवीतवत् धार्यम् । पूर्वमिव पवित्रमपि धारयति' (इति पञ्चमः खण्डः)

(अथ षष्ठः खंडः) ततः – आसन्ने मुहूर्ते सदस्यैरनुज्ञातः बाहू-कुमारस्य बाहू दक्षिणवामहस्तौ, स्वस्य दक्षिणोत्तराभ्यां पाणिभ्यामालभ्य संगृह्य उत्तरे स्वस्योत्तरे पार्श्वे प्राङ्मुखो गुरुः प्राङ्मुखं कुमारमुपनयीत–समीपं नयेत् । विसर्जयति मन्त्रान्ते । आचारं–ब्रह्मचर्यधर्मान् शिक्षयति । हृदयं – हृदयस्पर्शनं– हृदयदेशस्पर्शनम् । प्रशंसति – मंगलानि प्रयुंक्ते । आचारशिक्षणे यथामन्त्र-लिंगं प्रत्युत्तरमपि वाचयति । असाविति संबुद्ध्या वटोर्नामनिर्देशः । 'असाव-पोशान' इत्युक्ते – 'अपोऽश्नामि तथा' इति प्रतिवचनम् । समिध आधेहि-आदधामि । कर्म कुरु – कर्म करोमि । मा दिवा स्वप्सीः – न स्वपामि दिवा – भैक्षाचर्यं चर–भैक्षां चरमि । सदाऽरण्यात्समिध आहर–आहरामि । उदकुंभञ्चाहर– आहरामि । आचार्याधीनो वेदमधीष्व – अध्येष्ये । मम हृदयं हृदयं तेऽस्तु – तथाऽस्तु । मम चित्तं चित्तेनान्वेहि – अनुगच्छामि । मम वाचमेकमना जुषस्व-जुषे । बृहस्पतिस्त्वां नियुनक्तु मह्यम् – तथाऽस्तु । मामेवानु संरभस्व । संरभे । मयि चित्तानि सन्तु ते – सन्तु । मयि सामीप्यमस्तु ते -- अस्तु । मह्यं वाक् नियच्छताम् – नियच्छामि । प्राणानां ग्रन्थिरसि – असि । स मा विस्रसः – न विस्रसामि । सर्वत्र 'तथा करोमि' इति वा प्रतिवचनम् । कनिष्ठाद्यंगुल्यग्राणां पर्यायेण – क्रमात ग्रहण, तथा विसर्जनञ्च । प्रदक्षिणमग्नेः प्रणामञ्च कारयित्वा

निवेशनम् । 'राष्ट्रभृदसि' इति कूर्चं यथालिंगं दद्यात् । शनमिन्नित्यत्रापि आदित्यस्यैव प्रदक्षिणनमस्कारौ । शिष्यमभिमुखमासयति । उत्तमांग – शिर: स्पृष्ट्वा 'अधीहि भो' इति तेन प्रार्थितो गुरु: 'अथाह सावित्री' मिति शिष्यमनुशास्ति, 'गणानां' त्वेति गणमुख्यप्रणाम: । दक्षिणकर्णे जप्त्वाऽध्यापयति । इति तृतीय: पटल: । (इति षष्ठ: खण्ड:)

अथ चतुर्थ: पटल: । (अथ सप्तम: खण्ड:) सावित्रव्रतबन्ध करिष्ये इति संकल्प: । मन्त्रलिंगात् सविता देवता यस्य व्रतस्य तत् सावित्रं – तच्च तद्व्रतम् । ब्रह्मचारी जुहोति – मन्त्रलिंगात् । शिष्यं योजयेत् । आचार्यनियोजनानन्तरं यावत्समावर्तनं तावत्पर्यन्तं समिदाधानं करिष्ये इति संकल्प्य समिदाधानमारभते शिष्य: । साधावेन पाणिना परिमार्जनम् । (इति सप्तम: खण्ड:)

(अथ अष्टम: खण्ड:) अन्तहोमो हूयते इत्यादि । ब्रह्मचारी भवति । 'सावित्रव्रतादूर्ध्वं' मित्यादिभिरनन्तरावस्था: धर्मे वक्ष्यन्ते । इति चतुर्थ: पटल: । (इत्यष्टम: खंड:)

अथ पञ्चम: पटल: । (अथ नवम: खण्ड:) पारायणं – वेदाध्ययनं, तदर्थानि व्रतानि पारायणव्रतानि । उपनयनादूर्ध्वं चतुर्थे तत्रासंभवे पञ्चमे सप्तमे वा अहनि सावित्रव्रतविसर्जनं प्राजापत्यव्रतबन्धञ्च कुर्यात् । पुन्नामनक्षत्राणि मृगशीर्षमूलशतभिषगादीनि । 'स प्राजापत्यं सावित्रं त्रिरात्र' मिति स्मृति: (?) । नद्यादिजलसमीपे गृहे गोशालायां वा गुरु: पूर्ववदुपनयनाग्नावाघारं कृत्वा अग्निं परिस्तीर्य धातादिपूर्वं सावित्रव्रतसूक्तमाज्येन हुत्वा । 'अग्ने व्रतपत' इति पञ्चभिर्मन्त्रै: समिद्भिर्होम: । आज्येन व्याहृतिहोम: । वस्त्रदण्डादीनीत्यादिशब्देन मेखलोपवीतकृष्णाजिनानि गृह्यन्ते । सावित्रव्रतविसर्जनान्तरं प्राजापत्यव्रतबन्ध उच्यते, धातादि पूर्वमित्यादिना । वार्षिकं प्राजापत्यव्रतबन्धमित्यादि । व्रतबन्धकालादारभ्य आसंवत्सरमेव तद्व्रतकाल: । 'प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठे' दिति धर्मे वक्ष्यते । यद्यद्व्रतं पूर्वं बध्नाति काले तत्तद्व्रतं विसृज्य अन्यदितरदनन्तरं व्रतं बध्नाति । सर्वत्र होमं कृत्वा तत्तद्व्रतं बद्धा तत्तत्काण्डाध्ययनं कृत्वा तदन्ते तद्व्रतं विसृज्य अन्यद् व्रतं बध्नीयादित्यर्थ: । (इति नवम: खण्ड:)

(अथ दशमः खण्डः) अत्र खण्डे व्रतक्रमः, क्रमात् सूक्तपाठन-क्रमश्चोच्यते (इति दशमः खण्डः)

(अथैकादशः खण्डः) 'इति व्रतपारायणं विज्ञायते' इति सूत्रात् अस्य ब्राह्मव्रतविसर्गान्ते प्रोक्तस्य शुक्रियव्रतस्य पारायणव्रतमर्यादात्वात् विलक्षण-संस्कारपरिकर्मितत्वाच्च पृथगुपादानम्। रेफायति–हिंसति। (इत्येकादशः खण्डः)

(अथ द्वादशः खण्डः) वेदान् वेदौ वेदं वेत्यादि। वेदान् ऋग्यजु-स्सामसुखान्, वेदावृग्यजुषी, वेदमृग्वेदं वा – स्वसूत्रं यद्वेदमूलं तद्वेदपूर्वं स्वसूत्रेण सहितं स्वशाखामध्यापयति। अन्तराऽप्येवमिति। उपनयनमासाऽषाढ-मासयोर्मध्ये। अध्यापयितुकामः एवंप्रकारेण हुत्वाऽध्यापयेत्। अर्धाधिकपञ्चमान् अर्धाधिकषष्ठान्वा मासान् तूष्णीं स्थित्वा आगामि पौषे माघे वा मासे उपा-कर्मोक्ततिथिषु ग्रामाद्बहिर्जलसमीपे उपाकर्मवत् होमं व्रतविसर्गञ्च हुत्वा अध्यायान् विसृजेत्। अथ श्रावणे पौर्णमास्यामित्यादि। पूर्ववदाघारं हुत्वा अग्निं परिस्तीर्य शिष्यं वापयित्वा पूर्वव्रतबन्धं धातादि पञ्चवारुणं मूलहोमं स्विष्टाकारान्तं जुहोति। अस्मिन्नेवाग्नौ सावित्र्या पालाशादिसमिधां सहस्रं जुहोति। अध्ययनपारायणायेति। वेदाध्ययनपरिपूरणाय भवति श्रावणमुपाकर्म। इति पञ्चमः पटलः। (इति द्वादशः खण्डः)

अथ षष्ठः पटलः। (अथ त्रयोदशः खण्डः) उदगयने – उत्तरायणे। आघारं हुत्वा – शुक्रियव्रतबन्धवत् धातादिहोमः। वस्त्रावगुण्ठनं – वेष्टनं। 'इमं स्तोम' मिति प्रधानो मन्त्रः। अमन्त्रवत् नापितवपनम्। शीताः स्वाभाविकाः – उष्णाः–अग्नितप्ताः, यथा शरीरस्य हितं तथा मिश्रीकृत्य तैः प्रोक्षयतीति यत्तदेतत् स्नातकं कर्म। पूर्वं – यथापूर्वं, 'इमं स्तोम' मिति प्रधानामाहुतिं हुत्वा आदित्यस्यो-दयात् पूर्वं ब्राह्मव्रतं पूर्वबद्धं विसृज्य तदानीमेव शुक्रियव्रतबन्धविसर्गौ कुर्यात्, न षाण्मासिकं त्रैमासिकं वा स्यादित्येके वदन्ति। (इति त्रयोदशः खंडः)

(अथ चतुर्दशः खंडः) आभरणादीनि कुंडलमणिहारांगुलीयकादीनि। आदिशब्देन पुष्पांजनदर्पणदंडछत्रपादुकामेखलोपवीताजिनवाहनमधुपर्कादीनि

तं शलाटुग्लप्सं तरुणाग्रं कुशांकुरञ्च शलल्या सह दर्भेण त्रिरावद्धय ग्रन्थिं कृत्वा तं गृहीत्वा तथा दक्षिणे अग्नेरपरस्यामासीनायाः सीमन्ते केशपाशे ऊर्ध्वाग्रं स्थापयित्वा, पुरस्तादिव – पूर्ववदुदराभिमर्शनम् । सामान्यतः पुण्याहे सिद्धे पुनर्वचनं नियमार्थम्, सर्वत्र गर्भसंस्कारेषु तत्तदन्ते पुण्याहं कर्तव्यमिति ।
(इति द्वादशः खण्डः)

(अथ त्रयोदशः खण्डः) अथ विष्णुबलिः । 'गर्भे मास्यष्टमे विष्णुबलिं कुर्याद्यथाविधि' इति भगवच्छास्त्रवचनात् अष्टमे मास्येव अयं संस्कारो विहितः । विलक्षणोऽयं संस्कारः विखनस्सूत्रिणाम् । नात्र विकल्पः काल इष्टः । गर्भरक्षणार्थमयं संस्कार उद्दिष्टः । रक्षणन्तु गर्भस्थशिशोः ज्ञानोदयसमकाल एव वैष्णवत्वसंपादनम् । भगवच्छास्त्रे विशेषो द्रष्टव्यः । दर्भासनेषु उत्तरान्तं केशवादिनामभिरावाहनादि । पुष्पगन्धाद्यैः षोडशोपचारैः तत्तन्नाम्ना प्रणवादिनमोन्तेनार्चनम् । देवाय निवेद्य, घृताऽप्लुतं पायसं जुहुयात् । चतुर्वेदादिसंबन्धिशिरादिभिर्मन्त्रैः वैष्णवैः सहस्रशीर्षाद्यैः, नमोन्तैर्नामभिः केशवाय नम इत्याद्यैः । सुदर्शनगायत्र्या शंखगायत्र्या च क्रमेण पत्नीं प्राशयतीति संप्रदायः । एते गर्भसंस्काराः लौकिकाग्नावौपासनाग्नौ वा कर्तव्याः, 'पितुरौपासनाग्नावित्येके' इति वचनात् । इति चतुर्थः पटलः
(इति त्रयोदशः खण्डः)

अथ पञ्चमः पटलः (अथ चतुर्दशः खण्डः) अथ जातकर्म् । अरिष्टागारं सूतिकागृहम् । यथा ज्योतिश्शास्त्रे उक्तं तथा कल्पयित्वा ऋषभोषित गोभिर्वासितं कृत्वा तिलसर्षपैरग्नौ प्रक्षिप्तैः धूपयित्वा गर्भिणीं तत्र प्रवेशयेत् । तद्ज्ञाः प्रसवविधावौषधादीन् सम्यक् जानमानाः स्त्रियः परिगृह्य भृतकेन कृत्वा पत्नीं संवाहयेयुः । संवाहनं – भरणम् । हृदयबन्धं – वस्त्रबन्धम् । शूलेन प्रसववेदनया युक्ते, सशूले जघने – नाभेरधःप्रदेशे, प्रजायते – प्रसूयते इति निश्चिनुयात् । गर्भसंगे – लग्ने सति । विशल्या – हलिनी, सुवर्चला – रुचका । यथालाभमेकामोषधिं, अथ वा यवक्षारं वा आदाय निष्पीड्य अवघृष्य योनौ निक्षिपेत् । पिंडीतक्केन

मस्त्वकेन वा अहिकृत्त्या – सर्पकंचुकेन वा योनिं धूपयेत् । हिरण्यपुष्प्याः पीतयूथिकाया मूलमादाय भूतरक्षणार्थं हस्तपादयोर्बन्धनं धारणञ्च । वर्धयेत्– वृद्धिं प्राप्नुयात् । तूर्यन्ती – वाद्यविशेषः । पुत्रोत्सवज्ञापनार्थं तूर्यघोषः । ततः स्नानं, दानादि च । एनं कुमारं जातकर्मणा संस्करिष्यामीति संकल्पः । औपासनमरण्यां निर्हरतीति । अग्निमरण्यां समिधि वा समारोप्य पूर्ववदसगोत्रेण ब्रह्मचारिणा वा नित्यहोमं कारयति । (इति चतुर्दशः खण्डः)

(अथ पञ्चदशः खण्डः) चुल्ल्यां–हसन्तिकायां लौकिकाग्नावग्निं प्रज्वाल्य तदुपरि कपालं भिन्नघटस्याधरार्धमारोप्य – निधाय, वृषभशकृता कृतैः कवलैः कपाले क्षिप्तैः जातकाग्निं कल्पयेत् । अनेनाग्निनैव कुमारस्य धूपं दद्यात् । अरिष्टागारद्वारदक्षिणभागे भूम्यां प्रोक्ष्योल्लिख्य तमग्निं निधाय ज्वालाधूमादिवर्जिते कणरूपिणि अग्नौ आघारं विना दर्भैः परिस्तीर्य, कणाः – भिन्नतण्डुलाः सर्षपाः, तैः संसृष्टैः, उक्तैर्मन्त्रैः पाणिना जुहुयात् । ब्राह्मीघृतं वचापथ्यादिभिः कार्यम् । पयः स्तन्यमुच्यते । सुवर्णमंगुलीयकं वा । घृतं ब्राह्मीघृतं केवलघृतं वा । नित्यमिति । सायं प्रातः होमः घृतप्राशनञ्चोच्यते । मातुरुपस्थः – उत्संगः । माता स्तनौ प्रक्षाल्य मन्त्रावृत्त्या स्तनौ दक्षिणादि पाययेत् । औपासननिर्हरणे मतान्तरमाह – घृतप्राशनान्तमित्यादि । तृतीय इत्यादि । जातकदिनादारभ्येत्यर्थः । शयनादिकमित्यादिशब्देन वस्त्रतल्पादिकमुच्यते । यथार्हं शुद्धिर्विधीयते । (इति पञ्चदशः खण्डः)

(अथ षोडशः खण्डः) अथ वास्तुसवनम् । अरिष्टागारादिवस्तुनः शुद्ध्यर्थं वास्तुसवनमुच्यते । नवे वास्तुन्युषिते निवासार्थं गृहीते, तथा सूतकप्रेतकयोरन्ते; सूतके सूतिकापतिः, प्रेतके कर्त्रादयः अनुभाविनः सर्वे ज्ञातयः केशश्मश्रुवपनं यथोक्तं कारयित्वा मृण्मयानि भाण्डानि घटादीनि पुराणानि चिरन्तनानि कृतपचनानि त्यक्त्वा नवानि संगृह्य अन्यानितरान् परिच्छदान् वस्त्रशयनादीन् यथोक्तं धर्मोक्तप्रकारेण शोधयित्वा भूमियज्ञेन संस्कृत्य नवे गृहे अरिष्टागारादौ वा निवसेत् । नूतनगृहप्रवेशे औपासनाग्नावन्यत्र लौकिकाग्नौ होमः कर्तव्यः । वास्तोष्पतये द्वे आहुती प्रधाने । भूमिय-

ज्ञायेति भूमिदेवत्यं–यज्ञदैवतं प्रसोदर्यै इति यज्ञदेवत्यम्। मेदिन्यादिपञ्चमन्त्राश्च भूमिदेवत्याः। दर्भपूलो दर्भस्तबस्समूहो वा, तेनाग्निं अहमग्ने अग्निं गृह्णामीति गृहीत्वा आदाय ऐन्द्रात् भुवंगात्पूर्वद्वारदक्षिणपट्टिकामारभ्य वास्तुनो गृहादेः कुड्यस्य भित्तेर्मूलादधःप्रदेशात् बहिः गृहस्य भागे अन्तः मध्यप्रदेशे च वाममप्रदक्षिणं प्रेतके, प्रदक्षिणं सूतकादौ यथास्यात्तथा परीत्य गत्वा ब्रह्मस्थानान्मध्यतः पर्यग्निं अग्निस्पर्शनं कारयित्वा पश्चिमद्वारेण निर्गत्य दर्भपूलं विसृजेत्। पर्यग्निकरणमार्गेण गच्छन् पुण्याहपात्रोदकेन पुण्याहजलं सर्वत्र प्रोक्ष्य अवशिष्टजलेन बहिर्वास्तुनश्च प्रोक्षयेत्। अनेनैव प्रकारेण अप्रदक्षिणं पश्चिमद्वारादारभ्य पैतृके (प्रेतके) पर्यग्निकरणप्रोक्षणे स्याताम्। (इति षोडश खण्डः)

(अथ सप्तदशः खण्डः) 'ये ते शत' मित्यादि। अत्र संग्रहः। चत्वारो मन्त्रा वरुणदेवत्याः। द्वौ वैश्वदेवौ। षट् वैष्णवाः। प्रथमौ द्वावेवेति मतान्तरम्। द्वौ रुद्रदेवत्यौ। द्वौ ब्राह्मौ। द्वौ कौबेरौ। त्रयः अग्नीषोमीयाः। चत्वारो बार्हस्पत्याः। त्रयोदशैन्द्राः। द्वौ याम्यौ। त्रयो मैत्राः। तथा भूमियज्ञ-देवत्यादयः (त्रयोदशसंख्यापरिमितानि दैवत्यानि) इति पञ्चाशत्संख्याकमन्त्रवन्तः। त्रयोदशत्वेन भिन्नानां दैवत्यानां पृथक् पृथक् व्याहृतिचतुष्टयवृद्ध्या व्याहृतीनां द्विपञ्चाशत् भवति। आहत्य स्वाहन्ता मन्त्राः पञ्चाशत् व्याहृतयश्च तथा–विधाः द्विपञ्चाशदिति द्व्युत्तरशतमाहुतयो वास्तुसवनस्येति सिद्ध्यति। तथा विष्णुदेवत्या मन्त्राः षडेवेति स्वमतञ्च साधितं भवति। इति पञ्चमः पटलः। (इति सप्तदशः खण्डः)

अथ षष्ठः पटलः (अथ अष्टादशः खण्डः) अथ दशमे द्वादशे वाऽह्नि इत्यादि। प्रसूतिकालादारभ्येत्यर्थः। तथा हरणमित्यादि विशेषः प्रायश्चित्त-सूत्रे द्रष्टव्यः। यदि दशमेऽहन्युत्थानं तदा वास्तुहोमं हुत्वा तस्मिन्नेवाग्नौ उत्थानहोमञ्च कुर्यात्। 'दशमेऽहनि जातकाग्निमरण्यां समिधि वा समारोप्य तमेवाग्निं मथित्वाऽऽधाय वास्तुहोमोत्थानहोमौ हुत्वा अग्निं समारोप्याप्रमादं निदधाती' ति सूत्रम्। (इति अष्टादशः खण्डः)

(अथ एकोनविंशः खण्डः) स्त्रीपुंप्रसवभेदेन पाककर्मणि नियोगनिषेधार्थं वा शब्दः। अशुचिर्निषेधहेतुः। अत्रैव—'दशम्यां द्वादश्यामपररात्रौ मासे पूर्णेऽष्टादशेऽहनि वेति' श्रीविष्णुपुराणे (?)। 'जननाद्दशरात्रे वृत्ते शतरात्रे संवत्सरे वा नामकरण'मिति केचित्। इत्याद्युक्तकाले। आसीनस्य—दक्षिणत आसीनस्य पूर्ववत्—गर्भाधानवत् त्रिवृत्प्राशनम्। दीर्घान्तमित्यादि। दीर्घाक्षरमन्ते यस्य तत् दीर्घान्तम्। क्तक्तवतू निष्ठेत्युक्तनिष्ठाप्रत्ययः अभितोऽन्ते वा यस्य तत् अभिनिष्ठान्तम्। घोषो वर्गचतुर्थाक्षरः—खादिः तदस्यास्तीति घोषवद्वर्णमादावन्तरे मध्ये च तत् घोषवदाद्यन्तरम्। अन्तस्था यरलवास्तेषामेकः द्वयोः स्थानयोः प्रतिष्ठितः स्थापितः अन्तस्थाव्ययवर्णो यस्मिंस्तत् द्विः प्रतिष्ठितान्तस्स्थम्। मृष्टमन्याक्षरयुक्तमक्षरं वर्णं पदं वाक्यैकदेशः स्वरः उदात्तादिरकारादिस्वराक्षरो वा यस्मिंस्तत् मृष्टाक्षरपदस्वरं द्वौ वर्णावक्षरौ यस्मिंस्तद्द्विवर्णमित्यादि। वेत्युपलक्षणम्। स्त्रियास्त्वसमाक्षरं नाम भवति। तदर्हं नाम कुर्यादिति। यद्देवतादिनाम तस्यार्हं गोत्रनामयुक्तं नाम कुर्यात्। द्वे नामनी इत्यादि। यस्मिन् नक्षत्रे कुमारो जातः तन्नक्षत्रेण कृतं नाम रहस्यमप्रकाशं भवति। अग्न्याधानात् परं आहिताग्निः सोमयाजी वाजपेययाजी इत्यादि स्वकर्मज्ञापकं प्रकाशनाम भवति। मम नाम प्रथममिति कृतं व्यवहारनाम—भारद्वाजः आत्रेय इत्यादि गोत्रनाम, आश्विनः रैवत इत्यादि नक्षत्रनाम च भवति। देवानां नाम श्रेष्ठं मनुष्यनाम मध्यमं नदीवृक्षादिनाम अधमं भवति। (इति एकोनविंशः खंडः)

(अथ विंशः खण्डः) अथ वर्षवर्धनम्। कुमारस्य जन्मनक्षत्रं यद्दैवत्यं तदादि देवताश्च नक्षत्राणि च तानि तदादिदेवतानक्षत्राणि देवतानक्षत्रमन्त्रान् जुहुयात्। (इति विंशः खण्डः)

(अथ एकविंशः खण्डः) वर्षवर्धने नक्षत्रहोमानन्तरं आर्षभादिहोमान् कूश्मांडहोमञ्च हुत्वा अन्तहोमं कुर्यात्। एवं प्रतिसंवत्सरं जन्ममासे जन्मनक्षत्रे उपनयने आसावित्रीव्रतबन्धाज्जुहोति। उपनीतस्य तदादि आसमावर्तनं प्रतिसंवत्सरं तत्तद्व्रतबन्धविसर्गकाले उपनयननक्षत्रे तात्कालिकव्रतसूक्तानि

हुत्वा पूर्ववत् कूश्माण्डहोमान्तं जुहुयात् । वेदस्नातकस्य यदह्नि विवाहो भवति तदादि मासिकेऽह्नि, स्थालीपाकपिंडपितृयज्ञमासिश्राद्धादौ वार्षिकेऽह्नि, पाकयज्ञ-हविर्यज्ञादिसंस्थाहोमान्ते च कूश्माण्डहोमान्तं जुहुयात् । यथा जातकादुपनयना-द्विवाहादूर्ध्वं करोति तथा अग्निष्टोमादियज्ञान्ते यस्मिन्नक्षत्रे अग्न्याधानादि करोति तस्मिन् नक्षत्रे वर्षान्ते पूर्ववत् कूश्माण्डहोमान्तं वर्षवर्धने करोति । शताभिषेकः । अष्टमासाधिकेत्यादि । अष्टमासाधिकाशीतिवर्षाणां माससंख्या-क्रमेण अष्टाधिकषष्ट्युपेतनवशतमिन्दवो भवन्ति । 'पञ्चमे पञ्चमे वर्षे द्वौ मासा-वधिका' विति तदवधौ द्वात्रिंशदधिकमासा जायन्ते । तावन्त इन्दवश्च भवन्ति । अतस्स दृष्टसहस्रचन्द्रो भवति । तं पुण्यक्रियायुक्तं ब्रह्मशरीरं ब्राह्मबलसमिद्धशरीरं ब्रुवते ब्रह्मवादिनः । सदारस्यायं संस्कार उचित इति युक्तम् । वृद्धस्य वृद्धाया वेति । वाशब्दस्य समुच्चयार्थकत्वे विधुरस्य विधवायाश्च वर्षवर्धनं न संगच्छते । सर्वदेवता इत्यादि । सर्वदेवता ब्रह्माद्या आवाह्य पुष्पगन्धाद्यैः बलिना च अर्चनं ब्राह्मणानां सहस्रश्चान्नेन यथेष्टं तर्पणञ्च कुर्यात् । समावर्तनोक्तवत् रथं गजमश्वं वा दंपती आरोप्य ग्रामं प्रदक्षिणं नीत्वा सायंकाले अग्नेरुत्तरतः तंडुलैः चतुरश्रं चतुर्हस्तं स्थण्डिलं कृत्वा गोधूमादिपिष्टेन सहस्रसंख्याकचन्द्ररूपवृत्तकबलानि कृत्वा स्थण्डिलोपरि नववस्त्राण्यास्तीर्य तत्र असंकुलं निधाय तेषु सोममावाह्य कुमुदादि-दलैः श्वेतगन्धाक्षतैः पूजनं कुर्यात् । सोमस्य दक्षिणे रोहिणीगणं वामपार्श्वे अनावृष्टिगणञ्च पूजयति । सहस्रश इति । द्विजसहस्राय रजतादिदानं कुर्यात् । अश्वमेधफलावाप्तिः फलम् । ब्रह्मशरीरी अश्वमेधफलभाक् भवतीति वेदानु-शासनम् । (इति एकविंशः खण्डः)

(अथ द्वाविंशः खण्डः) अन्नप्राशनम् । जातस्य षष्ठे तदसंभवे प्रायश्चित्तोक्तवत् अष्टमे दशमे द्वादशे वा मासि । अथ प्रवासागमनम् । गुहस्य आलयं यदि समीपे नास्ति कूर्चे गुहं स्वगृह एव आवाह्य तथैवार्चनप्रणामादि कुर्यात् । प्रोक्ष्यागतमिति क्वचित्पाठः । ब्रह्मादिदेवाः सन्ध्योपस्थानोक्ता गृह्यन्ते । अथ पिंडवर्धनम् । पूर्ववत् – विवाहोक्तवत् । सपिंडैः श्रोत्रियैरेकपङ्क्त्युप-

विष्टैस्सह कुमारभोजनं कुर्यात् । प्रवासागमनपिण्डवर्धनयोः होमो नास्ति । अनुपदिष्टत्वात्, अन्नप्राशनान्तर्भूतत्वेनोपदिष्टत्वाच्च । यदि होमः चिकीर्षितः तर्हि कालान्तरे वा क्रियतां तदा अन्नप्राशनोक्तवत् धातादिमूलहोमः । ( इति द्वाविंशः खण्डः )

( अथ त्रयोविंशः खण्डः ) अथ चौलकम् । नापितायान्नदानं गुरवे गवादिदक्षिणा देवानां पूजनं ब्राह्मणानामन्नेन तर्पणमिति यथासंभवं सर्वेषु संस्कारेषु नियमेन विधीयते । इति षष्ठः पटलः ( इति त्रयोविंशः खण्डः ) ।

# अथ चतुर्थः प्रश्नः

## अथ प्रथमः खण्डः

अथातः स्थालीपाकम् ।

अथ आग्नेयस्थालीपाकानन्तरम् । अतः आग्नेयस्थालीपाकस्य पूर्ववृत्तत्वात् । आग्नेयस्थालीपाकेनाग्निसिद्धिरिति कृत्वा तस्य पूर्ववृत्तत्वेनातश्शब्दः । अतश्शब्दं विहाय केचित्पठन्ति । तदसत् । तस्य हेतुरूपत्वात् अत्यन्तव्यवहितत्वादथशब्दस्य प्रयोजनाभावाच्च अतश्शब्दः । अत्र श्रुतिः । 'सन्धौ यजेत सन्धिमभितो यजेत' इति ।

बोधायनः— 'सूक्ष्मत्वात्सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्यविषयं प्राहुः पूर्वेणाप्यपरेण च' ॥ इति

गोभिलः— 'पक्षान्ता उपवस्तव्याः पक्षादयो वा यष्टव्याः, यज्ञपार्श्वः परः पादः पक्षादेः प्रथमास्त्रयः कालः पार्वणयोगस्य' ॥ इत्यादि

वृद्धशातातपः— 'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
योगकालस्स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥

आवर्तनं यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ।
पर्वप्रतिपदोस्सन्धिरर्वागावर्तनाद्यदि ॥

तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ।
आवर्तनात्परस्सन्धिर्यदि तस्मिन्नुपक्रमः ।
(यागः) परेद्युरित्येष पर्वद्वयविनिश्चयः' ॥ इति

लौगाक्षिः— 'पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युः तदहर्याग इष्यते ॥

अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते' ॥ इति

शातातपः — 'पूर्वाह्णे मध्यमे चापि यदि पर्व समाप्यते ।
तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते ॥

प्रतिपत्पञ्चदश्योस्तु दिनपर्वदिनार्धतः (?) ।
न्यूनं चेच्च चतुर्थात्प्रागूर्ध्वं नो चेत् परेऽहनि' ॥ इति

कात्यायनः 'न यष्टव्यं चतुर्थेऽशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुंपन्ति श्रुतिरेषा सनातनी ॥

संधिश्चेत्संगवादूर्ध्वं प्राक्चेदावर्तनाद्रवेः ।
पौर्णमासीति विज्ञेया सद्यस्कालविधौ तिथिः ॥

आदित्येऽस्तमिते चन्द्रः प्रतीच्यामुदियाद्यदा ।
प्रतिपद्यनिवृत्तः स्यात्पञ्चदश्यां यजेत्तदा ॥

गार्ग्यः — 'प्रतिपद्यप्रविष्टायां यदि चेष्टिस्समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः' ॥ इति

प्रतिप्रसवमाह वृद्धशातातपः ।

'सन्धिर्यद्यपराह्णे स्याद्यागः प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति' ॥ इति

बोधायनः — 'द्वितीया त्रिमुहूर्ता चेत् प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतस्सोमदर्शनात्' ॥ इति

इदं कात्यायनादिविषयम् । प्रथमस्थालीपाकस्यारंभकालः **स्मृत्यन्तरे** दर्शितः —

'पाकयज्ञस्य चारंभमन्वारंभणमेव च ।
पौर्णमास्यां यजेत्पूर्वं दर्शे तु न कथञ्चन' ॥

मौढ्यादिमासदोषे तु पौर्णमास्यां यजेत्कथम् ।
दर्शेऽपि वा यजेत्पूर्वं पौर्णमासीममामपि ॥

अतिकालान्तरारंभे यजमानश्च पापकृत् ।
आयुः श्रियं यशो हन्यात् तस्मात्तौ नात्यतिक्रमेत्' ॥

आग्नेयस्थालीपाकादूर्ध्वं शेषहोमात्पूर्वं पर्वसंभवेऽपि स्थालीपाकः कार्यः ।

'यदा हि शेषमध्ये तु पर्वण्युत्पतिते सति ।
तस्मिन्नपि च कर्तव्यः स्थालीपाको यथाविधि ॥

तत्र यद्यप्यमावास्या विवाहस्याप्यनन्तरम् ।
यदि वा पौर्णमासी स्यात् स्थालीपाकक्रिया मता' ॥ इति

शेषहोमात्परं दर्शश्चेत् प्रथमं पौर्णमासीं यजेत् । पश्चात् दर्शस्थालीपाकः ।

स्मृत्यन्तरे — 'पाकयज्ञस्य चारंभमन्वारंभणमेव च ।
पौर्णमास्यां यजेत्पूर्वं दर्शे तु न कथञ्चन' ॥ इति

यावद्दर्शं तावत् पौर्णमासीस्थालीपाकस्य कालत्वात् पौर्णमासीस्थालीपाकं कृत्वा दार्शिकमुक्तकाले कुर्यात् ।

गौतमः — 'पौर्णमासोपक्रमो दर्शपूर्णमासौ, दर्शश्चेत् पूर्णमासेनेष्ट्वाऽथ तत्कुर्यात् । अकुर्वन् पौर्णमासीमाकांक्षेदित्येके । प्रतिपदि पौर्णमासीममामपि सह न यजेतेति केचित् । 'दर्शेऽपि यजेते' ति वचनात्' इति । प्रतिपदि पूर्णमासस्थालीपाकं कृत्वा अनन्तरं दार्शिकञ्च कुर्यात् ।

ननु — 'उपरागोऽधिमासो वा यत्र प्रथमपर्वणि ।
नाहरेत्प्रथमामिष्टिं संभवे(संमूढे?) गुरुशुक्रयोः ॥

स्थालीपाकक्रियां कुर्याद्विवाहादुत्तरायणे ।
पितृमासचतुष्केषु यदि कुर्यात् विनश्यति ॥

आदर्शदर्शपूर्णेष्ट्योः अग्निहोत्रस्य चादिकम् ।
प्रतिष्ठापनकर्माणि मलमासे विसर्जयेत् ॥

उपाकर्म च हव्यञ्च कव्यं पञ्चोत्सवं तथा ।
उत्तरे नियतः कुर्यान्मलमासे विसर्जयेत्' ॥ इति

काठकगृह्ये — 'सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
तथा आग्रयणाधानचातुर्मास्यादिकान्यपि ॥
महाल्याष्टकाश्राद्धान्युपाकर्मादिकर्म यत् ।
स्पष्टमासविशेषाख्यान् विशेषाद्वर्जयेन्मले' ॥ इति

पैठीनसिः — 'संक्रान्तिरहिते मासे कुर्यादाग्रयणं न च' ॥ इति

ज्योतिः पितामहः—'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धन्तु परित्यज्य कर्तव्यास्तूत्तरे क्रियाः ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतस्स्मृतः ॥ इति

पैठीनसिः — 'श्रौतस्मार्तक्रियास्सर्वा द्वादशे मासि कीर्तिताः ।
त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः ॥
तस्मात् त्रयोदशे मासे कुर्यात्ता न कथञ्चन' ॥ इति

तस्मात् मलमासे स्थालीपाको न कर्तव्य इति केचित्—सत्यम् ।

'आषाढेप्यधिके मासि संक्रान्तिग्रहणे तथा ।
अन्वारंभं प्रकुर्वीत समनन्तरपर्वणि' ॥ इति

विष्णुयामले — 'गुरावस्तंगते शुक्रे बाल्ये वा वार्धकेऽपि वा ।
न दोषाय भवेत् नित्यं स्थालीपाकं समाचरेत्' ॥ इति

यमः — 'चन्द्रसूर्यग्रहे स्नानं श्राद्धं दानं जपादिकम् ।
कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा' ॥
नित्यनैमित्तिके कुर्यात् प्रयतस्सन् मलिम्लुचे ।
असूर्या नाम ये मासा न तेषु मम सम्मताः ॥
व्रतानाञ्चैव यज्ञानामारंभञ्च समापनम् ।
अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा' ॥ इति

स्मृत्यन्तरे — 'अधिमासे तु शुक्रस्य गुरोश्चास्तमयेऽपि च ।
नित्यनैमित्तिकं कुर्यात् काम्यं कर्म विवर्जयेत्' ॥

इत्यादिवचनैः स्थालीपाकः कार्यः ।

ननु — 'उपरागोऽधिमासो वा' इत्यादिवचनानां व्यर्थता स्यादिति चेत् – न ।

'यस्मिन् काले विरोधोऽस्ति ज्यौतिषागमयोः द्वयोः ।
ज्यौतिषोक्तविधानेन श्रुतिचोदितमाचरेत्' ॥

इति वचनात् निषेधवचनानि श्रौतपराणि । स्थालीपाकस्य दोषाभावस्मरणाच्च ।

'अहंस्पतिरवन्तीषु संसर्पः कोसलेषु च ।
अधिमासस्तु पाञ्चाले अन्यत्र न स दोषभाक्' ॥

इत्यधिमासस्य देशान्तरविषयत्वात् न मासदोषः । श्रावणमासादिषु विवाहश्चेत्—

'स्थालीपाकक्रियां कुर्याद्विवाहादुत्तरायणे'

इति वचनात् श्रावणादीन् विहाय उत्तरायणे कर्तव्यः । अत्र —

'अतिकालान्तरारंभे यजमानश्च पापकृत्' 'नित्यानि हापयन्नेनस्वी भवति' इत्यादिवचनैः महान् दोषः । अतः 'उपरागोऽधिमासो वा' इति वचनानि न सर्वसम्मतानि, किन्तु देशान्तरविषयाणि । यद्वा । 'नाहरेत्प्रथमामिष्टि' मित्युक्तत्वात् इष्ट्युपक्रमपराणि । न तु स्मार्तपराणि ।

'अवषट्कारहोमांश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीस्तु वर्जयेत्' ॥ इति

स्मृत्यन्तरे — 'संवत्सरोक्तकालव्यतिक्रमे दिवसे क्वचित् ।
आगामि पर्वणः पूर्वं स्थालीपाकं समाचरेत् ।
.... अहंस्पतिमासाधिमासादयस्तथा' ॥

'शुक्रे चास्तंगते जीवे बाल्ये वा वार्धकेऽपि वा ।
न दोषाय भवेत् सर्वं कर्तव्यं विधिचोदितम्' ॥

'आषाढेऽप्यधिके मास' इत्यादीनि वचनानि प्रारब्धस्थालीपाकविषयाणीति केचिद्वदन्ति । तदसत् । 'प्रारब्धे तु द्वितीयादावुक्तदोषो न विद्यत' इति

वचनात् द्वितीयादौ विवादाभावात् मन्दबुद्धिविषयाणि (?) । अतः समनन्तर-पर्वणि स्थालीपाकः कार्यः ।

**अग्नेः पश्चिमतस्तिष्ठन् प्राङ्मुखः प्राणायामं धारयति ॥ २ ॥**

**तिष्ठन्** । 'प्राग्यज्ञसंस्थानात् न तिष्ठद्धोमो विद्यते' इति बोधायनवचनात् उपविशन्नित्यर्थः । यद्वा । 'ष्ठा गतिनिवृत्त्योः' – इति 'गत्यर्था बुद्ध्यर्था' इति व्यापारान्तरराहित्यमर्थः । 'यन्मनसा ध्यायति तद्वाचा वदति तत् कर्मणा करोति' इति श्रुतेः । **प्राणायामं धारयति** 'यस्याग्निहोत्रमदर्शपूर्णमास' मित्यादिश्रुतेः, प्रथमयज्ञत्वात् गौरवाभिप्रायेण प्राणायाम उक्तः । नात्र विद्युद्दृष्टी ।

**एकविंशतीध्मान् संगृह्य दर्भदर्वीस्रुक्स्रुवप्रणीताज्यस्थाली-(चरुस्थाली) रग्नेरुत्तरे अवाङ्मुखं सन्न्यस्य 'उद्धर' इत्यग्निमुद्धार्येन्धनै-रिन्धयेत् ॥ ३ ॥**

**एकविंशतीध्मान् सङ्गृह्य** । त्रीन् परिधीन् द्वावाघारसमिधौ एकमनू-याजं पञ्चदशेध्मान् दर्भेण सन्नह्य परिस्तरणबर्हिषः पवित्रं प्रोक्षणकूर्चाक्षतादीन् दर्भदर्वीस्रुक्स्रुवप्रणीताज्यस्थालीः अग्नेरुत्तरे दर्भेष्ववाङ्मुखान् द्वन्द्वं न्यस्य 'उद्धर' इत्यग्निमुद्धार्य । धार्याग्निविषये भस्माद्यपोहनं – कुण्डे चेत्प्रज्वलनं समिध्या-रोपितश्चेत्तत्रारोप्य इन्धनम् ।

**वेदिं परिमृज्य प्रागाद्युत्तरान्तं दर्भानास्तीर्य इध्मादीनग्नि-कुण्डञ्च प्रोक्षयति ॥ ४ ॥**

**प्रणीतामासाद्य पवित्रं निधायाद्भिः पूरयति 'पृथिव्यापो गृहीष्या' मीति ॥ ५ ॥**

**वेदिं परिमृज्य** । अदितेऽनुमन्यस्वेत्यादिभिः कूर्चेन परिमृज्य दक्षिणादिप्रदक्षिणम् ।

अत्रायं क्रमः । ब्रह्मवरणानन्तरं प्रोक्षणीपात्रमादाय पृथिव्यापो गृही-ष्यामीति साक्षतमद्भिरापूर्य वसूनां पवित्रमिति पवित्रेणोत्पूय ब्रह्माणमामन्त्र्य प्रोक्ष

यज्ञमिति तेनोक्तः इध्माबर्हिषो विस्रस्य प्रोक्ष्य विष्णोस्स्तूपोऽसीत्यादिभिः प्रागाद्युत्तरान्तं परिस्तीर्य प्रणीतामासाद्य पवित्रं निधाय वसूनां पवित्रमित्यारभ्य प्रणयनपर्यन्तमाघारोक्तप्रकारेण कुर्यात् ।

**पूर्ववदुत्पूयोत्तरे निधाय आज्यस्थालीं गृहीत्वा पूर्ववदाज्यं संस्कृत्य. चतुर्थीवदाग्नेयं चरुं स्थाल्यां पक्त्वा अग्निं (परि) समूह्य 'देवस्य त्वे' ति दर्वीमादाय प्रक्षाल्य उत्तराग्रं निधाय परिषिच्य इध्मान् गृहीत्वा आज्यमनक्ति ॥ ६ ॥**

**एकमनुयाजमपोह्य त्रीन् परिधीनाघारौ च पूर्ववन्निधाय शेषान् पञ्चदेशेध्मान् प्राणायामेनाग्नौ क्षिपति ॥ ७ ॥**

**एकमित्यादि** ॥ आघारौ आघारसमिधौ पूर्ववत्—आघारविधानोक्तवत् । **प्राणायामेनेति** । ओं स्वाहेति केचित् । क्षिपतीत्युक्तत्वात् ओमिति केचित् ।

**आज्येनाघारौ संस्राव्य हुत्वा 'अग्नये स्वाहा—सोमाय स्वाहा' इति जुहोति ॥ ८ ॥**

अथ अग्नये सोमाय स्वाहा इत्याज्यभागानन्तरं 'युक्तो वहे' त्यग्निमुखाहुतीः जुहुयात् — न जुहुयाद्वा । अनुक्तत्वात् ।

**दर्व्या चरुं गृहीत्वा अभिघार्य अवदानं गृहीत्वा 'अग्नये स्वाहा — अग्नये स्विष्टकृते स्वाहा' इति हुत्वा अत्रानुयाजमग्नौ प्रक्षिप्य प्राजापत्यं जयान् व्याहृतीश्च 'पाहि नो अग्न एनसे' — 'पाहि नो विश्ववेदसे' — 'यज्ञं पाहि' — 'सर्वं पाहि' — 'कामावकीर्णः' — 'कामाभिद्रुग्धः' — 'संमा' — 'समुद्रा' दिति स्विष्टाकारश्च जुहोति ॥ ९ ॥**

**दर्व्या चरुं गृहीत्वा** — दर्व्यामुपस्तीर्य द्विरवदाय सकृदभिघार्य अग्नये स्वाहेति जुहोति । अवदानशब्दसामर्थ्यात् चतुरवत्तं सिद्धम् । अवदानलक्षणं **श्रौते** — 'अंगुष्ठपर्वमात्राणि दैवतान्यवदानानि । तेभ्यः स्थवीयांसि सौविष्टकृतानि' । इति । पुनरपि दर्व्यामुपस्तीर्य सकृदवदाय द्विरभिघार्य **'अग्नये**

स्विष्टकृते स्वाहा' इति हुत्वा । अत्रानुयाजमग्नौ प्रक्षिप्येत्युक्तत्वात् तूष्णी-मित्यर्थः । अन्यत् स्पष्टम् ।

**परिषिच्य प्रणिधिं चालयति ॥ १० ॥**

परिषिच्येति । 'अदितेऽन्वमँस्था' इत्यादिभिः । 'अक्षितमसी'त्यारभ्य 'तन्तुं तन्वन्' इत्यन्तं पूर्ववत्कुर्यात् ।

**भस्माऽलिप्यात्मानं प्रोक्ष्य अग्निं वैश्वानरसूक्तेनोपस्थाय प्राणायामेन दर्भांश्चतुर्दिशमुत्थाप्य अद्भिः प्रोक्ष्य द्वावपोह्य अन्यान् 'आप्यायन्ता' मिति जुहोति ॥ ११ ॥**

**द्वावपि गृहीत्वा अद्भिः प्रोक्ष्य 'अग्नये स्वाहा–सोमाय स्वाहे'ति हुत्वा त्रीन् परिधीनाघारसमिधौ च जुहुयात् ॥ १२ ॥**

द्वावपीत्यादि । अत्र परिस्तरणपरिध्याघारसमित्प्रहरणानन्तरं भस्मालेपनं प्रोक्षणमुपस्थानञ्च कर्तव्यम् । उपस्थानानन्तरं परिस्तरणपरिधिपरिहारादेः कर्तुमयुक्तत्वात् । 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायात्, समीचीनार्थस्य स्वीकार्यत्वनियमाच्च ॥

**धार्यं कर्तुमशक्तः समिधि स्वात्मन्यरण्यां वा समारोपयेदिति विज्ञायते ॥ १३ ॥**

धार्यमित्यादि ॥ वाशब्दो विकल्पार्थः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताच...

श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने

तात्पर्यचिन्तामणौ चतुर्थप्रश्ने प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः

अथ सति व्रीहिनीवारश्यामाकयवानामाग्रयणे देवताभ्यः स्थाल्यां चरुं पक्त्वा नवेन तण्डुलेन पक्केनापि जुहोति ॥ १ ॥

अथ स्थालीपाकानन्तरम् । सति व्रीहिनीवारश्यामकयवानां आग्रयणे अग्रधान्यागमे । श्रौते च । 'ओषधीनामग्रपाकेन यजेते' ति । 'तयाऽनिष्ट्वा नवान्नं नाश्नाति । (न नवान्नानामश्नाति) इति । 'ओषधीनामग्रपाकेन यजेत' इत्यनेन आग्रयणात्पूर्वं नूतनधान्यभक्षणं न कर्तव्यामित्यभिप्रायेणाग्रपाकशब्दः । आग्रयणेनेष्ट्वा भक्षयेत् । अकरणे स्वपराभवमाह श्रुतिः । 'यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन् । आग्रयणं भवति । हुताद्याय यजमानस्यापराभवा' येति । आग्रयणञ्च मलमासे न कर्तव्यम् ।

'पश्विष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ।
न कार्याणि स्वकालस्य शुद्धस्य द्व्यसंभवात्' ॥ इति

प्रतिप्रसवश्च ।

'पुराणधान्यशून्यत्वे क्षुद्बाधे समुपस्थिते ।
श्यामाकैर्मलमासेऽपि कृत्वाऽऽग्रयणमातुरः ॥
नवं कृत्वा यथाकालं व्रीह्याग्रयणमाचरेत्' ॥ इति

आग्रयणे देवताभ्यः स्थाल्यां चरुं पक्त्वा इत्यादि । (अग्नये जुष्टं निर्वपामीत्यादि ।) नवेन तण्डुलेन पक्केनापि जुहोति । 'नवेन तण्डुलेन पक्केनापि' इत्यनेन सर्वावस्थास्वपि कर्तव्यता सूच्यते । तथा च श्रौते । 'अपि वा पौर्णमास्याममावास्यायां वा आग्रयणेष्टिमन्वायातयेत् (अपि वा नवैरेव ।) अपि वा पौर्णमास्याममावास्यां वा यजेत् । अपि वा नवैरग्निहोत्रं जुहुयात्' इत्यारभ्य 'चतुरो वा ब्राह्मणान् भोजयेत् अनिष्टेऽप्याग्रयणे ब्रह्मणि हुतं भवति' । इति

अग्नये स्वाहा – इन्द्राग्निभ्याँ स्वाहा – विश्वेभ्यो देवेभ्यः स्वाहा-सोमाय स्वाहा – द्यावापृथिवीभ्याँ स्वाहा – अग्नये स्विष्टकृते स्वाहा – इति

**जुहोति। 'शतायुधाय' 'ये चत्वारः' इति पितृभ्यः, सोपवीती – 'ग्रीष्मो हेमन्तः' – 'इदुवत्सराय' – 'भद्रां नश्श्रेयः' इति, 'आयुष्पा' इत्यादिभिः त्रिभिः व्याहृत्यन्तं हुत्वा दक्षिणे धरण्यां पितृभ्यो बलिदानम् ॥ २ ॥**

अग्नये – इन्द्राग्निभ्यां – विश्वेभ्यो देवेभ्यः – सोमाय – द्यावापृथिवीभ्यामिति प्रधानदेवताः। अत्रायं क्रमः। पत्न्या सह प्राणानायम्य आग्रयणेन यक्ष्ये' इति संकल्प्य आघारं हुत्वा जुह्वामुपस्तीर्य अग्नये स्वाहेत्यादि अग्नये स्विष्टकृते स्वाहेति च हुत्वा, प्राचीनावीती 'शतायुधाय – ये चत्वार' इति हुत्वा पितृभ्यस्स्वाहा इत्यन्तं हुत्वा। उपवीती ग्रीष्मो हेमन्तः – इदुवत्सराय – भद्रां नश्श्रेय – इति, आयुष्पा इत्यादिभिः त्रिभिराज्येन व्याहृत्यन्तं हुत्वा **धरण्यां** भूमौ **पितृभ्यो बलिदानम्**। पितृभ्यो नम इति बलिं दद्यात्।

**'आप्यायता' मिति तण्डुलैरास्यमभिपूर्याऽऽचम्य शिष्टैरन्तर्वंशे 'परमेष्ठ्यसी' ति विकिरति ॥ ३ ॥**

तण्डुलैः नवतण्डुलैः। वंशे प्रधानवंशे।

**तदेवं शालीनयायावरादिवृत्त्यन्तरमाश्रित्य गार्हस्थ्यं धर्ममनुतिष्ठतीति विज्ञायते ॥ ४ ॥**

तत् – स्वपराभवनिवृत्तिकारणात्।

'कृताग्रयणसंस्कारास्सन्तो विगतकल्मषाः।
नवाग्रयणपूजाभिरभ्यर्च्याः पितृदेवताः'॥ इति

दोषनिवृत्तिकारणाद्वा। **एवम्** उक्तप्रकारेण। **शालीनयायावरादिवृत्त्यन्तरमाश्रित्ये**त्यादि। उञ्छवृत्तिनापि कर्तव्यमित्यभिप्रायेणोक्तम्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने द्वितीयः खण्डः।

## अथ तृतीयः खण्डः

**अथाष्टका ॥ १ ॥**

अथ आग्रयणानन्तरम् । अन्नसंस्कारत्वादिति भावः ।

**माघप्रोष्ठपदयोरपरपक्षे अष्टम्यामष्टकां कुर्यात् ॥ २ ॥**

**सप्तम्यां नवम्यां त्रयोदश्यां वा ॥ ३ ॥**

कालनिर्णयमाह सप्तम्यामित्यादि । वाशब्दः कालान्तरपरः ।

स्मृत्यन्तरे — कृष्णाष्टम्यां तथा माघे ज्येष्ठर्क्षसहितां तथा ।
सावशिष्टाष्टकायां तु प्रेतकार्यं विशेषतः ॥

सप्तम्यां च नवम्यां च माघे कृष्णे विशेषतः ।
पितृणां प्रीतिदं श्राद्धं तस्मात्तिस्र उदाहृताः ॥

कुंभे दिनेश्वरे मासि कृष्णपक्षे परं तथा ।
त्रिस्रोष्टकेति शंसन्ति पितरः कव्यकांक्षिणः ॥ इति

बृहस्पतिः — 'कन्यायां भास्करे मासि नभस्ये च त्रयोदशी ।
पितृभे सहिता चैव (?) पितृणां दत्तमक्षयम् ॥

बृहन्मनुः — 'नभस्यस्यापरः पक्षः यत्र कन्यां व्रजेद्रविः ।
स महालयसंज्ञस्स्यात् गजच्छायाह्वयस्तथा' ॥ इति

कुत्सः — 'उत्तराहस्तचित्रासु कन्यायां भास्वति स्थिते ।
कृष्णपक्षे गजच्छाया समानः पितृकर्मसु ॥

यदेन्दुः पितृदेवत्ये हंसश्चैव करे स्थितः ।
गजच्छायाह्वयः प्रोक्तः पितृणां दत्तमक्षयम्' ॥ इति

बृहन्मनुः — 'आषाढीमवधिं कृत्वा पञ्चमीं पक्षमाश्रिताः ।
कांक्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्' ॥ इति

जातुकर्णिः — 'नैयोगिकी तिथिर्ह्येषः पक्षो वै पञ्चमः स्मृतः ।
तस्मिन् हुतं हविर्दत्तं पितृणामक्षयं भवेत्' ॥ इति

आदित्यपुराणे: — 'सुदुष्कृतो यमः प्रेतान् पितॄंश्चापि यमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥

क्षुधार्ताः कीर्तयन्तश्च दुष्कृतञ्च स्वकं कृतम् ।
कांक्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ॥

तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ॥

ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः ।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ॥

यावत्संवर्धयेद्देहं प्रत्यहञ्चात्मविक्रयात् ।
श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ॥

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांश्च पुष्कलान् ॥

मनुः 'आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा' ॥ इति

कार्ष्णाजिनिः — 'हस्त ऋक्षे दिनकरे प्रेतराजानुशासनात् ।
तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्' ॥ इति

जाबालिः — 'आगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत सर्वदा ।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्मसु' ॥ इति

सिंहमासान्ते

कार्ष्णाजिनिः — 'आदौ मध्ये तथाऽन्ते वा यत्र कन्यां रविर्व्रजेत् ।
स पक्षः पञ्चमः पूज्यः श्राद्धषोडशकं प्रति' ॥ इति

बृहन्मनुः — 'मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते' ॥ इति

जातुकर्णिः — 'आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
श्राद्धकालस्स विज्ञेयः कन्यां गच्छतु वा रविः' ॥ इति

आदित्यपुराणे — 'आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।
श्राद्धन्तु तत्र कुर्वीत कन्यां गच्छतु वा न वा' ॥ इति

प्रशस्तकालातिक्रमे दोषमाह **कार्ष्णाजनिः** — —

'प्रेतांस्तु चैव हिंसन्ति पञ्चमं यो व्यतिक्रमेत् ।
तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम्' ॥ इति

सुमन्तुः — 'कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः ।
तस्मात्तावद्भवेद्देयं वृश्चिकं यावदागतः ॥

येऽयं दीपावली राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये' ॥ इति

पुराणान्तरे: — 'कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥

ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्वा सुदारुणम्' ॥ इति

पञ्चपक्षस्य अधिमासत्वे सप्तमः पक्ष एव श्राद्धकालः ।

भृगुः — 'नभो वाऽथ नभस्यो वा यदा मासो द्विधा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः' ॥ इति

ज्योतिः पराशरः — 'अर्के नभस्स्थे कन्यास्थे श्राद्धपक्षः प्रकीर्तितः ।
सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः ।
तदा कालस्य वृद्धत्वात् अतीत्यैव पितृक्रिया' ॥ इति

भृगुः — 'एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् ।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः ॥

वृद्धिश्राद्धं तथा सोममम्न्याधेयं महालयम् ।
राजाभिषेकं काम्यञ्च न कुर्याद्भानुलंघितः' ॥ इति

ज्योतिः पितमाहः—'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धन्तु परित्यज्य कर्तव्यास्तूत्तरे क्रियाः' ॥ इति

स एव — 'यातुधानप्रियो मासः कन्यार्को जायते यदा ।
पित्र्यं दैवं तदा कर्म उत्तरे मासि युज्यते' ॥ इति

स एव — 'कन्याराशिगते भानावसंक्रान्तो यदा भवेत् ।
पित्र्यं दैवं तथा कर्म तुलास्थे कर्तुरक्षयम्' ॥ इति

अत्र चत्वारः पक्षाः यथाः —

गौतमः — 'अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् । पञ्चम्यादि दर्शान्तम् – अष्टम्यादि – दशम्यादि – सर्वस्मिन्' ॥ इति

मार्कण्डेयः — 'उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे ॥
प्रोष्ठपद्याः परः पक्षः तत्रापि च विशेषतः ॥

पञ्चम्यूर्ध्वं दिनानि स्युर्दर्शान्तानि दशैव तु ।
मघायुक्ता तु तत्रापि शस्ता राजन् त्रयोदशी' ॥ इति

ब्रह्माण्डे — 'नभस्ये कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीनपक्षे वा त्रिभागे त्वर्ध एव वा' ॥

पैठीनसिः — 'अपरपक्षस्य पञ्चम्यां पुत्रकामो यजेत, षष्ठ्यां पशुकामः, सप्तम्यामृद्धिकामोऽष्टम्यामन्नाद्यकामो, नवम्यां ब्रह्मवर्चसकामो, दशम्यां सर्वकामः, एकादश्यां धनकामो, द्वादश्यां क्षेत्रकामस्त्रयोदश्यां यज्ञकामश्चतुर्दश्यां युद्धे हतानां सर्वकामोऽमावास्यायाम् । दत्वा हुत्वा न मैथुनं व्रजेत् । य एवं विद्वान्

पितॄन् यजते वसवो रुद्रा आदित्याश्च प्रीयन्ते । पितरो नाम वसवः, रुद्राः पितामहाः, आदित्याः प्रपितामहाः तेभ्यो दत्तमिहाक्षय्यं भवति' इति ।

मनुः — 'कृष्णपक्षे दशम्यादि वर्जयित्वा त्रयोदशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः' ॥ इति

नित्यादिश्राद्धानि —

'मृताहेऽहरहर्दर्शे श्राद्धं यच्च महालये ।
तन्नित्यमुदितं सद्भिर्नित्यवत्तद्विधानतः ॥

प्रेतश्राद्धं सपिण्डत्वं संक्रान्तिग्रहणेषु च ।
संवत्सरोदकुंभश्च वृद्धिश्राद्धं निमित्ततः ॥

तिथ्यादिषु च यच्छ्राद्धं मन्वादिषु युगादिषु ।
अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम्' ॥ इति

कालादर्शे, देवलः— 'न नन्दासु भृगोर्वारे भरण्यां च त्रिजन्मसु ।
रेवत्यां च मघायां च कुर्यादापरपक्षिकम्' ॥ इति

दक्षः — 'नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्' ॥ इति

इदं वचनद्वयमपि महालयश्राद्धव्यतिरिक्तविषयम् ।

कार्ष्णाजनिः — 'नभस्यस्यापरे पक्षे पितृकार्यं दिने दिने ।
नैव नन्दादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी' ॥ इति

गौतमः — 'सूर्ये कन्यागते श्राद्धं यो न कुर्याद्गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिश्श्वासपीडया' ॥ इति

कार्ष्णाजनिः — 'सूर्ये कन्यामतिक्रान्ते पितरो दैवतैस्सह ।
निश्श्वस्य प्रतिगच्छन्ति शापं दत्वाऽतिदारुणम् ॥

अमापाते भरण्यां च द्वादश्यां पक्षमध्यके ।
न तिथिर्न च नक्षत्रं कुर्यादेवाविचारयन्' ॥ इति

**सायं पूर्वेद्युः स्वाध्यायाचारवतः शुचीन् असगोत्रान् ब्राह्मणा-नाहूयाभिपूज्य युग्मान् त्र्यवरान् विश्वेदेवार्थे, त्र्यवरान् पित्रर्थे च द्वयोरेकैकं वा निमन्त्रयेत् ॥ ४ ॥**

सायमित्यादि। अत्र बोधायनः। 'अथाष्टकाहोमः। तैष्ये मास्य–परपक्षस्याष्टम्यां क्रियेत। एवं माघे, एवं फाल्गुने। यदि विहृतो यद्यु वै समस्त उपरिष्टान्माघ्याः पौर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेत। अपि वा अष्टम्यामेव। श्वः करिष्यामीति ब्राह्मणान् निमन्त्रयेत। योनिगोत्र-श्रुतवृत्तसंपन्नानसंबन्धानित्येके। कामं संबन्धानपि श्रुतवृत्तसंपन्नान्। श्रुतवृत्तयो हि स्वधानिधित (?) इत्युपदिशन्ति'। इति

यमः— 'ब्राह्मणस्य कुलं ग्राह्यं न वेदास्संपदः क्रमात्।
कन्यादाने पितृश्राद्धे न विद्या तत्र कारणम्' ॥ इति

'समानश्च सगोत्रश्च विधुरं ब्रह्मचारिणम्।
देवार्थे वरयेद्विप्रं पित्रर्थे वरयेन्न तु' ॥ इति

याज्ञवल्क्यः 'पत्नी भ्राता च भगिनी दौहित्रो दुहितुः पतिः।
अत्यासन्नमतिक्रम्य मुनेर्दत्तन्तु निष्फलम्' ॥ इति

'स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः।
त्रिणाचिकेतदौहित्रशिष्यसंबन्धिबान्धवाः ॥

कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः।
तदलाभे तु सद्वृत्तान् गृहस्थानपि भोजयेत्' ॥ इति च

स्मृत्यन्तरे— 'सन्निकृष्टं द्विजं यस्तु युक्तजातिं प्रियंवदम्।
मूर्खं वा पंडितं वापि वृत्तहीनमपि द्विजः।
.... .... .... .... .... ॥

निरोंकारेण यद्भुक्तं सशास्त्रेण (?) च भारत।
दुरात्मना च यद्भुक्तं तद्भागं रक्षसां विदुः ॥

आज्याहुतिं विना चैव यत्किञ्चित् परिविष्यते ।
दुराचारैश्च यद्भुक्तं तद्भागं रक्षसां विदुः ॥

भोजयेन्न नरो विद्वान् दारिद्र्याभिहतः तथा ।
सन्निकृष्टमतिक्रम्य श्रोत्रियाय प्रयच्छति ॥
स तेन कर्मणा वापि दहत्यासप्तमं कुलम्' ॥ इति

आनुशासनिके — 'स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥

कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत! ।
तत्र ये ब्राह्मणाः केचिन्न च निन्दन्ति ये परान् ॥

ये तु निन्दन्ति जल्पेषु न तांच्छ्राद्धेषु भोजयेत् ।
ब्रह्मणाभिचितो राजन् हन्तारः त्रिपुरुषं कुलम्(?) ॥

वैखानसानां वचनमृषीणां श्रूयते यथा' ।
'दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ॥

प्रिया वा यदि वा द्रेष्याः तेषु तच्छ्राद्धमावपेत् ।
यस्सहस्रं सहस्राणां भोजयेदनृचां नरः ॥

एतस्मान्मन्त्रवत्पूतः सर्वमर्हति भारत! ।
काणाः कुब्जाश्च खञ्जाश्च दरिद्रा व्याधितास्तथा ।
सर्वे श्राद्धे नियोक्तव्या वेदाढ्या आहिताग्नयः ॥

भ्रातॄन् वा भोजयेच्छ्राद्धे पुत्रं वापि बहुश्रुतम् ।
आत्मानं वा नियुञ्जीत न विप्रं वेदवर्जितम् ॥

भ्रातृद्वयं पितृसुतावेकस्मिन् श्राद्धकर्मणि ।
पात्रस्थानस्य पार्थक्यात् दोषस्सोऽपि न विद्यते' ॥ इति

श्रीभारते — 'एवं हि यश्चतुर्वेदी शीलधृष्टस्सकृद्वितः ।
शीलवृत्तसमायुक्तो गायत्रीगायको वरः ॥

यो जपेत्परमां देवीं गायत्रीं वेदमातरम् ।
न सीदेत् प्रतिगृह्णानः पृथिवीश्च ससागराम्' ॥ इति

**आहूयाभिपूज्य** — प्राङ्मुखानभिपूज्य ।

**युग्मानिति** — 'नांदीमुखे वसुस्सत्यः अष्टक्यां कालकामुकौ ।
मासि श्राद्धे जयानन्दौ पार्वणे तु धुरूरुची ।
सापिंड्ये तु क्रतुर्दक्षो विश्वेदेवा दशामराः' ॥ इति

बोधायनः— 'द्वौ देवौ त्रीन् पित्रर्थे तु एकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रिया देशकालौ च शौचं ब्राह्मणसंपदः ।
पञ्चैतान् विस्तरो हन्ति तस्मात्तान् परिवर्जयेत' ॥ इति

सूत्रे चकारेण विष्णुवरणम् 71
ये विप्रा लोभमोहाच्च विष्णुं श्राद्धे विना कृतम् ।
त्रयस्ते नरकं यान्ति दाता भोक्ता तथा पिता' ॥ इति

यद्वा चकारः वर्गद्वयपरः ।

स्मृत्यन्तरे— 'वर्गद्वयं समुद्दिश्य श्राद्धमाद्यन्तदैविकम् ।
कुर्यात्पार्वणमार्गेण नो चेद्दोषो महान् भवेत्' ॥ इति

**श्रीभागवते** सप्तमस्कन्धे पञ्चदशे
'कुर्यादापरपक्षीयं मासि प्रोष्ठपदे द्विजः ।
श्राद्धं पित्रोर्यदा दत्तं तद्बन्धूनाञ्च वित्तवान्' ॥ इति

**द्वयोरेकैकं वा निमन्त्रयेत्** इति ।

बोधायनः— 'उरसः पितरस्तस्य वामतश्च पितामहाः ।
दक्षिणतः प्रपितामहाः पृष्ठतः पिंडतर्ककाः' ॥ इति

**अपरेद्युरपराह्णे देशे शुचावाधायौपासनाग्निं (ग्नौ) वैश्वदेवाद्यारं हुत्वा स्थालीं संक्षाल्य 'विश्वेभ्यो देवेभ्यो जुष्टं, पितृभ्यो जुष्टं निर्वपामि' इति स्थाल्यां तण्डुलान् निर्वाप्य सतिलं चरुमपूपान्यपि पचेत् ॥ ५ ॥**

अपरेद्युरित्यादि । अपराह्ने,

मनुः — 'यस्यामस्तं रविर्याति पितरस्तामुपासते ।
सा पितृभ्यो यतो दत्ता अपराह्णः स्वयंभुवा ' ॥ इति

'अपराह्णः पितृणां ' इति श्रुतिः ।

'सायंतन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके
ग्राह्या सा ह्यपराह्णयोर्यदि तदा यत्राधिका सा मता ।
तुल्या चेदुभयापराह्णसमये पूर्वात् न चेत् तद्द्वयोः
पूर्वैव त्रिमुहूर्तगाऽस्तसमये नो चेत्परैवोचिता ॥

क्षीणाहो ब्राह्मणानामतिथिमुनिगणैरस्तमाने गतेर्के
कर्तव्यं श्राद्धकालं नृपनवघटिका वैश्यनाड्योधिकेष्टौ ।
शूद्राणामर्कनाड्यः कृतपरविगते संगवे चेतरेषां
इत्थं पूर्वेद्युरामं सकलमुनिमतं पार्वणश्चापराह्ने ' ॥ इति

स्मृत्यन्तरे — 'खर्वो दर्पस्तथा हिंस्रः त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ कार्यौ हिंस्रस्स्यात्पूर्वकालिकी ॥

स्यात् षष्टिघटिका पूर्वा परेद्युस्त्रिमुहूर्तका ।
पूर्वेद्युस्तत्र कर्तव्यं संपूर्णा वा व्रतादिषु ॥

अपराह्णस्यान्तिमोंऽशो यः पादन्यूनमुहूर्तकः ।
तत्र श्राद्धनिषेधस्स्यात् चतुर्थप्रहरान्वितः ' ॥ इति

यमः — 'चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥

आमश्राद्धन्तु पूर्वाह्ने एकोद्दिष्टन्तु मध्यमे ।
पार्वणश्चापराह्ने तु प्रातर्वृद्धिनिमित्तकम् ॥

दैवं पूर्वाह्णके कुर्यादपराह्ने तु पैतृकम् ।
मनुष्याणान्तु मध्याह्ने प्रदद्यादुपपत्तितः ॥

लंघितञ्चावलीढञ्च कालपूर्वञ्च यत्कृतम् ।
रजस्वलाभिमृष्टञ्च तद्भागं रक्षसां विदुः' ॥ इति

व्यासः — 'अभ्यस्तमयवेलायां कलामात्रापि या तिथिः ।
सैव पित्राब्दिकश्राद्धे नेतरा पुत्रहानिदा' ॥ इति

देवलः — 'सायाह्नव्यापिनी या तु पार्वणी सा उदाहृता' ॥

कण्वः — 'एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् ।
त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः ॥

वृद्धौ षण्णाडिका ग्राह्याः क्षये तिस्रः समे चतुः ।
अतिक्षये तु संप्राप्ते कलामात्रपरिग्रहः' ॥ इति

व्यासः — 'कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् ।
आवर्तनसमीपे वा तत्रैव नियतात्मवान्' ॥ इति

गौतमः — 'आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लंघयेत् ॥

मुहूर्तात्कुतपादूर्ध्वं यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत् स्वधाभवनमिष्यते' ॥ इति

मनुः — 'रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते' ॥ इति

शातातपः 'रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् ।
सूर्योदयमुहूर्ते च संध्ययोरुभयोस्तथा ॥

प्रातः काले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः ।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः' ॥ इति

भविष्यपुराणे — 'प्रविश्य भानुः स्वां छायां शंकुवद्यत्र तिष्ठति ।
स कालः कुतपो नाम मन्दीभूतस्य संज्ञया' ॥ इति

नारदः — 'मध्याह्नात् त्रिमुहूर्तन्तु यदा चरति भास्करः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्' ॥ इति

शिवराघवसंवादे – 'गृहादिव्यतिरिक्तस्य (?) प्रक्रमे कुतपः स्मृतः ।
कुतपादपि वा पूर्वादावृत्तौ कुतपे सति' ॥ इति

स्मृत्यन्तरे — 'कु यत्र गोपतिर्गोभिस्तपत्येकत्वमाश्रितः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

दिवसस्याष्टमे भागे यदा मन्दायते रविः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्' ॥

'मध्याह्नः खड्गमांसञ्च तथा नेपालकंबलः ।
रौप्यं दर्भास्तिला गावः दौहित्रश्चाष्टमः स्मृतः ॥
अष्टावेते यतस्तस्मात् कुतपाः इति विश्रुताः' ॥ इति

'त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम्' ॥ इति

स्मृत्यन्तरे — 'महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
उपोष्यैव च पूर्वेद्युः पितॄणामनृणो भवेत् ॥

मातापित्रोर्मृताहे तु पूर्वेद्युस्समुपोषितः ।
त्रिरात्रं ब्रह्मचारी स्यात् पितॄणामनृणो भवेत्' ॥ इति

मलमासादिविषये — **काठकगृह्यः**,

'सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
ष्टीष्ट्याग्रयणाधानचातुर्मास्यादिकानि च ॥

महालयाष्टकाश्राद्ध उपाकर्मादिकर्म यत् ।
स्पष्टमासविशेषाख्या विशेषाद्वर्जयेन्मले ॥

गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके ।
सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत्' ॥ इति

गभस्तिः — 'एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
न कार्यं पूर्वमासे तु कालाधिक्येऽपि धर्मतः' ॥ इति

गृह्यः — 'अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत्' ॥ इति

पौठीनसिः — 'मलमासमृतानान्तु यच्छ्राद्धं प्रतिवत्सरम् ।
मलमासे तु कर्तव्यं नान्येषान्तु कदाचन' ॥

शुद्धमासमृतानामपि

'आब्दिकं प्रथमं यत् स्यात् तत्कुर्वीत मलिम्लुचे' ॥ इति

हारीतः — 'असंक्रान्तौ तु कर्तव्यमाब्दिकं प्रथमं द्विजैः' ॥ इति

लघुहारीतः — 'प्रत्यब्दं द्वादशे मासे कुर्यात् पिंडोदकक्रियाः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्' ॥ इति

सत्यव्रतः — 'वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासेऽपि कर्तव्यं व्याघ्रस्य वचनं यथा ॥

वर्षे वर्षे तु यच्छ्राद्धं तत्कुर्वीत मलिम्लुचे ।
कुर्यात्तत्र प्रमीतानां अन्येषामुत्तरत्र तु' ॥ इति

पौठीनसिः — 'मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरम् ।
मलमासे तु कर्तव्यं अन्येषां तु कदाचन ॥

पूर्वेद्युरपरेद्युश्च वर्जयेत् स्त्रीनिषेवणम् ।
व्यवायी रेतसो गर्ते मज्जयत्यात्मनः पितॄन्' ॥ इति

स्मृत्यन्तरे — 'नित्यनैमित्तिके कुर्यात्प्रयतस्सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छाया प्रेतश्राद्धं तथैव च ॥

कन्याकुंभगते सूर्ये कृष्णपक्षे विशेषतः' ॥ इति

नारदः — 'यस्यां तिथौ मृतिर्जाता तस्यामेवाब्दिकं चरेत् ।
तिथिनक्षत्रवारेषु तिथिरेव बलीयसी ॥

पित्रोर्मृततिथिं ज्ञात्वा यो न कुर्यात्तथाऽऽब्दिकम् ।
पापश्चैष्ठ्यमवाप्नोति पितृहा चोपजायते ॥

यथा देशसमाचारं तथैवाब्दिकमाचरेत् ।
वंशाचारमातिक्रम्य तच्छ्राद्धं नाशयेत्कुलम्' ॥ इति

ननु —

**वृद्धहारीतः** — 'सूताकादौ यदा श्राद्धं सूतकान्ते यथा भवेत् ।
तथा चैकादशीश्राद्धं द्वादश्यामेव कारयेत्' ॥ इति

हारीतः — 'पित्रोः श्राद्धं न कुर्वीत एकादश्यां द्विजोत्तमः ।
द्वादश्यां तत् प्रकुर्वीत नोपवासदिने क्वचित्' ॥ इति

पराशरः — 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
अनेन विधिवाक्येन तत्र श्राद्धं परेऽहनि' ॥ इति

**बोधायनः** — 'आदिश्राद्धं हरिदिने यदि स्यात् तन्न कारयेत् ।
पिंडमेकं प्रदायाऽथ द्वादश्यां श्राद्धमाचरेत् । ॥ इति

अंगिराः — 'एकादशाहे यदि शुक्रवारो रोहिण्यथाप्युत्तरफल्गुनी वा ।
प्रेताय दद्यादथ पिंडमेकं श्राद्धं तु दद्यादपरेद्युरेव' ॥ इति

उशनाः — 'नित्यश्राद्धं न कुर्वीत संप्राप्ते हरिवासरे ।
अपरेऽहनि तन्त्रेण श्राद्धद्वितयमाचरेत् ॥

आद्यश्राद्धं विष्णुदिने यदि कुर्याद्विमोहितः ।
कर्ता प्रतिगृहीता च उभौ नरकगामिनौ' ॥

इत्यादिस्मृतिभ्यः हरिदिने प्राप्तमाब्दिकमपि द्वादश्यामेव कर्तव्यमिति चेत् — सत्यम् ।

**देवलः** — 'आब्दिके समनुप्राप्ते एकादश्यां द्विजोत्तमः ।
भुञ्जीयादभुक्तशेषान्नं नारकी स्यादुपोषणे' ॥ इति

कात्यायनः — 'मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।
अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पितृसेवितम् ।
पितरस्तस्य तृप्यन्ति कामितञ्च प्रसिद्ध्यति' ॥ इति

बृहस्पतिः — 'आब्दिकाहे तु भुञ्जीयादुपवासदिनं प्रति ।
अन्यत्रोपोषणं कुर्यादाघ्राय पितृसेवितम् ॥
उपवासो यथा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्' ॥ इति

ब्रह्माण्डे 'उपवासदिनं प्राप्य यदा भवति नारद ।
पितृश्राद्धमथान्यच्च यथा कार्यन्तु तच्छृणु ॥
व्रतभंगे महत्पापं भुक्तशेषन्तु भोजयेत् ।
शेषमन्नं कुलेष्टेभ्यो भोक्तव्यञ्च तथैव तत ॥
तत्रैवमेतत्कर्तव्यं तच्छृणुष्व मयोदितम् ।
सर्वमन्नं समुद्धृत्य दक्षिणेन करेण च ॥
घ्राणाघ्रणं प्रकुर्वीत व्रतभंगोऽन्यथा भवेत् ।
अकृतेन मुनिश्रेष्ठ घ्राणघ्राणेन यो नरः ॥
श्राद्धलोपः कृतस्तेन मातृहा पितृहा भवेत् ।
एवं ज्ञात्वा च विद्वद्भिः श्राद्धं कस्मान्न कारयेत्' ॥ इति

किञ्च-गौतमः – 'आदित्येऽहनि संक्रान्तावसितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही ॥' इति

वृद्धवसिष्ठः 'आदित्यवारे संक्रान्तावसितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही' ॥ इति

'द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।
तस्मिन् स्नानं जपो होमो नोपवासो गृहाश्रये ।
आघ्रेयमेव तन्नैव प्राशितं नैवाप्राशितम् ॥' इति

बृहस्पतिः — 'न ज्ञायेत मृताहश्चेत् प्रमीते प्रोषिते सति ।
मासश्च प्रतिविज्ञातं तद्दर्शं स्यान्मृताहनि ॥

यदा मासो न विज्ञातो विज्ञातं दिनमेव हि ।
तदा मार्गशिरोमासि माघे वा तद्दिनं भवेत् ॥

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा' ॥ इति

मरीचिः — 'श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कर्तव्यं कृष्णपक्षे विशेषतः' ॥ इति

संग्रहे — 'मासाज्ञाने दिनाज्ञाने कुर्यादाषाढमाघयोः ।
मृताहे तद्दिनाज्ञाने मासाज्ञाने च तत्कुहूः' ॥

कृष्णा चैकादशी ग्राह्या त्वज्ञाने तूभयोरपि ।
प्रवासमासदिवसौ ग्राह्यावेकैकशस्तयोः ॥

अज्ञानानन्तरो न्याय्यः सर्वाज्ञानं यदा भवेत् ।
श्रवणाहे तथा कुर्यात् तन्मासेन्दुक्षयेऽपि च' ॥ इति

पराशरः — 'देशान्तरगते प्रेते प्रमादात्कालचोदिते ।
देहनाशमनुमासे या तिथिर्नैव विद्यते ॥

कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या ।
उदकं पिंडदानञ्च नवश्राद्धञ्च कारयेत्' ॥ इति

मरीचिः — 'श्राद्धविघ्ने समुत्पन्ने चाविज्ञाते मृतेऽहनि ।
कुर्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥

आपद्यपि च नामेन (?) तन्मासे हरिवासरे ।
कृष्णे त्विन्दुक्षये वाथ अष्टम्यां वापि कारयेत् ॥

ज्ञानिनोऽज्ञानिनो वापि मूर्खः पंडित एव वा ।
मृताहं समतिक्रम्य चंडालः कोटिजन्मसु' ॥ इति

स्मृतिसारसमुच्चये-'ग्रहणे तु द्वितीयेऽह्नि ऋतुदोषे तु पंचमे ।
मृतके तु त्रयोदश्यां (?) जात एकादशेऽहनि' ॥

'उपवासे परदिने आर्तवे पञ्चमेऽहनि ।
सूतके (मृतके?) तु त्रयोदश्यां (?) वृद्धावेकादशेऽहनि ।
ग्रहास्तमित आदित्ये यथा श्राद्धं परेऽहनि' ॥ इति

गोभिलः — 'दर्शे प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके ।
सूतकानन्तरे कुर्यात्तन्मासीन्दुक्षयेऽपि वा ॥

पितॄणां तत्र पूर्वेषां पितुश्च वमनं यदि ।
तद्दिने चोपवासश्च पितुः श्राद्धं परेऽहनि' ॥ इति

व्यासः — 'नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहणे चैव नाश्नीयात् स्नात्वाऽश्नीयाच्च मुक्तयोः ॥

अमुक्तयोरस्तगयोः अद्याद्दृष्ट्वा परेऽहनि ।
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा' ॥ इति

वसिष्ठः — 'ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।
सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना' ॥ इति

व्यासः — 'अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।
भुञ्जीत संगवे चेत्स्यात् न पूर्वं भुक्तिमाचरेत्' ॥ इति

गोभिलः — 'देशेन (?) विग्रहे पित्रोः प्रत्याब्दिक उपस्थिते ।
अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः' ॥ इति

गौतमः 'अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेद्या तु तत्कुर्यात्पञ्चमेऽहनि ॥

शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ॥

श्राद्धार्येऽहनि संप्राप्ते यस्य भार्या रजस्वला ।
पञ्चमेऽहनि तत्कुर्यान्न कुर्यात्तन्मृतेऽहनि ' ॥ इति

उशनाः — 'अनग्निकः प्रवासी च यस्य भार्या रजस्वला ।
सिद्धान्नेन न कुर्वीत आममस्य विधीयते ' ॥ इति

जमदग्निः 'न भवेत्तस्य सावित्री दारावग्रह एव वा ।
आमश्राद्धं प्रकुर्वीत वृद्धो बालश्च यो भवेत् ॥
श्राद्धज्ञः श्रद्धया श्राद्धं श्राद्धकाले यथाविधि ।
श्रुतेन वाऽश्रुतेनापि नोनं कुर्यात्पितुः सुतः ' ॥ इति

कात्यायनः — 'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे ' ॥ इति

उशनाः — 'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं द्विजो दद्यात् शूद्रो दद्यात्सदैव हि ' ॥ इति

व्याघ्रपादः 'आर्तवे देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजः कुर्यात् शूद्रः कुर्यात्सदैव हि ' ॥ इति

अखण्डादश — 'अनग्निकः प्रवासी च यस्य भार्या रजस्वला ।
आमश्राद्धं द्विजः कुर्यात् शूद्रः कुर्यात्सदैव हि ' ॥ इति

प्रचेताः — 'स्त्री शूद्रः पतितश्चैव जातकर्मणि वाप्यथ ।
आमश्राद्धं तथा कुर्याद्विधिना पार्वणेन तु ' ॥ इति

शातातपः — 'मध्याह्नात्परतो यस्तु कुतपस्समुदाहृतः ।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् ' ॥ इति

मरीचिः - 'आवाहने स्वधाकारे मन्त्रा ऊह्याः विसर्जने ।
अन्यकर्मण्यनूह्यास्स्युः आमश्राद्धविधिस्स्मृतः ' ॥ इति

यथा — आवाहने पितॄन् हविषे अत्तवे ' इत्यत्र आमे इत्यूहः (?) स्वधाकारे .... इत्यत्र आमद्रव्यायेत्यूहः । विसर्जने तृप्ताःस्थ ' इत्यत्र तर्पयन्तु इत्यूहः (?) अन्यत्र(त्यूहः) नोहः (?)

व्यासः — 'आमाददन्नु कौन्तेय दद्यादन्नं चतुर्गुणम् ।
शुद्धान्ने तु विधिर्यस्स्यात् आमश्राद्धेप्यसौ विधिः ॥

आवाहनादि सर्वं स्यात्पिंडदानञ्च भारत ।
दद्याच्च द्विजातिभ्यः श्रृतं वा यदि वाऽश्रृतम् ।
तेनाग्नौ करणं कुर्यात् पिंडांस्तेनैव निर्वपेत्' ॥ इति

षट्त्रिंशन्मते — आमश्राद्धं यदा कुर्यात् पिंडदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा' ॥ इति

मार्कण्डेयः — 'सर्वं श्राद्धं तथा कुर्यात् शूद्रेणाप्येवमेव तु ।
मन्त्रवर्जन्तु शूद्रस्य सर्वकामो विधीयते' ॥ इति

वायुपुराणे — 'न पक्वं भोजयेद्विप्रान् सच्छूद्रोऽपि कदाचन ।
भोजने त्वश्नतां पापं तस्यापि प्रभवेत्सताम्' ॥ इति

व्याघ्रः — 'संस्कृतायान्तु शूद्रायां ब्रह्मवीर्यसमुद्भवः ।
स्वकर्मनिरतश्चैव सच्छूद्रः परिकीर्तितः' ॥ इति

स्मृत्यन्तरे — 'नैकः श्राद्धद्वयं कुर्यादेकास्मिन्नेव वासरे ।
नैमित्तिकन्त्वनेकेषां निमित्तानाञ्च संक्रमे ॥

नैमित्तिकानि तुल्यत्वात् दैवतैरपि सर्वशः ।
नित्यमासिकयोश्चोदकुंभमासिकयोरपि ॥

दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ।
दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणि ॥

प्रसंगादितरस्यापि सिंधोरुत्तरमाचरेत् ।
नित्यस्य चोदकुंभस्य नित्यमासिकयोरपि ॥

नित्यस्य चाब्दिकस्यापि दर्शमासिकयोरपि ।
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ॥

प्रत्याब्दिकस्य चालभ्ययोगेऽपि विहितस्य च ।
संपाते देवताभेदात् श्राद्धयुग्मं समाचरेत् ॥

देशे शुचौ —

मनुः — 'शुचिदेशं हविक्तश्च गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणश्चैव प्रयत्नेनोपपादयेत् ॥

अवकाशेषु वासेषु जलस्थानेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरस्तथा' ॥ इति

'शुचिमध्वरं देवा जुषन्ते' 'शुचीवो हव्या मरुतश्शुचीना' मित्यादि-श्रुतयः' ।

'तिलानवकिरेत्तत्र नानावर्णान् समन्ततः ।
अशुद्धं पितृयज्ञेषु तिलैः शुद्ध्यति शोभनैः' ॥ इति

आधायौपासनाग्निं

गर्ग्यः — 'साग्निरौपासनेऽनग्निः सर्वाधानी च लौकिके' । इति

स्मृत्यन्तरे — 'सीमन्तोन्नयनं पिंडं सवनं पार्वणं तथा ।
औपासनाग्नावेतानि न कुर्याल्लौकिकानले ॥

यदि कुर्याल्लौकिकाग्नौ पुनः कर्म समाचरेत् ।
मातापित्रोर्मृताहस्तु कार्यमौपासनाग्निना ॥

मातामहीनामप्येवमन्येषां लौकिकाग्निना ।
अपुत्रस्य पितृव्यस्य भ्रातॄणामग्रजन्मनाम् ॥

मातामहस्य भार्यायाः श्राद्धं पितृवदाचरेत् ।
अमायान्तु क्षयो यस्य प्रेतपक्षेऽथवा पुनः ॥

पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन ।
पुत्रः पौत्रः प्रपौत्रश्च दौहित्रो दुहिता स्नुषा ॥

दंपती च क्रमादेते श्राद्धं कुर्युस्त्रिपूरुषम् ।
साग्निका बहवः पुत्रा यदि ज्येष्ठस्त्वनग्निकः ॥
ज्येष्ठेनैव तु कर्तव्यं कनिष्ठोऽग्नौ जुहोत्यथ ' ॥ इति

विज्ञानेश्वरः — 'आपाद्य सहपिंडत्वमौरसो विधिवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेऽहनि ' ॥ इति

हारीतः — 'जीवत्पिता तु कुर्वीत मातुः श्राद्धं मृतेऽहनि ।
पितामह्यादिभिस्सार्धं कुर्यात्पार्वणमार्गतः ' ॥ इति

शातातपः — 'नान्दीमुखेऽष्टकाश्राद्धे गयायाञ्च मृतेऽहनि ।
पितामह्यादिभिस्सर्धमामश्राद्धं समाचरेत् ॥

पितुरेव पितुः कुर्यान्मातुरेव मृतेऽहनि ।
यदि कुर्यात्सपत्नीकं तच्छ्राद्धमसुरालयम् ॥

मातुर्मृताहे पित्रादीन् भोजयेद्यदि नाशयेत् ।
तथैव तन्मृताहे तु न पूज्या मातरः स्मृताः ॥

मातुः क्षयदिने प्राप्ते पितरं तत्र पूजयेत् ।
अपूजिते तु पितरि मात्रा पुण्यं न गृह्यते ' ॥

तात्पर्यदर्शने — 'अष्टकासु च वृद्धौ च गयायाञ्च मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ' ॥ इति

होमभोजनपिंडदानानां प्राधान्यं एवमुक्तम् —

संग्रहे — 'पिंडहोमौ परित्यज्य संकल्पं कुरुते यदि ।
सन्ततेश्च विनाशाय संपदो हरणाय च ' ॥ इति

ग्रन्थान्तरे — 'होमश्च पिंडदानश्च तथा ब्राह्मणतर्पणम् ।
श्राद्धशब्दाभिधेयं स्यादन्यत्र ह्यौपचारिकम् ' ॥ इति

ब्राह्मणभोजनं प्रधानं पिंडहोमावंगौ —

'अंगानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
संकल्पश्राद्धमेवासौ कुर्यादर्घ्यादिवर्जितम् ॥

आवाहनाग्नौकरणे स्वधानिनयनं तथा ।
विकिरं पिंडदानञ्च संकल्पे पञ्च वर्जयेत्' ॥ इति

चंद्रिकायाम् — 'अंगानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
स तदा याचयेद्विप्रान् सकला सिद्धिरस्त्विति ॥

संकल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
आवाहनाग्नौकरणे पिंडांश्चापि न वापयेत्' ॥ इति

स्मृत्यन्तरे — 'श्राद्धानुकल्पं यः कुर्यात् जात्यवस्थाद्यपेक्षया ।
श्राद्धांशं सर्वमाप्नोति पितृयज्ञफलं नरः' ॥ इति

यद्वा मूलफलैः श्राद्धं विदधीत प्रयत्नतः ।
सर्वकर्मविहीनं वा हो(हे)मश्राद्धं प्रकल्पयेत् ॥
कस्याञ्चिदप्यवस्थायां श्राद्धकर्म न लुप्यते ॥

पित्रोर्मृताहे संकल्पश्राद्धं कुर्याद्यदि द्विजः ।
संततेस्तु विनाशाय संपदो हरणाय च' ॥ इति

पुराणे — 'या तु पिंडक्रिया तत्र ब्राह्मणानान्तु भोजनम् ।
यजमानस्य पूर्वेषां तन्तुर्गच्छति नान्यथा' ॥ इति

गोभिलः — 'दर्शे रविग्रहे पित्रोः प्रत्याब्दिक उपस्थिते ।
अन्ने त्वसंभवे हेम्ना कुर्यादामेन वा सुतः ॥

संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं संग्रहे च द्विजश्श्राद्धं समाचरेत् ॥

आमश्राद्धं यदा दद्यात् पिंडनिर्वापणं कथम् ।
गृहादाहृत्य पक्वान्नं पिंडांस्तेनैव कारयेत् ॥

यदा दद्यात्तु विप्रेभ्यः शृतं वा यदि वा शृतम् ।
तेनाग्नौकरणं कुर्यात् पिंडांस्तेनैव निर्वपेत् ॥

अश्रद्धयालयो यो मामापदि ब्रह्मराट् चयः ? ।
संकल्पयेत्तु यच्छ्राद्धं तच्छ्राद्धं नैव पार्वणम् ॥

औपासनाग्नौ कर्तव्यं यदग्नौ लौकिके कृतम् ।
तत्कर्म विधिवद्भूयः कुर्यादिति बृहस्पतिः ॥

भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्' ॥ इति

प्रचेताः — 'एकोद्दिष्टं यतेर्नास्ति त्रिदंडग्रहणादिह ।
सपिंडीकरणस्थाने पार्वणन्तु विधीयते ॥

दर्शे क्षयाह आपन्ने श्राद्धकर्म कथं भवेत् ।
क्षयादिकं तथा कुर्यात् दार्शिकं तदनन्तरम्' ॥ इति

श्राद्धार्हानर्हद्रव्याणि —

उशनाः — 'नीवारमाषमुद्गाश्च गोधूमाः शाल्यस्तथा ।
यवाश्च सर्षपाश्चैव सर्वशूकं प्रशस्यते ॥

पायसं पल्लश्चैव क्षौद्रमिक्षुरसं शुभम् ।
उर्वारुकोरवल्ली च पटोली कारपत्रिका ॥

कदली कंटकी पन्थाः त्रिचिञ्चा पिचुपिल्लका ।
कारुकी द्रोणपुष्पी च तंडुली चक्रवर्तिका ॥
श्राद्धे ह्येतानि मुख्यानि तथा प्ररुचिराणि च' ॥

अन्यत्र · 'कूश्माण्डं महिषीक्षीरं माण्डक्यो राजसर्षपाः ।
चणका राजमाषाश्च न ग्राह्याः श्राद्धकर्मणि' ॥

स्मृत्यन्तरे · 'करञ्जं श्वेतवृन्ताकं कूश्माण्डं रक्तनालकम् ।
तुंडफलश्चैव अलाबुश्च चषाफलम् ॥
घृतं तैलमसुरं राजमाषकम् ॥

कोद्रवोद्दालकाश्चैव कुलुत्थाश्च तथैव च ।
कोद्रवाश्च विशेषेण वर्ज्यास्स्युः श्राद्धकर्मणि ' ॥ इति

**ब्रह्मवैवर्ते** — 'कोशातकीञ्च कूश्मांडं कारवल्लीं सपीतकम् ।
उर्वारुकं मसीरञ्च श्राद्धे दत्ते क्षयं भवेत् ' ॥ इति

**मनुः** — 'यत्किञ्चिन्मधुसर्पिभ्यां प्रदद्यात् श्राद्धभोजने ।
अक्षय्यममृतञ्चैव गयाश्राद्धसमं स्मृतम् ' ॥ इति

**गोभिलः** — 'परकीयप्रदेशेषु श्राद्धं कुर्यात्तु मूढधीः ।
तद्गृहस्वामिपितृभिः हन्यते श्राद्धकर्म तत् ' ॥ इति

**मार्कंडेयः** — 'गृहाग्निधिषु (?) देवानां यतीनां ब्रह्मचारिणाम् ।
पितृपाको न कर्तव्यः पृथक्पिंडान् न निर्वपेत् ॥

विष्णवे कल्पितञ्चान्नं दद्याद्भक्तेभ्य एव च ।
वैश्वदेवं ततः कुर्यात् श्राद्धकर्मणि .... .... ' ॥

**वायव्ये** — 'चान्द्रायणसहस्रन्तु यः चरेत्कायशोधनम् ।
विष्णोर्निवेद्यं यो भुङ्क्ते तुल्यं तदुभयोः फलम् ॥

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
तत्फलं समवाप्नोति स विष्णोः पदमाप्नुयात् ' ॥ इति

श्रुतिरपि — 'विष्णुनात्तमश्नन्ति विष्णुना पीतं पिबन्ति विष्णुना घ्रातं जिघ्रन्ति विष्णुना रसितं रसयन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुः ' ॥ इति

अथ प्रयोगक्रमः । एवंगुणविशेषणविशिष्टायां पुण्यतिथौ पितृपितामहप्रपितामहज्ञातिवर्गाणां मातृपितामहीप्रपितामहीज्ञातिवर्गपत्नीनां मातामहमातुःपितामहमातुःप्रपितामहानां मातामहीमातुःपितामहीमातुःप्रपितामहीनां कारुण्यानां गोत्राणां शर्मणां वसुरुद्रादित्यस्वरूपाणां अष्टकाश्राद्धं विश्वदेवपूर्वं विष्ण्वन्तमन्नेन हविषा पार्वणविधानेन अद्य करिष्ये इति संकल्प्य विश्वेदेवौ द्वौ त्रीन् पितॄन् विष्णुञ्च वृत्वा पादप्रक्षालनादि कुर्यात् ।

'वितस्तिमात्रं देवानामुत्तरे चतुरश्रकम् ।
प्रादेशमण्डलं पित्र्ये तयोर्मध्ये षडंगुलम्' ॥ इति

विश्वेषां देवानां पाद्यस्थाने इदमासनमिदमर्चनमित्यादि । एवं पितॄणाम् । विश्वेदेवाः स्वागतमिदं वः पाद्यम् । एवं पितॄणाम् । विष्णोश्च । आदित्यादिमुखः पादौ प्रक्षाल्य —

'पादाग्रे पितरं विद्यात् पादमध्ये पितामहम् ।
प्रपितामहं पादमूले पादौ प्रक्षालयेत्क्रमात्' ॥

पादप्रक्षालनानन्तरं गुल्फद्वयोरपि ।

'पितॄणां नरकं घोरं रोमसंसक्तवारिणा ।
आज्यं गोमयसंयुक्तं पादयोर्लेपयेद्विजः ॥

आपस्तंबेन कर्तव्यं, वर्जयेदाश्वलायनः ।
गोशकृत्सर्पिषा युक्तं पादयोर्लेपयेद्विजः ॥
पितरस्तस्य कल्पान्तं अमृतेनाभिषेचिताः' ॥ इति

अन्यत्र — 'गोशकृद्दीयते सर्पिर्लेपयित्वा द्विजाधमः ।
पितरस्तस्य कल्पान्तं कालसूत्रे पतन्ति च' ॥ इति

अतः — गोमयादिलेपनमापस्तम्बादिविषयम् ।

'सपवित्रेण हस्तेन विप्रपादाभिषेचनम् ।
यथा शस्त्रहतो वृत्रः तथैव पितृदेवताः' (?) ॥

अत्र शुद्धाचमनम् ।

'कर्तुराचमनात्पूर्वं भोक्तुराचमनं यदि ।
श्वानमूत्रसमं तोयमित्येवं मनुरब्रवीत् ॥

देवकार्ये तु संप्राप्ते मंडले पश्चिमात्ततः ।
आचामेदुत्तरे विप्रः पैतृके विधिचोदिते ॥

पादप्रक्षालनस्थानादाचामेद्यम....दिशि ।
.... .... .... .... वेदित्यब्रवीदृषिः ॥

तस्मादुत्तरतो विद्वान् आचामेद्विजसत्तमः ।
अमृतेन कृतं तेन संपूतश्च भविष्यति ॥

मंडलात्पुरतोदेवाः पितरस्तु तथोत्तरे ।
कर्ता कुर्वीत चैशान्ये श्राद्धेष्वाचमनक्रियाम् ॥

पृथिव्यां यानि तीर्थानि तानि तिष्ठन्ति सागरे ।
सागराणि च तीर्थानि पादे विप्रस्य दक्षिणे ॥

विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ॥

पादशौचमनभ्यंगं तिलहीनन्तु तर्पणम् ।
पुनः कीर्तनसंयुक्तं तत्त्रयं निष्फलं भवेत् ' ॥ इति

स्मृतौ — 'वर्जयेत्तिलकं फाले श्राद्धकाले विशेषतः ।
तिर्यग्वाप्यूर्ध्वपुंड्रं वा धारयेत्तु प्रयत्नतः ' ॥ इति

'अपेतवीते' त्यौदुंबरशाखया भोजनस्थानानि संमार्ज्योल्लिख्य 'अपहता असुरा रक्षांसी' ति प्रोक्ष्य —

**अग्नेर्दक्षिणस्यां नांदीमुखवत् मंडलान्युपलिप्य ('अस्त्वासन' मित्यासनानि) सदर्भतिलेष्वासनेष्वासयित्वा ॥ ६ ॥**

याज्ञवल्क्यः — 'पादप्रक्षालनं दत्वा विष्टरार्थं कुशानपि ।
आवाहयेदनुज्ञातो विश्वेदेवास ' इत्यृचा ॥

**वस्त्राद्यैरलंकृत्य ब्राह्मणान्, प्रत्यङ्मुखान् विश्वेदेवान् उदगन्तं पुष्पाद्यैः, पितॄनुदङ्मुखान् प्रागन्तं गन्धाद्यैः पूजयति ॥ ७ ॥**

वस्त्राद्यैरित्यादि ।

स्मृतिः — 'वस्त्राभावे प्रिया न स्युः दानयज्ञादिकाः क्रियाः ।
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः' ॥ इति

वस्त्रलक्षणञ्चोक्तम् ।

'अहतं सदशं शुक्लं वासो दद्यान्मनोहरम् ।
तन्मूल्यं वोपवीतं वा तन्मूल्यं वा स्वशक्तितः' ॥ इति

सौवर्णराजतांभोजमणिपात्राण्यथापि वा ।
अर्घ्यार्थं संस्कारोत्येव शुचिपत्रपुटादि वा ॥
यवैरन्ववकीर्याथ भोजने सपवित्रकम् ॥
'शन्नो देव्या' पयः क्षिप्त्वा 'यवोऽसी' ति यवांस्तथा ।
'या दिव्या' इति मन्त्रेण हस्तेष्वर्घ्यं निवेदयेत्' ॥ इति

आवाहनानन्तरमासनं 'अस्त्वासन' मिति । आसनानन्तरमर्घ्यदानम् ।

दत्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ।
अपवित्रकरो गन्धैः गन्धद्वारेति पूजयेत् ॥
पवित्रैः ग्रन्थिसंयुक्तैः अर्घ्यं यस्तु प्रदापयेत् ।
आसुरं भवति श्राद्धं पितॄणां नोपतिष्ठति ॥

अत्र क्रमः — अर्घ्यसाधनानन्तरमावाहनमासनमर्घ्यं 'युवा सुवासा' इति वस्त्रं 'अर्चत प्रार्चतेत्य'र्चनं 'आयनेत' इति पुष्पं 'गन्धाद्वारा' मिति गन्धं 'धूरसी' ति धूपं 'उद्दीप्यस्वे' ति दीपञ्च दद्यात् ।

**'स्वधा नम' इत्युक्त्वा तेषां करे तिलोदकं दत्वा 'प्राप्नोतु भवान्' इति ब्रूयात् ॥ ८ ॥**

**स्वधा नम इत्यादि** । 'स्वधा नम' इति पितॄणां 'स्वाहा नम' इति विश्वेषां देवानामिति विवेकः ।

**ओं तथा प्राप्नवानि' इति प्रतिब्रूयुः ॥ ९ ॥**

**ओमित्यादि** । 'सकलाराधनैः स्वर्चितमस्त्विति' वदेत् ।

शातातपः — 'सोपवीतं करे कृत्वा यदि वा अनुलेपनम् ।
अथो विष्वगया तु (?) प्रेतश्राद्धानुलेपनम् ॥
पितृभ्यः स्थानमसीति न्युब्ज्य पात्रं ततोऽन्ततः ।
गन्धैश्च पत्रपुष्पैश्च धूपदीपैश्च सत्तमाः ॥
वासोभिर्भूषणैश्चैव यथाशक्ति प्रदापयेत्' ॥

'उशन्तस्त्वा' इति पितॄणामावाहनम् । गन्धानन्तरं पुष्पम् । विष्णोरप्यावाहनम् ।

'देवदेव जगन्नाथ शंखचक्रगदाधर ।
अत्रागच्छ विभो विष्णो श्राद्धरक्षणहेतवे' ॥ इति

श्राद्धसंरक्षकश्रीमहाविष्णुमावाहयामीति । अन्यत्सर्वं विश्वेदेववत् ।

स्मृत्यन्तरे — 'कदलीमधुकञ्चैव पलाशं पारिभद्रकम् ।
कुटजं ब्रह्मपत्रञ्च पितॄणां दत्तमक्षयम् ॥
पनसाम्रे नारिकेलं कदलीपूगमेव च ।
उखिना कांचिपत्रेण भुक्त्वा चान्द्रायणं लभेत् ॥
करकर्पटके चैव आयसे ताम्रभाजने ।
हिरण्यमलंपत्रे च भुक्त्वा चान्द्रायणं चरेत्' ॥ इति

**'अग्नौ होमं करिष्यामी' त्युक्ते 'कुरुष्व' इति तैरनुज्ञातः अग्निं परिषिच्य 'विश्वे देवस्य — विश्वे अद्य — प्रजापते न त्वत् — सुभूस्स्वयं भूः — सन्ते पयांसि — सोम यास्ते' इति रौद्रं ब्राह्मं वैष्णवं व्याहृत्यन्तं देवानां सपिंडीकरणवत पितृणामप्याज्येन हुत्वा 'हव्यं कव्य' मित्याभिघार्य पक्वेन अपूपमि[illegible]ण जुहोति ॥ १० ॥**

अग्नावित्यादि ॥

यमः — 'अपसव्ये त्वनुज्ञातः सव्येनैव तु होमयेत् ।
अपसव्यं पुनश्चैव पितृपात्रेषु निक्षिपेत्' ॥

गृह्य: — 'अशक्तौ परिषिच्यैव वैश्वदेवं सपैतृकम् ।
पूर्ववद्वा पितॄणाञ्च अग्नयेत्यादिभिस्त्रिभिः' ॥ इति

सपिंडीकरणवत् पितॄणामघ्याज्येन हुत्वा । अत्रायं क्रमः । वैश्वदेव-होमानन्तरं प्राचीनावीती 'वीतिहोत्र' मिति समिधमौदुंबरीं कव्यमाविद्धय दग्ध्वा 'देवस्य त्वा सवितुः' इति दर्वीमादाय प्रक्षाल्य दक्षिणाग्रं निधाय 'घृतं विहरामि' इत्यादि । पृथिवीगतान् पितॄनित्यादिना आवहनजुष्टाकारौ समिदुल्केन द्विधा दहनं 'चित्पतिस्त्वा' इति संपातान्तं कृत्वा तिस्रस्समिध आधाय 'इमा मे अग्न' इति तिलादिभिरभ्यर्च्य 'अग्नये कव्यवाहनाय – सोमाय पितृमते – यमाय चाङ्गिरस्पतये स्वधा नमः' इत्युत्तरदक्षिणयोः मध्ये च हुत्वा 'एते य इह पितरः – उशन्तस्त्वा – सा नो ददातु' इत्यृचः पितृदेवत्याः हुत्वा 'पृथिवीगतेभ्यः पितृभ्यः – अन्तरिक्षगतेभ्यः पितामहेभ्यः – दिविगतेभ्यः प्रपितामहेभ्यः स्वधा नमः स्वाहा' इति हुत्वा हव्यं – कव्यमित्यभिघार्य 'विश्वेभ्यो देवेभ्यो हव्यं – पितृभ्यः कव्य' मभिघारयामीत्यभिघार्य हव्येन विश्वेदेवस्येत्यादि हुत्वा, कव्येन 'एते य इह पितरः' इत्यादिहोमं कुर्यात् । आज्यचरुभ्यां पूर्वं हुत्वा सौकर्यार्थं पश्चात् पितृभ्यो यजेदिति केचित् ।

मनुः — 'अग्नेः सोमयमाभ्याञ्च कृत्वा पायसमादितः ।
हविर्धानेन विधिवत् पश्चात् सन्तर्पयेत्पितॄन् ॥

एकेषां न यमायेति याजुषाणां त्रयं स्मृतम्
एक इत्यन्यदृष्टत्वान्न द्वयं सूत्रकूजितम्' ॥ इति

आनुशासनिके पितरः 'निवापनेन भगवन् भृशं खिद्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नस्संविधीयताम् ॥

इति तेषां वचः श्रुत्वा स्वयंभूरिदमब्रवीत् ।
विषये पार्श्वतो वह्निः युष्मच्छ्रेयो विधास्यति ॥

अग्निदग्धाहितान्नस्य भोक्ष्यामस्समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्द्धं न संशयः ॥

एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वरा भवन् ।
तत्तस्मात्कारणादग्नेः प्राग्भागो दीयते नृप ॥

निवापी चाग्निपूर्वे वै निवृत्ते भरतर्षभ ।
न ब्रह्मराक्षसास्ते वै निवापं धर्षयन्त्युत ॥

रक्षांसि नाभिवर्तन्ते स्थिते देवि विभावसौ ।
सोमायापि च कर्तव्यं तथा पितृमतेति च' ॥ इति

**गामुपाकृत्य पशुबन्धवत् संज्ञप्य उत्खिद्य वपामुद्धृत्य पक्त्वा तया 'वह वपा' मिति होमञ्चामनन्ति ॥ ११ ॥**

**गामुपाकृत्येत्यादि** । 'इषे त्वे' ति बर्हिषी आदायेत्युपक्रम्य 'इन्द्राग्निभ्यां त्वा जुष्ट' मित्यत्र 'पितृभ्यो जुष्टमुपाकरो' मीत्यूहः । **पशुबन्धवत्** इत्युक्तत्वात् उपाकरणादि वपाहोमान्तं पशुबन्धोक्तवत् कर्तव्यम् । तत्र 'जातवेदो वपया गच्छ देवानि' त्यत्र 'वह वपा' मिति मन्त्रेण होमः ।

आदित्यः— 'दीर्घकालं ब्रह्मचर्यं धारणञ्च कमण्डलोः ।
गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यञ्च कलौ वर्ज्या द्विजातिभिः' ॥

इति वचनात् अपूपमेव तत्स्थाने जुहुयात् । 'मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी स्याता' मिति पूर्वमेवोक्तत्वाच्च ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

—*०*—

**दक्षिणपश्चिमेऽग्नेः एकोद्दिष्टवन्निर्वापस्थानम् ॥ १ ॥**

**दक्षिणपश्चिमेति ।** नैर्ऋत्यां यजमानस्य दक्षिणतः सिकताभिरुदक् प्रागपरमरत्निमात्रं वितस्त्या दक्षिणभागोन्नतं स्थानं कल्पयेत् । **बोधायनः ।** दक्षिणाग्रान् दर्भान् संस्तीर्य तेष्वन्नशेषैः पिण्डान् ददातीति ।

**स्मृत्यन्तरे —** 'केशभस्मतुषांगारकीटकास्थिसमाकुलम् ।
भवेन्महीतलं यस्मात् बर्हिषस्तरणं ततः' ॥ इति

**तथा —** 'महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सुतः' ॥ इति

सुवासिनीमृताहे तु ब्राह्मणैस्सह भोजयेत् ।
सुवासिन्याः प्रदातव्यमर्चनञ्चाप्यमन्त्रकम्' ॥ इति

**तद्दक्षिणास्यामवटञ्चोपकल्प्य 'उद्धन्यमान' मिति दर्भैस्त्रिभिः दक्षिणान्तं सकृदुल्लिखेत् ॥ २ ॥**

**गायत्र्या प्रोक्ष्य स्थाने 'निहन्मि सर्वं' मिति दक्षिणाग्रान्-युग्मानुदुंबरपत्रदर्भान् तिलैरास्तृणाति ॥ ३ ॥**

**स्थाने** पिंडनिर्वापस्थाने ।

**'पोषाय त्वा' इति सक्तूचाक्षतं पात्रमुदकेनापूर्य 'पितरो मे प्रसीदन्तु' इति प्रणम्य 'आम आगच्छन्तु' इति पितॄनावाह्य दक्षिणा-भिमुखोऽभ्यर्चयति ॥ ४ ॥**

**पितॄन्** इति । ज्ञातिवर्गपत्नीपर्यन्तान् ।

**'आमावाजस्य' इति पात्रं प्रमार्ज्य 'अग्निरिन्द्रा' इति चरुं निर्वपति ॥ ५ ॥**

**चरुम्** । अन्नम् ।

दर्भेण तमष्टधा विभज्य साज्यं(ज्य) पिण्डान् कृत्वा सव्योत्तरपाणिभ्यां 'अयमोदन' इति 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः ज्ञातिवर्गेभ्यः पितृपत्नीभ्यः पितामहपत्नीभ्यः प्रपितामहपत्नीभ्यो ज्ञातिवर्गपत्नीभ्यः पिण्डं निर्वपामी' ति निर्वपति ॥ ६ ॥

दर्भेणेत्यादि । अयमोदन इत्यारभ्य पितृभ्यो गोत्रेभ्यः शर्मभ्यो वसुरूपेभ्यः पिंडं निर्वपामीत्यादि । एवं पितामहादिभ्यो दद्यात् ॥

एवं मातुःपित्रादिभ्यः पिडदानं केचिद्वदन्ति ॥ ७ ॥

मातुःपित्रादिभ्यः — मातामहादिभ्यः ।

अञ्जन दन्तधावन दधिसक्तुमधुव्यञ्जनेक्षुबदरीफलान्यर्पयेत् ॥

शूर्पेणाच्छद्योपरि पुष्पतिलाक्षतदर्भान् न्यसेत् ॥ ९ ॥

'ऊर्जं वहन्ती' रिति पिंड परितः स्राव्योदकं दत्वा 'अमूर्तानां' इति तत्पात्रेणावटं पूरयति ॥ १० ॥

ननु — 'संकल्पासनयोः षष्ठी द्वितीयाऽऽवाहने तथा ।
संप्रदाने चतुर्थी स्यात् शेषाः संबुद्धयः स्मृताः' ॥

इत्यनेन पितृभ्य इति चतुर्थ्या पितॄणां भोक्तृत्वमवगम्यते । अमूर्तानां तेषां भोक्तृत्वं अञ्जनदन्तधावनादिकं मन्त्राश्च कथमुपपद्यन्ते इति चेत् — सत्यम् ।

'कार्याश्चोपहुताश्चैव आज्यपाः सैकताः स्मृताः ।
वैराजा बर्हिषश्चैव अग्निष्वात्ता अमूर्तयः' ॥

इति स्मृतेः मूर्तिमन्तः पितृगणाश्चत्वारः अमूर्तिमन्तस्त्रयः इत्यवगम्यते । हरिवंशे, सनत्कुमारः—

'सप्तत यजतां श्रेष्ठ! स्वर्गे पितृगणाः स्मृताः ।
चत्वारो मूर्तिमन्तस्ते त्रय एषाममूर्तयः ॥
तेषां विसर्गं लोकश्च कीर्तयिष्यामि तान् शृणु ।
लोकास्सनातना नाम यत्र तिष्ठन्ति भास्वराः ॥

अमूर्तयः पितृगणाः ते वै पुत्राः प्रजापतेः ।
विराजस्य तु पुत्रास्ते वैराजा इति विश्रुताः ॥

यजन्ति तान् देवगणाः विधिदृष्टेन कर्मणा ।
एतस्मात् पितरस्तात योगिनां योगवर्धनाः ॥

आप्याययन्ति ते पूर्वं सोमं योगबलेन वै ।
त्रय एते मया प्रोक्ताः चतुरोऽन्यान् निबोध मे ॥

तान् वक्ष्यामि द्विजश्रेष्ठ! मूर्तिमन्तो हि ते श्रुताः ।
उत्पन्नाश्च स्वधायां ये कव्यादाश्च कृतेः सुताः ॥

रलका नाम पितरो वसिष्ठस्य प्रजापतेः ।
पितरो देवलोकेषु ज्योतिर्भागेषु भास्कराः ॥

सर्वकामसमृद्धेषु द्विजांस्तान् भावयन्त्युत ।
एतेषां मानसी कन्या गौर्नाम दिवि विश्रुता ॥

दत्ता सनत्कुमारेण शुक्रस्य महिषी प्रिया ।
एकंशृगेति विख्याता भृगूणां कुलवर्धिनी ॥

मरीचिर्भगवान् लोकान् समावृत्य सुसंस्थितः ।
तत्रैतेऽङ्गिरसः पुत्राः श्राद्धैः संवर्धिताः किल ॥

उपहूतास्सुतास्ते वै पितरो भास्वरा दिवि ।
तान् क्षत्रियगणांस्तात भावयन्ति फलार्थिनः ॥

एतेषां मानसी कन्या यशोदा नाम विश्रुता ।
पत्नी सा विश्वमहतः स्नुषा वै वृद्धशर्मणः ॥

राजर्षेर्जननी चैव दिलीपस्य महात्मनः ।
यज्ञयज्ञे पुरा गीता गाथाश्चैव महर्षिभिः ॥

यदा देवयुगे तात! वाजिमेधे महात्मनः ।
अग्नौ जन्म तथा दृष्ट्वा शांडिल्यस्य महात्मनः ॥

राजा वरो दिलीपस्तु तथा दृष्टो महर्षिभिः ।
सत्यवन्तं महात्मानं तेऽपि स्वर्गजितो नराः ॥

ये चाश्वमेधावभृथे सह तेन दिवं गताः ।
सुधन्वा नाम पितरः कर्दमस्य प्रजापतेः ॥

समुत्पन्नस्य पुलहादुत्पन्नाः कर्दमस्य ते ।
ते लोकेषु दिवा यान्ति कामधेनुविहंगमाः ॥

एता अन्ये गणाः श्राद्धे भावयन्ति फलार्थिनम् ।
एतेषां मानसी कन्या विरजा नाम विश्रुता ॥

ययातिजननी साध्वी पत्नी सा नहुषस्य च ।
सकला नाम पितरः कर्दमस्य प्रजापतेः ।
हैरण्यगर्भस्य सुताः शूद्रास्तान् हावयन्त्युत ' ॥ इति

मोक्षधर्मे नारदीये — वैशंपायनः —

'कस्य चित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥

ततस्तद्वचनं (?) प्राह ज्येष्ठो धर्मात्मजः प्रभुः ।
इज्यते च द्विजवर! दैवे पित्र्ये च कल्पिते ॥
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथा तथा ॥

इत्युपक्रम्य —

ततस्तद्भावितो नित्यं यजे वैकुंठमव्ययम् ।
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥

ममैव पितरं प्रीतः परमेष्ठिमजीजनत् ।
अहं संकल्पजः पुत्रः तस्य प्रथमकल्पितः ॥

यजाम्यहं पितॄन् सन्धौ नारायणविधौ कृते ।
एवं स एव भगवान् पिता माता पितामहः ॥

इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ।
श्रुतिश्चाप्यवना ? देवाः पुत्रा हि पितरोऽयजन् ॥

वेदश्रुतिः प्रणष्टा च पुनरध्यापिता सुतैः ।
ततस्ते मन्त्रदाः पुत्राः पितॄणामिति वैदिकम् ॥

नूनं पुरैतद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन्' ॥ इत्युक्तम् ।

'त्रीन् पिंडान् यस्य वै पृथ्व्यां पूर्वं दत्वा कुशानिति ।
कथं नु पिंडसंज्ञान्तु पितरो लेभिरे पुनः' ॥

**नरनारायणौः** — 'इमां तु धरणीं पूर्वं नष्टां सागरमेखलाम् ।
गोविन्द उज्जहाराशु वाराहं रूपमास्थितः ॥

स्थापयित्वा तु धरणीं स्वस्थाने पुरुषोत्तमः ।
जलकर्दमलिप्तांगो लोककार्यार्थमुद्यतः ॥

प्राप्ते चाह्निककालेऽस्मिन् मध्यंदिनगते रवौ ।
दंष्ट्राविलग्नान् मृत्पिंडान् विधूय सहसा प्रभुः ॥

स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि ॥

संकल्पयित्वा मृत्पिंडान् स्वेनैव विधिना प्रभुः ।
आत्मगात्रोष्णसंभूतैः स्नेहगर्भैस्तिलैरपि ॥

प्रोक्ष्यापसव्येनैवेशं (?) प्राङ्मुखः कृतवान् स्वयम् ।
मर्यादास्थापनार्थञ्च ततो वचनमब्रवीत् ।

**वृषाकपिः** अहं हि पितरः सूक्ष्ममुद्यतो लोककृत् स्वयम् ।
तस्य चिन्तयतस्सद्यः पितृकार्यविधिं परम् ॥

दंष्ट्राभ्यां प्रविनिर्याता मृत्पिंडा दक्षिणां दिशम् ।
आश्रिता धरणीं पीड्य तस्मिन् पितर एव ते ॥

त्रयो मूर्तिविहीना वै पिंडा मूर्तिधरास्त्विमे ।
भवन्ति पितरो लोके मया सृष्टास्सनातनाः ॥

पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिंडेषु संस्थितः ॥

नास्ति मन्त्रोपि यः कश्चित् को वाऽभ्यर्च्यो मया भवेत् ।
अहमेव पिता लोके अहमेव पितामहः ॥

पितामहपिता चैव अहमेवात्र कारणम् ।
इत्येवमुक्त्वा वचनं देवदेवो वृषाकपिः ॥

वराहवपुषा विप्र! दत्वा पिंडान् सविस्तरम् ।
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥

एतदर्थं शुभं तेऽपि पितरः पिंडसंज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥

ये यजन्ति पितॄन् भक्त्या गुरुदेवातिथींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पितरं मातरं तथा ॥

कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ।
अन्तर्गतस्स भगवान् सर्वसत्त्वशरीरगः ॥

ईश्वरस्सर्वभूतानामीश्वरः सुखदुःखयोः ।
महान् महात्मा सर्वात्मा नारायण इति श्रुतिः ' ॥ इति

अतः पिंडमूर्तिधराणां पूजार्थं पिंडप्रदानम् । तत्र पित्रादिस्वरूपेण **नारायण** एव ध्येयः । पिंडप्रदानेन पितॄणां तृप्तिर्भवत्येव ।

**चरुशेषेणान्यैश्चान्नाद्यपूपोपदंशैः पूर्ववद्ब्राह्मणान् यथातृप्ति भोजयेत्** ॥ ११ ॥

**तेषु तृप्तेषु पितरस्तृप्ता भवन्ति** ॥ १२ ॥

**चरुशेषेणेत्यादि** । पृथिव्यंशत्वादन्नेनोक्तम् । यद्वा—'अन्नं ब्रह्मेति व्यजानात्' इति श्रुतिः ।

अत्र – भविष्यत्पुराणे —

'अनिरुद्धः स्वयं देवः प्रद्युम्नस्तु पिता स्मृतः ।
संकर्षणस्तज्जनको वासुदेवस्तु तत्पिता' ॥ इति

मनौ — 'वसून् वदन्ति हि पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथाऽऽदित्यान् श्रुतिरेषा सनातनी' ॥

इति च स्मरणात् संकर्षणप्रद्युम्नवासुदेवरूपेण वा वसुरुद्रादित्यरूपेण वा वरणं कर्तव्यमिति सन्देहे — संकर्षणादिरूपेणेति पूर्वः पक्षः । अत्र हेतुः –

'सर्वं तदाराधनमेव मत्वा ध्यायन् हरिं यज्ञपुमांसमीशम् ।
जपंश्च विष्णोर्नुकमित्यथान्ते सर्वेषु यज्ञेष्वपि हन्ति दोषान्' ।

इति वचनेन देवतान्तरराहित्येन कर्तुं युक्तत्वादिति । अत्रोच्यते —

'यद्वै किञ्च मनुरवदत्तद्भेषजम्' इति श्रुतेः;

'वेदाद्युपनिबन्धत्वात् प्राधान्यन्तु मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते ॥

यः कश्चित् कस्यचिद्धर्मो मनुना संप्रकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' ॥

इत्यादिस्मृतेश्च अतिप्रशस्तायां मनुस्मृतौ वस्वादिरूपेण वरणस्योक्तत्वात् तथैव वरणमुचितम् ।

किंच — 'वसुरुद्रादित्यसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः' ॥

इति याज्ञवल्क्यस्मरणात्,

'वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः ।
प्रपितामहास्तथाऽऽदित्याः श्रुतिरेषा सनातनी' ॥

इति देवलस्मरणात्,

नाम गोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः ।
नाममन्त्रास्तथादेशा ? भावान्तरगतानपि ॥

प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ।
देवो यदि पिता जातः शुभकर्मनियोगतः ॥

तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति ।
देवत्वे भोगरूपेण पशुत्वेऽपि तृणं भवेत् ॥

श्राद्धानां ? वायुरूपेण कव्यत्वेऽप्यनुतिष्ठति ।
पाकं ? भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम् ॥

गन्धर्वत्वे यथायोगं प्रेतत्वे तु तिलौदनम् ।
मनुष्यत्वेऽन्नपानादि नानाभोगरसं भवेत्' ॥

इति मत्स्यपुराणवचनात्,

'तथाऽन्ये पूजितास्स्वर्गे ये चान्ये नरकौकसः ।
ये च तिर्यक्त्वमापन्ना ये च भूतादिसंस्थिताः ॥

तान् समान् यजमानोऽन्नैः श्राद्धं कुर्वन् यथाविधि ।
समाप्यायते वत्स येन येन शृणुष्व तत् ॥

अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥

यदंबु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ।
तेन ते कुरुतां ? प्राप्तास्तेषां तृप्तिः प्रजायते ॥

यास्तु बद्धांबुकणिकाः पतन्ति धरणीतले ।
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः ॥

उद्धृतेषु च पिंडेषु याश्चात्र कणिका भुवि ।
ये चादन्ताः कुले जाताः क्रियाहीना ह्यसंस्कृताः ॥

गृह्णन्ति ते विकिररसं मार्जयन्ति तिलाशिनः ।
भुक्त्वाऽऽचामयतां यच्च जलं यच्चांघ्रिसेचने ॥
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै ।
तेनानेके कुले तत्र तत्तद्योन्यन्तरं गताः ॥
प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्धक्रियावताम् ' ॥

इति मार्कण्डेय स्मरणात्, 'मनुष्याधिकारकं शास्त्र'मिति परब्रह्मभूतानां अनिरुद्धादीनां कर्मण्यधिकाराभावात्, अधिकारसंभवे सति

'आब्रह्मस्तंबपर्यन्तं जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥

इति कर्मवश्यतासंभवात्,

सदाचारेण देवत्वमृषित्वञ्च तथैव हि ।
प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ' ॥

इति संवर्तस्मरणात् फलान्तरप्राप्तिसंभवात्,

'आदित्या मरुतस्साध्या रुद्रा वस्वश्च वह्नयः ।
पितरो ये च लोकानां स्रष्टारश्च सुरोत्तमाः ॥
गन्धर्वाप्सरश्चैव रूपं विष्णोर्महात्मनः ' ॥

इति भगवद्विभूतिभूतवस्वादिरूपेण वरणे क्रियमाणेऽपि

'श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ' ॥

इति भगवद्वचनानुसारेण भगवत्प्रीतिसंभवात्, अद्वारकत्वेन वरणे श्रौतस्मार्तसूत्रादीनां वैयर्थ्यप्रसंगाच्च वस्वादिरूपेणैव वरणं कर्तुं युक्तम् ।

किञ्च—'अग्नौ हुतेन देवस्थाः स्वर्गस्था विप्रभोजने ।
धर्मस्थाः पिंडदानेन नारका विकिरेण तु ॥
दक्षिणाद्यैर्मनुष्यस्था असुरा भूरिभोजनात् ' ॥

इत्यादिवचनबलेन, वासुदेवादिरूपेण क्रियमाणेऽपि उत्कृष्टफलाभावाच्च वस्वादि-रूपेणैव वरणं युक्तमित्यवगम्यते ।

आवाहनञ्च 'दक्षिणाः पितरः' इति श्रुतेः दक्षिणतः आकाशादावाहयेत् । **बोधायनः** । 'दक्षिणेनाग्निं दक्षिणाग्रान् दर्भानास्तीर्य तेष्वन्नशेषैः पिंडं दद्यात्' इति ।

'पिण्डनिर्वापणं केचित् विस्तारादेव कुर्वते' ॥ इति मनुः

'सोमाधारः पितृगणो योगाधारश्च चन्द्रमाः ।
श्राद्धे योगिनियोगस्तु तस्माद्भूपाल! शस्यते' ॥

इति सोमप्रीत्यर्थमोषधिदेवत्यवता शूर्पेणाच्छादनम् ।

गृह्यः — 'गायत्र्या प्रोक्ष्य पात्राणि दर्भैः पूर्वं परिस्तरेत् ।
परिषिञ्चेद्देवसवितः प्रसुवेति समन्वकम्' ॥ इति

याज्ञवल्क्यः — 'दत्वान्नं 'पृथिवी पात्र' मिति पात्राभिमन्त्रणम् ।
कृत्वे'दं विष्णु' 'रित्यन्ने द्विजांगुष्ठं निवेशयेत्' ॥ इति

गृह्यः — 'विष्णो हव्यं रक्षस्वे' त्युक्त्वा नामपुरस्सरम् ।
निर्दिश्य हव्यं कव्यमिति दद्यादेवं समुच्चरेद ॥

विश्वेदेवा इदमन्नं सपरिकरं परिविष्टं परिवेक्ष्यमाणं ब्राह्मणस्त्वाहवनीयार्थे गयेयं भूः गदाधरो भोक्ता अन्नं ब्रह्म अहञ्च ब्रह्म भोक्ता च ब्रह्म सौवर्णं पात्रमक्षय-वटच्छायेयं विश्वेभ्यो देवेभ्य अमृतस्वरूपं आतृप्तेर्दत्तं दास्यमानं हव्यं स्वाहा नमः । पितृपितामहप्रपितामहेभ्यः इदमन्नं कव्यमित्यूहः । 'गयायां श्रीविष्णुपादे दत्तम्' ।

इत्युक्त्वा सन्त्यजेदन्नं सतिलाक्षतवारिभिः ।
'गयायां विष्णुपादे च दत्तमस्त्वि'ति चाह वै ॥

'ये चेहेति' च 'ये देवा' जपित्वा चोत्तरान् जपेत् ।
अमूर्तीनां समूर्तीनां पितॄणां दीप्ततेजसाम् ॥

नमस्यामि सदा तेषां ध्यानिनां योगचक्षुषाम् ।
इन्द्रादीनाञ्च पितरो दक्षमारीचयस्तथा ॥

पितरस्सप्त ऋषीणाञ्च तान् नमस्यामि कामदान् ।
मन्वादीनां जनितॄंश्च सर्वलोकनमस्कृतान् ॥

तान् नमस्यामि नित्यान्तै: पितॄणाञ्च समृद्धये ।
नक्षत्राणां ग्रहाणाञ्च वाय्वग्निपितरश्च ये ॥

नमो द्यावापृथिव्योश्च नमस्येऽहं कृताञ्जलिः ।
देवर्षीणां संजनितॄन् सर्वलोकनमस्कृतान् ॥

मांधातॄन् सर्वलोकानां नमस्येऽहं पितामहान् ।
प्रजापतेर्गवां वह्नेः सोमाय च यमाय च ॥

योगीश्वरेभ्यश्च सदा नमस्येऽहं कृताञ्जलिः ।
नमः पितृगणेभ्यश्च श्राद्धाद्या ये च कीर्तिताः ॥

स्वयंभुवे नमस्येऽहं ब्रह्मणे योगचक्षुषे ।
एतदुक्तञ्च सप्तर्चं देवर्षिगणसेवितम् ॥

पित्र्यञ्च परमं ह्येतत् श्रीमद्रक्षोघ्नमेव च ।
एतेन विधिना युक्तः श्रीमान् भूयाद्धराधिपः ॥

सप्तर्चञ्च जपेद्यस्तु नित्यमेवं समाहितः ।
सप्तद्वीपसमुद्रायां पृथिव्यामेकराट् भवेत्' ॥ इति

हरिवंशे— 'राजतं रजितं वाऽपि पितॄणां पात्रमुच्यते ।
रजितस्य कथा वाऽपि दर्शनं दानमच्युत ॥

आनन्त्यमक्षयं स्वर्ग्यं राजतं दानमुच्यते ।
पितॄणां तेन दानेन सत्पुत्रास्तारयन्त्युत ॥

राजते हि स्वधा दुग्धा पात्रेऽस्मिन् पितृभिः पुरा ।
अक्षयार्थं मही यस्मादस्मिन् दत्ते ततोऽक्षयम् ॥

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमुच्यते ।
राक्षोघ्नं ब्रह्मवर्चस्यं पुत्रान् पौत्रांश्च तारयेत्' ॥ इति

तत्रैव — 'पापापहं पावनीयमश्वमेधफलं लभेत् ।
मन्त्रं तस्मादहं वक्ष्ये अमृतं ब्रह्मसम्मितम् ॥

'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमस्स्वधायै स्वाहायै नित्यमेव नमो नमः' ॥

आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा ।
अश्वमेधफलं ह्येतत् द्विजैस्सत्कृत्य पूजितम् ॥

पिंडनिर्वापणे चापि जपेदेवं समाहितः ।
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥

पित्र्यस्तु त्रिषु लोकेषु मन्त्रोऽयं तारयत्युत ।
'गयायां धर्मिपृष्ठे च सदसि ब्रह्मणस्तथा ॥

गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्' ।
'सप्त व्याधा दशार्णेषु मृगाः कालाञ्जने गिरौ ॥

चक्रवाकाश्शरद्वीपे हंसास्सरसि मानसे ।
येऽस्मिन् जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ' ॥

'अमूर्तीनां समूर्तीनां' 'चतुर्भ्यश्च चतुर्भ्यश्च' 'ब्रह्मार्पणं ब्रह्महविः'

'यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताऽव्ययात्मा प्रभुरीश्वरोऽत्र ।

तत्सन्निधानादपयान्ति सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्वे' ॥

एवं विशिष्टदिवसे विश्वान् देवान् पितॄन् प्रति ।
श्राद्धं मया कृतं ह्येतत् गयाश्राद्धफलप्रदम् ॥
अस्त्वित्यनुग्रहं प्रार्थयेत् व्याहरेत तथाऽऽस्त्विति ॥

ईशानविष्णुकमलासनकार्तिकेय-
वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां
पादान् नमामि सततं पितृमुक्तिहेतून् ॥
आपोशनं ततो दत्वाऽमृतमस्त्विति सो वदेत् ।
.... .... .... श्रद्धायामिति पञ्चभिः ॥
.... .... प्राणाहुतीः पञ्च च हावयेत् ॥
सव्याहृति सगायत्रि मधु वाता इति त्र्यृचा ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥

**वाग्यतान् भुञ्जानान् ऋचः पैतृकाः श्रावयेत् ॥ १३ ॥**

**वाग्यतान्** — मौनिनः ।

**गौतमः** — 'यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः' ॥ इति

**यमः** — 'अग्निशेषं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ।
आतृप्तेः सपवित्राणि जप्त्वा पूर्वजपं (?) तथा' ॥ इति

**मनुः** — 'स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैवहि ।
आख्यानानीतिहासांश्च पुराणान्यखिलानि च ॥
हर्षयेद्ब्राह्मणांस्तुष्टान् भोजनाच्छादनासनैः' ॥ इति

**तत्रैव** — 'हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं तृप्यन्ति विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च तु ॥

षण्मासांश्छागमांसेन पार्षतेन च सप्त वै ।
अष्टावैणेयमांसेन रौरवेण नवैव तु ॥

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥

संवत्सरं तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥

कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च' ॥ इति

स्मृत्यन्तरे — 'नास्रमापातयेज्जातु न कुप्येन्नानृतं वदेत् ।
न पादेन स्पृशेदन्नं न चैतदवधूनयेत् ॥

अस्रं गमयति प्रेतान् कोपोऽरीननृतं शुनः ।
पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम्' ॥

तत्रैव — 'चण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।
रजस्वला च षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥

होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते ।
दैवे कर्मणि पित्र्ये वा तद्गच्छत्ययथातथम् ॥

घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः ।
श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः ॥

खञ्जो वा यदि वा काणः दातुः प्रेष्योऽथवा भवेत् ।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः' ॥ इति

षण्डादीनां लक्षणमाह व्यासः —

'न जुहोत्युचिते काले न स्नाति न ददाति च ।
पितृदेवार्चनाद्धीनः स षण्डः परिकीर्तितः ॥

डंभार्थं जपते यश्च तप्यते च तपस्तथा ।
न परत्रार्थ इत्युक्तस्स मार्जारः प्रकीर्तितः ॥

विभवे सति नैवार्थं ददाति न जुहोति च ।
तमाहुराखुं तस्यान्नं भुक्त्वा कृच्छ्रेण शोधनम् ॥

समागतानां यस्सभ्यः पक्षपातं समाश्रयेत् ।
तमाहुः कुक्कुटं देवास्तस्याप्यन्नं विगर्हितम् ॥

स्वधर्मं यस्समुत्सृज्य परधर्मं समाश्रयेत् ।
अनापदि स विद्वद्भिः पतितः परिकीर्तितः ॥

देवत्यागी पितृत्यागी गुरूणाञ्चाप्यपूजकः ।
गोब्राह्मणस्त्रीवधकृदपविद्धः प्रकीर्तितः ॥

आशाकरस्य (?) दाता च दातुश्च प्रतिषेधकः ।
शरणागतं यस्त्यजति स चण्डालः प्रकीर्तितः ॥

अभोज्यान्ना इमे षंडा मार्जारोप्याखुकुक्कुटौ ।
पतिताश्चापविद्धाश्च चण्डाला अधमाश्च ये' ॥

पक्षषंडादयश्चतुर्दशभेदभिन्ना इति **माधवीये** उक्तम् ।

**मनुः**— 'पिंडेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्व्यशः ।
तानेव विप्रानासीनान् विधिवत्पूर्वमाशयेत्' ॥ इति

'तृप्तेषु तेषु संपृच्छेदन्नं पात्रे प्रगृह्य च ।
'तृप्तास्स्थ' इति, ते प्राहुः 'तृप्ताः स्म' इति वै पृथक् ॥

'उच्छिष्टभाग्भ्योऽन्नं दीयताम्' इति यजमानेनोक्ते—

'यजमानकुले जाता दासा दास्योऽन्नकांक्षिणः ।
ते सर्वे तृप्तिमायान्तु मया दत्तेन भूतले' ॥

इति पितृस्थानीयः किंचिदुच्छिष्टं भूमौ निक्षिपेत् ।

अनन्तरमुत्तरापोशनम् ।

**उच्छिष्टं संशोध्य तत्रान्नं विकिरेत् ॥ १४ ॥**

उच्छिष्टमित्यादि ।

अशोध्य शोध्य वोच्छिष्ट तत्रान्न विकिरेत्क्रमात ॥

'असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥

असंशयो भवेद्विष्णुर्मोक्षसाधनमव्ययम् ।
पितॄणाञ्च वरं श्रेष्ठं विकिरान्नञ्च वैष्णवम्' ॥

एवमन्नं विकीर्यांबुतिलदर्भोक्षितस्थले ।
'येऽग्निदग्धे' ति तच्छेपं पिंडं दद्यात्तिलांबु च' ॥

जातुकर्णिः — 'पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्न च बालैश्च नासजात्या कथञ्चन' ॥

'विष्टरे पाद्यदाने च विकिरे पिंडदानके ।
तर्पणे त्यागकाले च पट्स्वाचमनमिष्यते' ॥ इति

**आचान्तेभ्यो मुखवासं निवेद्य रजतं तिलं सुवर्णं वा दक्षिणां पशुकांस्ययानदासशयनासनादीनि परिच्छदांश्च यथाशक्ति ददाति॥१५**

आचान्तेभ्य इत्यादि ।

हस्तशुद्धिं ततः कुर्यात्कुशं दत्वा प्रयत्नतः ।
गोत्रशेषन्तु कुर्वीत ? विश्वेदेवानुपूर्वकम् ॥

हस्तशुद्ध्यै करे दद्यात् सतिलं साक्षतं जलम् ।
सदर्भानक्षतान् दत्वाऽस्मद्गोत्रं वर्धतामिति ॥

स्वस्ति वो वर्धतां गोत्रमिति दद्युश्च तेऽक्षतान् ।
स्वस्तीति ब्रूहीत्युक्ते तु ते चापि स्वस्ति चास्त्विति ॥

मया दत्तमिदं श्राद्धमक्षय्यं चास्त्विति क्रमात् ।
अस्त्वक्षयमिति ब्रूयुः संबुद्ध्या नाम सर्वतः ॥

आह स्वधां वाचयिष्ये वाच्यतामिति च ब्रुवन् ।
अर्घ्यपात्राणि चेत्तानि (?) पाद्यस्थाने जलं स्रवेत् ॥

'ऊर्जं त्वे' त्यादिना चान्ते पितरस्तु 'स्वधोच्यताम्' ।
'अस्तु स्वधे' ति प्रत्याहुः देवाश्च पितरस्तथा ॥

'दीयतामिति' ते प्राहुर्मन्त्रमेतद्द्वयं पुनः ।
दक्षिणाः पान्त्विति प्रोक्ते पान्तु ते दक्षिणा इति ॥

मुखवासानन्तरं रजतं तिलं सुवर्णमित्यादि दद्यात् ।

बोधायनः — 'सुवर्णहिरण्यपात्रवस्त्रलोहभूमिभाण्डैः गोश्वाजाविकहस्तिदासव्रीहियवमाषतिलदण्डोपानच्छत्रकमंडलुयानासनशयनोपधानैः सर्वोपकरणैः यथोपपादं संपूज्ये' ति ।

**अन्नशेषं तेभ्यो दर्शयित्वा यथोक्तं करणीयम् ॥ १६ ॥**

**आचमनोच्छिष्टशोधनोत्थापनप्रविर्जनादन्यद्विश्वेदेवपूर्वमाचरति। अन्यथा रक्षांस्यपहरेयुः ॥ १८ ॥**

**विश्वेदेवपूर्वमित्यादि ।**

छागलेयः — 'पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा ।
विप्रलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम् ॥
तत्पालनाय विहिता विश्वेदेवाः स्वयंभुवा' । इति

पुराणे 'दक्षस्य दुहिता साध्वी विश्वा नाम प्रकीर्तिता ।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुताः ॥

क्रतुः 'सदेवं भोजयेच्छ्राद्धं तत्पूर्वञ्च प्रवर्तयेत् ।
अन्यथा ह्यवलुंपन्ति सदेवासुरराक्षसाः' ? इति

मनुः — 'दैवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते ।
दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ॥

तेषामारक्षभूतन्तु दैवं पूर्वं नियोजयेत ।
रक्षांसि विप्रलुंपन्ति श्राद्धमारक्षवर्जितम् ॥

दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत ।
पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः ' ॥ इति

श्रुतिः — 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः' इति ब्राह्मणम् । 'अग्निरग्रे प्रथमो देवतानाम् 'संयातानामुत्तमो विष्णुरासीत' इत्यादि । अतो विश्वेदेवपूर्वं विष्ण्वन्तमेव कर्तव्यम् ।

शंखः — 'इष्टिश्राद्धे क्रतुदक्षसंज्ञितौ वैश्वदेविकौ ।
नान्दीमुखे सत्यवसू काम्ये तु धुरिरोचनौ ॥

पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।
नैमित्तिके कालकामावेवं सर्वत्र कीर्तयेत् ॥

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं क्रियांगं वृद्धिकृत्कृतम ॥

कर्मांगमिष्टिश्राद्धमिति कैश्चिदुक्तम् । आदित्यपुराणे विशेषः —

'तथा चैव क्रतुर्दक्षस्सर्वास्विष्टिषु कीर्तितौ ।
नित्यनान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ॥

नवान्नलंभने देवौ कालकामौ सदैवकौ ।
अपि कन्यागते सूर्ये श्राद्धे तु धुरिरोचनौ ॥

पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।
दर्शश्राद्धन्तु यत्प्रोक्तं पार्वणं तत्प्रकीर्तितम् ।
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते' ॥ इति

ततः पितृप्रार्थनप्रतिवचने ।

मनः — 'दक्षिणां दिशमाकांक्षन् याचेतेमान् वरान् पितॄन् ।
दातारो नोऽभिवर्धन्तां वेदास्सन्ततिरेव च' ॥ इति

अन्यत्र — 'श्रद्धा च नो मा व्यगमत् बहुदेयञ्च नोऽस्तु ।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ॥
याचितारश्च नस्सन्तु मा च याचिष्म कञ्चन' ॥ इति प्रार्थनम्

'दातारो वोऽभिवर्धन्तां वेदास्सन्ततिरेव वः ।
श्रद्धा च वो मा व्यगमत बहुदेयञ्च वोऽस्तु ॥
अन्नञ्च वो बहु भवेदतिथींश्च लभध्वम् ।
याचितारश्च वस्सन्तु माच याचध्वं कञ्चन' ॥

इत्यादि प्रतिवचनम् ।

तेभ्यो लब्ध्वा नमस्कृत्य जप्त्वा मन्त्राविमौ पुनः ।

'अष्टावष्टावन्येषु धिष्णियेषु' 'अग्निरायुष्मानि'त्यादि । ततो मन्त्राक्षतान् दद्युः ।

**'नमो वः पितरः' इति पितॄनभिवन्द्य पिंडानुद्वासयेत् ॥ १९ ॥**

**'पिण्डानुद्वासयेत्' इति**

मनुः — 'पतिव्रता धर्मपत्नी पतिपूजनतत्परा ।
मध्यमन्तु ततः पिंडमद्यात्सम्यक् सुतार्थिनी ॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा' ॥ इति

स्मृत्यन्तरे — 'समं पत्न्यै प्रदद्याच्च पार्वणे मध्यपिंडकम् ।
अन्यदेशागता यत्र रोगिणी गर्भिणी तथा ।
तत्पिंडं जीर्णवृषभः छागो वा भोक्तुमर्हति' ॥ इति

चन्द्रिकायाम् — 'प्रदद्यान्मध्यमं पिंडं पत्न्यै भर्ता विशेषतः ।
न दद्याद्भ्रातृपत्नीनामेष धर्मस्सनातनः' ॥

पुत्रे जाते तु षण्मासे नार्या वाऽथ ऋतुत्रये ।
न देयं रजसः पूर्वं न देयं रजसः परम् ॥

अक्षता गर्भिणी वन्ध्या गतरक्ता रजस्वला ।
नाश्नीयान्मध्यम पिंडं स्वैरिण्यपि विशेषतः' ॥ इति

याज्ञवल्क्यः — 'पिंडांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
निक्षिपेच्च शुचौ देशे वायसेभ्यो निवेदयेत' ॥ इति

**'अस्तु तृप्तिः' 'आमावाजस्य' इति भुक्तवतस्तान् नमस्कृत्य 'उत्तिष्ठत' इत्युत्थाप्य 'परेत पितर' इति प्रवासयति ॥ २० ॥**

परेतेत्यादि । 'परेते' ति प्रवास्याथ च आसीमान्तमनुव्रजेत् ।

**पितृभुक्तं पितृजीर्णमित्युपजुह्वा हुत्वाऽन्तहोमान्तेऽग्निमालये (स्वस्थाने) प्रतिष्ठाप्य पञ्चमहायज्ञान् करोति ॥ २१ ॥**

अग्निं 'प्रजापते नत्व' दिति गत्वा प्रणम्य च ।
'यदन्तरिक्ष' मित्युक्त्वा 'ये समाना' इति ब्रुवन् ॥
अग्नौ क्षिप्त्वा पिंडदर्भानन्तहोममथाचरेत्' ॥ इति

मध्यमपिंडप्राशनं प्राजपत्यत्वादुक्तम् ? ।

'वायसैः सेविते पिण्डे शुना शूद्रेण दूषिते ।
पुनः कर्म प्रकुर्वीत आवृत्तस्य ? विपर्यये' ॥ इति.

अंगिराः — 'पिण्डं काकादिपक्षिभ्यो जन्तुरन्यः स्पृशेद्यदि ।
कृच्छ्रत्रयं चरित्वा तु पुनः पिंडञ्च निर्वपेत्' ॥ इति

शंखलिखितौ — 'बलिं बलिभुजो यत्र प्रदत्तं नैव भुञ्जते ।
नैव तृप्ताः प्रयास्यन्ति पितरस्तत्र सानुगाः' ॥ इति

स्मृत्यन्तरे — 'पथमो वारुणो ज्ञेयः प्रजापतिरथापरः ।
तृतीयोऽग्निः स्मृतः पिंडे एष पिंडविधिस्स्मृतः' ॥ इति

अग्निमालय इत्यादि

'उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः' ॥ इति

कार्ष्णाजिनिः 'यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्धकर्मणि' ॥ इति

ब्रह्माण्डे 'पितॄन् सन्तर्प्य विधिवद्बलिं श्राद्धं समाचरेत् ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥

दर्शे तिलोदकं पूर्वं पश्चाद्द्यान्महालये ।
आब्दिके मासिके चैव परेऽहनि तिलोदकम् ॥

दर्शे तिलोदकं पूर्वं पश्चाच्छ्राद्धं समाचरेत् ।
तिलोदकन्तु पूर्वं स्यादामश्राद्धं ततश्चरेत्' ॥ इति

मनुः — 'यदेवं तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम्' ॥ इति

स्मृत्यन्तरे 'वृद्धावादौ क्षये चान्ते दर्शे मध्ये महालये ।
आचान्तेष्वपि कुर्वीत वैश्वदेवं चतुर्विधम् ॥

दर्भैस्सप्तमभूतेन? मन्त्रयुक्तं तथाऽक्षयम् ।
सौवर्णेन च पात्रेण ताम्ररौप्यमयेन च ॥

औदुंबरेण खड्गेन पितॄणां दत्तमक्षयम् ।
विना रौप्यसुवर्णेन विना ताम्रमयैस्तथा ॥

विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ।
वामभागे तिला ग्राह्या मुक्तहस्तस्तु दक्षिणः ॥
यदुद्धृत्य निषिञ्चेत तिलान् संमिश्रयन् जलैः' ॥ इति

उशनाः — 'ये तु पाणितले श्लिष्टा रोमकूपेषु ये स्थिताः ।
तैस्तिलैस्तर्पणं कुर्वन् पितृहा च भवेन्नरः ॥

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोकैः ।
पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः ' ॥ इति

प्रदीपिकायाम् — 'यथा योधसहस्रेषु राजा गच्छति धार्मिकः ।
एवं तिलजलं दत्तं जलं पित्र्येषु गच्छति ' ॥

कात्यायनः — 'तिलाभावे जलं दद्यात्सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत दर्भैर्मन्त्रेण वाऽप्यतः ' ॥ इति

हारीतः — 'वसित्वा वसनं शुष्कं स्थले वै स्तीर्णबर्हिषि ।
तस्मिंस्तु तर्पणं कुर्यान्न पात्रे तु कदाचन ॥

पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत ।
जलपूर्णेऽथ वा गर्ते न स्थले तु विबर्हिषि ॥

केशभस्मतुषांगारकंटकास्थिसमाकुलम् ।
भवेन्महीतलं यस्मात् बर्हिषां स्तरणं ततः ' ॥ इति

विष्णुः — 'यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥

याजुषास्सामगाः पूर्वं मध्ये कुर्युस्तु बह्वृचाः ।
अथर्वाणस्तु श्राद्धान्ते वैश्वदेवमिति स्थितिः ' ॥

पितामहः— 'हेमरौप्यमयं पात्रं ताम्रकांस्यमयं शुभम् ।
पितृणां तर्पणे पात्रं मृण्मयन्तु परित्यजेत् ॥

राजते मनसा यान्ति सुवर्णे हस्तनिर्गतम् ।
मुहूर्तेन तु ताम्रेण आससे न तिलोदकम् ' ॥

व्यासः — 'एकैकमंजलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमंजलिम् ' ॥ इति

इदं मातृवर्गव्यतिरिक्तविषयम् ।

शालंकायनः = 'मातृणामंजलीन् दद्यादन्यासामेकमंजलिम् ।
सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलांजली ' ॥ इति

वृद्धमनुः – 'सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्समातृणान्नु घातुकः' ॥ इति

बृहस्पतिः – 'भानुवारे भृगोर्वारे मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स मातृपितृघातुकः' ॥ इति

पराशरः — 'सप्तम्यां रविवारे च गृहे (?) जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

अर्के शुक्लयोदश्यां सप्तम्यां निशि संध्ययोः ।
तर्पणं तिलसंयुक्तं तज्जलं रुधिरं स्मृतम् ॥

प्रातःकाले च सायाह्ने रात्रौ चोभयसंध्ययोः ।
मृदा स्नानं पिंडदानं न कुर्यात्तिलतर्पणम्' ॥ इति

संग्रहः — 'भरण्यां भानुवारे च कृत्तिकायां मघासु च ।
मृदास्नानं पिंडदानं न कुर्यात्तिलतर्पणम्' ॥ इति

यमः — 'दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापि तिलोदकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम्' ॥ इति

अंगिराः — 'कृतोद्वाहोपनयनो वर्षं वर्षार्धमेव वा ।
पार्वणन्तु न कुर्वीत कुर्याच्छ्राद्धमपिंडकम् ॥

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षं तदर्धमर्धञ्च नेत्येके तिलतर्पणम् ॥

निमन्त्रयेत त्र्यवरान् सम्यग्विप्रान् यथोदितान् ।
निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्तु सः ॥

न च छन्दांस्यधीयत यस्य श्राद्धे विभावयेत् ।
निमन्त्रितान् हि पितरः उपतिष्ठन्ति तान् द्विजान् ॥

वायुभूताश्च गच्छन्ति उपासीनानुपासते ।
ब्राह्मणन्तु मुखं कृत्वा देवाः पितृगणैस्सह ॥
तदन्नमुपयुञ्जीरन् तस्मात्त .... .... ॥

रत्नावल्याम् 'तिथिवारसमायोगे निषेधो य उदाहृतः ।
ऋषिभिस्तर्पणे नित्ये निमित्त न तु बाधते ॥

उपरागे पितुः श्राद्धे पातेऽमायाश्च संक्रमे ।
निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥

स्नात्वा तीरे समागत्य शुचौ देशे कुशासने ।
श्राद्धाङ्गतर्पणं कुर्यात्ततस्सन्ध्यां समाचरेत् ॥
श्राद्धे यावन्त उद्दिष्टाः प्रातस्स्नाने तु तर्पयेत्' ॥ इति

याज्ञवल्क्यः— 'यः तर्पयेत्पितॄन् प्रातः श्राद्धं कृत्वा परेऽहनि ।
पितरस्तस्य तृप्यन्ति न चेत्क्लिश्यन्ति वै भृशम् ॥

नष्टाग्निर्दूरभार्यश्चेत्पार्वणे समुपस्थिते ।
सन्धाय विधिवद्धुत्वा कर्मान्ते विसृजेत्पुनः ॥

प्रायश्चित्ताहुतीरेवाऽयाश्च वा जुहुयादपि ।
अनग्निकस्य विप्रस्य हस्तेऽग्नौ करणं स्मृतम्' ॥ इति

वसिष्ठः— 'हस्ते हुतं यदाऽश्नीयात् ब्राह्मणो ज्ञानदुर्लभः ।
नष्टं भवति तच्छ्राद्धमिति शातातपोऽब्रवीत्' ॥ इति

मार्कण्डेयः— 'श्राद्धं भुक्त्वा परं श्राद्धं यस्तु भुञ्जीत मूढधीः ।
पतन्ति पितरस्तस्य लुप्तपिंडोदकक्रियाः' ॥ इति

अंगिराः— 'आमश्राद्धं गृहीत्वा ये अन्नश्राद्धेषु भुञ्जते ।
पतन्ति पितरस्तस्य रौरवे चातिसंकटे ॥

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।
ब्रह्मचारी वसेत्तान्तु रजनीं ब्राह्मणैस्सह ॥

व्रतभंगो न कर्तव्यो भोक्तव्यं पितृसेवितम् ।
तस्माच्च तद्दिने शेषमाघ्रातव्यं न दोषकृत्' ॥

**श्रुतिः** — 'अवघ्रेयमेव तन्नैव प्राशितं नैवाप्राशित' मिति ॥

**व्यासः** — 'तांबूलं दन्तकाष्ठञ्च तैलाभ्यंगं क्षुरं तथा ।
रत्यौषधपरान्नञ्च श्राद्धकृत् सप्त वर्जयेत् ॥

पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानं प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत् ॥

निमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते ।
दातुर्यद् दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते ॥

श्राद्धं भुक्त्वा तदुच्छिष्टं श्वशूद्रेभ्यः प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः' ॥ इति

**पराशरः** — 'अन्नेन वा तथाऽऽन्यैर्वा शाकमूलफलादिभिः ।
तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्यान्महालये' ॥ इति

**स्मृत्यन्तरे** — 'तृणानि च गवे दद्यात् पिंडान्वाऽथापि निर्वपेत् ।
तिलोदकैः पितॄन्वाऽथ तर्पयेत्स्नानपूर्वकम् ॥

अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ।
तस्मिंश्चोपवसेदनुजीवेद्वा? श्राद्धसंहिताम्' ॥ इति

**बोधायनः** — 'अथवा श्राद्धमन्त्रान्वाऽधीयीत न त्वेवानष्टकस्स्यादिति' ।
'द्रव्यब्राह्मणसंपत्तावन्नश्राद्धेऽनुमासिके ।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम्' ॥ इति

**स्मृत्यन्तरे** — 'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुक् द्विजः ।
ततस्सन्ध्यामुपासीत शुद्ध्यते तदनन्तरम् ॥

प्राणायामत्रयं कृत्वा प्रणवेनाभिमन्त्र्य षट् ।
पवि वै? ततः सन्ध्यां शुद्धः स्याच्छ्राद्धभोजनात् ॥

निमन्त्रितो जपेद्धोत्रं नियुक्तस्तु निषंगिणे ।
विमुक्तो वामदेवाय श्राद्धभोक्ता न दोषभाक्' ॥ इति

[1]**दरिद्रो ममेयमष्टकेति कक्षमग्निना दाहयेत् ॥ २२ ॥**

**श्रोत्रियाय पानीयं वा दद्यादिति विज्ञायते ॥ २३ ॥**

**दरिद्रेत्यादि ।**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने चतुर्थः खण्डः ।

1. इदं सूत्रद्वयं न व्याख्यातम् । 'कक्षं—लतागुल्मं' इति ग्रन्थाक्षरकोश-टिप्पणी ।

## अथ पञ्चमः खण्डः

**अथातोऽमावास्यायां पिंडपितृयज्ञं यजेत ॥**

**अथ** — क्रमप्राप्ताष्टकानन्तरं। **अतः** — चंडालत्वनिवृत्तिद्वारा सन्ततिवृद्धिकरणात्।

**संग्रहे** — 'दर्शश्राद्धमतिक्रम्य यो भुंक्ते स नराधमः।
चंडालत्वमवाप्नोति नवजन्मानि पञ्च च'॥ इति

**कात्यायनः** — 'दर्शे स्नात्वा पितृभ्यस्तु दद्यात् कृष्णतिलोदकम्।
अन्नञ्च विधिवद्दद्यात्सन्ततिस्तेन वर्धते'॥ इति

**याज्ञवल्क्यः** — 'न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः।
इन्दुक्षये मासिमासि प्रायश्चित्तीयते द्विजः'॥ इति

**शतपथे** — दर्शपूर्णमासप्रकरणे — 'ते देवा अब्रुवन् अमा नो अद्य वसुर्वसति यो नः प्रायत्सी' दिति।

**यजुषि** — 'इन्द्रो वृत्रँ हत्वा परां परावतमगच्छत्' इत्यारभ्य 'सोऽमावास्यां प्रत्यागच्छत्तं देवा अभिसमभिगच्छन्तामा वै नोऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वम्' इति 'अमा वसु नैच्छदस्यां रात्र्यामित्यमावास्या' इति।

**स्कान्दे नागरखंडे** — 'आश्रितौ तावमावास्यां पश्यतस्सुसमागतौ।
अन्योन्यं चन्द्रसूर्यौ तु यत्तु तद्दर्श उच्यते'॥ इति

**बृहद्वसिष्ठः** — 'अमा नाम रवेः रश्मिस्सहस्रप्रमुखा स्मृता।
यस्याश्च तेजसा सूर्यः प्रोक्तस्त्रैलोक्यदीपकः।
तस्मिन् वसति येनेन्दुरमावास्या ततस्स्मृता'॥ इति

**श्रीविष्णुपुराणे** — 'कलाद्वयावशिष्टस्तु प्रविष्टस्सूर्यमण्डलम्।
अमाख्यरश्मौ विशति अमावास्या ततस्स्मृता'॥ इति

ब्रह्माण्डे — 'अमा नाम रवे रश्मिः चन्द्रलोके प्रकीर्तिता ।
तस्मात्सेऽमो नसेत्तस्यां अमावास्या ततः स्मृता' ॥ इति

स्कान्दे — 'अमा सोमांशभागेन (?) देवि प्रोक्ता महाकला ।
कलावशिष्टो निष्क्रान्तः प्रविष्टस्सूर्यमंडलम् ।
अमायां विशते यस्याममावास्या ततस्स्मृता' ॥ इति

पुराणे 'राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता ।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु' ॥ इति

वृद्धवसिष्ठः 'राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः ।
राका संपूर्णचन्द्रा स्यात् कलोनाऽनुमतिस्स्मृता ॥

पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता ।
राका स्यात्तु ततस्तस्मिन् सैव राकेति कीर्त्यते' ॥ इति

ब्रह्माण्डे 'यस्मात्तामनुमन्यन्ते पितरो दैवतैस्सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥

अत्यर्थं राजते यस्यां पूर्णिमायां निशाकरः ।
रंजना .... .... द्यस्य राकेति कवयो विदुः ॥

दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ।
एतामेव कुहूमाहुः नष्टचन्द्रां महर्षयः' ॥ इति

मात्स्ये — 'कलाक्षये व्यतिक्रान्ते दिवा पूर्णा परस्परम् ।
चन्द्रादित्यौ कलापूर्णौ पूर्णत्वात् पूर्णिमा स्मृता' ॥ इति

भविष्योत्तरे — 'पूर्णमासी महाराज सोमस्य दयिता तिथिः ।
पूर्णो मासो भवेदस्मात् पौर्णमासी ततः स्मृता' ॥ इति

कालनिर्णये — 'अनुमत्याश्च राकायाः सिनीवाल्याः कुहोर्मता ।
एतासां द्विलवः कालः कुहू रात्र्या कुहूः स्मृता ॥

लध्वक्षरचतुर्भागः त्रुटिरित्यभिधीयते ।
त्रुटिद्वयं लवः प्रोक्तः निमिषस्तु लवद्वयम् ॥

कूहेति कोकिलेनोक्तो यावत्कालस्समाप्यते ।
तत्कालसंज्ञिका चैषा अमावास्या कुहूस्स्मृता ।
इत्येष सन्धिना .... कालो यो द्विविधः स्मृतः' ॥ इति

**पूर्वेऽहनि 'अपां मेध्य' मिति समूलं बर्हिराहृत्य सकृदेवाऽच्छिद्य सकृदाच्छिन्नबर्हिषस्समाहरति ॥ २ ॥**

**पूर्वोऽहनीत्यादि ।**

मनुः — 'समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति शक्रस्य च महात्मनः ॥

हरिता वै सपुञ्जीलाः पुष्टिस्निग्धास्समाः शुभाः ।
रत्निमात्रप्रमाणास्स्युः पितृतीर्थेन संस्कृताः ॥

अच्छिन्नाग्रा ह्यशुष्काग्रा ह्रस्वाश्चैव प्रमाणतः ।
कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समाचरेत्' ॥ इति

शंखः — 'अमायाञ्चैव न छिन्द्यात् कुशांश्च समिधस्तथा ।
सवित्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत्' ॥ इति

जाबालिः 'कुशान् काशांश्च पुष्पाणि गवार्थञ्च तृणादिकम् ।
निषिद्धे चापि गृह्णीयादमावास्याऽहनि द्विजः' ॥ इति

कात्यायनः 'मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याश्च पुनः पुनः' ॥ इति

**उपोष्य श्वोभूतेऽपराह्णे अग्निं प्रणम्य प्राचीनावीती अध्वर्युः दक्षिणाग्नेः दक्षिणपश्चिमस्यां चरुस्थाल्याज्यस्थाली स्रुक् स्रुवेध्ममेक्षणेडापात्रस्फ्यशूर्पोलूखलमुसलादिपात्राण्येकैकशः प्रयुञ्जीत ॥ ३ ॥**

अपराह्णेति —

स्मृत्यन्तरे — 'अपराह्णान्वितावापि अधिवृक्षयुतापि वा ।
अदृष्टेन्दुरमावास्या पितृयज्ञे तु चोदिता' ॥ इति

संकर्षणकांडे — 'यदि पञ्चदशी पूर्वमपराह्णात्समाप्यते ।
पूर्वेद्युः दृष्टचन्द्रेऽपि कार्यं प्राह पितृक्रमम्' ॥ इति

स्मृत्यन्तरे — 'मध्याह्नव्यापिनी ग्राह्या एकोद्दिष्टतिथिर्भवेत् ।
अपराह्णव्यापिनी ग्राह्या पार्वणे सा तिथिर्भवेत् ॥

घटिकैकाऽप्यमावास्या नापराह्णगता यदि ।
भूतविद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि' ॥ इति

कात्यायनः — 'सिनीवाल्यपराह्णे चेत् स्मृताऽऽपस्तंबसामिनाम् ।
सायाह्ने द्वित्रिनाडी चेत्सा बोधायनकण्वयोः' ॥ इति

हारीतः — 'अपराह्णः पितॄणान्तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाह्णानुयायिनी' ॥ इति

मरीचिः — 'ह्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः ।
महती यत्र तस्मिंस्तां प्रशंसन्ति महर्षयः' ॥ इति

स्मृतिसरणौ — 'सायन्तन्युत्तरा स्याच्चेत् पूर्वविद्धाऽपराह्णिकी ।
सायन्तनी वा पक्षे स्यात् परविद्धा प्रशस्यते ॥

दर्शश्च पूर्णमासश्च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते' ॥

इति नारदादिवचनं अपराह्णद्वयव्यापित्वाभावे सायं त्रिमुहूर्तव्यापितिथिग्रहणपरम् ।

'अह्न्यस्तमनवेलायां कलामात्रापि या तिथिः ।
सैव प्रत्याब्दिके ज्ञेया नापरा पुत्रहानिदा' ॥

इति वचनं काण्वादिविषयम् ।

यत्तु — 'चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत्' ॥

इति यमवचनं आलस्यादिना अपराह्णातिक्रमपरम् ।

व्यासः — 'पराह्णातिक्रमं कुर्यादत्तेः पूर्वं यथाविधि' (?) ॥ इति

मनुः — 'संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः' ॥ इति

व्याघ्रपादः — 'विधिज्ञः श्रद्धयोपेतं सम्यक् पात्रे नियोजकः ।
रात्रेरन्यत्र कुर्वाणः प्राप्नुयाच्छ्राद्धकृत्फलम्' ॥

स्मृत्यन्तरे — 'सा तिथिस्तदहोरात्रं यस्यामस्तमियाद्रविः' ॥ इति

नारदः — 'पित्र्यं मूले तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ।
तथैव देवकार्येषु तिथेरन्त्यं प्रशस्यते' ॥ इति

स्मृतिसरणौ — 'पारणे मरणे चैव तिथिस्तात्कालिकी मता ।
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते' ॥

कथञ्चिदत्र सायंकाले श्राद्धकरणमपि — 'न च नक्तं श्राद्धं कुर्वीत आरब्धे च भोजनपरिसमापनात्' इत्यापस्तंबवचनात् मृताहातिक्रमे चण्डालत्वापत्तेश्च रात्रौ प्रथमयामे प्रत्याब्दिकश्राद्धं कर्तव्यमिति ग्रन्थान्तरेषु ग्रन्थकारैः समर्थितम् । त्रिमुहूर्तन्यूनत्वे —

गोभिलः — 'त्रिमुहूर्ता न तद्ग्राह्या परैव कुतपे हि सा ।
कुर्वीत कुतपे श्राद्धं सायाह्नव्यापिनी न चेत्' ॥

मासिकैकोद्दिष्टेषु मध्याह्नव्यापिनी तिथिः ग्राह्या । प्रथमं मध्याह्नव्यापिनी ग्राह्या । द्वयोर्मध्याह्नव्यापित्वे यत्राधिका सा ग्राह्या । उभयत्राभावे पूर्वविद्धा ग्राह्या । (खर्वादिविषयकवचनं सर्वत्र समानम्)

'एकमुद्दिश्य यच्छ्राद्धं देवहीनं विधीयते ।
एकोद्दिष्टन्तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्तितम्' ॥

इति व्यासस्मरणात् । एतच्च सपिंडीकरणात् प्राक्तनैकोद्दिष्टविषयम् ।

'मध्याह्नव्यापिनी ग्राह्या एकोद्दिष्टे तिथिर्भवेत् ।
अपराह्णव्यापिनी ग्राह्या पार्वणे सा तिथिर्भवेत्' ॥

देवलः — 'पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्' ॥

इत्यादिवचनान्यत्र अनुसन्धेयानि ।

अस्य अपवादः —

गालवः — 'पूर्वाह्णे चैव मध्याह्ने अपराह्णे च दैविकम् ।
एकोद्दिष्टं पार्वणञ्च वृद्धिश्राद्धं तथाऽऽग्निकम्' ॥ इति

अग्न्याधानवृद्धिश्राद्धमाग्निकम् ।

किञ्च — खर्वा वृद्धिक्षयरहिता अपराह्णद्वये समा । दर्पा वृद्धिपक्षे अपराह्णद्वये समा । हिंस्रा क्षयपक्षे अपराह्णद्वये समा ।

'खर्वा दर्पा तथा हिंस्रा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ कार्यौ हिंस्रा स्यात्पूर्वकालिकी' ॥ इति

यतिविषये — 'एकोद्दिष्टं यतेर्नास्ति त्रिदंडग्रहणादिह ।
सपिंडीकरणाभावात् पार्वणन्तु विधीयते ॥
अतस्सुतेन कर्तव्यं पार्वणं तु मृतेऽहनि' ॥ इति

अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।
तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि ॥

अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥
साम्येऽपि च कुहूर्ज्ञेया वेदवेदांगवेदिभिः ॥ इति

कार्ष्णाजिनिः — 'सिनीवाली द्विजैर्ग्राह्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूर्ग्राह्या तथा चानग्निकैर्द्विजैः ॥
दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता ।
सिनीवाली कुहूश्चैव श्रुत्युक्ते पितृकर्मणि ॥

मध्याह्नात्परतो यत्र चतुर्दश्यनुवर्तते ।
सिनीवाली तु सा ज्ञेया पितृकार्येषु निष्फला ' ॥

इति वचनं निरग्न्यादिविषयम् । वाजसनेयिव्यतिरिक्तविषयं वा ।

प्रचेताः — 'भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्माणि ये कुर्युस्तेषामायुः प्रहीयते ' ॥ इति

गौतमः — 'पूर्वाह्णे चेत्प्रतिपदो भूते साम्यमसा यदि ।
आरभ्य कुतपे श्राद्धं रौहिणन्तु न लंघयेत् ॥

भूतविद्धा त्वमावास्या प्रतिपन्मिश्रिता च या ।
तयोश्च पितृकृत्येषु ग्राह्या कुतपकालिका ॥ इति

एवं कुतपकालव्याप्तदर्शग्रहणस्मरणात् न सायन्तनग्रहणम् ।

प्रचेताः — 'स्यातां चेत् यदि मध्याह्नात् श्राद्धं तत्र कथं भवेत् ।
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ॥
साम्येऽपि च कुहूर्ज्ञेया वेदवेदांगपारगैः ॥ इति

मध्याह्नात् परतः कुहूः सिनीवाली च स्यातां चेदपराह्णे तिथिक्षये सिनीवाली ग्राह्या । समे वृद्धे वा भवेतां यदि तदा कुहूः ग्राह्येत्यर्थः । उभयापराह्णव्याप्त्यभावे कुतपकालिका ग्राह्या ।

हारीतः — 'भूतविद्धा त्वमावास्या प्रतिपन्मिश्रिता च या ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ' ॥ इति

एवं च 'अपराह्णः पितॄणा ' मित्युत्पत्तिशिष्टापराह्ण एव श्राद्धम् । तथा

जाबालिः — 'पूर्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि ।
प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुः ' ॥ इति

अपराह्णद्वयव्यापित्वाभावे पूर्वदिनं ग्राह्यम् ।

जाबालिः — 'प्रतिपद्यप्यमावास्या नापराह्णगता यदि ।
पूर्वविद्धैव कर्तव्या पित्र्ये कर्मणि सर्वदा ' ॥

इति वचनं कात्यायनबोधायनादिविषयम् ।

**बोधायनः—** 'घटिकैकाऽप्यमावास्या नापराह्णगता यदि ।
भूतविद्धैव सा श्राद्धा दैवे पित्र्ये च कर्मणि' ॥ इति

**कात्यायनः** 'चतुर्दशदिनान्ते तु चतुस्त्रिघटिका यदि ।
अमाभूते च कर्तव्यं श्राद्धं वाजसनेयिभिः' ॥ इति

**श्रीधरः—** 'सा तिथिस्त्रिमुहूर्ता स्यात्पूर्वमस्तमयाद्रवेः ।
वृद्धौ षण्णाडिकाः तत्र क्षये तिस्रास्समे चतुः' ॥ इति

अमावास्यायां पिंडपितृयज्ञं यजेतेति सूत्रकारैरुक्तम् । इदं च पिंडमूर्तिधारिणां पितॄणां यजनम्, 'अहमेवात्र विज्ञेयः त्रिषु पिंडेषु संस्थितः' इति भगवद्वचनात् भगवद्यजनम् । एतदष्टकायां प्रपंचितम् । अत्र अमावास्यायामित्यनेन उदयकालस्थायां वा अपराह्णगतायां वा यदाकदाचिदमावास्यायां वा (?) । यदाकदाचिदिति वक्तुमयुक्तम् अनुक्तत्वात् । उदयकालस्थायामिति चेत्, तदप्ययुक्तम् । 'पूर्वाह्णे दैविकं कर्म' इत्यादिस्मृतेः 'अपराह्णः पितॄणा' मिति श्रुतेश्च । अतः विहितकाल अपराह्ण एव कर्तव्यम् । अन्यथा 'अकाले कृतमकृतम्' इति,

'अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतं तु यः कुर्यादकृतं तद्विनिर्दिशेत्' ॥

इति च अकृतवद्भवेत् ।

**श्रौतसूत्रे च—** 'अलोपवसथेऽमावास्यायामपराह्णेऽपिवृक्षसूर्ये वा पिंडपितृयज्ञेन यजेत' इति ।

ननु दर्शश्राद्धं पिंडपितृयज्ञश्चान्वाधानदिने उत दिनान्तरे वा इत्यत्राह

त्रीण्येकवासरे कुर्यादिति प्राहुर्मनीषिणः ।
क्वचित्पूर्वदिने तानि क्वचिदेवोत्तरत्र तु ॥

दर्शश्राद्धपिंडपितृयज्ञान्वाधानानि एकवासरे कुर्यात् । क्वचित्पूर्वदिन एव कुर्यात्, क्वचिदुत्तरदिन एव कुर्यादिति महर्षयः प्राहुः । तथाहि—यदा वा मध्याह्ने

ततः पूर्वं वा दर्शप्रतिपत्संधिः तदा सन्धिदिनात्पूर्वस्मिन् दिवसेऽन्वाधानं, तत्रैवामावास्याया अपराह्णव्यापित्वात्तत्रैव दर्शश्राद्धपिंडपितृयज्ञाविति त्रयाणामेकदिन-करणीयत्वम् । यदा वा मध्याह्नादुपरि अमावास्याप्रतिपत्सन्धिः तदा अमावास्याया पूर्वेद्युरपराह्णव्यापित्वाभावे परेद्युरपराह्णव्यापित्वात् पूर्वैः परेद्युरन्वा-धानविधानात् त्रयाणामेकोत्तरदिनत्वम् । दिनत्रयमेकदिनत्वं(?) यदा मध्याह्ना-दुपर्यमावास्याप्रतिपत्संधिः तदा अमावास्याया दिनद्वयम् । या ओषविवृद्धौ साम्ये च सर्वेषां परेद्युरेव श्राद्धविधानात् परेद्युरन्वाधानविधानात् परेद्युरेव पिंडपितृयज्ञ-विधानात् त्रयाणामेकोत्तरदिनत्वमेकदिनत्वम् । यदाऽऽमावास्याप्रतिपत्संधिः मध्याह्नादुपरि तिथिक्षीणतया दिनद्वयेऽप्यपराह्णास्पर्शित्वं तदा सर्वेषां परेद्युः श्राद्धविधानात् परेद्युरेव पिंडपितृयज्ञविधानात् प्रतिपदि चन्द्रादर्शने परेद्युरन्वा-धानात् त्रयाणामेकोत्तरदिनत्वम् । यदा मध्याह्नादुपरि अमावास्याप्रतिपत्सन्धिः अमावास्या दिनद्वयेऽप्यपराह्णव्यापिनी तिथिरपि क्षयगामिनी तदा अग्निद्वयवतां सिनीवाल्यां दर्शश्राद्धविधानम् । तथा च —

'पितृयज्ञावृतो दर्शश्राद्धे पिंडान् विनिक्षिपेत् ।
पितृयज्ञस्य कालस्तु दर्शश्राद्धे भवेदिति' ॥

इति वचनात् दर्शश्राद्धदिन एव पितृयज्ञः । तत्र प्रतिपदि चन्द्रादर्शने सिनीवाल्यामेवान्वाधानमिति त्रयाणामेकपूर्वदिनत्वम् । (यदाऽमावास्याप्रतिपत्संन्धिः मध्याह्नादुपर्यमावास्या च दिनद्वयेऽप्यपराह्णस्पर्शनतिथिक्षयगामिनी तदा प्रतिपदि चन्द्रादर्शनादन्वाधानं सिनीवाल्याम् । तथा पितृभ्यः श्राद्धं पिंडपितृयज्ञश्च सिनीवाल्यामेवेति पूर्वैकदिनत्वम् (?) ।) अस्मिन्नर्थे दर्शश्राद्धपिंडपितृयज्ञान्वाधान-वचनान्येव प्रमाणानि ।

स्मृत्यन्तरे — 'अपराह्णान्विता वापि अभिवृक्षयुतापि वा ।
अदृष्टेन्दुरमावास्या पितृयज्ञे तु चोदिता ॥

वर्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान्वापि पितृयज्ञप्रदो भवेत्' ॥ इति

संकर्षणकाण्डे— 'यदि पञ्चदशी पूर्वमपराह्णात्समाप्यते ।
पूर्वेद्युः दृष्टचन्द्रेऽपि कार्यं प्राह पितृक्रतुम्' ॥

दक्षिणपश्चिमस्याम्—नैर्ऋत्याम् । आदिशब्देन तण्डुलशोधनादि-पात्राणि गृह्यन्ते । 'यदेकमेकं संभरेत् पितृदेवत्यानि स्युः' इति श्रुतेः एकैकशः आसादनम् ।

'अपहता असुरा' इति वेदिं परिमृज्य 'आयात पितरः' इति दक्षिणाग्निं सकृदाच्छिन्नबर्हिषा परिस्तृणाति ॥ ४ ॥

'पितृभ्यो जुष्टं निर्वपामी' ति स्थालीं सपवित्रां व्रीहिभिरापूर्य तेनैवाभिमृश्य तथैव तान् शूर्पे निरूप्याभिमृशेत् ॥ ५ ॥

अन्वाहार्यस्य दक्षिणस्यां पश्चिमस्यां वोत्तरपश्चिमग्रीवं कृष्णाजिनमास्तीर्य ऊर्ध्वमुलूखलं मुसलञ्च संस्थाप्य व्रीहीन् प्रक्षिप्य पत्न्या अवघातं कृत्वा विवेचनवर्जं परात्रापं सकृत्करोति ॥ ६ ॥

विवेचनवर्जं--वायुना तुषनिरसनवर्जम् । शूर्पेण तुषनिरसनं कुर्यात् ।

अध्वर्युः स्थाल्यां तंडुलानद्भिः सकृत्परिप्लाव्यान्वाहार्ये जीवतण्डुलमस्विन्नं चरुं श्रपयेत् ॥ ७ ॥

परिप्लाव्य—प्रक्षाल्य । जीवतंडुलं -- कणादिसहितम् । अस्विन्नं—यवागूद्रवरहितम् ।

दक्षिणतः स्थालीं मेक्षणञ्च दर्भेष्वासाद्य अनुत्पूतसर्पिषा पक्वमभिघार्य 'शुन्धन्तां पितरः' इति वेद्याः परितः कूर्चेनापस्त्रावयेत् ॥ ८ ॥

सोपवीती दक्षिणाग्नाविध्मान् हुत्वा मेक्षणेन चरुमभिघार्यावदाय 'अग्नये कव्यवाहनाय स्वधा नमः स्वाहा—'सोमाय पितृमते स्वधा नमस्स्वाहा—'यमाय चांगिरस्पतये स्वधा नमः स्वाहा' इति जुहोति ॥ ९ ॥

दक्षिणाग्नावित्यादि । दक्षिणाग्नानिति केचिद्वदन्ति । तदयुक्तम् । उपवीतीत्युपक्रान्तत्वात् । इध्मानिति सामान्येनोक्तत्वात्, पञ्चदशेध्मदारूणि वा, विकृतित्वात् सप्तदशेध्मदारूणि वा प्रणवेन प्रक्षिपेत् । पुनः प्राचीना-

वीतीति केचिद्वदन्ति । अष्टकायां दक्षिणान्तत्वेन पितृतीर्थेनोक्तत्वाच्चाहुतित्रयमपि प्राचीनावीतिना कर्तव्यम् । **मेक्षणेनेति** । स्रुवेण चरुमभिघार्य मेक्षणेनावदाय जुहोति । मेक्षणेन प्रत्येकं हुत्वा ।

**तदग्नेः सधूममेकमुल्मुकमुद्धृत्य 'अपयन्त्वसुरा' इति पश्चिमतो वेद्यां सन्न्यस्य निर्धूमं तं विसृजेत् ॥ १० ॥**

**विसृजेत्** । असुरनिरसनार्थम्, यद्वा 'निर्ऋतिप्रीणनार्थम् । 'एकोल्मुके नयन्ति । तद्धि निर्ऋत्यै भागधेयम्' इति श्रुतिः । जीवत्पितृकस्त्वेतदन्तं कृत्वा विरमेत् । 'पितरि जीवति पिंडो न निर्वाप्य' इति वचनात् । 'आहोमात्कृत्वा विरमे' दित्यापस्तंबः ।

स्मृत्यन्तरे — 'पित्र्यं जीवपितुर्न स्यादग्नौ होमोऽपि पाक्षिकः ।
येभ्यो वापि पिता तेभ्यो दद्याद्वैतानकर्मणि' ॥ इति

सुमन्तुः — 'न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्य एव पिता कुर्यात्तेभ्यः कुर्वीत योऽग्निमान्' ॥ इति

भविष्यत्पुराणे — 'प्रत्यक्षमर्चनं श्राद्धं न युक्तं मनुरब्रवीत् ।
पिंडनिर्वापणञ्चैव महापातकिभिः स्थितम् (?) ॥ इति

यद्वा प्रकारान्तरेण वा कुर्यात् । अत्र प्रमाणम् —

पितेष्ट्यां पितृयज्ञे च वृद्धौ मातुर्मृतेऽहनि ।
जीवत्पिताऽपि तीर्थेषु श्राद्धं कुर्यात्सपार्वणम् ॥
येभ्य एव पिता दद्यात् तेनैवोद्दिश्य पार्वणम्' ॥ इति

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वापणं सुतः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने पञ्चमः खण्डः ।

## अथ षष्ठः खण्डः

यजमानः प्राचीनावीती दक्षिणपूर्वे स्फ्येनैवोल्लेखनं कृत्वा तत्राद्भिः प्रोक्ष्य स्फ्यं निधाय तस्मिन् 'ऊर्म्योदकान्ते' इत्युदकेन तर्पयित्वा पश्चिमे सकृदाच्छिन्नबर्हिषि पितृन् पितामहान् प्रपितामहानभ्यर्च्य अवाचीनपाणिः 'एतत्ते ततासौ ये च त्वामनु' इति प्रत्येकं दक्षिणान्तान् पिंडान् दद्यात् ॥ १ ॥

**यजमानः** इति। अत्र यजमानग्रहणमध्वर्युकृत्यसमाप्तिद्योतकम्। **उदकेन तर्पयित्वा**। त्रिभिरुदकेन तर्पयित्वा। **सकृदाच्छिन्नबर्हिषि**—सकृदाच्छिन्नबर्हिष्यष्टकोक्तवत् पिंडनिर्वापस्थानं कृत्वा 'सकृदाच्छिन्न'मिति मन्त्रेण सकृदाच्छिन्नमास्तीर्य 'पोषाय त्वे'त्यष्टकोक्तवदावाहनादि कृत्वा। **एतत्ते तत** इत्यादि। 'एतत्ते तत गोत्र शर्मन् वसुरूप ये च त्वामनु ये च तमनुगच्छन्ति तेभ्यश्चायं पिंडस्तस्मै ते स्वधा नमः'इति। एवं पितामहप्रपितामहेभ्यः। 'पित्रे गोत्राय शर्मणे ये च तमनुगच्छन्ति तेभ्यश्चायं पिंड' इति केचित्। पिंडलक्षणम्—

'कपित्थफलमात्रन्तु पिंडं दद्यात्तु पार्वणे।
नालिकेरप्रमाणेन एकोद्दिष्टे सपिंडने॥

धात्रीफलप्रमाणेन वृद्धिश्राद्धे महालये।
अन्यश्राद्धेषु सर्वेषु कुक्कुटांडप्रमाणतः'॥ इति

'आंक्ष्वत ताताः पितरः, स्वांक्ष्वत पितामहाः, स्वांक्ष्वत प्रपितामहाः' इत्यभ्यंजनं 'एतानि वः पितर' इति कशिपूपबर्हणवासोऽञ्जनं चार्पयेत् ॥ २ ॥

**आंक्ष्वतेत्यादि**। 'आंक्ष्वत ताताः पितरः, पितः गोत्र शर्मन् वसुरूप अभ्यञ्जनमांक्ष्व'। एवं पितामहप्रपितामहेभ्यः। **एतानि वः** इत्यादि। स्ववस्त्रत आदाय वासांसि (वासाञ्चलतन्तून्) दद्यात्। **श्रुतिः**। 'दशां छिनत्ति।

हरणभागा हि पितरः । पितॄनेव निरवदयत ' इति । पञ्चाशद्वत्सरादूर्ध्वं वाससां स्थाने स्वहस्तप्रकोष्ठरोमाणि भित्वा दद्यात् । श्रुतिः । 'उत्तर आयुषि लोमभिन्दीत । पितॄणां ह्येतर्हि नेदीयः ' इति । चकारेण तांबूलदक्षिणादि ।

**पूर्ववत् 'ऊर्जं वहन्तीः ' इति पिंडं परिषिच्य त्रिरुदकाञ्जलिं दत्त्वा तथैव पितॄनभिवन्द्य प्रवासयति ॥ ३ ॥**

**पूर्ववत्** । अष्टकावत् । **उदकाञ्जलिं दत्त्वा** । **श्रुतिः** । 'अपः परिषिञ्चति । मार्जयत्येवैनान् । अथो तर्पयत्येव । तृप्यति प्रजया पशुभि ' रिति । **प्रवासयति** अष्टकावत् पिंडोद्वासनं ब्राह्मणभोजनञ्च कुर्यात् ॥

**'प्रजापते न त्वत् ' इति गार्हपत्यं गत्वा 'यदन्तरिक्ष ' मित्युपतिष्ठेत ॥ ४ ॥**

**प्रजापते न त्वत्** इत्यादि । **श्रुतिः** 'प्राजापत्ययर्चा पुनरैति । यज्ञो वै प्रजापतिः । यज्ञेनैव सह पुनरैति । न प्रमायुको भवति ' इत्यादि ।

**अनाहिताग्निश्चैवमौपासनाग्नौ चरुं श्रपयित्वा जुहुयात् ॥ ५ ॥**

विज्ञानेश्वरीये — 'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ जुहोत्यथ ।
अनाहिताग्निरौपासनेऽग्न्यभावे द्विजेऽप्सु वा ' ॥ इति

**औपासनस्य संस्काराभावात् 'यदन्तरिक्ष ' मिति मन्त्रेण गार्हपत्यशब्दं विनैवोपस्थानं कुर्यात् ॥ ६ ॥**

**संस्काराभावात्** – गार्हपत्यसंस्काराभावात् ।

**'अपान्त्वौषधीना ' मिति मध्यमं पिंडं दत्वा 'आधत्त पितर ' इति पत्नीं प्राशयेत् ॥ ७ ॥**

**पत्नीं प्राशयेदिति** । मध्यमं पिंडं इडापात्रे निक्षिप्य दत्वा पत्नीं प्राशयति । प्राजापत्यत्वान्मध्यमपिंडप्रदानम् ।

**एषा पुमांसं जनयति ॥ ८ ॥**

**द्विपिता चेद्यजमानः तथैव पिंडं दत्वा 'यन्मे माता' इत्येकस्मिन् पिंडे तौ द्वावपि ध्यात्वा 'अत्र पितरो यथाभाग'मिति प्रणमेत् ॥ ९ ॥**

द्विपितेति —

**ऋश्यशृंगः —** 'अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि ।
पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेदिति' ॥ इति

**मनुः —** 'प्रथमतः श्राद्धं .... प्रदद्यात्पुत्रिकासुतः (?) ।
द्वितीयं तु पितुस्तस्याः तृतीयन्तु पितुस्सुतः' ॥ इति

**कार्ष्णजनिः —** 'कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरपि संबद्धः कुर्यात्स उभयोरपि' ॥ इति

**यद्वी —** 'मात्रैकया द्विपितृकौ भ्रातरावन्यगोत्रजौ' ॥ इति

**अथवा** — यस्यैक एव पुत्रः तमन्यस्मै अपुत्राय पुत्रार्थिने ददत् ममापि पुत्राभावादेष उभयोः पुत्र इति दद्याच्चेत् तज्जः (स?) 'उभयं दत्तपुत्रवत्' इति वचनात् उभयोः कुर्यात् । रूढार्थो वा (?) । यथाभागमित्यादि — एतद्वां ततौ देवदत्तविष्णुदत्तशर्माणौ ये च युवामनु' इति ऊहित्वा दद्यात् ।

**मात्स्ये —** 'श्राद्धन्तूभयवंशस्य कर्तव्यं द्विजभोजनम् ।
न जीवत्पितृकः कुर्याच्छ्राद्धं दर्शादिचोदितम्' ॥ इति

**'ये समाना' इति सकृदाच्छिन्नमग्नौ हुत्वा पात्राणि द्वन्द्वमाहरतीति विज्ञायते ॥ १० ॥**

**सकृदित्यादि** । परिस्तरणबर्हिषः पिंडस्थाने स्थिताश्चदर्भा होमार्हा इत्यर्थः । ननु — अष्टकायां मासिश्राद्धे च होमपिंडप्रदानब्राह्मणभोजनादीनि प्रतिपादितानि । प्रधानभूतेऽमावास्यायां ब्राह्मणभोजनमनुक्त्वा पिंडहोमावुक्तौ । अनुक्तत्वात् अमावास्यायां श्राद्धाकरणे दोषो नास्तीति चेत् — सत्यम् । 'त्रयो मूर्तिविहीना वै पिंडरूपधरास्समा' इति पिंडरूपधराणां पूजा पिंडपितृयज्ञः इति

पिंडपूजाया भगवदाराधनत्वेन भगवता प्रतिपादितत्वात् (तत एव चारितार्थ्यात् ?) अत्र जीवत्पितृकविषये 'पितरि जीवति पिंडो न निर्वाप्य' इति वक्ष्यमाणत्वात्,

जीवमाने तु पितरि पूर्वेषामेव ? निर्वपेत् ।
विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत् ॥

इति वचनाच्च प्रत्यक्षेण ब्राह्मणभोजनमयुक्तमिति होमस्य प्राधानता ।

'कृतोद्वाहोपनयनो वर्षं वर्षार्धमेव वा ।
पार्वणन्तु न कुर्वीत कुर्याच्छ्राद्धमपिंडकम्' ॥

इति कृतोद्वाहादिविषये ब्राह्मणभोजनस्य प्रधानता । इतरेषां होमपिंडदानब्राह्मण-भोजनानि ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने षष्ठः खण्डः

## अथ सप्तमः खण्डः

**अथ – मासिश्राद्धम्** ॥ १ ॥

**मासिमास्यपरपक्षेऽन्यतमेऽहन्यजन्म ब्राह्मणनिमन्त्रणादि-सर्वमष्टकावत्** ॥ २ ॥

अथ पिंडपितृयज्ञानन्तरम् । श्रद्धया दीयत इति श्राद्धम् । प्रतिमासं कर्तव्यत्वान्मासिश्राद्धम् । तत्र हेतुमाहापस्तंबः । 'सह देवमनुष्या अस्मिन् लोके पुरा बभूवुः, अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसाय, तत्र पितरो देवताः ब्राह्मणस्त्वाहवनीयार्थे, मासिमासि कार्यम्, अपरपक्षस्यापराह्णः श्रेयान् तथापरपक्षस्य जघन्यान्यहानि सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणेऽपि पितॄन् प्रीणाती'ति ।

मनुः (?)— 'कुर्वन् प्रतिपदि श्राद्धं सुरूपां लभते प्रजाम् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनम् ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनां सुतान् ।
षष्ठ्यां द्यूतं कृषिञ्चापि सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदो नरः ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनस्सुतान् ।
द्वादश्यां जातरूपञ्च रजतं रूप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्याञ्च भूप्रजम् (?) ।
प्रीयन्ते पितरश्चास्य ये च शस्त्रेण वै हताः ॥
पक्षाद्यादिषु निर्दिष्टान् विपुलान्मनसि प्रियान् ।
श्राद्धदः पञ्चदश्यान्तु सर्वान् कामानवाप्नुयात्' ॥ इति

नित्यत्वाभिप्रायेण मसिमासीति द्विरुक्तिः ।

अपरपक्षे इत्यादि ।

'न नन्दासु भृगोर्वारे रोहिण्यान्तु त्रिजन्मसु ।
भरण्याञ्च मघायाञ्च कुर्यादापरपक्षिकम्' ॥

इत्यादिदोषरहिते दिने ब्राह्मणामन्त्रणादि सर्वमष्टकावत्कृत्वा ।

**तथाऽऽज्यचरू हुत्वाऽन्नं पिंडार्थं पात्रे समवदाय ब्राह्मणान् भोजयित्वा 'नमो वः पितरो रसाय' इति पिंडं प्रथमं पितृभ्यः 'नमो वः पितरस्सोम्यासः' इति द्वितीयतृतीयौ पितामहप्रपितामहाभ्याम् ॥ ३ ॥**

तथाऽऽज्य चरू हुत्वा। पिंडप्रदाने विशेषमाह। ब्राह्मणान् भोजयित्वा आचान्तेषु अष्टकावत् पिंडनिर्वापस्थानं कृत्वा तत्र पितृपितामहप्रपितामहादीन् मात्रादींश्चाभ्यर्च्य षट्पिंडान् कृत्वा 'नमो वः पितरो रसाय' पित्रे गोत्राय शर्मणे वसुरूपाय, एतत्ते पिंड निर्वपामी' ति प्रथमपिंड पितृभ्यः । 'नमो वः पितरस्सौम्यासः' इति द्वितीयतृतीयौ पितामहाय (प्रपितामहाय) गोत्रायेत्यादि समानम् ।

**एवं पितृभ्यः तत्पत्नीभ्यः पिंडानर्पयेदिति विशेषः ॥ ४ ॥**

एवं पितृभ्य इति। एवं मातृपितामहीप्रपितामहीभ्यो दद्यात् ।

**पितरि जीवति पिंडो न निर्वाप्यः ॥ ५ ॥**

**तमेवान्नादिना यथेष्टं तर्पयेत् ॥ ६ ॥**

**यस्मिन् दिने ज्ञातिर्मृतः तस्मिन् मासिमासि प्रेयतायैकं पिंडं निरूप्यैकं भोजयेत् ॥ ७ ॥**

**आसंवत्सरान्मासिश्राद्धमष्टकाश्च न कुर्यात् ॥ ८ ॥**

**आसपिंडीकरणादित्येके ॥ ९ ॥**

ज्ञातिर्मृतः इति – अत्र ज्ञातिशब्देन ज्येष्ठः – मात्रादयः ।

देवलः — 'संस्कार्यश्च पिता पुत्रैर्भ्रातरश्च कनीयसा ।
मातुलश्चाप्यपुत्रश्च स्वस्रीयश्चावरैर्मताः ॥

सर्वाभावे पिता वापि कुर्याद् भ्राताऽथवाऽग्रजः ।
गयायाञ्च विशेषेण ज्यायानपि समाचरेत्' ॥ इति

समुच्चये — 'उत्सन्नबान्धवं प्रेतं पिता भ्राता तथाऽग्रजः ।
जननी चापि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥

न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ।
जन्मश्रैष्ठ्येन वा स्यान्न सुब्रह्मण्यासु च स्मृतः ॥
यमयोश्चैव गर्भे तु जन्मतो ज्येष्ठता स्मृता' ॥ इति

मरीचिः — 'गोत्रान्तरप्रविष्टानां दायमाशौचमेव च ।
ज्ञातित्वञ्च निवर्तन्ते तत्कुले सर्वमुच्यते' ॥ इति

महागुरुविषये — 'सूतकं द्वादशाहान्तं न कुर्याद्देवतार्चनम् ।
न कुर्यात्पितृकार्याणि दानं होमं जपं तथा ॥

उत्पाद्य पुत्रं संस्कृत्य वेदमध्याप्य यः पिता ।
कुर्याद्वृत्तिञ्च नष्टेऽस्मिन् द्वादशाहं महागुरौ' ॥

देवलः — 'स्नानञ्चैव महादानं स्वाध्यायञ्चाग्नितर्पणम् ।
प्रथमेऽब्दे न कर्तव्यं महागुरुनिपातने ॥

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पित्र्यञ्च यावत्पूर्णो न वत्सरः' ॥ इति

विज्ञानेश्वरीये — 'भ्राता वा भ्रातृपुत्रो वा सपिंडः शिष्य एव वा ।
सपिंडीकरणं कृत्वा कुर्यादभ्युदयं ततः' ॥ इति

संग्रहे — 'नासपिंडीकृते प्रेते पितृकार्यं प्रवर्तते ।
सपिंडीकरणं कृवा कुर्याच्छ्राद्धं शुभानि च ॥

सपिंडीकरणं यावत्तावत्सन्ध्यादि नेष्यते ।
तत्सोदरस्य पुत्रस्य न त्वन्यस्य सगोत्रिणः ॥

सपिंडीकरणश्राद्धमकृत्वा शुभकर्मकृत् ।
ध्रुवमाप्नोति नरकं सपिंडानां मृतौ क्रमात् ॥
द्वादशाहे त्रिपक्षे वा यदाऽर्वाक् वृद्धिरापतेत्' ॥ इति

भविष्यत्पुराणे -- 'द्वादशेऽहनि पक्षे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासे मंगले समुपस्थिते' ॥ इति

स्मृत्यन्तरे — 'एकादशाहमारभ्य यावदाषोडशाद्दिनात्
सपिंडीकरणं कुर्यात्ततः सप्तदशेऽहनि ॥

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासके ।
षष्ठे वैकादशेऽब्दे वा संपूर्णे वा शुभागमे ।
सपिंडीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः' ॥ इति

कात्यायनः — 'अन्तरेणैव यो वृद्धिं मासिकान्यपकर्षति ।
स श्राद्धी नरके घोरे पितृभिस्सह मज्जति ॥

अकृते प्रेतसंस्कारे न कुर्यादात्मनश्शुभम् ।
कुर्याच्चेदशुभं कर्म मुख्यकर्तुश्च सन्निधौ ॥

वंशजानामसंस्कारे सूतकन्तु कथं भवेत् ।
दशाहात्परतः शुद्धिः ज्ञातीनाञ्च विशेषतः ॥

सपिंडीकरणात्पूर्वं मसिकानि कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात्
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते' ॥ इति

स्मृत्यन्तरे 'सपिंडीकरणं कुर्यात् पित्रोरेको हि यस्सुतः ।
आस्थिरत्वाच्छारीरस्य द्वादशाहः प्रशस्यते ॥

एकः पुत्रोऽग्निमांश्चैव कुर्वीत द्वादशेऽहनि ।
सपिंडीकरणश्राद्धं तयोरेक इति स्थितिः ॥

मासिकानान्तु सापिंड्यात्पूर्वन्तु युगपत्कृतम् ।
प्रत्येकं पिंडदानन्तु अग्नौ प्रेताहुतिस्सकृत् ॥ इति

स्मृत्यन्तरे — 'एकोद्दिष्टस्य दिवसे सपिंडीकरणं विना ।
श्राद्धं कुर्यात् पितृक्रोधात् क्षयमाप्नोति सन्ततिः' ॥

सायणीये — 'त्रैपक्षिकोनषाण्मासे ऊनाब्दिकमथाचरेत् ।
एतेषामेव काले तु न पुनः करणं भवेत् ॥

आद्यं त्रैपक्षिकञ्चैव ऊनषाण्मासिकं विना ।
मासिकानि पुनः कुर्यात् स्वे स्वे काले यथाविधि' ॥ इति

याज्ञवल्क्यः — 'अर्वाक् सपिंडीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकं दद्याद्यावत्संवत्सरं द्विजः' ॥ इति

स्मृत्यन्तरे — 'एकोद्दिष्टं नवश्राद्धं श्राद्धान्यपि च षोडश ।
एकस्मिन् दिवसे कुर्यादेकोद्दिष्टन्तु निष्फलम्' ॥ इति

पैठीनसिः — 'षाण्मासिकाब्दिकश्राद्धौ स्यातां पूर्वेद्युरेव ते ।
मासिकानि मृताहे स्युः दिवसे द्वादशेऽपि वा' ॥ इति

सत्यव्रतः — 'अब्दमंबुघटं दद्यादन्नमाज्येन संयुतम् ।
संवत्सरे प्रवृद्धेऽपि प्रतिमासञ्च मासिकम्' ॥ इति

गौतमः — 'अथैवं पार्वणं श्राद्धं सोदकुंभमदर्शकम् ।
कुर्यात्प्रत्याब्दिकश्राद्धात्संकल्पविधिनाऽन्वहम्' ॥ इति

गोभिलः — 'द्वादशाहादिकालेषु प्रमादादकृतं यदि ।
सपिंडीकरणं कुर्यात् कालेष्वन्तरभाविषु ॥

द्वादशाहप्रभृत्यस्य तृप्तये चान्नसंयुतम् ।
दद्यादहरहः कुंभं जलपूर्णन्तु वत्सरम्' ॥ इति

विज्ञानेश्वरीये — 'प्रेतलोके तु वसतिः नृणां वर्षन्तु कीर्तितम् ।
क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन' ॥ इति

मार्कण्डेयः– ‘यस्य संवत्सरादर्वाक् सपिंडीकरणं कृतम् ।
मासिकञ्चोदकुंभञ्च देयं तस्यापि वत्सरम् ॥
श्राद्धानि क्रमशः कृत्वा सपिंडीकरणे कृते ।
प्रेतकार्याद्विमुक्तस्स स्वकर्मफलभाग्भवेत् ॥
मृतानामेव वंश्यानामेको यदि च दाहकः ।
एकस्मिन् दिवसे कुर्यादेकतन्त्रेण कारयेत् ॥
समानपिंडयोगानां सपिंडीकरणं सह ।
दैवं पित्र्यञ्च तन्त्रं स्यात् निमित्तं प्रतिपूरुषम् ॥
बहूनामेककर्तॄणामेकश्चेब्दहुधा भवेत् ।
तत्रैकं पचनं कुर्यादग्निरेको द्विजाः पृथक्’ ॥ इति

अखण्डादर्शे — ‘असपिंडो यदि भवेत् तृतीये त्वस्थिसञ्चयः ।
एकोद्दिष्टं चतुर्थेऽह्नि मरणात्तु विशेषतः’ ॥ इति

स्मृत्यन्तरे — ‘सपिंडीकरणं यत्तु द्वादशेऽह्नि विधीयते ।
तत्पञ्चमदिने कुर्यादसपिंडे इति स्थितिः’ ॥ इति

भृगुः — ‘समानोदकादिः कुर्वीत संस्कारं दशरात्रतः ।
दशाहान्तेन शुद्धिस्स्यादित्याह भगवान् भृगुः ॥
गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तद्वद्दशरात्रेण शुद्ध्यति’ ॥ इति

बृहस्पतिः — ‘अकृते प्राप्तकाले तु श्राद्धकालोऽत्र वक्ष्यते ।
कन्याकुंभगते भानौ कृष्णपक्षे विधीयते ॥
सपिंडीकरणश्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मित्रभे वा समाचरेत्’ ॥ इति

ऋश्यशृंगः · ‘सपिंडीकरणं येन प्रमादादकृतं भवेत् ।
अनूराधार्द्रहस्तेषु रोहिण्यां वा समाचरेत् ॥
प्राजापत्यैन्द्ररौद्रर्क्षाण्युत्तमानि सपिंडने’ ॥ इति

गोभिलः — 'अनुक्तकालेष्वपितु व्युत्क्रमेण मृतावपि ।
आमेन वाऽथ सापिंड्यं हेम्ना वाऽथ प्रकल्पयेत्' ॥ इति

'परोक्षे सूक्ष्मतः पश्येत्स्वजन्मतिवारभम् ।
अन्येषां नातिदोषस्स्यात् प्रत्यक्षमरणे नृणाम्' ॥ इति

गार्ग्यः — 'चित्रा श्रविष्ठा हस्ता च स्वाती श्रवणमश्विभम् ।
मघा चेन्द्रश्च तिष्यश्च वारुणं सोमदैवतम् ॥

एकादशैते कथिताः प्रशस्ताः प्रेतकर्मणि ।
प्रेताधिपतिदेवत्वात भरणी कैश्चिदिष्यते ॥
ज्येष्ठा च मंगलाभावात् संकटेषु तयोः क्रिया' ॥ इति

वसिष्ठः — 'आग्नेयमैत्रसार्पाश्च त्रयं स्कां(न्दं च?) मित्रभम् ।
ज्येष्ठा च भरणी चैव निन्दितास्तत्त्वदर्शिभिः ॥

एतत्सर्वमतिक्रान्ते तत्काले तु न दोषकृत् ।
नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ॥

कुर्वीत प्रेतकार्याणि कुलक्षयकराणि तु ।
वर्गोत्तमस्थिते चन्द्रे तथा वर्गोत्तमोदये ॥
प्रेतकृत्या विवर्ज्याः स्युः नृणामन्विच्छतां सुखम् ॥

नक्षत्राण्युत्तमान्याहुरास्थितानि शुभैर्ग्रहैः ।
शुक्रवीक्षितराश्यादिकश्च सर्वं विगर्हितम् ॥

सर्वदा शुक्रवारश्च गुरुवारश्च गर्हितः ।
चन्द्रचन्द्रजवारौ द्वौ वर्गौ मध्यममीरितौ' ॥ इति

**प्रेतपूजा पितृपूजा भवेत् ॥ १० ॥**

ननु — नित्ययोरष्टकामासिश्राद्धयोः ईदृशकाले कथमनुष्ठानमिति शंकाया नैमित्तिकेन नित्यस्यापि सिद्धिरिति दर्शयति — प्रेतपूजेत्यादि

**पितॄन् प्रेतान्वोद्दिश्य पूजनं सर्वं श्राद्धं भवतीति ॥ ११ ॥**

तत्र हेतुः– पितॄनित्यादि ।

**पिंडपितृयज्ञः कर्तव्यः एवेति विज्ञायते ॥ १२ ॥**

शांडिल्यः— 'एकादशेऽह्नि कुर्वाणः पूर्वाह्णे सर्वमाचरेत् ।
सपिंडीकरणं मध्ये चरमे पितृयज्ञताम् ॥

सापिंड्यन्तु विना पुत्रः पितृयज्ञं समाश्रयेत् ।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

एकादशाहे कुर्वीत द्वादश्या .... आमायत्[१] ।
सपिंडीकरणं कृत्वा पितृयज्ञं समाचरेत्' ॥ इति

हारीतः— 'अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही ।
प्रेत स्याद्द्वादशाहे सपिंडनम्' ॥ इति

गोभिलः— 'सपिंडीकरणात् प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते' ॥ इति

कार्ष्णाजिनिः 'सपिंडीकरणं कुर्यात्पूर्ववच्चाग्निमान् द्विजः ।
परतो दशरात्राच्चेत् कुहू .... ब्दोपरि ततः ॥ इति

अतः सपिंडीकरणमेकादशाहे कृत्वा पिंडपितृयज्ञः कर्तव्य एव ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने सप्तमः खण्डः

# अथ अष्टमः खण्डः

अथ चैत्री ॥ १ ॥

मासिश्राद्धेन अद्वारकत्वेन पितृदेवतास्वरूपिणः परमात्मनः प्रीतिमुक्त्वा भगवत्प्रीतिद्वारा ऋतुमासदेवतास्वरूपिणः तस्य सद्वारकत्वेन यजनं प्रतिपादयति अथेत्यादिना ।

**चैत्र्यां पूर्णमास्यां गृहं शोधयित्वा अलंकृत्य दंपती नववस्त्र-पुष्पोत्तरीयाद्यैरलंकुर्यातां ॥ २ ॥**

**चैत्र्यामित्यादि** । **शोधयित्वा**—गोमयादिभिः । वितानादिभिरलंकृत्य । **अलंकुर्यातां**—अलंकृतौ भवतः । 'चैत्रिकैरलंकारैरलंकृत्य' इति **बोधायनः** । 'भगवत्प्रीतिद्वारा श्रीप्रजाधनधान्यादिसमृद्ध्यर्थं चैत्र्या यक्ष्ये' इति संकल्पः ।

**आघारे कृते देवताभ्यः स्थाल्यां चरुं श्रपयित्वा आज्येन 'ग्रीष्मो हेमन्तः—'ऊर्णं मे पूर्यतां—'श्रिये जातः—वैष्णव'ञ्च हुत्वा साज्येन चरुणा 'मधुश्च स्वाहा, माधवश्च स्वाहा, शुक्रश्च स्वाहा, शुचिश्च स्वाहा, नभश्च स्वाहा, नभस्यश्च स्वाहा, इषश्च स्वाहा, ऊर्जश्च स्वाहा, सहश्च स्वाहा, सहस्यश्च स्वाहा, तपश्च स्वाहा, तपस्यश्च स्वाहा, ऋतुभ्यः स्वाहा, ऋतुदेवताभ्यः स्वाहा, ओषधीभ्यः स्वाहा, ओषधीशाय स्वाहा, श्रियै स्वाहा, श्रीपतये स्वाहा, विष्णवे स्वाहा' इति जुहोति ॥ ३ ॥**

**आघारे कृते** आघारान्ते । **देवताभ्यः**—मासदेवताभ्यः ऋतुदेवताभ्यः ओषधीभ्यः ओषधीशाय श्रियैश्रीपतये, विष्णवे जुष्टं निर्वपामीति स्थाल्यां चैत्रिकांस्तंडुलान् निर्वाप्य स्थालीपाकवत् देवताभ्यः चरुं श्रपयित्वा उद्वास्य 'ग्रीष्मो हेमन्तः—ऊर्णं मे पूर्यताम्—श्रिये जातः—वैष्णवञ्च हुत्वा—मधुश्चेत्यादीन् साज्येन चरुणा जुहुयात् ।

अपरेणाग्निं देवीं श्रियं देवं श्रीपतिञ्च प्राङ्मुखमभ्यर्च्य हविर्निवेदयति ॥ ४ ॥

अपरेणाग्निं – अग्नेरपरस्याम् । चकारात् भूदेवीं स्थण्डिले प्राङ्मुखमभ्यर्च्य पायसकृसरगौल्यन्नादीनि निवेदयति । अन्तहोमं हुत्वा,

चैत्र्याणि पक्कान्यन्नानि ब्राह्मणानन्नसूक्तेन भोजयित्वा सपिंडैर्युक्तो भुञ्जीत ॥ ५ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण

श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने

तात्पर्यचिन्तामणौ चतुर्थप्रश्ने अष्टमः खण्डः ।

## अथ नवमः खण्डः

अथाश्वयुजी ॥ १ ॥

**आश्वयुज्यां पौर्णमास्यां गोष्ठेऽग्निं समाधाय आघारं जुहुयात् ॥ २**

अथ चैत्यनन्तारम्--आश्वयुजी-- अश्विनीनक्षत्रयुक्ता पौर्णमासी । 'पुष्य-युक्ता पौर्णमासी पौर्षमासी तु यत्र सा । नाम्ना स पौषो माघाद्यास्त्वेवमेकादशा-परे' इत्यमरः ।

स्मृतिः -- 'द्वे द्वे चित्रादितारााणां परिपूर्णेन्दुसंगमे ।
मासाश्चैत्रादिका ज्ञेयाः त्रिकैष्पष्ठान्त्यसप्तमाः ॥
अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया' ॥ इति

'ग्राम्यारण्याश्च जायन्ते पशवो यज्ञकारणात्' इति स्मृतेः 'रुद्रः पशूनामधिपतिः' इति श्रुतेश्च पश्वादिवृद्ध्यर्थं आश्वयुज्या यक्ष्ये इति संकल्प्य गोमयेनालंकृत्य स्थंडिलं कृत्वा औपासनाग्नावाघारं हुत्वा ।

**अग्नेः प्राच्यां भवं देवमावाह्याभ्यर्च्य तृणानि संभृत्य गाः स्थापयति ॥ ३ ॥**

**प्राच्यां** – स्थंडिले भवं देवमावाह्य ।

**'भवाय' इति स्थाल्यां निर्वाप्य श्रपणं कृत्वा अग्नौ परिषेकं कुर्यात् ॥ ४ ॥**

**निर्वाप्य** – 'भवाय (देवाय) जुष्टं निर्वपामी'ति निर्वापः ।

**'भवाय – शर्वाय – ईशानाय – पशुपतये – उग्राय – रुद्राय – भीमाय – महादेवाय स्वाहा' इति, 'रुद्रमन्यं, त्र्यंबक'मित्याज्य-होमान्ते मेक्षणेन चरुमवदाय अभिघार्यावदानं संगृह्य पूर्ववत् जुहुयात् ॥ ५ ॥**

सपिंडीकरणश्राद्धमकृत्वा शुभकर्मकृत् ।
ध्रुवमाप्नोति नरकं सपिंडानां मृतौ क्रमात् ॥
द्वादशाहे त्रिपक्षे वा यदाऽर्वाक् वृद्धिरापतेत्' ॥ इति

भविष्यत्पुराणे — 'द्वादशेऽहनि पक्षे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासे मंगले समुपस्थिते' ॥ इति

स्मृत्यन्तरे — 'एकादशाहमारभ्य यावदाषोडशाह्निनात् ।
सपिंडीकरणं कुर्यात्ततः सप्तदशेऽहनि ॥

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासके ।
षष्ठे वैकादशेऽब्दे वा संपूर्णे वा शुभागमने ।
सपिंडीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः' ॥ इति

कात्यायनः — 'अन्तरेणैव यो वृद्धिं मासिकान्यपकर्षति ।
स श्राद्धी नरके घोरे पितृभिस्सह मज्जति ॥

अकृते प्रेतसंस्कारे न कुर्यादात्मनश्शुभम् ।
कुर्याच्चेदशुभं कर्म मुख्यकर्तुश्च सन्निधौ ॥

वंशजानामसंस्कारे सूतकन्तु कथं भवेत् ।
दशाहात्परतः शुद्धिः ज्ञातीनाञ्च विशेषतः ॥

सपिंडीकरणात्पूर्वं मसिकानि कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते' ॥ इति

स्मृत्यन्तरे — 'सपिंडीकरणं कुर्यात् पित्रोरेको हि यस्सुतः ।
आस्थिरत्वाच्छारीरस्य द्वादशाहः प्रशस्यते ॥

एकः पुत्रोऽग्निमांश्चैव कुर्वीत द्वादशेऽहनि ।
सपिंडीकरणश्राद्धं तयोरेक इति स्थितिः ॥

## अथ दशमः खण्डः

**अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा सर्वदेवार्चा भवति ॥ १**

'विष्लृ – व्याप्तौ' विति धातोर्विष्णुशब्द उत्पाद्यते। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतिभ्यश्च सर्वव्यापिनो विष्णोः जगज्जन्मादिकारणस्य समस्तकल्याणगुणाकरस्य अवाप्तसमस्तकामस्य **नित्यार्चनं** प्रतिदिनं सायंप्रातरर्चनं **सर्वदेवार्चनं** भवति। 'नारायणपरं ब्रह्म' 'ब्रह्म देवानजनयत्' 'ब्रह्म विश्वमिदं जगत्' इत्यादिश्रुतयश्चात्रानुसन्धेयाः।

**'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः' इति ब्राह्मणम् ॥ २ ॥**

**अग्निर्वै** इत्यादि। पारमात्मिकोपनिषदि च – 'विष्णुस्सर्वेषामधिपति' रिति विष्णोस्सर्वदेवाधिपतित्वं श्रूयते। परो मा अस्येति व्युत्पन्नपरमशब्देन विष्णोः समाभ्यधिकराहित्यमुच्यते। तथोच्यते **श्वेताश्वतरे** – 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्' 'न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'सकारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाधिपः' 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः' इत्यादि। विष्णो रर्चनञ्च 'प्रवः पान्तमन्धसो धियायते महेशूराय विष्णवे चार्चते' त्यादि श्रुतिभ्यः विधीयते। अर्चनप्रकारश्च 'स वा एष पुरुषः पञ्चधा पञ्चात्मा' इति वितन्यते। अस्य वैखानसस्य अर्चनस्यैव परमवैदिकत्वज्ञापनार्थं मूर्तिभेदेन पञ्चधा श्रूयमाणस्य श्रुतिसिद्धस्य विष्णोरेवार्चनं प्रतिपाद्यते। प्राधान्येन व्यूहविभवादीनां मूलभूतत्वाद्विष्णोः तच्छब्देनैवात्र प्रतिपादनं युक्तम्। अनेन तान्त्रिकक्रमः व्युदस्यते। 'हृत्पुंडरीकमुकुलमुद्धृत्य प्रणवेन तु' इत्याद्युक्तान्तर्यागापेक्षया —

'चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च।
प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरिः' ॥

'एषा तु मानसी पूजा बेरपूजा विशिष्यते' ॥

इत्यादिवचनैः समूर्तार्चनं प्रस्तूयते ।

'गृहं श्मशानं तव बिंबवर्जितं
कथाविहीनाश्च गिरश्शिवारुताः ।
श्वसन् शवो दास्यकृतं विना वपुः
वदन्ति हि त्वय्यनिवेदितं विषम्' ॥

इत्यादिभिर्वचनैः भगवदर्चनरहितत्वे गुरुतरदोषश्च स्मर्यते । विष्णोः बिंब-क्लृप्तिप्रकारः श्रूयते यजुषि – 'यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः' इति । तापनीयोपनिषदि श्रुतेरस्या अर्थः व्याख्यातः । श्रुत्यर्थश्चेत्थम् । वीरशब्देन नृसिंहः प्रतिपाद्यते । **यतो** यस्मात् हिरण्यकशिपुसंहारकारणात् **वीरः** महाविष्णुः **कर्मण्यः** कर्माराध्यः । यद्वा – हिरण्यवधादिकर्मकृत् सुदक्षः सुतरां कर्मफलप्रदाने समर्थः **देवकामः** अखिललोकोज्जीवनार्थमर्चावतारादिषु स्वसमाराधनापेक्षया देवतात्वकामः । **युक्तग्रावा** श्रीवैखानसभगवच्छास्त्रशिल्पादि शास्त्राद्युक्तवत् शिलारूपी **जायते** । **देवकामः** लीलाविभूतौ क्रीडाकामः इति वा ।

भारते – 'सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥
तामर्चयेत् तां प्रणमेत् तां जपेत् तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्' ॥ इति

**तस्मात् गृहे परमं विष्णुं प्रतिष्ठाप्य सायं प्रातर्होमान्तेऽर्चयति ॥ ३**

**षडंगुलादहीनं तद्रूपं कल्पयित्वा पूर्वपक्षे पुण्ये नक्षत्रे प्रतिष्ठां कुर्यात् ॥ ४ ॥**

बिम्बनिर्माणप्रकारमाह **षडंगुलादि**त्यादिना । विस्तरस्तु मरीच्यादि-संहितासु द्रष्टव्यः । **यथा** —

भृगुप्रोक्ते — यज्ञाधिकारे: —

'अत ऊर्ध्वं प्रवक्ष्यामि अंगुलैर्मानलक्षणम् ।
मानांगुलमथो मात्रदेहलब्धांगुलं त्रिधा ॥

परमाणुभिरष्टाभिः रथरेणुस्तथैव च ।
रथरेण्वष्टगुणितं रोमाग्रञ्च तथैव च ॥

रोमाष्टगुणितं लिख्या यूकं लिख्याष्टकं तथा ।
यवं यूकाष्टगुणितमंगुलं स्याद्यवाष्टकम् ॥

मानांगुलं स्यात् तत्पश्चात् पुरुषस्य समस्य तु ।
मध्यांगुल्या मध्यपर्वविपुलं दीर्घमेव वा ॥
मात्रांगुलं तद्बेरस्य भागैर्जातन्तु तत्तु वा' ॥

इत्यंगुललक्षणम्,

'मानं प्रमाणमुन्मानं परिमाणोपमानकम् ।
लंबमानं तथा मानं लक्षयेत्संज्ञया तथा ॥

मानं तत् प्रतिमायामं प्रमाणं तिर्यगीरितम् ।
घनं बहुलनीव्रं स्यात् उन्मानेन च दृश्यते ॥

उन्मानं तत् प्रदेशोच्चं इष्टमुन्नतवेशनम् ।
परिमाणमिति प्रोक्तं परिमाणञ्च नाहकम् ॥

ह्यन्तरं ह्युपमानं हि नीतेह्युपरमं तलम् ।
लंबमानञ्च सूत्रस्य प्रतिमामेव कथ्यते' (१) ॥

इति षण्मानलक्षणम्,

'तालसंज्ञां क्रमाद्वक्ष्ये धर्माद्यं चांबरान्तकम् ।
उत्तमं दशतालेन ब्रह्मविष्णुमहेश्वरान् ॥

श्रियं भूमिमुमां वाणीं दशतालेन मध्यमम् ।
इन्द्रार्कचन्द्ररुद्राद्या मुनयो वसवोऽश्विनौ ॥

वीशशैपिकदुर्गाश्च ऋषयोऽथ गुहस्तथा ।
हीनेन दशतालेन कार्या अन्ये च पार्षदाः ॥

नवार्धतालमानेन यक्षेशश्च ग्रहादयः ।
उत्तमं नवतालेन सिद्धविद्याधरादयः ॥

मनुष्या अष्टतालेन प्रेताद्या रससंख्यया ।
सप्ततालेन वेताला पञ्चतालेन कुब्जकाः ॥

वामनाश्च चतुस्तालैः त्रितालेनैव किन्नकराः ।
कूश्मांडास्तु द्वितालेन कबन्धाश्चैककेन च ॥

प्रत्येकमेवमेतेषां त्रिधा स्यादुत्तमक्रमः ।
सविंशतिशतांगुल्यं मध्यमञ्चेति कीर्त्यते ॥

कलाधिकशतांगुल्यमधमं परिपठ्यते ।
यवेन च तिलेनैव मितमेतद्गृहार्चने ॥

.... .... गृहार्चानां प्रतिमानां तु नान्यथा ।
बिंबमानञ्च गर्भञ्च द्वाराधिष्ठानपादकम् ॥

हस्तमानञ्च तालञ्च यजमानोदयेन च ।
मूलबेरांगुलं मानं मानं मात्रांगुलं तथा ॥

मानन्तु रुद्रभेदं स्यात् तद्भेदं बहुधा भवेत् ।
यजमानसमोत्तुंगं नेत्रान्तं चास्यसीमकम् ॥

हन्वन्तं बाहुसीमान्तं स्तनान्तं हृदयान्तकम् ।
सप्तमानमिदं ज्ञेयं यजमानवशादिह' ॥

'यन्मूलबेरादुरुमानमात्रप्रमाणमुक्तं प्रतिमादितुंगम् ।
तत्संख्यया चायशुभादियोगं विधेयमार्यैः प्रतिमाविधाने ॥

.... .... .... .... .... .... ।
तदुत्सेधं पंक्तिपंक्त्या भजेत्पञ्चषडादिकम् ॥

भागैकं वर्धयेद्यावत् शुभायादिकसंभवम् ।
तन्मानं देवमानं स्यात् पादादुष्णीषसीमकम्' ॥

तेजोष्टनन्दवसुनन्दचतुर्विवृद्ध्या
हृत्वाऽष्टभं मुनिदिनेशवसुप्रवेशैः ।
शिष्टञ्च योनिदिनवारदिनव्ययाभं
केत्वश्विभानुबहुलाघवतस्कराद्याः ॥

'ध्वजहरिवृषभेभाः योनयस्ते शुभाः स्युः
जननयुगलवेधस्त्वष्टनन्दाः शुभर्क्षाः ।
सितगुरुशशिबुधानां वारमुख्यांशकाख्या
द्वियव (?) शुभं स्यात् कर्तृजन्मादिसंख्या' ॥

'सूर्यवारादिसंयुक्तं विशाखादि चतुश्चतुः ।
वियोगं मरणं नाशममृतं योगमिष्यते ॥

गणं त्वसुरमानुष्यं वर्जयेच्छुभमन्यथा ।
एवं हि शोभनार्थन्तु आयर्क्षेशान् सुयोजयेत् ॥

वसुभानुस्तदादायं नन्दनाडी व्ययं भवेत् ।
गणं नागञ्च योनिस्स्यात् वसुभं ऋक्षमेव च ॥

नन्द सप्त च वारः स्यात् वेदनन्दांशमंशकम् ।
ध्वजो धूमोऽथ सिंहश्च श्वा वृषो गर्दभो गजः ॥

काकश्चेत्यष्ट योनिः स्यात् ध्वजाद्याश्च शुभा मताः ।
तस्करो भुक्तिशक्ती च वित्तञ्चावनिपालकः ॥

क्लीबो भीतिर्दरिद्रश्च प्रेष्य इत्यंशका नव ।
यन्मानैर्जातनक्षत्रं यत्फलं वृद्धिदन्तु तत् ॥

चतुर्भिः क्षपयेच्छेषं भांशकं तत्प्रकीर्तितम् ।
तत्फलं दशतैर्वृद्धि (?) वयस्तत्तु प्रकीर्तितम्' ॥

इति आयादिकञ्च ज्ञेयम् ।

तत्रैव–प्रकीर्णे:—'अथ वक्ष्ये विशेषेण बेरलक्षणमुत्तमम् ।
शैलजं रत्नजञ्चैव धातुजं दारवं तथा ॥

मृण्मयं स्यात्तथैवेत्थं पञ्चधा बेरमुच्यते ।
चतुर्विधन्तु शैलं स्यात् सप्तधा रत्नजं तथा ॥

अष्टधा धातुजं प्रोक्तं दारुजं षोडशोच्यते ।
मृण्मयं द्विविधं प्रोक्तं क्रमाल्लक्षणमुच्यते ॥

श्वेतं रक्तं तथा पीतं कृष्णञ्चैव चतुष्टयम् ।
शैलजं बेरमाख्यातं तस्य लक्षणमुच्यते ॥

गोक्षीराभनिभा चैव शंखकुन्देन्दुसन्निभा ।
शिला श्वेता समाख्याता सा तु वश्य (साऽपवर्ग)प्रदायिका ॥

जपाकुसुमसंकाशा शिला शोणितसन्निभा ।
बन्धूकपुष्पप्रतिमा जातिहिंगुलिकोपमा ॥

शिला रक्ता समाख्याता जयदा लक्षणान्विता ।
पीता सुवर्णसदृशा रजनीचूर्णसन्निभा ॥

शिला लक्षणसंयुक्ता धनधान्यसुखप्रदा ।
माषगुग्गुलसंकाशा तथा जंबूफलोपमा ॥

भृंगमुद्गसमाकारा प्रजावृद्धिकरा स्मृता ।
शिला कृष्णा च सर्वेषां सर्वसिद्धिप्रदायिका ॥

विप्रक्षत्रियवैश्यानां शूद्राणाञ्च यथाविधि ।
श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ॥

द्विजानाञ्च त्रिवर्णानां शिला रक्ता जयप्रदा ।
श्वेता मोक्षप्रदा प्रोक्ता ब्राह्मणानां विशेषतः ॥

एतैस्तु ध्रुवबेरन्तु कारयेद्यदि भक्तितः ।
माणिक्यञ्च प्रवालञ्च वैदूर्यं स्फाटिकं तथा ॥

मरकतं प्रवालञ्च नीलञ्चैते तु रत्नजाः ।
माणिक्यं श्रीप्रदं प्रोक्तं प्रवालं वश्यकारकम् ॥

आकर्षकन्तु वैदूर्यं स्फाटिकं पुत्रवृद्धिदम् ।
विद्वेषणं मरकतं स्तंभनं पुष्यरागकम् ॥

नीलन्तु रमणैः? कार्यं रत्नजानां फलं भवेत् ।
एतेषां कौतुकं कुर्यादन्येषां न विधीयते ॥

हैमं रौप्यं तथा ताम्रं कांस्यञ्चैवारकूटकम् ।
आयसं सीसकञ्चैव त्रपु चेति च धातुजम् ॥

हैमन्तु श्रीप्रदं प्रोक्तं रौप्यं राज्यप्रदायकम् ।
ताम्रं पुत्रसमृद्ध्यर्थं कांस्यं विद्वेषकारकम् ॥

प्रोच्चाटने चारकूटमायसं क्षयकारणम् ।
सीसं नीरोगकरणं त्रपुरायुर्विनाशनम् ॥

एवन्तु धातुजस्योक्तं ततो दारुजमुच्यते ।
देवदारुः शमीवृक्षः पिप्पलं चन्दनं तथा ॥

असनं खदिरञ्चैव वकुलं शंकिका तथा ।
मायूरपद्मबन्धूकाः कर्णिकारस्तथैव च ॥

तिन्दुकाजनिकश्चैव प्लक्षमौदुंबरं तथा ।
.... .... .... .... .... .... ॥
एते वर्ज्याश्च चत्वारो द्विजातिक्रमयोगतः ॥

मृण्मयं द्विविधं प्रोक्तं पक्वापक्वं तथैव च ।
पक्वं नाशकरञ्चैव अपक्वं सर्वसिद्धिदम् ॥ इति

बेरलक्षणम् । तत्रैव शिलासङ्ग्रहणप्रकारः —

शिलां प्राप्य शुभस्थाने वास्तुहोमं समाचरेत् ।
वैष्णवं पौरुषं सूक्तं श्रीभूसूक्तं तथैव च ॥

परिषेकं ततः कृत्वा कलशान् पञ्च विन्यसेत् ।
मृद्गन्धाक्षतजप्याश्च सर्वौषध्युदकं तथा ॥

संस्थाप्याभ्यर्च्य पाद्याद्यैः तत्तद्देवान् समर्चयेत् ।
अभिषिच्य शिलां तत्र मुहूर्ते करणान्विते ॥

अतो देवादिमन्त्रेण शिलां छित्वा विचक्षणः ।
अधोभागं मुखं तत्र शिर ऊर्ध्वं प्रकल्पयेत् ॥

मुखं पृष्ठं तथा पादं पार्श्वञ्चैव शिरस्तथा ।
लाञ्छयित्वा विधानेन ततस्तक्षणमाचरेत् ॥

बाला च युवती वृद्धा ज्ञातव्या लक्षणैस्तथा ।
स्निग्धा मृदुतला चैव बाला क्षीरस्वरा तथा ॥

सुस्वरा कान्तिसंयुक्ता युवती सा शिला स्मृता ।
अस्निग्धा झेरारूक्षा वृद्धा सा निस्स्वरा शिला ॥

बाला क्षयप्रदा प्रोक्ता युवती सर्वसिद्धिदा ।
कार्यनाशकरी वृद्धा ग्राह्या ज्ञात्वा शिला तथा ॥

असिना तक्षणं कृत्वा शिलादोषांस्तु लक्षयेत् ।
शिलां प्रलिप्य क्षीरेण सर्पिषा सीसगैरिकैः ॥

एकरात्रोषितशिलां संप्रक्षाल्यांभसा ततः ।
शिलादोषं परीक्ष्यैव कर्तव्यं विधिचोदितम् ॥

रेखाबिन्दुकलङ्कास्तु शिलादोषाः प्रकीर्तिताः ।
मंडलन्तु भवेद्यत्र तत्र गर्भं विनिर्दिशेत् ॥

सिते तु मंडले सर्पः रक्ते तु कृकलासिका ।
पीते तु मंडले गोधा मंजिष्ठे दर्दुरो भवेत् ॥

कपिले मूषिकः प्रोक्तोऽसिते वर्णे तु वृश्चिकः ।
श्वेतरक्तविमिश्रे तु वृश्चिकः श्वेतरक्तकः ॥

रक्तमिश्रे तु मण्डूक .... .... मंडले भवेत् ।
सिंदूरवर्णे खद्योतः कापोते गृहगोलिका ॥
गुलवर्णे तु पाषाणं निस्स्वशोभे जलं भवेत् ।
वर्जयेद्गर्भसंयुक्तां त्रिमलैरङ्कितां तथा ॥
विमलं हेमकांस्याख्यं लौहाख्यञ्च त्रिधा स्मृतम् ।
परीक्ष्यैवं प्रकर्तव्यमेवमेव प्रमाणतः' ॥ इति

वासाधिकारे:— 'अथ वक्ष्ये विशेषेण शिलासंग्रहलक्षणम् ।
भूमिजा वारिजा चैव गिरिजा च त्रिधा भवेत् ॥
ऊर्ध्वभागं मुखं प्रोक्तं अन्यत्रैवापरं स्मृतम् ।
स्त्रीपुंनपुंसकमिति ज्ञातव्यं तत्त्रिधा भवेत् ॥
प्रासादकुड्यप्राकारगोपुराद्यादिचार्थक कृतम् (?) ।
नपुंसकेन कर्तव्यमिति शास्त्रस्य निश्चयः ॥
प्रभापीठादिकं देव्यः कुर्यात् स्त्रीशिलया तथा ।
विष्णुरूपाणि सर्वाणि कुर्यात्पुंशिलया सदा ॥
अन्योन्यसंकरे चैव महान् दोषो भवेद्बुधाः ।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तं तत्र कारयेत्' ॥ इति

खिले:— 'अत ऊर्ध्वं प्रवक्ष्यामि शिलासंग्रहणे विधिम्' ॥ इत्यारभ्य
'हेमकूटश्च निषधो हिमवान् नीलपर्वतः ।
मन्दरो माल्यवांश्चैव त्रिकूटो मलयाचलः ॥
गन्धमादनमेरुश्च दशैते पर्वताः स्मृताः ।
एतेषु प्रतिमा ग्राह्याः प्रशस्ताः परिकीर्तिताः ॥
सह्यविंध्यमहेन्द्राश्च कैलासश्च तथैव च ।
किष्किन्धश्च तथा पञ्च प्रशस्ता गिरयः स्मृताः ॥
शेषाः शैला इति प्रोक्ताः प्रतिमास्तेषु कारयेत् ।
विशेषेण तु कर्तव्याः प्रतिमा भूगताश्मना ॥

गिरिजा भूमिजा चैव वारिजा च त्रिधा शिलाः ।
भूमिजानान्तु सर्वासामधस्तान्मुखमुच्यते ॥

पर्वतोपरि जातानां मुखमूर्ध्वमुदाहृतम् ।
तत्पार्श्वे तु प्रजातानां तन्मुखं मुखमुच्यते ॥

पादेषु तस्य जातानां पर्वतप्रेक्षणं मुखम् ।
समुद्रान्तर्निविष्टानां मुखमूर्ध्वमुदाहृतम् ॥

पाषाणानां नदीजानां जलागमनतो मुखम् ।
यतोऽस्ति गौरवं तत्र ततः शिर उदाहृतम् ॥

साकृतीनां शिलानान्तु तदाकृतिरथशिरः ।
पूर्वग्रीवा तु जयदा शान्तिदा दक्षिणाऽनना ॥

श्रीकरा पश्चिमग्रीवा शुभदा चोत्तरानना ।
कोणन्तु वर्जयेत्तत्र शिलासंग्रहणे सदा ॥

उत्तमा भूमिजा प्रोक्ता मध्यमा गिरिजा स्मृता ।
अधमा वारिजा प्रोक्ता इति शास्त्रस्य निश्चयः ॥

स्त्रीपुंनपुंसभेदेन त्रिविधा तु शिला भवेत् ।
विशालां वर्णबहुलां स्त्रियं विद्याच्च तां शिलाम् ॥

एकवर्णां गुरुस्निग्धां विचरैः ग्रन्थिभिर्विना ।
व्यक्तशब्दां घनाश्चैव तां विद्यात्पुंशिलामिति ॥

शरावोदकसंरावां कृशां विद्यान्नपुंसकम् ।
नदीतीरे ह्रदतटे लवणोदाप्लुते स्थले ॥

ग्राममध्ये श्मशाने च शिला याश्च चतुष्पथे ।
अमेध्यभूमिगाश्चापि वर्जनीयाः शिलास्स्मृताः ॥

प्रायशो विल्ववृक्षाश्च यत्र व्याघ्राहिसूकराः ।
सन्ति यस्मिन् वने तत्र न ग्राह्यास्तु शिलाः स्मृताः ॥

वल्मीकसंकटे देशे ऊषरेषु च गर्हिताः ।
पतंगकृमिकीटानामावासाश्चैव गर्हिताः ॥

वायुसूर्याग्निनिर्दग्धाः किरातगणदूषिताः ।
एताः शिला वर्जनीया ग्राह्याश्च शृणुत द्विजाः ॥

सुपुष्टजलसंकीर्णा उदकाशयसंवृता ।
वारुणी सा शिला ज्ञेया प्रतिमा स्याच्च वारुणी ॥

निर्मिता शान्तिदा चापि भवेत् सा शुभदायिनी ।
उत्तरे तोयसंवीता पश्चिमे क्षीरवृक्षयुक् ॥

व्रीहिपाकवृताऽवाच्यां सतृणा पूर्वभागतः ।
तादृशी तु शिला ग्राह्या प्रतिमाकरणे शुभा ॥

माहेन्द्री प्रतिमा सा तु पुष्टिदा राज्यभोगदा ।
पलाशाः खदिराः प्लक्षा आग्नेय्यां दिशमागताः ॥

तित्तिराश्च कपोताश्च गृध्राश्चैवामिषाशनाः ।
भ्रमराश्च मयूराश्च दृश्यन्ते यत्र सन्ततम् ॥

तोयमन्तर्गतं स्तोकं तामाग्नेयीं विनिर्दिशेत् ।
आग्नेयी प्रतिमा प्रोक्ता आयुरारोग्यपुष्टिदा ॥

पीलु श्लेष्मातकाकीर्णा बिभीतकवृता च भूः ।
महावृक्षाश्च परितः पक्षिणो मृगतृष्णिकाः ॥

भारुंडाश्चैव दृश्यन्ते पांसुकूलकमाश्रिताः ।
सृगालाश्चैव दृश्यन्ते तथैव मृगपक्षिणः ॥

अन्यैश्च बहुभिर्वृक्षैः जीमूतादिभिरावृता ।
भूमिरसा वायवी प्रोक्ता हेया तत्र शिला मता ॥

गृह्यते यदि सा तत्र कर्तुः स्यादाभिचारिकम् ।
भयदा द्वेषदा चैव तस्मात्तां परिवर्जयेत् ॥

ब्राह्मणस्य भवेच्छुक्ला रक्ता भूः क्षत्रियस्य तु ।
वैश्यस्य पीता भूमिस्तु कृष्णा शूद्रस्य कीर्त्यते ॥

तद्भूमिजा च तद्वर्णा वर्णानां प्रतिमा स्मृता ।
कुन्देन्दुक्षीरसदृशी शंखमुक्तानिभा तथा ॥

ताराभा स्फटिकाभा च श्वेतपद्मदलप्रभा ।
कुमुदाभा च या सा तु मृणालीसदृशप्रभा ॥

ब्राह्मणस्य समाख्याता प्रतिमा वर्णतः शुभा ।
वारुणी प्रतिमा नाम सर्वकामसुखप्रदा ॥

एतेषु वर्णेषूक्तेषु शुक्लो विप्रस्य चोत्तमः ।
मध्यमौ मध्यमः प्रोक्तः कृष्णस्त्वधम उच्यते ॥

फलञ्च तद्वदेव स्यात् उत्तमे मध्यमेऽधमे ।
येन वर्णेन देवेशः कृतो यत्र भवेत्ततः ॥

जनस्तद्वर्णयुक्तस्तु वर्धते नात्र संशयः ।
वैदूर्यपद्मरागाभा रक्तोत्पलदलप्रभा ॥

अब्जकुन्दुरुसंकाशा सिंदूरसदृशी तथा ।
दाडिमीपुष्पसदृशी कुसुंभसदृशप्रभा ॥

एषा च रक्ता रक्ताभा क्षत्रिया वर्णतः स्मृता ।
माहेन्द्री नाम विज्ञेया नृपाणां प्रतिमोत्तमा ॥

पुष्यरागप्रभा चैव तथा मरकतप्रभा ।
हरिद्रा पीतवर्णाभा रोचनाभा तथैव च ॥

एषा पीता च पीताभा हारिद्रा वर्णतः स्मृता ।
आग्नेयी सा समुद्दिष्टा वैश्यानान्तु सुखप्रदा ॥

कृष्णा माषाञ्जननिभा नीला श्यामा तथैव च ।
कृष्णा रूक्षप्रभा चैव वायवीं तां विदुर्बुधाः ॥

कृष्णाभा कृष्णवर्णा च विज्ञेया शूद्रजातिषु ।
लक्षणेन सुसंपूर्णा स्निग्धाञ्जनचयोपमा ॥

रक्तैश्च बिन्दुभिः कीर्णा विस्फुलिंगावृता तथा ।
बिन्दुभिर्विनिकीर्णा च शुक्लपीतप्रभा तथा ॥

एवंभूता तु प्रतिमा सर्वलोकशुभप्रदा ।
विस्फुलिंगा च रक्ता च क्षत्रियाणां जयप्रदा ॥

स्फोटाश्च बिन्दवो निम्नाः सर्वदोषविगर्हिताः ।
सिरायान्तु स्वयं नश्येत् विवरे पुत्रनाशनम् ॥

स्वजनो वर्तुले नश्येत् स्थापको ग्रन्थिभिस्तथा ।
स्फोटे हन्यात्तु कर्तारं निम्ने हन्यान्नराधिपम्' ॥ इति

शिल्पे 'श्वेता रक्ता च पीता च कृष्णा चैव चतुर्विधा ।
गोक्षीरशंखकुन्देन्दुमुक्तास्फटिकसन्निभा ॥

मल्लिकाकुसुमप्रख्या श्वेता सप्तविधा भवेत् ।
जपाकुसुमसंकाशा इन्द्रकोपसमप्रभा ॥

जातिहिंगुलिकाकारा शशरक्तसमप्रभा ।
दाडिमीपुष्पसंकाशा बन्धूककुसुमप्रभा ॥

रक्ता सप्तविधा ज्ञेया जयदा लक्षणान्विता ।
सुवर्णसदृशाकारा वर्षती (?) पुष्पसन्निभा ॥

असनीपुष्पसंकाशा हरिद्रस्य तु वर्णवत् ।
कूष्माण्डकुसुमप्रख्या कोरण्टकुसुमप्रभा ॥

आरग्वधसदृक्षा च पीता सिद्धा च सप्तधा ।
महिषाक्षाऽञ्जनाभा च नीलोत्पलसमप्रभा ॥

भृंगमायूरकृष्णा च माषमाहिषवर्णवत् ।
राजावर्तनिभाकारा कृष्णमृत्स्नासमप्रभा ॥

.... .... गसमाभासा कृष्णशैला दश स्मृताः ।
श्वेता रक्ता च पीता च विप्रादीनां क्रमात्तथा ॥

सर्वकामार्थमोक्षांश्च दद्यात् सततमेव च ।
परेषां वा .... .... .... .... .... ॥

प्रतिलोमानुलोमानां निजयोग्यन्तु गृह्यताम् ।
आचार्यः शिल्पिभिश्चैव श्वेतवस्त्रधरावुभौ ॥

शुक्लमाल्यानुलिप्तांगौ पञ्चांगाभरणान्वितौ ।
.... .... .... .... .... .... ॥

वातातपाग्निदग्धञ्चेत् संकीर्य क्षीरवारिणा ।
... .... .... .... .... .... ॥

दुर्देशस्थं तथा चैव कर्मान्तरनियोजितम् ।
शर्कराढ्यञ्च वक्रञ्च व्यंजिरं (?) कृष्णसन्निभम् ॥

रेखाबिन्दुकलंकादिदोषयुक्तञ्च वर्जयेत् ।
सूत्रपादवदाकारा रविरश्मिसमन्विता ॥

वर्षपातवदाकारा रेखा वै त्रिविधा स्मृता ।
जंबूफलसमाकारा धाराक्षसदृशोपमा ॥

अन्यत्म्रा .... .... त्रिविधो बिन्दुरुच्यते ।
कृष्णलोहसमाकारा कृष्णभूल्याससन्निभा? ॥

शिखिपिंछनिभाकाराः कलंकाश्च चतुर्विधाः ।
खर्जूरपत्रसंकाशा दूर्वास्तंत्रनिभान्विताः ॥

.... .... .... संभूतपादवदायता ।
इक्षोरग्रसमाकारा रेखाः पञ्चविधाः स्मृताः ॥

शंखाभं हेमसदृशं काचलोहसमप्रभम् ।
दरिरूपाल्लिया प्रोक्ताः सर्वदोषभयावहाः ॥

कृष्णा शिला परिग्राह्या सर्वसंपत्समृद्धिदा ।
कृष्णा कष्टविनाशाय श्वेतकृष्णा तथैव च ॥

तस्मात्सर्वप्रयत्नेनान्यतरा परिगृह्यताम् ।
प्रतिमा कृष्णशैली तु सितवर्णा विशेषतः ॥

श्यामला नीलवर्णा च दूर्वास्तंबाकृतिः शुभा ।
अन्याकृत्यशुभा ख्याता गोधान्यधननाशकृत् ॥

कलंकं रोगदं ज्ञेयं त्रासं राष्ट्रविनाशनम् ।
बन्धुपुत्रविनाशः स्यात्तदतस्तां परिवर्जयेत् ॥

एवं परीक्ष्य बहुधा कारयेल्लक्षणान्वितम् ।
बाला च युवतिर्वृद्धा पुंस्त्रीनापुंसकं तथा ॥

स्वरेणाकृतिभेदेन परिच्छेदविधिं शृणु ।
कंसध्वनिसमायुक्ता स्मृता बालशिला बुधैः ॥

पर्णध्वनिसमायुक्ता युवती सा प्रकीर्तिता ।
वृत्तध्वनिसमायुक्ता या सा वृद्धशिला स्मृता ॥

घनध्वनिसमायुक्ता दीर्घा सा पुंशिला स्मृता ।
बालशब्दसमायुक्ता स्त्री सा द्वादशकोणगा ॥

अस्निग्धा झर्झरा रूक्षा स्वरहीना नपुंसका ।
स्वरैरेवं समाख्यातमाकृत्या भेद उच्यते ॥

चतुरश्रा पञ्चाश्रं स्त्रीशिला परिकीर्तिता ।
दशद्वादशकोणा वा षोडशाश्रा समाश्रका ॥

पुंलिंगा सा समाख्याता वृत्ता सा स्यान्नपुंसका ।
दशाश्रां द्वादशांश्राश्च बालां वृद्धाश्च वर्जयेत्' ॥ इति

यज्ञाधिकारे — 'लौहबिंबनिर्माणमधिकृत्योच्यते —

'अत ऊर्ध्वं प्रवक्ष्यामि मधूच्छिष्टक्रियाविधिम् ।
अयने चोत्तरे श्रेष्ठमथवा दक्षिणे चरेत् ॥

कुंभकन्याकुलीरेषु धनुःकर्किरविं विना ।
मासानन्यान् समाहृत्य शुभमृक्षं तथा हरेत् ॥

यजमानगृहे वाऽथ आलये वा मनोरमे ।
अलंकृत्य वितानाद्यैः कुंडमौपासनं तथा ॥

कृत्वा चाग्निं प्रतिष्ठाप्य वैष्णवञ्च सुहूयताम् ।
विष्णुसूक्तञ्च हुत्वा तु ब्राह्मं रौद्रं तथैव च ॥

वीशशैषिकचक्राणां विघ्नेशस्य च हूयताम् ।
तस्याग्नेर्दक्षिणे कुर्यात् व्रीहिभिः स्थंडिलं तथा ॥

तस्योपरि तथा वस्त्रं समास्तीर्य यथा शुभम् ।
पश्चिमे चक्रमुद्दिश्य उत्तरे शैषिकस्य च ॥

प्राच्यां वीशेशकार्थञ्च विघ्नेशार्थञ्च दक्षिणे ।
चक्रस्य व्रीहिभिश्चाधः स्थंडिलान् कारयेद्बुधः ॥

स्थंडिलोपरि प्रागग्रं कूर्चान् विन्यस्य मन्त्रवित् ।
तथा जयादीनिन्द्रादीन् परितस्सम्यगर्च्चयेत् ॥

विघ्नेशं संप्रपूज्यैव हविर्भिस्सन्निवेदयेत् ।
शोधितं तन्मधूच्छिष्टमादाय प्रणवेन तु ॥

लोहपात्रेषु सन्न्यस्य स्थंडिलोपरि विन्यसेत् ।
'इषे' त्वेति च मन्त्रेण प्रधानांगं प्रकल्पयेत् ॥

अक्षराण्यपि विन्यस्य पुण्याहमपि वाचयेत् ।
मन्त्रमुच्चार्य समभ्यर्च्याभिमृश्य च ॥

वैष्णवञ्च ततो हुत्वा देवानन्यान् विसृज्य च ।
अग्निं विसृज्य पश्चात्तु यजमानस्य मूर्धनि ॥

आदाय शंखघोषैश्च सार्धं तत्कर्ममंडपे ।
सन्न्यस्य शिल्पिनं सम्यगभिपूज्य मनःप्रियम् ॥

अभ्यर्च्य स्थपतिं तत्र तस्मिन्नुपरि शास्त्रवित् ।
स्थपतिर्गुरुणा सार्धं कृत्वा तु प्रतिमां शुभाम् ।

शनैरालिप्य च मृदा संशोष्य बहिरातपे ।
पट्टैराबद्धय विधिना पुनरालिप्य शोष्य च ॥

यजमानानुकूलर्क्षे पूर्ववद्धोममाचरेत् ।
तथा लोहं समभ्यर्च्य लोहं पात्रेषु सन्न्यसेत् ॥

जलतुल्यक्रमाद्रात्रावग्निना पाचयेत्तदा ।
युक्त्या सिक्तश्च संस्राव्य तस्मिन् गर्भे प्रतापयेत् ॥

पुनस्सन्तप्तलोहेन अत्वरस्त्वभिपूरयेत् ।
ततः प्रभाते कर्ता च शिल्पी च गुरुणा सह ॥

शनैः मृद्भेदनं कृत्वा दोषान् सम्यक् परीक्षयेत् ।
खंडादिस्फुटितैः दोषैः दुष्टे सति पुनर्गुरुः ॥

आलोच्य दोषमल्पञ्च दूषितं लोहवच्चरेत् ।
पूर्ववद्धेरमाहृत्य यथापूर्वं तथा चरेत् ' ॥ इति

मानोपन्यासे यज्ञाधिकारे भृगुः —

'प्रलंबफलकां पश्चादुक्तवृक्षेण कारयेत् ।
संकल्प्य सुषिरं तद्वल्लंबमानं तथा चरेत् ॥

मध्यमध्यं पुरोमध्यं पृष्ठमध्यञ्च पार्श्वयोः ।
मध्यञ्च वक्रबाह्यञ्च .... .... .... ॥

बाह्यबाह्यञ्च पार्श्वाभ्यां सूत्राण्येकादश क्रमात् ।
मूर्ध्नि कंठास्ययोर्मध्ये वंशदंडस्य मध्यमे ॥

गुदमध्येक्षयोर्मध्ये मध्यमध्यं विधीयते ।
मध्ये शिखामणेर्मौलेः मूर्ध्नि भ्रूमध्यसंगमे ॥

नासिकायाश्च कंठस्य .... हृदयं ततः ।
कुक्षौ नाभौ तथा योनौ पार्श्वयोश्च प्रलंबयेत् ॥

पुरभ्रूस्पृशान्तं कुक्षिनासाग्रं पुरोमध्यं सुरोरुजम् (?) ।
पट्टान्तं त्रिकलं मौलिमध्यमं .... .... ॥

पञ्चांगुलं .... ..... गोलकं सयवं कला ।
सूत्रात्तु तनुमध्यं स्यात् सूत्राद्विकात्रिगोलकम् ॥

ऊर्वोर्मध्यं द्विमात्रं स्यात् .... द्वंद्वंभवेत् ।
नाभिमध्यं कलार्धं स्याद्योनिमूलं द्विमात्रकम् ॥

मध्यमोरुद्विमात्रं स्यात् जान्वन्तं गोलकत्रयम् ।
जंघा तु वसुमात्रं स्यात् .... .... भवेत् ॥

नलकासूत्रतः पूर्वेऽगुष्ठाग्रं द्व्यर्धमात्रकम् ।
पुरोमध्यात् पुरोमध्यं सन्तारं रुद्रमात्रकम् ॥

मौलिमूर्ध्नि कृकाटी च ककुद्वंशस्फिचोरपि ।
पाण्योश्च मध्यमे सूत्रं पृष्ठमध्यं प्रलंबयेत् ॥

मध्ये शिखामणौ मूर्ध्नि कर्णपाल्यन्तरे तथा ।
ग्रीवा संज्ञानजंघानां मध्ये गुल्फस्य मध्यमे ॥

लंबितव्यं तथा पार्श्वमध्यगुल्फचरैरजः ।
मुखपार्श्वे तथा गंड .... .... वसूर्षिके ॥

मंडलान्तप्रदेशे च मध्यं श्रोण्यन्तपार्श्वके ।
तथोरुजानुजंघानां मध्येंऽगुष्ठस्य बाह्यके ॥

लंबयेद्धक्त्रबाह्यं यत्कर्णबाह्यं तथैव च ।
तथा स्कन्धे चूचुकाग्रस्य मध्यमे ॥

पादमध्ये प्रदेशिन्यां मध्यमे तु प्रलंबयेत् ।
बाहुकोर्परयोः पार्श्वे बाहुपार्श्वे प्रलंबयेत् ॥

अथात ऊरुसूत्रं तच्छिखायां मणिमध्यमे ।
भ्रूसंगमस्य मध्ये तु नासाग्रस्य तु मध्यमे ॥
कंठे च हृदये कुक्षौ नाभौ योनौ च पादयोः ।
मध्ये प्रलंबयेत्सूत्रं कुक्षिनासाग्रसंस्पृशम् ॥
सूत्रमामौलिपट्टान्तं समयांगुलमीरितम् ।
हनुमध्यं यवाधिक्यमाश्रमं परिचक्षते ॥
हिक्कान्तं वेदमेवं स्यात् ऊर्वोर्मध्यं द्वियंगुलम् ।
नाभौ मनुयवं प्रोक्तं योनिमूलं द्वियंगुलम् ॥
ऊरुमध्यमवर्गं स्यात् जान्वन्तरषडंगुलम् ।
जंघान्तरन्तु नागाश्च नलकापूर्वतः क्रमात् ॥
सार्धाष्टांगुलमेवं स्यात् अंगुष्ठाग्रात्पुरो बुधः ।
तद्द्व्यर्धांगुलमेवं स्यात् मध्यसूत्रं प्रलंबयेत् ॥
बाह्वोः पर्यन्तमेवं स्यात् पार्श्वसूत्रं प्रलंबयेत् ।
बाहुकोर्परयोः पार्श्वे तच्चूडामणिमध्यमे ॥
मूर्ध्नस्तु कर्णपाल्यौ च ग्रीवाजानु च जंघयोः ।
गुल्फाच्च मध्यमे चैव मतिमान् संप्रलंबयेत् ॥
मौलिमूर्धकृकाटी च ककुद्वंशस्तथैव च ।
स्फिक्पार्ष्णिपृष्ठमध्ये च परसूत्रं प्रलंबयेत् ॥
शिरःपार्श्वे वक्त्रबाह्ये गुदबाह्ये च चूचुके ।
श्रोण्यूरुजानुजंघानां मध्यसूत्रं प्रलंबयेत् ॥
तेषां पद्मादिपीठे तु लंबान्यन्यानि तत्र वै ।
तत्तदंगञ्च संस्पृश्य युक्त्या चैवं प्रकल्पयेत् ॥
आसने तूर्ध्वकाये च षट्सूत्रं मध्यमादिकम् ।
लंबयेदासनस्योर्ध्वे सर्वं पूर्ववदाचरेत् ॥

सूत्रान्ताद्वामजान्वन्तं ऊर्ध्वकायार्धसम्मतम् ।
तदेव दक्षिणं जानुहीनान्त्यांगुलमेव च ॥

अन्यदत्राप्यनुक्तं तत्सर्वं मानाधिकारवत् ।
तथैव कारयेद्विद्वान् भावं तच्छुभदर्शनम् ॥

मूर्ध्नः पार्श्वे वामनेत्रे सिते वामपुटेऽधरे ।
हनौ सव्यस्तनोरंसे (?) पार्श्वे नाभेश्च दक्षिणे ॥

वामोरुपार्श्वे वामांघ्रिपार्ष्णिपार्श्वे प्रलंबयेत् ।
आभंगसूत्रमित्युक्तं समभंगस्य चोच्यते ॥

मुखे पूर्ववदुद्दिष्ट स्तनपीठस्य वामके ।
नाभ्यूरुमध्यमे पार्ष्णिमध्यमे च प्रलंबयेत् ॥

नाभिवामेऽथ वामोरुमध्ये पार्ष्ण्यन्तरे तथा ।
लंबयेदतिभंगस्य शेषं पूर्ववदेव हि ॥

सूत्रात् स्तनं त्रिमात्रं स्यात् सूत्रान्नाभिर्द्व्यंगुलम् ।
सूत्रान्मात्राधिकं जानु वि........ दतिभंगके ॥

वाममन्यत्र कर्तव्यं सूत्रान् विप्रस्य मुक्तितः ।
पीतांबरं तथा धाम्नांबरं चित्रांबरं तथा ॥

दुकूलांबरमित्येव चत्वारो वांबराणि च ।
पीतांबरं जपाकारं .... धामांबरं .... ॥
.... सपुष्पविचित्रं नानावर्णं दुकूलकम् ॥

इत्यादिना रूपकल्पनप्रकारः संग्रहेणोक्तः ।

**पूर्वपक्षे** इत्यादि ।

मासे तु फाल्गुने चैत्रे ज्येष्ठे वैशाखतैष्ययोः ।
उत्तमं श्रावणे मध्यं कार्तिकाश्वयुजोरपि ॥

अधमं भाद्रपादे स्यात् इतरेषु बलं यदि ।
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा ॥

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः ।
शुक्लपक्षे तथा कृष्णे त्रिभागं त्र्यंशकं विना ॥

रेवतीरोहिणीतिष्यशुभर्क्षेषु तथैव च ।
चित्राश्विनीशतभिषक्पुनर्वस्वैन्दवादिषु ॥

कृत्तिका नवमी शस्ता दुर्गायाः कार्तिकेऽपि च ।
प्रतिष्ठा भास्वतः शस्ता रवौ सिंहगते तथा ॥

फाल्गुनोत्तरफल्गुन्यां श्रीप्रतिष्ठा प्रशस्यते ।
तथा श्रीभूप्रतिष्ठाया माघमासश्च शस्यते ॥

श्रवणश्चाश्वयुङ्मासि मत्स्यादिस्थापनाविधौ ।
अनन्धकाणनक्षत्रे काणे चापि शुभोज्ज्वले ॥

त्रिजन्मसु प्रतिष्ठा स्याच्छुभा च प्रोच्यते बुधैः ।
बुधवारांशकादींस्तु प्रशंसन्ति विशेषतः ॥

आद्यषष्ठ्यष्टमीपर्वरिक्तारिक्ततिथिष्वपि ।
चरेषु करणेष्वेवं योगेष्वनुदितेषु च ॥

तिथिवारर्क्षयोगादिदोषेष्वपि विवर्जयेत् ।
संसर्पांहस्पती मासौ समदृष्टिश्च मन्त्रिणोः ॥

मौढ्यवार्धकबाल्यादौ तयोरपि विशेषतः ।
प्रोक्ताः कार्तान्तिकैः शास्त्रे ये दोषाः कण्टकादयः ॥

व्यपोह्यैव च तत्सर्वं राशौ मूढादयो (?) स्थिरे ।
अव्ययायुररिस्थे च चन्द्रे शुद्धेऽष्टमे ग्रहैः ॥

त्रिषडायगतैः पापैः केन्द्रकोणस्थितैः शुभैः ।
शुभैर्युक्तेऽथवा दृष्टे कामशुक्रविवर्जिते ॥
प्रतिष्ठां देवदेवस्य कुर्यात् पूर्वाह्ण एव वै ' ॥ इति

अधमं भाद्रपादे स्यात् इतरेषु बलं यदि ।
मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा ॥

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः ।
शुक्लपक्षे तथा कृष्णे त्रिभागं त्र्यंशकं विना ॥

रेवतीरोहिणीतिष्यशुभर्क्षेषु तथैव च ।
चित्राश्विनीशतभिषक्पुनर्वस्वैन्दवादिषु ॥

कृत्तिका नवमी शस्ता दुर्गायाः कार्तिकेऽपि च ।
प्रतिष्ठा भास्वतः शस्ता रवौ सिंहगते तथा ॥

फाल्गुनोत्तरफल्गुन्यां श्रीप्रतिष्ठा प्रशस्यते ।
तथा श्रीभूप्रतिष्ठाया माघमासश्च शस्यते ॥

श्रवणश्चाश्वयुङ्मासि मत्स्यादिस्थापनाविधौ ।
अनन्धकाणनक्षत्रे काणे चापि शुभोज्ज्वले ॥

त्रिजन्मसु प्रतिष्ठा स्याच्छुभा च प्रोच्यते बुधैः ।
बुधवारांशकादींस्तु प्रशंसन्ति विशेषतः ॥

आद्यषष्ठ्यष्टमीपर्वरिक्तारिक्ततिथिष्वपि ।
चरेषु करणेष्वेवं योगेष्वनुदितेषु च ॥

तिथिवारर्क्षयोगादिदोषेष्वपि विवर्जयेत् ।
संसर्पांहस्पती मासौ समदृष्टिश्च मन्त्रिणोः ॥

मौढ्यवार्धकबाल्यादौ तयोरपि विशेषतः ।
प्रोक्ताः कार्तान्तिकैः शास्त्रे ये दोषाः कण्टकादयः ॥

व्यपोह्यैव च तत्सर्वं राशौ मूढादयो (?) स्थिरे ।
अव्ययायुररिस्थे च चन्द्रे शुद्धेऽष्टमे ग्रहैः ॥

त्रिषडायगतैः पापैः केन्द्रकोणस्थितैः शुभैः ।
शुभैर्युक्तेऽथवा दृष्टे कामशुक्रविवर्जिते ॥

प्रतिष्ठां देवदेवस्य कुर्यात् पूर्वाह्ण एव वै' ॥ इति

तुला कर्कश्च सिंहश्च कन्या मेषश्च वृश्चिकः ।
दिवा ते च प्रशस्यन्ते .... .... .... ॥

द्रेक्काणे च विधौ लग्ने सिंहासनगतेऽपि वा ।
स्ववर्गगः सुरेज्यो वा पक्षच्छिद्रं विनश्यति ॥

केन्द्रगे तु यथा जीवे त्रिकोणे वाऽथवा भृगौ ।
रिक्तायाश्चैव .... .... .... .... .... ॥

.... स्ववर्गतुंगस्थे शुभग्रहनिरीक्षिते ।
तत्तद्ग्रहगतं दोषं नीयते कादकादयः ॥

यथा शीर्षोदये लग्ने शुक्रे जीवयुतेक्षिते ।
लग्नादायर्क्षगे भानौ कोटिदोषं विनश्यति ॥

पञ्चधा विभजेल्लग्नमाद्यं भागं द्वितीयकम् ।
चतुर्थञ्च विना भागं शेषयोः शुभमाचरेत् ॥

आद्ये धनक्षयं यायात् द्वितीये मरणं भवेत् ।
तृतीये श्रियमाप्नोति चतुर्थे रोगपीडनम् ॥
पञ्चमे श्रियमाप्नोति षष्ठे शत्रुभयं तथा ॥

.... .... रेण ग्रहसंयुतः शशी
केन्द्रगोऽप्युपचयस्थितो भवेत् ।
नाशमेति किल विष्टिजं तमः
दीपनाशितगृहान्धकारवत् ॥

तृतीयायां परे विष्टिः सप्तम्यां पूर्वभागतः ।
एकादश्यां परे विष्टिः पूर्वभागन्तु पर्वणि' ॥ इति

**क्रियाधिकारे:—** प्रतिष्ठाविधौ आचार्यलक्षणादिकमुच्यते :—

'वैखानसेन सूत्रेण निषेकादिक्रियान्वितम् ।
विप्रं स्वाध्यायसंयुक्तं वेदतत्त्वार्थदर्शिनम् ॥

सौम्यं जितेन्द्रियं शुद्धं विष्ण्वाकाराशयं परम् ।
ऊहापोहविधानेन ध्वस्तसंशयमानसम् ॥

पत्न्यपत्ययुतं शान्तं दानशीलञ्च धार्मिकम् ।
आचार्यं देववत्पूज्य सर्वकार्योपदेशकम् ॥
आचार्यं पूजयित्वा तु तेनोक्तं सर्वमाचरेत् ' ॥ इति

तत्रैव: — ' तथैव गुणसंपन्नान् वरयेदृत्विगर्चकान् ।
बधिरान् कुल्टानन्धान् कुष्ठोन्मत्तादिरोगिणः ॥

हीनांगानतिरिक्तांगान् शिपिविष्टाद्यलक्षणान् ।
पत्न्यपत्याग्निरहितान् अतिवृद्धातिबालकान् ॥

विरूपानन्यदीक्षांश्च वर्जयेत्प्रथमे सुधीः ।
सर्वलक्षणसंपन्नमेकं वै वरयेद्गुरुम् ॥

स्थापकौ द्वौ च कुंडानामध्वर्यून् षट् तथाविधान् ।
एकन्तु वास्तुहोतारं द्वौ तथा ब्रह्मसोमयोः ॥

एकं वै स्नापनार्थञ्च द्वौ देवार्चनकर्मणि ।
शेषकर्मार्थमेकन्तु वृणुयात् षोडशर्त्विजः ' ॥ इति

गृह्य: — ' प्रतिष्ठादिवसात्पूर्वं तृतीये पञ्चमेऽपि वा ।
सप्तमे नवमे सद्यः निशि स्यादंकुरार्पणम् ' ॥ इति

अंकुरार्पणप्रकारश्च गृह्यपरिशिष्टे प्रतिपादितः । यथाः — ' अथांकुरार्पणम् । चौलोपनयनव्रतसमावर्तनपाणिग्रहणादीनां संस्काराणां पूर्ववदस्मिन् अयुग्मे दिवसे बान्धवान् पञ्चविधानाहूयाभिपूज्य अभ्यन्तरे गोमयेनोपलिप्य पञ्चवर्णैरलंकृत्य अद्भिरभ्युक्ष्य तंडुलैः व्रीहिभिर्वा द्विहस्तायतविस्तारोत्सेधं यथालाभोच्छ्रायं वा स्थंडिलं कृत्वा सुवर्णरजतताम्रमृण्मयान् वा यथा लाभं पालिकाः पञ्च गृह्णीयात् । पालिकासु 'मेदिनी देवी' ति मृद्भिरापूर्य दूर्वाश्वत्थपत्रैः कुशैस्तन्मूले बध्नीयात् । यवतिलमुद्गनिष्पावसर्षपादिधान्यानि संगृह्य स्थंडिलोपर्यास्तीर्य दर्भाग्रेण सूत्रेण नवपदानि कृत्वा ब्राह्मं प्रथमं द्वितीयमैन्द्रं तृतीयं

याम्यं चतुर्थं वारुणं पञ्चमं सौम्यं ज्ञात्वा तेषु पालिकाः 'ब्रह्म जज्ञानं', 'इन्द्रं प्रणयन्तं', 'यमो दाधार'—'ये ते शतं—'मिश्रवाससः' इति क्रमेण स्थाप्य आग्नेय्यां प्रोक्षणार्थं जलकरकं नैर्ऋत्यामर्चनार्थं चन्दनयुतं पुष्पं वायव्यां तांबूलमक्षतमैशान्यां वापार्थमंकुरांश्च संस्थाप्य कर्ता उदङ्मुख आसीनः प्राणानायम्य 'ब्रह्माणमिन्द्रं यमं वरुणं कुबेर' मावाहयामीति 'पाञ्चभौतिकं फुलं रविं सोम' मावाहयामीति च आवाह्याभ्यर्चयेत् । ततः स्वजनाननुज्ञाप्य देवान् प्रणम्य अंकुरान् स्पृशन् ओषधिसूक्तं जप्त्वा पूर्ववदभ्यर्च्य हविर्निवेद्य पाद्यमाचमनञ्च दत्वा 'इदं विष्णु'रिति अंकुरानुद्धृत्य 'विष्णोर्नुकं—'ये जाताः—'ब्रह्मजज्ञा'नादीन् जपन् वापयित्वा वारुणमन्त्रेण जलसेकं कृत्वा 'दिशां पतीन्'इति नमस्कृत्य सौम्ये प्रागन्तमुत्तरान्तञ्च संस्थाप्य देवेभ्यो बलिं दत्वा प्रतिदिनं सायं प्रातः द्विकालं त्रिकालं वा अर्चनादिकं अंकुरबोधनञ्च कृत्वा अपवृत्ते शुभे कर्मणि अप्सु विसृजेत् । सर्वकर्मणामादावंकुरमभ्युदयनिमित्त' मिति ।

**तस्मात् पूर्वं तृतीयेऽहनि औपासनाग्निकुंडं कृत्वा पूर्ववत् प्रोक्षणोल्लेखनादिकर्म कुर्यात् ॥ ५ ॥**

**द्वितीयस्यां वेद्यां षट्त्रिंशदंगुलप्रमाणैः दर्भैः कूर्चेन वा परिस्तीर्य परिधीनूर्ध्वसमिधौ निधाय ऊर्ध्ववेद्यां यथादिशमिन्द्रादिदिग्देवान् दक्षिणे ब्रह्माणमुत्तरे सोमञ्च पुष्पाद्यैरभ्यर्च्य तथैवाऽघारं जुहोति ॥ ६ ॥**

**'दद्भ्यः स्वाहे' त्यंगहोमं अतो देवादींश्च हुत्वा पुरुषसूक्तं जपन् सुवर्णेनाक्ष्युन्मेषणं करोति ॥ ७ ॥**

अक्ष्युन्मेषणमित्यादि ।

'चतुरंगुलस्वर्णसूच्या दक्षिणाद्यक्षिमोचनम् ।
अन्येन कुर्याच्छ्रीभूम्योः तत्सूक्ताभ्यां पृथक् पृथक् ॥

यत्र वैष्णवमन्त्रोक्तिः ततस्तन्मन्त्रतोऽनयोः ।
देवस्य पुरतो धान्यराशिं धेन्वादिकं न्यसेत् ॥

मध्ये यवनिकां चाक्षिमोक्षान्ते तान् प्रदर्शयेत् ।
देवस्य दर्शयित्वा तान् आचार्याय प्रदापयेत्' ॥ इति

**नद्यां तटाके जलपूर्णे पात्रे वा 'ये ते शता' द्यैः वस्त्राणि कुशांश्चास्तीर्य विष्णुसूक्तेन देवं प्राक्शिरः शाययित्वा अधिवासयेत् ॥ ८**

अधिवासयेत् – श्रीभूसूक्ताभ्यां श्रीभूम्यौ चाधिवासयेत् ।

**द्वितीयदिवसे स्नात्वा रात्रौ पूर्ववदाघारं हुत्वा अष्टौ कलशानाहृत्य पञ्चगव्यघृतदधिक्षीराक्षतोदकफलोदककुशोदकरत्नोदकैः पूरयित्वा देवमभ्यर्च्य 'वसोः पवित्रं – 'अग्न आयाहि' – 'इषे त्वोर्जेत्वा' – 'शन्नो देवीः' – 'चत्वारि शृंगा' – 'सोमो धेनुं' – 'चत्वारि वाक्' 'इदं विष्णुः' इति कलशैः स्नापयित्वा 'आपो हिरण्य पवमानैः' 'गन्धतोयैश्च स्नापयति । ९ ॥**

अत्र गृह्यः —

'चतुरः स्थापकान् वृत्वा द्वौ वा होतारमेव च ।
गृहांकणे प्रपां देवगृहे वापि प्रकल्पयेत् ॥
वितानतोरणस्तंभवेष्टमुक्ताद्यलंकृते ।
प्रदोषान्तेऽक्षिकर्मान्ते कुंडे आघारमाचरेत् ॥
देवं जलात्समादाय वस्त्रोपर्यासयेत्ततः ।
मृत्तिकां गोमयं वापि न निशायां समाहरेत् ॥
न गोमूत्रं प्रदोषे च गृह्णीयाद्बुद्धिमान् नरः ।
गायत्र्या गृह्य गोमूत्रं 'गन्धद्वा' रेति गोमयम् ॥
'आप्याय' स्वेति च क्षीरं 'दधि क्राव्णे' ति वै दधि ।
'शुक्रम' सीत्याज्य 'मिमा ओषधय' अक्षतम् ॥
'सोमं राजा' फलोदञ्च 'देवस्ये' ति कुशोदकम् ॥
कपिलायाः परं क्षीरं श्वेतायाः परमं दधि ।
रक्तायाः पूजितञ्चाज्यं शेषौ शबलकृष्णयोः ॥

आज्यं दधि पयो मूत्रं गोमयश्च यथाक्रमम् ।
एकद्वित्रिचतुःपञ्चकुडुपाः स्युर्यथाक्रमम ' ॥

एवमष्टौ कलशान् तत्तद्द्रव्यैरापूर्य

'देवस्य पुरतो व्रीहिवेद्यामीशान्यकोणतः ।
क्रमेण कलशान् स्थाप्य सकुशान् वस्त्रछादितान् ॥

तेषु कलशेषु शिवं सामवेदं यजुर्वेदं अथर्ववेदं कश्यपं सोमं मुनीन् विष्णुं च आवाह्य एकादशोपचारैरभ्यर्च्य पुण्याहजलेन प्रोक्ष्य 'वसोः पवित्रं' इत्यादिभिः मन्त्रैः स्नापयित्वा बिंबमाम्लादिभिः संशोध्य शुद्धोदकैरभिषिच्य वस्त्रोत्तरीयादि दत्वा पाद्याद्यैरष्टभिरुपचारैरर्चयति ।

**अग्नेरुत्तरस्यां व्रीहिभिर्वेदिं कृत्वा विष्टरं न्यस्य वस्त्राण्यास्तीर्य देवमारोप्य वस्त्राद्यैरलंकृत्यार्चयति ॥ १० ॥**

**पुण्याहं कृत्वा स्वस्तिसूक्तेन तामभिमृश्य 'स्वस्तिदा विशस्पति' रिति प्रतिसरं बद्ध्वा पूर्ववत् देवं शाययीत ॥ ११ ॥**

पुण्याहमित्यादि । 'यद्वैष्णव' मिति मन्त्रेण शाययीत ।

'अंडजं मुंडजश्चैव चर्मजं रोमजं तथा ।
वामजश्चेति पञ्चैते शयनानि विशेषतः

अंडजं पक्षिपिञ्छं स्यात् शाल्मल्यादिसमुद्भवम् ।
मुंडजश्चाविकादीनां कृतं रोम्णा तु रोमजम् ॥

व्याघ्रादिचर्मवल्कलं स्यात् चर्मजं क्षौमसंभवम् ।
वामजं तदलाभे तु पञ्चवस्त्राणि चास्तरेत् ॥

एवं संस्तीर्य मन्त्रज्ञो 'वेदाह' मिति च ब्रुवन्' ॥ इत्यादि

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने दशमः खण्डः

## अथ एकादशः खण्डः

कालविहीनं कुंभमुत्पूतैराधावैरापूर्य देवस्य पार्श्वे निधाय प्रणवेनाभिमृश्य कूर्चाक्षतसुवर्णरत्नानि प्रक्षिपेत् ॥ १ ॥

कालविहीनमित्यादि ।

भृगुः 'अस्थि रत्नं सिरा तन्तुः मांसं मृत्स्ना प्रकीर्तिता ।
शोणितं रक्तमृत्तत्र जलं मेदस्तथैव च ॥

शुक्रश्च कूर्चमित्युक्तं चर्म स्याद्वेष्टनांबरम् ।
सप्तधातव इत्येते कुंभेषु कलशेषु च ॥

प्रतिमा प्राणमित्याहुः नारिकेलं शिरो भवेत् ।
एतेष्वेकं विहीनश्चेत् नास्ति तत्रास्य सन्निधिः' ॥

इति वचनात् कुंभालंकारान् अष्टमंगलपञ्चायुधकूर्मगजगरुडादिरूपाणि यथोक्तप्रकारेण कृत्वा कुंभे प्रक्षिपेत् ।

भृगुः — 'देवस्य पुरतः कुंभं धान्यराश्युपरि न्यसेत् ।
आढकन्तु चतुःप्रस्थं द्रोणन्तु चतुराढकम् ॥
षड्द्रोणं भारमुद्दिष्टं षड्भारं राशिरुच्यते' ॥

'यवाष्टतुलितं माषं माषाष्टतुलितं कणम् ।
कणाष्टतुलितं मानं मानैः स्वर्णं तथाऽष्टभिः ॥
पणं सुवर्णैः विंशद्भिः निष्कं त्रिंशत्पणं स्मृतम्' ॥

इति कुंभाधारधान्यराशिस्वरूपं कुंभक्षेपार्हशातकुंभप्रतिमास्वरूपञ्चोक्तम् ।

निष्कलं देवं हृदयात् तदाधावे रुक्माभं रक्तनेत्रास्यपाणिपादं श्रीवत्सांकं चतुर्भुजं पीतांबरधरं शंखचक्रधरं सौम्यं सकलं ध्यात्वा प्रणमेत् ॥ २ ॥

ध्यात्वेति। ततः आचार्यः ब्राह्ममासनमास्थाय उदङ्मुखः प्राणानायम्य इन्द्रियाणि निरुद्ध्य 'शन्नोमित्र' इति शान्तिश्च जप्त्वा ध्यानं चरेत ॥

अत्र गृह्यः —

'आसनं स्वस्तिकं कुर्यात् दक्षिणं पादमूर्ध्वनः।
वामपादमधश्चाथ तथा जान्वन्तरे बुधः ॥
अंगुष्ठौ द्वौ निगृह्यैव शिश्नं च वृषणावपि।
पीडयन्वै निवातस्थः प्रदीप इव निश्चलः ॥
अंके वामं न्यसेत्पाणिमन्यञ्चोत्तानमूर्ध्वतः।
किञ्चिदुन्नामितमुखो दन्तैः दन्तानसंस्पृशन् ॥
नासाग्रस्थेक्षणश्चैवमासयेदासनं बुधः।
प्राणानायम्य विधिना रेचपूरककुंभकैः ॥
बीजं तद्धृदये न्यस्य प्रणवैरपि वेष्टयेत्।
वलयश्चादिबीजं स्यात् उकारं कुटिलं भवेत् ॥
मकारं चैकनादान्तमेवं प्रणवमुच्यते।
शुद्धस्फटिकसंकाशमर्धचन्द्रसमाकृति ॥
ततो वारिणि कुंभस्थे ध्यायेद्वारुणमंडलम्।
आदिबीजं सुसन्न्यस्य प्रणवैरपि वेष्टयेत ॥
आत्मसूक्तं ततो जप्त्वा पौरुषं सूक्तमेव च।
नारायणानुवाकञ्च श्रीभूसूक्ते तथैव च ॥
हृदये भावयन् जप्त्वा प्रणवस्य शतं पुनः।
समाहितमना भूत्वा ध्यानं सम्यक् समाचरेत् ॥
विषयेभ्यश्च सर्वेभ्यः प्रत्याहृत्येन्द्रियाणि च।
एकाग्रञ्च मनः कृत्वा ततः पश्येत् समाधिना ॥
पद्मकोशप्रतीकाशे विश्वस्यायतने पृथौ।
हृदयेऽग्निशिखामध्ये परमात्मा व्यवस्थितः ॥

अप्रमेयमजं नित्यं सर्वाधारं सनातनम् ।
निर्गुणं निष्कलं शुद्धं परमात्मानमव्ययम् ॥

क्षीरे सर्पिस्तिले तैलं पुष्पे गन्धः फले रसः ।
काष्ठेऽग्निरिव सर्वत्र व्यापिनं पुरुषोत्तमम् ॥

मनसा सकलं ध्यात्वा हृदये पद्ममध्यमे ।
ध्यात्वैवात्र ततो मन्त्री तस्मात् कुंभजले हरिम् ॥

सुवर्णवर्णं रक्तास्यनेत्रपाणिपदं तथा ।
शुकपिञ्छाम्बरधरं विष्णुं तं प्रणवात्मकम् ॥

किरीटहारकेयूरप्रलंबब्रह्मसूत्रिणम् ।
शंखचक्रधरं देवं श्रीवत्सांकं चतुर्भुजम् ॥

परात्परतरं देवं देव्यादिपरिषद्गणैः ।
ध्यात्वा स्वमनसः कुंभे सम्यगावाहयेद्गुरुः ॥

सूच्यग्रतोदमात्रन्तु नास्ति तद्रहितं क्वचित् ।
कुत आवाह्यते देवः कुत उद्वास्यते पुनः ॥

तस्मादावाहनं विष्णोरयुक्तमिति मन्यते ।
सर्वत्र व्यापिनस्तस्य सर्वस्मात् परमात्मनः ॥

एकत्र स्मरणं यत्तत् आवाहनमिति स्मृतम् ।
अरण्यां संस्थितो वह्निरेकत्र ज्वलितो यथा ॥

तथा ध्यानेन भक्तस्य हृदि विष्णुः प्रकाशते ।
मन्त्रैरावाहिते बिंबे स्थले कूर्चे जले तथा ॥

भक्तानुकंपया स्थित्वा पूजां गृह्णाति केशवः ।
वदन्त्यावाहनं केचिद्धरेरादित्यमण्डलात् ॥

देवेन सह तत्कुंभे ध्यायेद्देव्यौ यथाविधि ।
आसनादिभिरभ्यर्चेत् अर्घ्यान्ताचमनान्तकैः ' ॥ इति

अग्निं परिषिच्य होतं प्रशंस्य दक्षिणप्रणिध्यां 'ओं भूः पुरुषं - ओं भुवः पुरुषं - ओं सुवः पुरुषं - ओं भूर्भुवः सुवः पुरुषं - नारायणं - विष्णुं - पुरुषं - सत्यं - अच्युतं - अनिरुद्धं - श्रियं - महीं' इति नाम्ना आवाह्य निर्वापं कृत्वा आज्येन विष्णुसूक्तपुरुषसूक्ताभ्यां 'अतो देवादीन्' 'श्रिये जातः' 'मेदिनी देवी' इति चतुरावर्त्यं हुत्वा नाम्ना साज्यं चरुं जुहुयात् ॥ ३ ॥

गुह्यः— 　'अध्वर्युणा 'होतरेही - त्यध्वर्यो देवता' इति ।
होताऽध्वर्युं पुनश्चैवं वदेदर्थानुसारतः ॥

आचम्य होता पूर्वस्यामग्नेः प्रत्यङ्मुखः स्थितः ।
'नमः प्रवक्त्र' इत्युक्त्वा कूर्चपाणिस्समाहितः ॥

होताऽहमन्ते नामोक्त्वा उच्चै'र्मानुष' इत्यपि ।
'भूते भविष्य' तीत्यादिः 'भूर्भुवस्सुवरो' मिति ॥

अन्ते तु प्राङ्मुखो भूत्वा प्रवोवाजादिकान् पठेत् ।
अध्वर्युः प्रणवं श्रुत्वा 'स्वाहे' ति समिधं हुनेत् ॥

होताऽथ 'भारते' त्यन्ते नामास्य प्रवरोद्भवम् ।
संबुद्ध्योक्त्वाऽथ 'देवेत्थे' त्यादिना जातवेदसम् ॥

आवाहयेन्मन्त्रपाठक्रमाद्देवं श्रियं महीम् ।
अध्वर्युरपि तच्छ्रुत्वा देवतावाहनं चरेत्' ॥ इति

आवाहनानन्तरं जुष्टाकारस्वाहाकारादिकं कृत्वा विष्णुसूक्तपुरुषसूक्तादीन् विष्ण्वादीनां मूलमन्त्रांश्च आज्येन साज्यचरुणा हुत्वा अष्टोत्तरशतमष्टाविंशतिमष्टौ वा चतुरावर्त्यं जुहुयात् ।

प्रभाते स्नात्वा प्रणवेन देवमुत्थाप्य शकुनसूक्तं जपन् मृदङ्गेन देवमानीय गृहे वायव्यां देवायतने अग्निशालायां वा अर्चापीठे रत्नं

सुवर्णे वा सन्न्यस्य विष्णुसूक्तपुरुषसूक्ताभ्यां 'विष्णुं प्रतिष्ठापयामि' इति प्रतिष्ठाप्य बिंबस्य मूर्ध्नि नाभौ पादे च 'भूर्भुवर्भू'रिति; हृदये प्रणवं विन्यस्य 'इदं विष्णु'रिति देवं ध्यायन् कुंभस्थमाधावं शक्तियुतं कूर्चेनादाय बिंबस्य मूर्ध्नि 'विष्णुमावाहयामि' इति संस्राव्य आवाहनं करोति ॥ ४ ॥

विधिनैवमा(आ)राध्य हविर्निवेदयति ॥ ५ ॥

एवं श्रियं महीं रामकृष्णादीन् तत्तन्मूर्तिभिरावाह्य विधिनैवाराधयेत् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने एकादशः खण्डः ।

## अथ द्वादशः खण्डः

अथ नित्यार्चनम् ॥ १ ॥

अथ प्रतिष्ठानन्तरम् । प्रतिष्ठारहितबिंबस्य लोहतुल्यत्वात् । यद्वा स्नानसन्ध्योपासनानन्तरम् । नित्यार्चनं – प्रतिदिनमर्चनम् ।

**'अतो देवा' इति देवं प्रणम्य निर्माल्यं व्यपोह्य उत्पूतैराधावैः व्याहृत्या वेदिं परिमृज्य पूर्ववद्देवं ध्यात्वा ॥ २ ॥**

'देवदक्षिण आसीनः कुर्यात्पूजां समाहितः' इत्यासित्वा 'अतो देवादि'भिः षड्भिर्मन्त्रैः देवं प्रणम्य निर्माल्यं व्यपोह्य – पूर्वेद्युः समर्पितपुष्पादीनि व्यपोह्य । उत्पूतैराधावैः 'इदमापश्शिवा' इति वा 'देवो वस्सवि'तेति वा उत्पवनम् । व्याहृत्या वेदिं – अर्चापीठं; परिमृज्य । पूर्ववत् – प्रतिष्ठोक्तवत् देवं ध्यात्वा । बिंबाभावे हृदयकमले ध्यात्वा कर्तव्यम् ।

'बिंबाभावे हृदाकाशे ध्यात्वैवं पूजनं सदा ।
उद्वासनञ्च कर्तव्यमन्तेऽशक्तविधिः स्मृतः' ॥ इति वचनात् ।

ध्यानप्रकारो यथाः —

'हृत्पुंडरीकमुकुलमुद्धृत्य प्रणवेन तु ।'
व्याहृत्या विकचं कृत्वा तत्रेन्द्रादिदिगीश्वरान् ॥

दलेष्वष्टसु संस्कृत्य द्वात्रिंशत्केसरेष्वतः ।
शेषान् देवान् समभ्यर्च्य कर्णिकां प्रकृतिं स्मरेत् ॥

रश्मिमालावृतं ध्यात्वा तन्मध्ये रविमंडलम् ।
तन्मध्ये शशिबिंबञ्च द्रवत्पीयूषशीतलम् ॥

तस्य मध्यगतं ध्यायेत्त्रिकोणं वह्निमण्डलम् ।
दुर्निरीक्ष्यं सुरैस्सर्वैः ज्वालामालासमन्वितम् ॥

तस्य मध्ये प्रभां ध्यायेन्निर्धूमां निष्कलां शुभाम् ।
नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा ॥

प्रभामध्यगतं पीठं चतुरश्रं हिरण्मयम् ।
नानामणिगणज्वालादुष्प्रेक्ष्यं तत्सुरैरपि ॥
तस्य मध्यगतं ध्यायेन्नारायणमनामयम् ।
शुद्धस्फटिकसंकाशं शंखचक्रधरं परम् ॥
एवं ध्यात्वा समावाह्य देवदेवं विशेषतः ।
आसनाद्युपचाराणि मनसा तस्य भावयेत् ॥
एषा तु मानसी पूजा बेरपूजा तु वक्ष्यते' ॥ इति भृगुः ।

**'प्रतद्विष्णु' रिति कुशपुष्पदर्भान्यतमेनासनं कल्पयित्वा 'त्रीणि पदा' इति पाद्यं 'शन्नो देवी' रित्याचमनं दद्यात् ॥ ३ ॥**

**आसनमित्यादि** – आसनकल्पनानन्तरं स्वागतादिकं कुर्यात् ।

'सुमुखीकरणं यत्तत् समन्त्रं स्वागतं विदुः ।
मया कृतमिदं सर्वं क्षमस्वेति समन्त्रकम् ॥
अनुमानमिति प्रोक्तं सवादरदेवयाचनम् (?)' ॥ इति

**आचमनमिति** – देवस्य दक्षिणे हस्ते दद्यात् ।

**'इषे त्वोर्जे' त्वेति स्नापयित्वा 'विष्णोर्नुक' मिति वस्त्राभरणैरलंकरोति ॥ ४ ॥**

बिंबोचितेनाम्लादिना संशोध्य 'इषे त्वे' ति बिंबे सुवर्णे स्नानम् ।

**पूर्ववत् पाद्याचमने दत्वा 'तद्विष्णोः परमं पद' मिति पुष्पं 'तद्विप्रास' इति गन्धं 'परो मात्रया' इति धूपं 'विष्णोः कर्माणि' इति दीपं 'विर्देव' इत्यर्घ्यं दत्वा पुनराचमनं ददाति ॥ ५ ॥**

शास्त्रे – मूर्ध्नि पूर्वं सुसन्न्यस्य पादपीठे समन्ततः ।
कंठे तथा शंखचक्रे पुष्पं दद्यात्समन्त्रकम्' ॥ इति

पद्मपुराणे – 'मल्लिकामालतीजातिपद्मपत्रैश्च चंपकैः ।
पुन्नागैः केतकैः पद्मैः वकुलोत्पलजातिभिः ॥

तुलसीकरवीरैश्च पूजयेत्पुरुषोत्तमम् ।
निर्गन्धैरुग्रगन्धैश्च सच्छिद्रैः जन्तुसंयुतैः ॥

अन्यारामोद्भवैः देवायतनस्य समीपजैः ।
हस्तानीतैः पटानीतैः पतितैर्नार्चनं चरेत्' ॥

इति निषिद्धानि वर्जयित्वा भगवच्छास्त्रोक्तपुष्पैरितरैश्च पुजयेत्। **तद्विप्रास इनीत्यादि ।**

विष्णुः—'चन्दनं कुकुमागुरुकर्पूरजातीफलयुतं मृगमदवर्नमनुलेपनं दद्या'दिति ।

स्मृतिः — 'ललाटे हृदि कण्ठे च उरस्यपि समन्तकम् ।
चन्दनाद्यैस्सुगन्धस्यालेपनं गन्धविग्रहः' ॥ इति

**परो मात्रयेत्यादि** । गुग्गुल्वगरुगन्धादिधूपद्रव्यैः धूपं दद्यात् ।

खिले — 'शीतनिर्यासकाकुस्थान् (?) क्रमवृद्धया विचूर्णितान् ।
चंद्रेण शीततुल्येन घृतमिश्रं सुधूपयेत् ॥
शीतादिनामा धूपोऽयं विष्णोराराधनं परम्' ॥ इति

**विष्णोः कर्माणीत्यादि**

'तन्तुभिः पद्मनालोत्थैः कार्पासैर्वाऽथ तन्तुभिः ।
कार्पासपिचुना वापि कारयित्वा सुवर्तिकाम् ॥

घृतेन वाऽथ तैलेन दीपं संदीप्य दर्शयेत् ।
समंतं देवपार्श्वे यद्दीपविग्रह उच्यते ॥

अष्टाङ्गुलोच्छ्रयज्वालादीप उत्तम उच्यते ।
तदर्धं मध्यमो दीपस्तस्यार्धमधमं स्मृतम् ॥
अथ मानांगुलोत्सेधा नित्याऽनिर्वाणदीपिका ॥

कर्पूराद्यैस्तु वर्तिं वा स्नेहं वा गन्धवासितम् ।
कृत्वा संदीपयेद्दीपमुत्तमं तत्प्रियं हरेः ॥

आजेनाज्येन यो दीपः स गवेद्यक्षरक्षसाम् ।
माहिषाज्येन यो दीपः सोऽसुराणां भविष्यति ॥

आविकाज्येन यो दीपः स तु गान्धर्व उच्यते ।
नागविद्याधराणान्तु दीपो निर्याससंभवः ॥

वार्क्षस्नेहेन यो दीपः स पैशाच उदाहृतः ।
प्राण्यंगस्नेहदीपस्तु यः स भौतिक उच्यते ॥

तस्मात्तु देवपूजायां दीपदाने विशेषतः ।
गव्यं घृतञ्च तैलं वा संग्राह्यमितरेष्वपि ' ॥ इति

**त्रिर्देव** इत्यादि

'कुशाग्रतिलसिद्धार्थतंडुलाक्षतसंयुतम् ।
पयोदध्यंबुसंमिश्रमर्घ्यमष्टांगमुच्यते ॥

यवमाषव्रीहितिलसर्षपाः अक्षताः स्मृताः ।
पञ्चांगं वा यथालाभं पात्रे क्षिप्त्वांऽबुपूरितम् ॥

मन्त्रवद्दर्शनं विष्णोः प्रोक्षणं वाऽऽर्घ्यविग्रहः ।
पृथक् पात्रेषु मूर्तीनामर्घ्यं संयोजयेद्बुधः ॥

पञ्चस्वपि च पात्रेषु कुडुवं कुडुवं पृथक् ।
जलेन सकलं तुल्यं समभागं परस्परम् ॥

मूर्तीनां पुरुषादीनां प्रागाद्येव च कल्पना ।
यस्यां दिश्यालयद्वारं तन्मूर्त्याद्यर्चनाक्रमः ॥

अक्षतं तंडुलञ्चैव अंबुना मिश्रितन्तु यत् ।
पञ्चांगमर्घ्यमुद्दिष्टं विष्णोरन्यत्र पूजने ॥

तंडुलव्रीहिसंयोगः कीर्त्यतेऽच्युतमित्यपि ।
सर्वेषां परिवाराणां अर्घ्यालाभेऽर्घ्यचोदने ॥
अर्घ्यवद्दर्शयेद्वा तत् पुष्पवद्वा समर्पयेत् ' ॥ इति

**'तदस्य प्रिय' मिति हविर्निवेदयेत्** ॥ ६ ॥

तदस्येत्यादि ।

'शुद्धान्नं पायसञ्चैव कृसरं गौल्यमेव च ।
यावकेन तु पञ्चैते देया मूर्तिक्रमेण तु ॥

अलाभे सर्वमूर्तीनां शुद्धान्नं वा निवेदयेत् ।
पायसादीनि चत्वारि चतुर्मूर्तिविधानके' ॥ इति

**'इदं विष्णु'रिति पानीयं तथाऽऽचमनं 'विचक्रमे पृथिवी'मिति मुखवासञ्च दत्वा द्वादशाष्टक्षराभ्यां पुष्पाणि ददाति ॥ ७ ॥**

पानीयं — 'शीतं पर्युषितं तोयं गन्धैरप्यधिवासितम् ।
दद्याद्यन्मन्त्रतः शुद्धं पानीयं नाम विग्रहः' ॥

**तथाऽऽचमनम्** । स्पष्टम् । **पुष्पाणि ददाति** । पुष्पांजलिविधिनिरुक्ताधिकारे: —

'प्रसन्नमानसो भूत्वा मन्त्रमष्टाक्षरं जपेत् ।
अष्टोत्तरशतं पुष्पाण्यादायांजलिना ददेत् ।

पुष्पाण्यादाय पाणिभ्यां गायत्रीं वैष्णवीं जपन् ।
भक्त्या पुष्पाणि दत्वा च अष्टोत्तरशतं जपेत्' ॥ इति

**विचक्रमे पृथिवीमिति**

'केवलं वाऽथ तांबूलं कर्पूरैलादिभिर्युतम् ।
यत्प्रदद्यात्तु मन्त्रेण मुखवासं हि तं विदुः' ॥ इति

**तं यज्ञपुरुषं ध्यायन् पुरुषसूक्तेन संस्तूय प्रणामं कुर्यात् ॥ ८ ॥**

**'यज्ञेषु विहीनं तत् संपूर्णं भव'तीति श्रुतिः ॥ ९ ॥**

**द्विजातिरतन्द्रितो नित्यं गृहे देवायतने वा भक्त्या भगवन्तं नारायणमर्चयेत् ॥ १० ॥**

**'तद्विष्णोः परमं पदं गच्छ'तीति विज्ञायते ॥ ११ ॥**

तमित्यादि । 'पूजान्ते स्तुतिभिर्मन्त्रैः देवस्यार्चानुमोदनम् ।
भक्तौ निहितया बुद्धया प्रोक्त उद्वासविग्रहः' ॥

इति पूजान्ते ध्यानविधिः ॥

स्मृत्यन्तरे — 'पत्रं पुष्पं फलं तोयमंकुरान् बीजमेव वा ।
संगृह्य विधिवद्भक्त्या 'विष्णवे नम' इत्युत ॥

द्विविग्रहमिति प्रोक्तं नमस्कारपुरस्सरम् ।
देवागारं तु संदृष्ट्वा मनसा सुविचिन्त्य वा ॥

यत्र काप्यंजलिं कुर्यादेकविग्रहपूजनम् ।
भक्तानान्तु प्रयोक्तव्यो न तु स्थानार्चनाविधौ ॥

देशकालानुरूपैश्च द्रव्यैरपि विधानवित् ।
उपचारैश्च संख्यातैरनुरूपैश्च पूजयेत् ॥

दुर्लभे पूजनद्रव्ये तत्स्थाने कल्पयेज्जलम् ।
आलयार्चा गृहार्चा च उभयं श्रुतिचोदितम् ॥

गृहार्चना गृहस्थेन गृहे कार्या विधानतः ।
सर्वे च वैदिकाचाराः सर्वे यज्ञास्तपांसि च ॥
विष्णुपूजाविधेर्भेदाः तत्कर्मफलदो हरिः' ॥ इति

गृह्ये: — 'द्रव्याभावे तु पुष्पैर्वा तदभावे जलेन वा ।
आपद्यपि च काले तु सर्वं संकल्पयेद्द्विजः' ॥

प्रणाममिति ।

'प्रणामस्स्यान्नमस्कारः स तु पञ्चविधः स्मृतः ।
मस्तिष्कं संपुटश्चैव अष्टांगं दंडसंज्ञितम् ॥

पंचांगं पञ्चमं प्राहुः एषां भेदः प्रकीर्त्यते ।
विचिन्त्य मनसा देवं मस्तकेऽञ्जलिसंयुतम् ॥

मस्तिष्कमिति विज्ञेयः प्रणामः प्रथमः स्मृतः ।
तथा ध्यायन् हृदा देवं हृदयेऽञ्जलिसंयुतम् ॥

क्रियमाणो नमस्कारः सम्पुटः परिकीर्तितः ।
अंजलिं हृदये कृत्वा नतकायेन भक्तितः ॥

क्रियते यो नमस्कारः प्रह्वांगस्स उदाहृतः ।
दंडवत् शयनं भूमौ अंजलिं संप्रसार्य च ॥

दंडनामा प्रणामस्स विचिन्त्य मनसा हरिम् ।
पादौ प्रसार्य जानुभ्यां ललाटेनावनिं स्पृशेत् ॥

पञ्चांगस्स नमस्कारः सपाणि स्वस्तिबन्धनम् ।
पाणिं पृष्ठे समायोज्य व्यत्यस्य च तथांऽगुलीः ॥

तदधोमुखमानम्य कृतं स्वस्तिकबन्धनम् ।
पूजादावेव मस्तिष्कं संपुटं वा प्रयोजयेत् ॥
प्रणामविग्रहस्स स्यादन्ते सर्वान् प्रयोजयेत् ' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ चतुर्थप्रश्ने द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

अथ ग्रहशान्तिं व्याख्यास्यामः ॥ १ ॥

अथेति । ग्रहकृतदोषशमनार्थं शान्तिं व्याख्यास्यामः ।

ग्रहायत्ता लोकयात्रा ॥ २ ॥

तस्मादात्मविरुद्धे प्राप्ते ग्रहान् सम्यक् पूजयति ॥ ३ ॥

ग्रहायत्तेत्यादि ।

'ग्रहायत्ता नरेंद्राणामुच्छ्रायाः पतनानि च ।
ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ॥
पूजिताः पूजयन्त्येनं निर्दहन्त्यवमानिताः' ॥

इति वचनात् ग्रहायत्ता लोकयात्रा । लोकयात्रा—लोकप्रवृत्तिः ग्रहाधीना । तस्मादित्यादि । आत्मविरुद्धे—जन्मर्क्षादिषु स्थितेषु ग्रहेषु । तान् सम्यक् पूजयति ।

आदित्यश्चन्द्रोऽङ्गारको बुधो बृहस्पतिः शुक्रः शनैश्चरो राहुः केतुश्चेत्येते नव ग्रहाः ॥ ४ ॥

स्पष्टम् ।

रक्तसितातिरक्तश्यामपीतसितासितकृष्णधूम्रवर्णाः ॥ ५ ॥

अनलाप्पतिगुहहरीन्द्रशचीप्रजापतिशेषयमाधिदेवत्याः ॥ ६ ॥

मध्याग्नेयदक्षिणैशान्योत्तरपूर्वपश्चिमनैर्ऋतवायव्याश्रिताः ॥ ७ ॥

तस्मात् शुद्धे देशे मनोरमे गोमयेनोपलिप्ते स्वे स्वे स्थाने शालिव्रीहिभिः सिकताभिर्वा चतुरश्रं वृत्तं तुल्याकारं त्रिकोणमष्टाश्रमर्धचन्द्राकारं वज्राकारं दंडाकृति ध्वजाकृतीति क्रमेण पीठान्युपकल्प्य

तेषु कूर्चं निधाय तद्दक्षिणपार्श्वे तदधिदेवतामुद्दिश्य पीठान्युपकल्प्य आहवनीयान्वाहार्यगार्हपत्यावसथ्यसभ्यान् क्रमेणोपकल्प्य अग्नीन् साधयित्वाऽर्चयेत् ॥ ८ ॥

तस्मादित्यादि । शुद्धे देशे । 'चतुर्दिशं चतुर्हस्तं गोचर्मति प्रकीर्तित' मिति परिमिते देशे । शालिव्रीहिभिः अलाभे सिकताभिर्वा प्रागुदक् चतुस्सूत्रैः नवपदं कृत्वा मध्ये चतुरश्रं आग्नेये वृत्तं दक्षिणे तुल्याकारं ऐशान्ये त्रिकोणं, उत्तरे अष्टाश्रं, पूर्वे अर्धचन्द्राकारं, पश्चिमे वज्राकारं, (यथा—दक्षिणोत्तरपार्श्वयोः अश्रिषट्कयुतं मूलाग्रयो. अश्रिद्वययुतमेवमष्टाश्र वज्राकारं 'अष्टाश्रिर्वज्र' इति श्रुतिः,) नैऋते दण्डाकारं वायव्ये ध्वजाकारमेवमादित्यादीनां क्रमेण पीठानि प्रकल्पयेत ।

अत्र शौनकः— 'वेदिः प्रादेशमात्रा स्यात् पञ्चांगुलसमुन्नता ।
तस्यामावाहयेद्देवान् नाम्ना व्याहृतिभिः क्रमात् ॥
वज्रस्य दंडध्वजयोरर्धमात्रं हि विस्तरम् ।
तद्वर्णतंडुलैर्वापि कुर्यात्पीठानि यत्नतः' ॥ इति

तेषु प्रत्येकं कूर्चं दशांगुलमात्रं निधाय दक्षिणभागे तदधिदेवमुद्दिश्य अधिदेवार्थं तत्तदाकृतीनि तत्तत्प्रमाणानि पीठान्युपकल्पयेत् ।

तथा प्रत्यधिदेवताश्च —

गृह्यः— 'ईश्वरोमागुहा विष्णुः ब्रह्मा शक्रो यमस्तथा ।
कलिंगश्चित्रगुप्तश्च ग्रहाणां देवताः क्रमात् ॥
ग्रहाणामुत्तरे तेषां पीठान्यपि च कल्पयेत् ।
एषामप्यर्चनं कुर्यात् सर्वर्षिवरसम्मतम्' ॥ इति

आहवनीयेत्यादि । अशक्तस्य एककुंडे, अथ वा स्थंडिले । पंचाग्निकुंडपक्षे लौकिकाग्नावेव ।

'कुर्यात् श्रौतानि कर्माणि श्रौतेष्वेवाग्निषु त्रिषु ।
गृह्ये गार्ह्याणि कर्माणि इतराणि तु पौरुषे' ॥ इति

**गौतमः** । शान्तिकपौष्टिकपुण्याहस्वस्त्ययनायुष्यमंगलसंयुक्तान्याभ्युदयिकानि संवपनाभिचारविषयवृद्धियुक्तानि लौकिकाग्नौ कुर्यादिति केचित । शालाग्निं लौकिकमिति केचिद्वदन्ति, केचिदौपासनमिति ।

**स्मृतिः** — 'वैवाहिकाग्निः गृह्याग्निरावसथ्यस्तथैव च ।
औपासनाग्निः शालाग्निश्चरितो विबुधैरिति' ।। इति

**शौनकः** — 'यस्मिन् विवाहः क्रियते सोऽग्निः गृह्य इति स्मृतः ।
जातकर्मादिवृद्ध्यर्थं यो व्याहृतिभिराहृतः ॥
सोऽग्निः गृह्य' इति प्रोक्तः शालाग्निर्लौकिकस्तथा' ।। इति

**गृह्यः** 'औपासनाग्निकुंडे वा सर्वेषां लौकिकेऽपि वा ।
औपासने लौकिके वा ग्रहहोमो विधीयते ।।

बाहुकुंडविधिश्चाहिताग्निमुख्यस्तु लौकिके ।
ताग्निरौपासनेऽनग्निः सर्वमेतानि (?) लौकिके' ।। इत्यादि ।

स्मृतिकारैः ग्रहाणां रूपकल्पनमुद्दिश्योक्तम् ।

'ताम्रकात् स्फाटिकात् रक्तचन्दनात् स्फाटिकादुभौ ।
रजतादयसस्सीसात कांस्यात् कार्या ग्रहाः क्रमात् ।।

सुवर्णं वापि ते लेख्या गन्धैर्मण्डलकेऽपि वा ।
आवाहनोक्तवद्रूपं कृत्वा ध्यात्वा समर्चयेत्' ।।

ध्यानप्रकारः — रवेः

'किरीटिनं पद्मकरं पद्मगर्भसमद्युतिम् ।
सप्ताश्वरथसंयुक्तं द्विभुजं कलिंगदेशजम्' ।।

काश्यपगोत्रं विश्वामित्रार्षं त्रिष्टुप्च्छन्दसं रक्तमाल्यांबरधरं रक्ताभरणं रक्तगन्धानुलेपनं रक्तध्वजपताकिनं किरीटहारकेयूरमुक्तामणिगणशोभितं सप्तरज्जुकमेकचक्रं रक्तं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडलमध्यगं

सांगं सवाहनायुधपरिवारं चतुरश्रमंडले प्राङ्मुखं 'ओंभूर्भुवस्सुवः' 'आदित्यमावाहयामि; अधिदेवतामनलमावाहयामि; प्रत्यधिदेवतामीश्वरमावाहयामि'। आसनपाद्याचमनपुष्पगन्धधूपदीपाद्यैः चतुर्नामभिरर्चयेत्।

चन्द्रस्यः— 'श्वेतवस्त्रधरं श्वेतदशाश्वरथवाहनम्।
द्विभुजं साभयगदमात्रेयं सामृतं विधुम्॥
शान्तं नक्षत्रनाथञ्च रोहिणीवल्लभं प्रभुम्।
कुन्दपुष्पोज्ज्वलाकारं आह्वयामि निशाकरम्'॥

किरीटिनं गदाभयपाणिं द्विबाहुं यमुनादेशजमात्रेयगोत्रं आत्रेयार्षं धेनुछन्दसं श्वेतमाल्यांबरधरं श्वेतगन्धानुलेपनं श्वेताभरणभूषितं श्वेतछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकशोभितं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं वृत्ताकारमंडले प्रतिष्ठितं सांगं सवाहनायुधपरिवारं प्रत्यङ्मुखमासीनमाग्नेय्यां 'ओंभूर्भुवस्सुवः' 'सोममावाहयामि; अधिदेवतां वरुणमावाहयामि; प्रत्यधिदेवतामुमामावाहयामि'।

अंगारकस्यः— 'रक्तस्रगंबरालेपं गदाशक्त्यसिशूलिनम्।
चतुर्भुजं मेषगमं भारद्वाजं धरासुतम्॥
रक्तकाञ्चनसंकाशं रक्तकिञ्जल्कसन्निभम्।
आवाहयामि भूपुत्रं महाबलसमन्वितम्'॥

किरीटिनं त्रिरक्तं चतुर्भुजं शक्तिशूलगदाभयपाणिं मेषगमवन्तीदेशज वसिष्ठगोत्रजं जामदग्न्यार्षं गायत्रीछन्दसं अतिरक्तमाल्यांबरधरं त्रिरक्ताभरणं त्रिरक्तमाल्यानुलेपनं त्रिरक्तछत्रध्वजपताकिनं अष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं दक्षिणे दक्षिणाभिमुखं ग्रहमंडले प्रविष्टं सांगं सवाहनायुधपरिवारं तुट्याकारमंडले 'ओं भूर्भुवस्सुवः' 'अंगारकमावाहयामि; अधिदेवतां गुहमावाहयामि; प्रत्यधिदेवतां गुहमावाहयामि' क्षेत्रपतिमिति केचित्।

बुधस्यः— 'श्यामस्रग्गन्धवस्त्राढ्यं स्वर्णभञ्च चतुर्भुजम्।
खड्गशूलाभयगदमात्रेयं सिंहवाहनम्'॥

चाम्पेयपुष्पसंकाशं विशुद्धकनकप्रभम् ।
आवाहयामि सुमुखं बुधं सौम्यं महाप्रभुम्' ॥

किरीटिनं श्यामवर्णं कर्णिकारसमद्युतिं चतुर्भुजं खड्गशूलगदाभयपाणिं सिंहस्थं मगधेशमात्रेयगोत्रं भारद्वाजार्षं बृहतीछन्दसं श्याममाल्यांबरधरं श्यामगन्धानुलेपनं श्यामछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकमणिशोभितं अष्टाश्वं श्यामं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं ऐशान्ये त्रिकोणाकारमंडले प्राङ्मुखमासीनं 'ओं भूर्भुवस्सुवः' 'बुधमावाहयामि; अधिदेवतां विष्णुमावाहयामि; प्रत्यधिदेवतां विष्णुमावाहयामि' ।

बृहस्पतेः — 'आंगीरसं देवगुरुं पीतस्रग्गन्धवाससम् ।
दंडिनं वरदं पीतं साक्षसूत्रकमंडलुम् ॥

कुन्दपुष्पसमानाभं तप्तकाञ्चनसन्निभम् ।
आवाहयामि देवेड्यं प्रसन्नास्यं बृहस्पतिम्' ॥

किरीटिनं पीतवर्णं चतुर्भुजं दंडिनं वरदं साक्षसूत्रकमंडलुं विन्ध्यदेशमांगिरसगोत्रजं वसिष्ठार्षमनुष्टुपछन्दसं पीतमाल्यांबरधरं पीतगन्धानुलेपनं पीतछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकमणिशोभितं अष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं उत्तरे अष्टाश्रमंडले उदङ्मुखमासीनं 'ओं भूर्भुवस्सुवः' 'बृहस्पतिमावाहयामि' अधिदेवतां इन्द्रमावायामि; प्रत्यधिदेवतां ब्रह्माणमावाहयामि' ।

शुक्रस्य: — 'शुक्रं शुक्लतनुं श्वेतवस्त्राढ्यं दैत्यमन्त्रिणम् ।
भार्गवं दंडवरदकमंडल्वक्षसूत्रिणम् ॥

कुंदपुष्पसमानाभं मुक्ताफलसमप्रभम् ।
आवाहयामि मनसा शुक्रं दैत्यगुरुं प्रभुम्' ॥

किरीटिनं श्वेतवर्णं चतुर्भुजं वरदं दंडिनं साक्षसूत्रकमंडलुं कटकदेशजं भार्गवगोत्रं भार्गवार्षं पंक्तिछन्दसं श्वेतमाल्यांबरधरं श्वेताभरणं श्वेतगन्धानुलेपनं श्वेतछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकमणिशोभितं दशाश्वं श्वेतं रथमारुह्य

दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं पूर्वभागे अर्धचन्द्राकृतिमंडले प्राङ्मुखमासीनं 'ओं भूर्भुवस्सुवः' 'भगवन्तं शुक्रमावाहयामि; अधिदेवतां शचीमावाहयामि; प्रत्यधिदेवतां शक्रमावाहयामि'।

शनैश्चरस्यः — 'इन्द्रनीलनिभं मन्दं काश्यपिं चित्रभूषणम्।
चापबाणधरं चर्मशूलिनं गृध्रवाहनम्॥

इन्द्रनीलसमानाभं नीलोत्पलदलप्रभम्।
आवाहयामि देवेड्यं सूर्यपुत्रं शनैश्चरम्'॥

किरीटिनमिन्द्रनीलद्युतिं चतुर्भुजं शूलचर्मधरं गृध्रवाहनं बाणबाणासनधरं सौराष्ट्रदेशजं काश्यपगोत्रं शौनकार्षं गायत्रीछन्दसं कृष्णमाल्यांबरधरं कृष्णाभरणं कृष्णगन्धानुलेपनं कृष्णछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकमणिशोभितं अष्टाश्वं नीलं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं पश्चिमभागे वज्राकारमंडले प्रत्यङ्मुखमासीनं 'ओं भूर्भुवस्सुवः' 'शनैश्चरमावाहयामि; अधिदेवतां प्रजापतिमावाहयामि; प्रत्यधिदेवतां यममावाहयामि'।

राहोः — 'सैंहिकेयं करालास्यं कौंडिनेयं तमोमयम्।
खड्गचर्मधरं भीमं नीलसिंहासने स्थितम्॥

नीलांजनसमानाभं नीलमेघसमद्युतिम्।
आवाहयामि वरदं राहुं शूलधरं प्रभुम्'॥

किरीटिनं करालवक्त्रं खड्गचर्मशूलधरं वरदं नीलसिंहासने स्थितं पूर्वदेशजं वासिष्ठगोत्रं गौतमार्षं मनस्विछन्दसं कृष्णमाल्यांबरधरं कृष्णाभरणं कृष्णगन्धानुलेपनं कृष्णछत्रध्वजपताकिनं मकुटकेयुरहारमौक्तिकमणिशोभितं अष्टाश्वं रथमारुह्यदिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं नैर्ऋत्यां (कृष्ण) दंडाकारमंडले दक्षिणाभिमुखमासीनं 'ओं भूर्भुवस्सुवः' 'राहुमावाहयामि; अधिदेवतां शेषमावाहयामि; प्रत्यधिदेवतां निर्ऋतिकाली(कलिंग)मावाहयामि'॥

केतोः — 'धूम्रं द्विबाहुं गदिनं विकृतास्यं शतात्मकम् ।
गृध्रासनं नीलमेघसन्निभं ब्रह्मणः सुतम् ॥

वरदं चित्रवर्णश्च महाबलसमन्वितम् ।
आवाहयामि पूजार्थं केतुं कामफलप्रदम् ' ॥

किरीटिनं धूम्रवर्णं द्विबाहुं विकृताननं गृध्रासनं मध्यदेशजं जैमिनिगोत्रजं सनिछन्दसं कृष्णपिंगलमध्यांबरधरं कृष्णाभरणं कृष्णगन्धानुलेपनं कृष्णपिंगलछत्रध्वजपताकिनं मकुटकेयूरहारमौक्तिकमणिशोभितं धूम्रारुणमष्टाश्वं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं वायव्ये ध्वजाकारमंडले दक्षिणाभिमुखमासीनं 'ओं भूर्भुवस्सुवः' 'केतुमावाहयामि; अधिदेवतां यममावाहयामि; प्रत्यधिदेवतां चित्रगुप्तमावाहयामि' । आसनाद्यैरुपचारैरभ्यर्चयेत् ।

**करवीरशंखपुष्पोत्पलनन्द्यावर्तचम्पकमल्लिकासितगिरिकर्णिकाकल्हारतापिंछपुष्पैः तद्वर्णवर्णपुष्पैः गन्धैः पूर्ववदभ्यर्च्य शुद्धौदन पायस गुडौदन दध्योदन गौलिक चित्रोदन कृसर माषौदन कणौदनानि क्रमेण निवेदयेत्** ॥ ९ ॥

स्पष्टम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्थप्रश्ने त्रयोदशः खण्डः ।

## अथ चतुर्दशः खण्डः

तदधिपांस्तदर्हेणाभ्यर्च्य आधारं हुत्वा अर्कपलाशखदिरापामार्गाश्वत्थोदुंबरशमीदूर्वाकुशान् यथाक्रमेण 'आसत्येन'–'सोमो धेनुं'–'अग्निर्मूर्धा'–'उद्बुध्यस्व'–'बृहस्पते अतियत्'–'शुक्रन्ते अन्यत्', 'शन्नो देवीः'–'कया नश्चित्रः'–'केतुं कृण्वन्' इति क्रमेण अष्टशतं सप्तविंशतिकं वा त्रिमधुनाक्ताभिस्समिद्भिः चरुणा आज्येन च जुहुयात् ॥ १ ॥

**तदधिपान्**—अग्न्यादीन् । **तदर्हेण**—तत्तद्देवतार्हेण पुष्पादिनाऽभ्यर्च्य । **त्रिमधुना**—क्षीराज्यमधुभिः ।

अत्र शौनकः — 'समिदाज्यान्नहोमेषु संख्या पञ्चसहस्रकम् ।
अष्टोत्तरशतं वापि अष्टाविंशतिरेव वा ॥
तेषामलाभे शुद्धान्नं पालाश्यस्समिधोऽपि वा' ॥ इति

**आहवनीये शशिशुक्रयोः अन्वाहार्ये अंगारकराह्वोः गार्हपत्ये असितकेत्वोः आवसथ्ये गुरुबुधयोः सभ्ये सवितुरिति ॥ २ ॥**

'सभ्ये तु सवितुश्चन्द्रशुक्रयोः पूर्वकुंडके ।
दक्षिणाग्नौ राहुधरासुतयोर्गार्हपत्यके ॥
मन्दकेत्वोरावसथ्ये बुधगुर्वोः क्रमाद्यजेत्' ॥

अनाहिताग्नेराधारादिप्रधानकर्मसु सभ्ये अधिकाराभावात् औपासनाहवनीययोरत्यन्तभेदाभावात औपासनस्य प्राधान्यमवगमयितुं आहवनीयादित्वेनोक्तम् ।

**'अग्निं दूतं'–'ये ते शतं'–'सुब्रह्मण्यः'–'इदं विष्णुः'–'इन्द्रं प्रणयन्तं'–'गन्धद्वारां'–'ब्रह्म जज्ञानं'–'शन्नो निधत्ता'–'यमो दाधार' इत्यधिदेवेभ्यः आज्येन तत्तत्स्थाने जुहुयात् ॥ ३ ॥**

अग्निं दूतमित्यादि । तत्तत्स्थाने । तत्तदर्थे तत्तत्कुंडेषु जुहुयात् । आज्यग्रहणं समिदन्नहोमज्ञापनार्थम् ।

शौनकः — 'ग्रहाणामधिदेवानां सदेवानामपि क्रमात् ।
तेषां पृथक् पृथक् होमः समिदन्नाज्यमेव च ॥
अशक्तो यदि सर्वेषां ग्रहाणामेव कारयेत्' ॥ इति

गृह्यः — एषां 'गौरीर्मिमाये'ति 'क्षेत्रस्य पत' इत्यपि ॥
'विष्णो'श्च 'ब्रह्म जज्ञानं' 'इन्द्र वोऽथ' 'इमं' 'यमः' ॥
'यत्ते देवी'ति 'चित्रं'ति ग्रहदेवमनून् हुनेत् ।
ग्रहदेवाधिदेवानां होमं पूर्वोक्तसंख्यया ॥
अशक्तावेकवारं वा होतव्यं ग्रहदैवतम् ।
अंगारकस्य वा भूमिः 'स्योना पृथिवी'ति तन्मनुः ॥ इति

**विष्णोर्नुकादीन् मिन्दाहुत्याश्वितादीन् हुत्वा । शुद्धोदनपायस-गुडोदनाद्यैः पूर्वोक्तचरुभिः ब्राह्मणान् भोजयित्वा रक्तधेनुमादित्याय शंखं सोमाय ताम्रमंगारकाय हिरण्यं बुधाय शुक्लं वासो बृहस्पतये हयं शुक्राय कृष्णां गां शनैश्चराय राहोः छागं केतोरायसदंडमित्यात्म-विरुद्धानां तदर्हं दद्यात् ॥ ४ ॥**

विष्णोर्नुकादीनित्यादि । नक्षत्रदेवतायै वरुणाय च हुत्वा विष्णोर्नु-कादीन् मिन्दाहुत्याश्वितादीन् नवाहुतीश्च सर्वाग्निष्वपि जुहुयात् । अथ सर्वेष्वन्तहोमं हुत्वा पुण्याहं वाचयित्वा पायसकृसरगौल्याद्यैः प्रधानैः पूर्वोक्तैः चरुभिश्शुद्धान्नेन च ब्राह्मणान् भोजयेत् । तत्तद्ग्रहदेवतास्वरूपान् मुख-वासान्ते उक्तैः दानैः सम्मानयेत् । तत्प्रकारमाह **रक्तधेनु**मित्यादिना । **रक्तं धेनुं** सवत्सामादित्याय, **शंखं** – शंखमणिं सोमाय, **ताम्रं** तुलमात्रमंगारकाय, **हिरण्यं** निष्कं निष्कार्धं वा बुधाय, **शुक्लं** सूक्ष्मं वस्त्रं बृहस्पतये, श्वेत**मश्वं** शुक्राय, **कृष्णां गां** शनैश्चराय, राहोः कृष्णं **छागं, केतोः** पुरुषप्रमाणं चतुरंगुलनाह**मायसं दंडम्** । एता दक्षिणा होमादिकर्तृभ्यो दद्यात् ।

**सर्वेषामलाभे सुवर्णम् ॥ ५ ॥**

सर्वेषां यथोक्तानामलाभे सुवर्णं वा दद्यात्। जन्मकर्मादीनां काम्यविषयत्वात्।

शौनकः — 'काम्ये नैमित्तिके चैव लोपश्चेद्धन्ति तद्विदः' ॥ इति

**जन्म कर्म सांघातिक सामुदायिक वैनाशिकर्क्षसंस्थेषु क्रियाकालविरुद्धेषु ग्रहेषु तच्छान्तिं शुभर्क्षेष्वारभेत ॥ ६ ॥**

**जन्मकर्मे**त्यादि। जन्मकर्म जन्मतो दशमं — **सांघातिकं** षोडशं — **सामुदायिकं** अष्टादशं, वैनाशिकं त्रयोविंशं द्वाविंशं वा। 'वैनाशिकं तु जन्मांशादष्टाशीतितमें ऽशकः — 'तद्भस्य कर्म नेष्ट' मिति वचनात् पादभेदेन योजनीयम्।

'द्वादशाष्टमजन्मस्थाश्शन्यङ्गारका गुरुः।
कुर्वन्ति प्राणसंदेहं स्थानभ्रंशं धनक्षयम्' ॥

इत्यादि ज्योतिश्शास्त्रोक्तविरुद्धस्थानेषु ग्रहेषु स्थितेषु, **क्रियाकालविरुद्धेषु** उपनयनादिक्रियालग्नस्य विरुद्धेषु, यद्वा — जन्मर्क्षवक्रचारादिक्रियाविरुद्धेषु वा सत्सु तद्ग्रहोपशान्त्यर्थमेतच्छान्तिकर्म **शुभर्क्षेषु** — शुभकर्मयोग्यनक्षत्रेषु आरभेत।

'आत्मनश्चानुकूलर्क्षे सप्तपञ्चत्रिवर्जिते।
अरिक्तायां शुभे वारे पूर्वाह्णे शान्तिमाचरेत्' ॥ इति

बोधायनः — 'मासिमास्यृतावृतौ संवत्सरे संवत्सरे चन्द्रग्रहणे सूर्यग्रहणे विषुवे अयने जन्मनक्षत्रे शुभकर्माणि प्रयुञ्जानः सर्वान् कामानवाप्नोति' इति।

**एतेन नवग्रहजा दुःखा व्याधयः शान्तिं यान्ति ॥ ७ ॥**

**एतेन** — शान्तिकर्मणा। **ग्रहजाः** — विरुद्धग्रहसंभवानि। **दुःखाः** राजतो दैवतः प्राप्तकृच्छ्राणि मनःपीडा वा कार्याननुगृह्य वा (?)। परिवेषस्कन्धापस्मारादयश्च व्याधयो ज्वरादयश्च। **शान्तिं यान्ति** ॥

**अन्यथा महत्तरो दोषो भवति ॥ ८ ॥**

**अन्यथा**–शान्तिनिमित्तेषु विषयेषु शान्त्यकरणे दुःखधनक्षय–व्याध्यादयः संभवेयुः ।

**ग्रहपूजां पुरस्कृत्य सर्वकर्म समारभेदिति विज्ञायते ॥ ९ ॥**

**ग्रहपूजामित्यादि ।**

याज्ञवल्क्यः— 'श्रीकामश्शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्ट्यायुःपु(ष्टि)त्रकामो वा तथैवाभिचरन् परान् ॥
यस्य यस्तु यदा दुःस्थः स तं यत्नेन पूजयेत्' ॥ इति

शौनकः 'एषा स्वस्त्ययनी शान्तिरायुष्यं पुष्टिवर्धनम् ।
सदा दुःखविनाशार्थं कर्तव्याऽहरहर्द्विजैः ॥

होमेन वा जपेनापि पूज्या द्वाभ्यां स्वशक्तितः ।
अशक्तो यदि सर्वेषां ग्रहाणामेव वा क्वचित् ॥

तर्पणं वा जपं वापि कर्तव्यं श्रद्धया द्विजैः ।
तदशक्तौ तु जप्यादौ विदुषे भूसुराय च ॥

होमद्रव्याणि सर्वाणि दातव्यानीति वै स्थितिः ।
दक्षिणाश्च यथान्यायं शक्त्या दद्याद्विचक्षणः ॥

सर्वेषामपि वर्णानां शान्तिः कार्या द्विजोत्तमैः ।
काम्ये नैमित्तिके चापि सप्तव्याहृतिभिः पुनः ॥

अन्या पुनः (?) समस्तानि हुत्वा शेषं समापयेत् ।
अमत्या चेदिदं लोपे (?) मत्या चेन्निष्फलं भवेत् ॥

पुण्याहांबु मृत्पल्लवत्वक् पूर्णकुंभं सवस्त्रकम् ।
आघारिते पुण्यसूक्ते स्पृष्ट्वान्ते स्नापयेत्तु तैः' (?) ॥ इति

चिन्तामणौ 'सूर्यस्यैवोत्तरे शंभुमुमां सोमस्य दक्षिणे ।
गुहमंगारकस्यैव दक्षिणस्यां निवेशयेत् ॥

सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः ।
इन्द्रमैन्द्र्यां तु शुक्रस्य मन्दस्याग्नेयतो यमः ॥

राहोः पूर्वोत्तरे कालं सर्वभूतभयावहम् ।
केतोर्नैर्ऋतदिग्भागे चित्रगुप्तं निवेशयेत्' ॥

'शृतकामा इव हि देवा' इति 'हविर्देवानां प्रिय' मिति श्रूयमाणत्वाच्च अश्रृतद्रव्यत्वात् समिद्धोमे देवानां प्रीतिर्नास्तीति चेत् – सत्यम् । तत्पश्चादि- विषयम् । समिद्धोमे तु 'अथाप्यृचमुदाहरन्ति यस्समिधा या आहुती यो वेदेनेति समिधमेवापीति श्रद्धधाना आददन्मन्ये तव इदमिति नमस्तस्मै य आहुत्या अतो- वेदेनेति विद्ययैवाप्यस्ति प्रीतिः तदेतत्पश्यन् ऋषिरुवाच आगोरुधाय गविषे द्युक्षापदस्त्यं वाचर्वृतात्स्वदियो मधुनश्चावोचते' ति । अग्निहोत्रमन्त्रे च 'तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ्य यदत्युपजुह्वावा यद्यत्रो (?) असर्पति सर्वं अतदस्तुते घृत' मित्यादि ।

**अथातः स्थालीपाकं–अथ सति व्रीहि–अथाष्टका–दक्षिणपश्चिमे- ऽग्नेः–अथातोऽमावास्यायां–यजमानः प्राचीनावीती–अथ श्राद्धं मासि- मासि–अथ चैत्रीं–अथाऽश्वयुजीं–अथाग्नौ–कालविहीनं–अथ नित्यार्चनं– अथ ग्रहशान्ति–तदधिपांस्तदर्हेणेति चतुर्दश इति ॥ इति चतुर्दशः खंडः**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ चतुर्दशः खण्डः

**॥ इति चतुर्थः प्रश्नः समाप्तः ॥**

प्रथमः पटलः (प्रथमः खंडः) अथ स्थालीपाकम् । तिष्ठन् – आसीनः प्राङ्मुखः । पत्न्या सह प्राणानायम्य त्रिवारम् । 'स्थालीपाकमारप्स्ये – तेन यावज्जीवं यक्ष्ये त्रिंशतं वा वर्षाणि यक्ष्ये – जीर्णो वा विरमणं करिष्ये' इतिवत् यथाशक्ति संकल्पः प्रथमत एव । अन्यत्र "स्थालीपाकेन यक्ष्ये' इत्येव संकल्पः । सर्वत्र पाकयज्ञेषु न 'विद्युदृष्टी' – अनुपदिष्टत्वात् । संभारानाह एकविंशतीध्मा' निति । पालाशानाश्वत्थान्वा । एकविंशतीध्मान् सानूयाजपरिधीन् पूर्ववत्कृत्वा सन्नह्य बद्ध्वा, दर्भान् – परिस्तरणादीन् सपवित्रान् बद्ध्वा दर्वी मेक्षणञ्च स्रुक् जुहूपजुहू स्रुवञ्च प्रणीतापात्रमाज्यस्थालीं चरुस्थालीञ्च अग्नेरुत्तरतः दर्भोपरि अवाङ्मुखमधोमुखं द्वन्द्वं संन्यस्य संभृत्य । उद्धरति – अत्याग्निमुद्धार्य कुंडादुद्धृत्यायतने निदध्यात् । अन्यत्रारोपितमग्निं लौकिकाग्नावारोप्य हुत्वा । तमस्मिन् मन्त्रेणोद्धृत्यायतने निधाय परिसमूह्य । इन्धीत – उद्दीपनेन । तूष्णीं पाणिना वेदिं चतुर्दिशं परिमृज्य तूष्णीं प्रागाद्युत्तरान्तं दर्भानास्तीर्य स्रुवादीन् संभारानग्निकुंडञ्च तूष्णीं प्रोक्षयति । पात्राण्यूर्ध्वबिलानि कृत्वा प्रणीतामासाद्य तस्यामक्षतान् पवित्रञ्च निधाय 'पृथिव्याप' इत्यद्भिः पूरयित्वा पूर्ववत् 'देवो व' इति त्रिरुत्पूय अग्नेरुत्तरे निधाय आज्यस्थालीं गृहीत्वा तूष्णीमंगारं व्यस्याधिश्रित्य पूर्ववत् आघारोक्तवदाज्यं संस्कृत्योदगुद्वास्य चरुस्थालीं गृहीत्वा चतुर्थीवन्मन्त्रेण प्रक्षाल्याधिश्रित्य 'अग्नये जुष्टं निर्वपामी' ति तडुलान् निर्वाप्य आग्नेयं चरुं पक्त्वोत्तरत उद्वास्य अग्निं परिसमूह्य व्यस्तांगारानेकीकृत्य दर्वीमादाय प्रक्षाल्योत्तराग्रं यथा स्यात् तथा निधायाग्निं पूर्ववत् परिषिच्य इध्मानेकविंशतिं गृहीत्वा मूलाग्राभ्यामाज्याभ्यञ्जनं करोति । अपोह्य – प्रज्ञाने निधाय । प्राणायामेन – ओं भूः – ओं भुवः' इत्यादिना । दर्वीमुपस्तीर्य चरुं तया दर्व्या गृहीत्वा । अनूयाजमाग्नौ प्रक्षिप्य पुनः प्रत्येकं दर्व्या चतुर्गृहीतं गृहीत्वा जुह्वामवदायोपस्तरणाभिघारणे कृत्वा स्विष्टाकारान्तं जुहुयात् । त्रीन् परिधीन् आघारसमिधौ च तूष्णीं जुहुयात् । औपासनाग्निं तत्कुंडधार्यं कर्तुमशक्तश्चेत् पूर्ववत्समिधि, स्वात्मा – हृदयं – तस्मिन् – स्वात्मनि, 'या ते अग्न' इति मन्त्रेण पाणिं प्रतप्य, तस्या-

मरण्यांवाऽग्निं समारोपयेत्। 'उपावरोहे'त्यारोपितमग्निं लौकिकाग्नावरोप्यारणिं मथित्वा अग्निमादाय नित्यमस्मिन्नग्नौ पूर्ववत् जुहुयादिति विज्ञायते। (इति प्रथमखंड:

(अथ द्वितीय: खंड:) सति – भवति। प्रीणाति (?) देहं बिभर्तीति व्रीहि:। निरन्तरं व्रियन्ते तपस्विभिरिति नीवारा:। श्यामं वर्णमकति – प्राप्नोतीति श्यामाक:। एतानि तृणधान्यानि। यूयन्ते – संबध्यन्ते महाजनैरिति यवा: – शतशूकधान्यविशेष:। एषामन्यतमस्य यथर्तु फलितस्य तत्तद्दतावेव आग्रयणं कर्तव्यम्। तत्तत्काले कर्तुमशक्तश्च यावच्छरदागम: तावदवस्थाप्य तत्कालधान्येन सह आग्रयणं कुर्यात्। 'यथा वर्षस्य तृप्तिरथ यजेत' इति बह्वृचश्रुते:। वर्षस्य तृप्ति: वर्षर्तुपरिसमाप्ति:। नवैराग्रयणं कृत्वा नवान्नं भुञ्जीत। 'तयाऽनिष्ट्वा नवान्नं नाश्नाति' इति श्रौते च निर्दिष्टम्। शरदि व्रीह्याग्रयणं शिशिरे नीवाराग्रयणं वर्षासु श्यामाकाग्रयणं भवति 'शरदि व्रीहिभिर्यजेत वसन्ते यवैर्यजेत वर्षासु श्यामाकं चरुं निर्वपती'त्येके 'यथर्तु वेणुप्रियंगुनीवारै: श्यामाकवद्यजे' दिति श्रौते उक्तम्। तस्मिन् आग्रयणे सति पत्न्या सह प्राणानायम्य 'आग्रयणेन यक्ष्ये तेन स्वर्गं लोकमाप्नवानि' इति संकल्प्य पूर्ववदाघारमौपासनाग्नौ पात्रासादनञ्च कृत्वा 'प्रजास्थाली' मिति स्थालीमभिमृश्य प्रक्षालितांस्तंडुलान् 'अग्नये - इन्द्राग्निभ्यां – विश्वेभ्यो देवेभ्य: – सोमाय – द्यावापृथिवीभ्यां' जुष्टं निर्वपामीति प्रत्येकं निरुप्य वैश्वदेवं पयसि चरुं एवं देवताभ्य: स्थाल्यामाग्नेयस्थालीपाकवत् चरुं पचेत्। आग्रयणं यद्येककालिकं तत्तत्तंडुलान् पृथक् स्थाल्यामेकस्यां स्थाल्यां वा पक्त्वा अवतीर्य नवेन नूतनेन तंडुलेन हस्तेन स्रुवेण वा प्रथममग्न्यादिभ्य: प्रत्येकं हुत्वा प्रत्येकं दर्व्या चरुं गृहीत्वा जुह्वामवदायोपस्तरणाभिघारणे कृत्वा 'अग्नये स्वाहे' त्यादि जुहोति। पितृभ्य: सोपवीती व्याहृत्यन्तं हुत्वा अग्नेर्दक्षिणभागे धरण्यां वैश्वदेवोक्तवत् पितृभ्यो बलिदानं कृत्वा 'आप्यायन्ता' मिति हुतशेषैस्तंडुलै: आस्यमात्मनो वक्त्रमभिपूर्य भक्षित्वा आचम्य शिष्टै: भक्षणावशिष्टैस्तंडुलै: अन्तर्वंशे – गृहमध्यस्थदारुणि, विकिरति विक्षिपति। शालीनादिषूक्तं धर्ममन्यतममाश्रित्य तत्तद्धर्मानुसारी यथोचितं स्वधर्ममनुतिष्ठेत। इति प्रथम: पटल:। (इति द्वितीय: खंड:)

अथ द्वितीयः पटलः (अथ तृतीयः खंडः) माघप्रौष्ठपदयोः – उभयोरन्यतरस्मिन् वा। अष्टम्यामसंभवे सप्तम्यां नवम्यां त्रयोदश्यां वा। सायम्–यद्दिने कर्तुमुद्योगः तद्दिनात् पूर्वेद्युः – पूर्वस्मिन् दिवसे सायंकाले स्वयमेकभक्ताशी भूत्वा। शुचीन् – उभयत्र कुलशुद्धान्। अभिपूज्य – सुप्रक्षालितपाणिपादान् अर्घ्यादिनाऽभ्यर्च्य प्रदक्षिणीकृत्य अभिवन्द्य। प्राणानायम्य प्राचीनावीती 'अस्मत् पितृपितामहप्रपितामहज्ञातिवर्गाणां गोत्राणां मातृपितामहीप्रपितामहीज्ञातिवर्गपत्नीनां मातामहमातुःपितामहमातुःप्रपितामह मातुःज्ञातिवर्गाणां तत्पत्नीनां गोत्राणां कालकामुकसंज्ञकानां विश्वेदेवानां विष्णोश्च अष्टकाविधानेन विश्वेदेवपूर्वकं विष्ण्वन्तमेवमुभयात्मकं अष्टकाश्राद्धं श्वः करिष्ये' इति संकल्प्य अप उपस्पृश्य, उपवीती। द्वाववरावन्तिमौ त्रयोऽवरा अन्तिमाः इति द्व्यवरत्र्यवरशब्दौ व्याख्येयौ। एकैकस्य पितुः त्रींस्त्रीन् वरयेत्। अशक्तौ द्वयोः दैविकपैतृकयोः एकैकस्यैकं वा। कदलीक्रमुकनारिकेलादिफलानामन्यतमं दत्वा अष्टकाश्राद्धे विश्वेदेवार्थं पित्रर्थं भोक्ष्यतामिति क्रमेण वरणम्। सद्यश्चेत् दर्भैरेव वरणम्। एवं ब्राह्मणान् वृत्वा गृह एव वासयेत्। स्थाल्यामुत्तरदक्षिणयोर्निर्वापः। भोजनार्थं बह्वन्नापूपादिकं लौकिकाग्नौ पाचयेत्। चतुरश्रं विश्वेदेवार्थं वृत्तं पित्रर्थं तथाऽन्यन्मातामहार्थं, एवं त्रीण्यवटानि तालायतनिम्नानि दक्षिणापवर्गं खात्वोपलिप्य अवटेषु यथाक्रमं पादप्रक्षालनं कुर्यात्। आसयित्वा आचान्तान् वस्त्राद्यैरित्यादिशब्देन कुंडलांगुलीयकाद्याभरणानि गृह्यन्ते। प्रागग्रं दर्भोपरि पात्रमासाद्य सपवित्रे पात्रे 'शन्नो देवी' रिति द्विः जलं संस्राव्याऽपूर्य अक्षतपुष्पदर्भगंधान् प्रक्षिप्य 'विश्वेदेवा स' इति साक्षतदर्भपुष्पं प्रत्येकं शिरसि निधाय आवाह्य आष्टक्या 'विश्वेदेवाः प्रीयन्ता' मिति तत्करे यवोदकमर्घ्यं दत्वा 'प्रत्येकं प्राप्नोतु भवा'निति कर्ता ब्रूयात्। 'ओं तथा प्राप्नवानि' इति ब्राह्मणाः प्रतिब्रूयुः। एवं पित्रर्चने दक्षिणाग्रदर्भोपरि पात्रं संसाद्य सपवित्रे पात्रे 'शन्नो देवी' रिति त्रिःकृत्वः जलमापूर्य तिलगन्धदर्भान् निक्षिप्य सतिलदर्भं शिरसि निधाय 'उशन्तस्त्वा हवामहे' इत्यावाह्य 'आष्टक्याः पितरः स्वधा नम' इत्युक्त्वा तेषां करे दक्षिणपाणौ तिलोदकमर्घ्यं दत्वा 'प्राप्नो

तु भवा' निति कर्ता ब्रूयात् । पूर्ववत् प्रतिवचनम् । एवं प्रत्येकमभ्यर्च्य अग्नौ होमं कुर्यात् । अग्निं परिषिच्य देवादीनां—विश्वेदेवादीनामाज्येन हुत्वा । सपिंडीकरणवदिति । 'अग्नये कव्यवाहनाये' त्यादि 'दिवि गतेभ्यः प्रपितामहेभ्य' इत्यन्तं प्राचीनावीती पितृणामप्याज्येन हुत्वा 'विश्वेभ्यो देवेभ्यो हव्यमभिघारयामी' ति उत्तरे विश्वेभ्यो देवेभ्यः 'कव्यमभिघारयामी'ति चरुस्थाल्यामभिघार्य जुहूमुपस्तीर्य दर्व्या चरुमवदायाभिघार्य प्रतिमन्त्रमेवं कृत्वा तेन पक्केन चरुणा अपूपमिश्रेण—सापूपेन देवानां पितृणाञ्च पूर्ववत् जुहोति । गां धेनुमुपाकृत्य स्वीकरणं कृत्वा पशुबन्धवत्—यथा पशुबन्धे 'यूपाग्रेण पुरस्ता'दिति सूत्रेण पशोः संज्ञपनं वपोद्धरणञ्चोक्तं तद्वदत्र गामुपाकृत्य—विशसनं कृत्वा वपामुत्खिद्योद्धृत्य कार्ष्मर्यां शाखायामासज्ज्य अग्नौ सुश्रुत पक्का पक्कया तया वपया होमञ्चामनन्ति केचित् । एवं कर्तुमशक्तश्चेत् 'विश्वेभ्यो देवेभ्यः'—'पितृभ्यस्त्वा जुष्टमुपाकरोमी' त्युपाकृत्य दर्भोपरिनिधाय 'इषेत्वोर्जेत्वे' त्युत्खिद्य अग्नौ प्रतितप्य पक्केनापूपेन 'वह वपा' मिति होमं कुर्यात् । इदमाहिताग्न्यनाहिताग्निभ्यां कर्तव्यम् । गवालंभस्य कलौ निषिद्धत्वादिति । घटिकावस्थायां (?) पलपैतृकनिषेधात्; 'मधुधाम्नोश्चोदनायां तोयपिष्टौ प्रतिनिधी गृह्णीया' दिति सूत्रकारवचनाच्च । यदि जीवति पिता अष्टकाहोमा नैव कर्तव्या. । 'पितरि जीवति पिंडो न निर्वाप्यः' इति सूत्रात् ( इति तृतीयः खंडः )

( अथ चतुर्थः खंडः ) 'पिंडप्रदानं करिष्य' इति संकल्प्य दक्षिणाभिमुखः प्राचीनावीती दक्षिणपश्चिमेऽग्नेः—नैऋत्यां, एकोद्दिष्टवत् सिकताभिरुदक्प्रागपरं अरत्निमात्रं वितस्त्यायतं दक्षिणतो भागोन्नतं पिंडनिक्षेपणस्थानं तद्दक्षिणस्यां दिशि श्वभ्रं प्रादेशमात्रायामं निम्नं चोपकल्प्य समीपे कृत्वा । कूर्चेन त्रिभिर्दर्भैः कृतेन पवित्रेण अक्षतेन सकूर्चाक्षतं पात्रं मृन्मयं पर्णमयं वा उदकेनापूर्य । प्रणम्य—त्रिः प्रणम्य । पितरः—'पितरः पितामहाः प्रपितामहा' इति यथालिंगमूहित्वा । साज्यं सतिलं तत्तद्भागे क्रमेण पिंडान् शिख्यण्डसम्मितान् कबलान् कृत्वा 'अयमोदन' मिति क्रमेणैकमेकं पिंडमादाय आत्मनः पूर्वे ये मृताः तेभ्यः पितृभ्यः तत्पूर्वे ये मृतास्तेभ्यः पितामहेभ्यः तत्पूर्वे ये मृतास्तेभ्यः

प्रपितामहेभ्यः तत्पूर्वं ये मृतास्तेभ्यः ज्ञातिवर्गेभ्यः 'पिंडं निर्वपामी' ति दक्षिणान्तं पिंडानां निर्वापं—निक्षेपं करोति। एवं मातुःपित्रादिभ्यः तत्पत्नीभ्यश्च अष्टौ पिंडान् कृत्वा पिंडस्थानादिकं सर्वं पृथगेकत्र वा कृत्वा तानावाह्य पिंडदानादिकं कुर्यादिति केचिद्वदन्ति। अंजनं—नेत्रकज्जलं, दन्तधावनं—रदनशोधनम्, सक्तु—तप्ततंडुलचूर्णम्। स्राव्य—अप्रदक्षिणं सलिलमुदकाञ्जलिना गृहीत्वा, किञ्चित् संस्राव्य अवशिष्टं जलमादद्देद्दद्यात्। एवं त्रिःकृत्वो दत्वा पात्रं—पिंडभाजनं प्रक्षाल्य तत्पात्रोदकेनापूर्य अमूर्तानामित्यवटं पूरयति। आचम्य चरुशेषेण होमाद्यवशिष्टेन च अन्यैः लौकिकाग्नौ पाचितैः अन्नाद्यपूपा उपदंशाः शाकादिव्यंजनानि तैः पूर्वं चरुशेषं विश्वेदेवानां सौवर्णेषु पात्रेषु द्विर्द्विः, पितॄणां राजतेषु पात्रेषु सकृत्सकृत् दत्वा. अन्यदन्नाद्यञ्च तथा दत्वा अभिघार्य पूर्ववत्—नान्दीमुखोक्तवत्। श्रावयेत्—यथा ते शृणुयुः तथा उच्चैः पठेत्। अनुत्थितेभ्यः उच्छिष्टमुद्धृत्य श्वाद्यनुपहते देशे दक्षिणस्यामवटे विसृज्य गोमयेन मंडलानि संशोध्य तत्र भोजनस्थाने सर्वत्र अन्न विकिरेत्। आचमनेत्यादि। उच्छिष्टशोधनमुच्छिष्टपात्रोद्धरणम्। उत्थापनमाचमनार्थोद्गमनम्। विसर्जनमुद्वासनम्। तस्मात्—उक्तेभ्यः इतरत्सर्वं विश्वेदेवपूर्वमाचरेत्। तथा च—आचमनोच्छिष्टशोधनोत्थापनविसर्जनानि पितृपूर्वमाचरेदिति फलति। 'नमो व' इत्यादि। पितॄनभिवन्द्य पिंडस्थान् पितॄनुद्वास्य 'अपान्त्वौषधीना' मिति मध्यमं पिंडं पत्न्यै दत्वा 'आधत्त पितर' इति पत्नीं प्राशयति। अपि वा सर्वान् पिंडानुद्वास्य जले प्रक्षिपेत्। अथ वा श्वचंडालाद्यनुपहते देशे वायसेभ्यो बलिं दद्यात्। प्रवासयति—तल्लोकं गमयति। अग्निमालये इत्यादि। औपासनाग्नि कुंडे अरण्यादौ वा निधाय। पञ्चमहायज्ञान् करोतीति। अनेन सर्वत्र पैतृकेषु तदन्त एव पञ्चमहायज्ञकरणमुक्तं भवति। अर्धाधानिन. आहिताग्नेः औपासनाग्नौ, सर्वाधानिनः लौकिकाग्नौ वा अग्निमध्ये वा अग्नावेवमष्टका कर्तव्या। तथा लौकिकाग्निं निर्मन्थ्यमपि वा अन्तहोमान्ते विसृजेत्। होमं कर्तुमशक्तश्चेत् होमं विना ब्राह्मणान् भोजयेत्। तत्राप्यशक्तश्चेत परुषाहारमन्नमग्रं वा श्रोत्रियाय दद्यात्। अथ वा अष्टकेति ब्राह्मणान् भोजयेत। दरिद्रो निरर्थकश्चेत

ममेयमष्टकेति पितॄन् स्मृत्वा वनान्तं गत्वा तत्रस्थं कुंजलतागृहं-कक्षं, अग्निना–औपासनवह्निना लौकिकाग्निना वा दाहयेत् । पानीयमिति – स्वादुशीतलं पानार्हं जलं वा करकादिकमापूर्य दद्यात् । इति द्वितीयः पटलः । ( इति चतुर्थः खंडः )

अथ तृतीयः पटलः (अथ पञ्चमः खंडः) अथातोऽमावास्यायामित्यादि । अथानन्तरम् । अत इति कालपरामर्शः । यतः श्रौते अन्वाधानादिकमुक्तमतोऽमावास्यायाम् 'मासि पितृभ्यः क्रियत' इति अमावास्यानियमैः पिंडैः साध्यो यज्ञः पिंडपितृयज्ञः कथं पिंडैः साध्यत इति चेत 'तिस्र आहुतीर्जुहोति त्रिर्निदधाति षट्संपद्यन्ते' इति श्रुतेः पिंडदानस्यापि होमतुल्यनिर्देशेन तस्यापि प्रधानत्वात् पिंडैः साध्य इति निरुच्यते । स्वर्गफलार्थं पिंडपितृयज्ञ इति मीमांसकाः । सूत्रकारमतन्तु नित्य इत्येव । 'पितृभ्य एतद्यज्ञं निष्क्रीय यजमानः प्रतनुते' इत्यापस्तंबः । सर्वथा अमावास्यायां पिंडपितृयज्ञेन यजेत । तत् प्रकारमाह पूर्वेऽहनि चतुर्दश्याम् । उपोषणं जायापत्योरेकभक्ताशनं, अथ वा ग्राम्येऽनशनं, अथ वा अग्नेः समीपे वासः शयनमुपोषणम् । तत्कृत्वा श्वोभूते अमावास्यायामन्वाधानं कृत्वा अपराह्णे सायंकाले वा 'अपराह्णे अधिवृक्षसूर्ये वे'ति श्रौते निर्दिष्टत्वात् । अग्निं दक्षिणाग्निमनाहिताग्निरौपासनाग्निं प्रणम्य तूष्णीं नमस्कृत्य पत्न्या सह प्राणानायम्य 'पिंडपितृयज्ञेन यक्ष्ये' इति संकल्प्य । मुसलादीत्यादिशब्देन कशिपूपबर्हणवासोऽभ्यञ्जनोदकुंभाः गृह्यन्ते । जीवत्पितुः न कशिप्वादिः, पिंडाभावात् । पात्राण्येकैकशः आग्नेयाग्राणि प्रयुंजीत – संभरति । 'अपहता' इति वेदिमधोमेखलां प्रदक्षिणं सव्यावेन पाणिना परिमृज्य परिस्तृणाति – प्रत्यग्दक्षिणाग्रं परिस्तृणाति । दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थितं कृत्वा स्थालीमेकपवित्रेणान्तर्धाय दक्षिणतः शकटात 'पितृभ्यो निर्वपा' मीति स्थालीं सपवित्रां – पवित्रान्तर्हितां व्रीहिभिरापूर्य तेनैव मन्त्रेणाभिमृश्य यथा स्थाल्यां तथैव तान् व्रीहीन् 'पितृभ्यो जुष्टं निर्वपा' मीति सपवित्रे शूर्पे निरुप्य तेनैवाभिमृशेत् । अन्वाहार्यात् दक्षिणस्यां पश्चिमस्यां वा उत्तरपश्चिमग्रीवं कृष्णाजिनमास्तीर्य तस्योर्ध्वं उलूखलं संस्थाप्य तस्मिन् व्रीहीन् प्रक्षिप्य दक्षिणाप्राची

तिष्ठति पत्नी, बहुपत्नीकश्चेत् ज्येष्ठा भार्या। तया अवघातं मुसलेन कारयित्वा तान् शूर्पे समादाय विवेचनं – वितुषीकरणं, तेन वर्जं यथा स्यात् तथा परावापं फलीकरणमुच्चालनं शूर्पे सकृत्करोति। अध्वर्युस्तान् तंडुलानादाय अद्भिः सकृत् प्रक्षाल्य स्थाल्यां 'पितृभ्यो जुष्टं निर्वपा'मीति निर्वाप्य अन्वाहार्ये अधिश्रयणीं निधायाग्नावधिश्रित्य जीवति – प्राणिति तंडुल सुपक्वं न भवतीति जीवतंडुलं, न स्विद्यते – स्रवति यवागूरिवेत्यस्विन्नं चरुं तथा श्रपयेत्। दक्षिणाग्नेः दक्षिणतः दर्भानास्तीर्य चरुस्थालीं मेक्षणं दुर्वींश्च दर्भेष्वास्तृतेष्वासाद्य अवतीर्य संसाद्य असंस्कृतेनाऽज्येन – लौकिकाज्येन पक्वं चरुमभिघार्य 'शुन्धन्तां पितरः' इति वेद्याः परितः अप्रदक्षिणं कूर्चेन पाणिना यथालिंगं मन्त्रेण त्रिःकृत्वः अपः स्रावयेत्। सोपवीती दक्षिणाग्नाविध्मान् यथासंभवं समिधस्तूष्णीं हुत्वा प्राचीनावीती चरुमभिघार्य प्रत्येकमेवं गृहीत्वा 'अग्नये कव्यवाहनाय स्वधानमः स्वा' हेत्यादि तिस्रः आहुतीः प्रत्येकं चरुमवदाय जुहोति। तदग्नेर्दक्षिणाग्नेः सधूममेकमन्यैरसंस्पृष्टमुल्मुकमलातमुद्धृत्य 'अपयन्त्वसुराः' इति पश्चिमस्यां वेद्यां सन्न्यस्य निर्धूमं तमुल्मुकं निरस्येत्। (इति पञ्चमः खंडः)

(अथ षष्ठः खंडः) एवं जीवत्पितुस्तन्त्रमुक्त्वा इदानीं पिंडप्रदानमुच्यते यजमान इत्यादिना। स्फ्येनैव सकृदुल्लेखनं स्फ्यं आग्नेयाग्रं निधाय तस्मिन् 'ऊर्म्योदकान्त' इति प्रपितामहान्तैः त्रिभिर्मन्त्रैः सतिलजलेन क्रमेण तर्पयित्वा स्फ्यस्य पश्चिमे सकृदाच्छिन्नबर्हिरास्तीर्य तस्मिन् सकृदकाच्छिन्नबर्हिषि पित्रादीन् यथालिंगं 'आम आगन्त्वि'ति मन्त्रेण पितरं गोत्रं शर्माणं वसुरूपमेवं गोत्रनाम्ना रुद्ररूपमादित्यरूपमित्यावाह्य आसनाद्यैरभ्यर्च्य 'आमावाजस्ये'ति पात्रं प्रक्षाल्य 'अग्निरिन्द्रे'ति चरुं प्रक्षिप्य दर्भेण त्रिधा विभज्य साज्यतिलपिंडान् कृत्वा अवाचीनो दक्षिणपाणिः यस्य – सोऽवाचीनपाणिः, तथा भूत्वा पैतृकेण तीर्थेन 'एतत्ते पिताऽसौ पितः केशवशर्मन् ये च त्वामनु, एतत्ते पितामह नारायणशर्मन् ये च त्वामनु, एतत्ते प्रपितामह माधवशर्मन् ये च त्वामनु' इति प्रत्येकं उच्चरन् 'गोत्राय शर्मणे रूपाय पित्रे पितामहाय प्रपितामहाय ये च त्वमनुगच्छन्ति तेभ्यश्चायं पिंडः स्वधा नम' इति प्रत्येकमुक्त्वा दक्षिणान्तान्

पिंडान् दद्यात्। 'आंक्ष्वत ताताः पितरः स्वांक्ष्वत पितामहाः स्वांक्ष्वत प्रपितामहाः 'अभ्यञ्जनमभ्यंक्ष्वत' इति त्रिरुच्चार्य यज्ञदत्तशर्मणे पित्रे देवदत्तशर्मणे पितामाहाय विष्णुदत्तशर्मणे प्रपितामहाय अभ्यंजनं—तैलाभ्यञ्जनं क्रमेण दत्वा 'एतानि वः पितरः पितामहाः प्रपितामहा' ति वस्त्राञ्चलसूत्राणि दत्वा 'एतद्वः पितरः कशिपुरतोऽन्यत्। एतद्व उहपबर्हणमतोऽन्यत्' इत्येवं मन्त्रमूहित्वा क्रमेण पित्रादिभ्यः कशिपुं—तल्पमुपबर्हणमुपधानवासो—वस्त्रमेतानि प्रत्येकं दत्वा तूष्णीमभ्यञ्जनञ्चार्पयेत्—दद्यात्। पूर्ववत्—अष्टकावत् 'ऊर्जं वहन्ती' रिति प्रत्येकं परिषिच्य परितः स्राव्य त्रिरुदकाञ्जलिं दत्वा यथाऽष्टकायां तथैव 'नमो वः पितर' इति पितॄनभिवन्द्य 'उत्तिष्ठत पितर' इति प्रवासयति—उद्वासयति। यजमानो जीवत्पिता चेत् पिंडदानं न कुर्यात्। 'पितरि जीवति पिंडो न निर्वाप्य' इति वचनात्। एवं त्रयाणामन्यतमे जीवति सति वा पिंडदानानुपपत्तिः स्यात्। 'त्रिर्निदध्या' तीति श्रुतेः। अतो जीवत्पितुः होमान्त एव। अनाहिताग्निश्चेत् आहिताग्निवत् औपासनाग्नौ स्थालीपाकवदाघारं हुत्वा चरुस्थालीमाज्यस्थालीं स्रुवं मेक्षणञ्च प्रयुज्य लौकिकतंडुलानादाय 'पितृभ्यो जुष्ट'मिति निर्वाप्यौपासनाग्नौ चरुं श्रपयित्वा पूर्ववत् जुहुयात्। स्फ्यं विना दर्भेणैवोल्लिख्य पूर्ववत् पिंडान् दत्वा कशिप्वादींश्च दद्यात्। औपासनाग्नेः संस्काराभावात्—आधानसंस्काररहितत्वात्—विहायेति। 'अग्निर्मातस्मादेनसः प्रमुञ्चतु' इति औपासनाग्नेरुपस्थानमन्त्र इति फलति। मध्यमपिंडमाहिताग्निश्चेत् इडापात्रे निधाय पत्न्यै ददाति। 'आधत्त पितर,' इति पत्नीं प्राशयेत्। पत्नीबाहुल्ये मध्यमं पिंडं प्रतिपत्नि विभज्य यथाक्रमेण दद्यात्। तथा प्रदानमन्त्रस्य प्राशनमन्त्रस्य चावृत्तिर्भवति। द्विपिता चेदित्यादि। द्वौ पितरौ—जनकगृहीतारौ यस्य स द्विपिता चेद्यजमानः तथैव त्रीन् पिंडान् कृत्वा एकैकं पिंडमादाय 'एतद्वां ततौ पितरौ देवदत्तयज्ञदत्तशर्माणौ ये च युवामनु, शर्मभ्यां ये च युवामनुगच्छन्ति तेभ्यश्चायं पिंडस्स्वधा नम' इति पितृपिंडं दत्वा, एवं पितामहप्रपितामाहपिंडौ दत्वा, एकैकस्मिन् 'यन्मे माते' ति द्वावपि पितरौ पितामहप्रपितामहावपि ध्यात्वा 'अत्र पितरो यथाभाग' मिति प्रणमेत्। 'ये समाना' इति सकृदाच्छिन्नं बर्हिस्सर्वे

सम्मृज्य अद्भिः प्रोक्ष्य अग्नौ हुत्वा पात्राणि द्वन्द्वमाहरति – द्वे द्वे समेत्य गृह्णीयात् ।
इति तृतीयः पटलः । ( इति षष्ठः खंडः )

अथ चतुर्थः पटलः (अथ सप्तमः खंडः) मासिश्राद्धोत्रिकाल उच्यते 'मासिमार्सा' त्यादि । अन्यतमे अमावास्यायामितरेऽहनि नन्दाभद्रावर्जिते तिथौ भृग्वंगारकवर्जिते वारे अजन्मर्क्षे–जन्मर्क्षवर्जिते, त्रिपादवर्जिते नक्षत्ते पत्न्यासह प्राणानायम्य 'मासिश्राद्धेन यक्ष्ये' इति संकल्प्य ब्राह्मणानामामन्त्रणं – वरणं । आदिशब्देन वैश्वदेवाधारचरुश्रपणहोमादयो गृह्यन्ते । आमन्त्रणादिसर्वमष्टकावत् । एवं पितृभ्यस्तत्पत्नीभ्य इत्यादि । 'नमो वो मातरो रसाय' इत्यादिना मन्त्रानूह्य तत्पत्नीभ्यः पिंडदानम् । 'पितरि जीवर्ना' त्यादि । 'मातरि जीवन्त्यां पिंडो न-निर्वाप्यः, तुल्यधर्मत्वात् । यदि त्र्याणामन्यतमो जीवति तदापि पिंडो न निर्वाप्यः । 'त्रिर्निदधाती' ति श्रुतेः । योऽमृतः तं विहायान्येषां पिंडदानं केचिद्वदन्ति । यो जीवति तं पितरमेव तन्नामादिना यथेष्टं तर्पयेत् । सर्पिंडीकरणादूर्ध्वं त्रिपुरुषोद्देशेनैव प्रतिसंवत्सरं तन्मरणदिने अष्टकावदाधारं विना आज्यचरुभ्यां विश्वेभ्यो देवेभ्यः 'विश्वे देवस्य–'विश्वे अद्ये' ति । पितृदेवत्यं, 'अग्नये कव्य-वाहनाये' त्यादि । गृहस्थस्यौपासनाग्नावितरेषां लौकिकाग्नौ हुत्वा अष्टकावत् पिंडत्रयं दत्वा ब्राह्मणान् भोजयेत् । इदं मातापित्रोर्विषये, इतरेषां ज्ञातीनाम–ज्ञातीनाञ्च सर्वत्रैकोद्दिष्टं न पार्वणम् । पितृव्यज्येष्ठभ्रात्रोः त्रिपुरुषोद्देशेन पिंड-दानादिकं केचिद्वदन्ति । आसंवत्सरादित्यादि । ज्ञातेर्मरणदिनादारभ्य या–वत्संवत्सरपरिसमाप्ति तावन्मासिश्राद्धमष्टकाञ्च न कुर्यात् । आसपिंडीकरणादित्येके इति । यदा सपिंडीकरणात् प्रागेव मासे त्रिमासे षण्मासे वा अन्यत्र यदि स-पिंडीकरणं कुर्यात् तदा आसपिंडीकरणान्मध्यपातिमासि श्राद्धमष्टकाञ्च न कुर्यात् । न संवत्सरनियमः । संवत्सरादूर्ध्वमपि देशकालद्रव्याद्यसंभवाद्यन्तरायेण यद्यकृते सपिंडीकरणे तथाऽऽप्यासपिंडीकरणं न कुर्यादित्येके वदन्ति । यस्मादकृते सपिंडी-करणे कृता पितृपूजा प्रेतपूजा भवेत्–पितृणामपि प्रेतत्वं भवेदित्यर्थः । पितृन्वा प्रेतान्वा उद्दिश्य यत्पूजनं कृतं तत्सर्वं (निष्फलं) भवतीति हेतोः मासिश्राद्धमष्टकाञ्च न कुर्यात् । पिंडपितृयज्ञः कर्तव्य एव । अकृतेपि सपिंडीकरणे आहिताग्निना

पिंडपितृयज्ञा कर्तव्य: श्रौताग्न्यात् । अनाहिताग्ने: अष्टकापिण्डपितृयज्ञमासि — श्राद्धानि न कर्तव्यानि, आमपिंडीकरणादेव सिध्यति । (सप्तम: खंड:)

(अथ अष्टम: खंड:) अथ चैत्र्यां गृहं शोधयित्वा — गोमयादिना गृहशुद्धिं कारयित्वा वितानस्तंभवेष्टनादिभिरलंकृत्य अलंकृतो स्यात् । 'सस्यवृद्ध्यर्थं — चैत्रीपाकयज्ञेन यक्ष्ये' इति संकल्प: । आग्नेयस्थालीपाकवत् चरुश्रपणमवतरणञ्च । आज्येन 'ग्रीष्मो हेमन्त' इत्यादिहोम: । वैष्णवञ्च हुत्वा साज्येनेति । चरुमभिघार्य साज्येन चरुणा 'मधुश्च स्वाहे'त्यादिहोम: । अग्नेरपरस्यां तंडुलैश्चतुरश्रं मंडलं कृत्वा तस्मिन् नवं वस्त्रमास्तीर्य श्रीमहाविष्णुं प्राङ्मुखं तद्दक्षिणे तन्महिषीं नित्यानपायिनीं श्रीमहालक्ष्मीं प्राङ्मुखीमावाह्य आसनाद्यैरुपचारैरभ्यर्च्य तत्तन्मन्त्राद्यमपूपञ्च पृथक् पात्रे निक्षिप्य निवेदयति । पुरुषसूक्तेन प्रणम्य स्तुवीत । चैत्रमासे यावन्ति सस्यानि फलन्ति तानि सर्वाणि चैत्र्याणि, तै: सस्यै: पक्वान्यन्नानि अत्र यज्ञे प्रस्तुता यावत्संख्याका देवता: तावत्संख्याकान् ब्राह्मणानन्नसूक्तेन यथाशक्ति भोजयित्वा दक्षिणां दत्वा सपिंडै: ज्ञातिभिर्युक्त: स्वयं भुंजीत । (इत्यष्टम: खंड:)

(अथ नवम: खंड:) अथाश्वयुजीत्यादि । अग्ने: प्राच्यामित्यादि । अग्ने: प्राच्यां तंडुलै: स्थंडिलं कृत्वा वस्त्रमास्तीर्य वस्त्रोपरि भवं — पशुपतिं पश्चिमाभिमुखमावाह्यासनाद्यैरभ्यर्च्य तृणादीनि गोग्रासार्थं संभृत्य पशूनग्ने र्वायव्यां गोष्ठे स्थापयति । चतुर्थीवत् चरुस्थाल्यां 'भवाय जुष्टं निर्वपा' मीति तंडुलानां निर्वापश्रपणादीनि कृत्वा उदगुद्वास्य परिषेकं कुर्यात् । स्रुवेणाज्यं क्रमेण हुत्वा आज्यहोमान्ते मेक्षणेन दर्व्या चरुं जुह्वामवदायाभिघार्य प्रत्येकमेवमवदानं संगृह्य जुहुयात् । अर्कपत्रे देवाय — भवाय चरुं हविर्निवेद्य रौद्रमन्त्रै: संस्तूयाग्न्योद्वास्य आज्यशेषेण—होमावशिष्टेन स्थालीगतेन घृतेन तृणानि — यवसादीनि अभ्युक्ष्य किञ्चित् संसिच्य गोभ्य: प्रदाय प्रत्येकं—कबलमात्रं दत्वा प्रदक्षिण नमस्कारौ करोतीति विज्ञायते । एवमाहिताग्ने: अर्धाधायिन: औपासनाग्नौ सर्वाधायिनो निर्मन्थ्ये लौकिकाग्नौ वा पाकयज्ञा: कर्तव्या: । इति चतुर्थ: पटल: । (इति नवम: खंड:)

अथ पञ्चमः पटलः (अथ दशमः खडः) अथाग्नावित्यादि। अथ स्नानादिनित्यसर्वकर्मानुष्ठानानन्तरम्। अग्नौ तत्तदाश्रमोक्ताग्नौ नित्यहोमान्ते सर्वप्रायश्चित्तार्थमैहिकामुष्मिकफलसिद्ध्यर्थं श्रीमन्नारायणस्य नित्यार्चा विहितकर्तव्या प्रतिपाद्यते। या विष्णोर्नित्यार्चना सा सर्वदेवार्चना भवति 'अग्निर्वै देवाना'मिति बह्वृचश्रुतिः। "अग्निः–अवमः कनीयान्, विष्णुः–श्रीमन्नारायणः परमः सर्वोत्तमः इति तस्या अर्थः। तस्मात् तदर्चनं कुर्यात्। स्वयमन्येन वा पूजयति। षडंगुलादहीनमनूनं दशतालादि नवविधेष्वेकेन मानेन विष्णोः रूपमाकारं शास्त्रोक्तलक्षणं चतुर्विंशतिमूर्तीनां दशावताराणामन्येषां भगवन्मूर्तीनां मध्ये अन्यतमं दिव्यमंगलविग्रहं श्रीशास्त्राविरोधेन शिल्पशास्त्रोक्तविधिना कल्पयित्वा-कारयित्वा उत्तरायणे दक्षिणायने वा मार्गशीर्षमाघौ विहाय अन्यस्मिन् मासे गुरौ शुक्र चाम्बरे दृश्यमाने शुक्लपक्षे रिक्तां तिथिं विहाय शुभे तिथौ शुभवारे शुभे नक्षत्रे, पातवैधृत्यादिविवर्जिते योगे, विष्टिवर्जिते करणे, लक्षणयुक्ते शुभे दिने शास्त्रज्ञान् उक्तलक्षणसंपन्नान् षोडशर्त्विजः अष्टौ चतुर एकं वा वृत्वा प्रतिष्ठां कुर्यात्। यागशालां यथाविधि निर्माय तत्र दक्षिणस्यामौपासनाग्निकुंडं कारयित्वा आ[illegible]रं कुर्यात्। अमन्त्रकं शिल्पिना अक्षिमोचनं कारयित्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां बिंबं संशोध्य अंगहोमं हुत्वा। अतोदेवादीत्यादि-शब्देन श्रीदेवत्यं भूदेवत्यञ्च हुत्वा देवस्याग्रे सवत्सां गां बद्ध्वा प्रस्थादहीनं क्षीराज्यदधिमधूनि स्वर्णादिपात्रेषु सस्वर्णं प्रत्येकं संगृह्य निधाय अष्टौ धान्यानि व्रीह्यादीनि राशीन् प्रत्येकं कृत्वा तत्तदधिदेवानावाह्याभ्यर्च्य पुरुषसूक्तमुच्चरन् स्वर्णेन प्रहरणेन स्वर्णसूच्या अक्ष्युन्मेषणं कुर्यात्। प्रच्छन्नपटं विहाय गवादि-दर्शनद्रव्याणि दर्शयित्वा अध्यर्धबिंबायामविशालनिम्नां द्रुमद्रोणीमवटं पात्रं वा पञ्चगव्येनापूर्य ईशानमावाह्य वस्त्रमास्तीर्य विष्णुसूक्तेन प्राक्शिरश्शाययेत्। तमुद्धृत्याभिषिच्य पात्रं संशोध्य क्षीरेणापूर्य अथर्ववेदमावाह्य पूर्ववच्छाययेत्। तमुद्धृत्याभिषिच्य नद्यादिकं देवं नीत्वा तदसंभवे सौवर्णादिपात्रे 'ये ते शता'द्यै-र्वारुणमन्त्रैः वरुणमभ्यर्च्य तत्र वस्त्राणि तदुपरि कुशदर्भांश्चास्तीर्य तत्र विष्णुसूक्तेन देवं पूर्वमौलिमूर्ध्वास्यं शाययेत्। प्रत्येकं दिनमर्धदिनं यामं मुहूर्तं वा

अधिवासयति । यद्वा – केवलं जलाधिवासनमेव करोति । [illegible] ।
स्नपनविस्तरस्तु भगवच्छास्त्रसंहितासु द्रष्टव्यः । देवसंयुक्तमेव पृथक् कलशस्नापनम् ।
ततः शयनाधिवासः प्रतिसरबन्धश्च ॥ (इति दशमः खण्डः)

(अथ एकादशः खण्डः) कालहीनमित्यादि । सौवर्णं राजतं ताम्रं वा कुंभं प्रशस्तमावाहने । अलाभे कालविहीनं कृष्णवर्णविहीनं मृन्मयं द्रोणद्वयपूर्णं द्रोणपूर्णं वा आहरेत । सौवर्णं राजतं ताम्रं वा यथा लाभपरिमाणमाहरेत । तं 'शुचीवो हव्ये'ति प्रक्षाल्य 'इषे त्वोर्जे त्वे'ति यवान्तरमंगुल्यन्तरं वा तन्तुना परिवेष्ट्य उत्पूतैराघावैः दिवा गृहीतैः – नद्यादिपवित्रजलैः 'धारासु सप्त' इत्यापूर्य देवस्य दक्षिणभागे धान्यराशौ निधाय वस्त्राभ्यामावेष्ट्य उशीरादिगन्धैर्वासयित्वा मातृकान्यासादि जप्त्वा ततः 'आपो वा' इत्यादिवारुणमन्त्रैः जलमभिमृश्य ओंकारेण पुरुषसूक्तेन श्रीभूसूक्ताभ्याञ्चाभिमृश्य कुंभं स्पृष्ट्वा कूर्चाक्षतसुवर्णानि स्रुक्स्रुवादीनि चिह्नानि रत्नानि पद्मरागादीनि प्रक्षिपेत् – विष्णुगायत्र्या न्यसेत् । निष्कलमित्यादि । निष्कलं तेजोमयमचिन्त्यं सच्चिदानन्दस्वरूपिणं देवं परमात्मानं विष्णुं हृत्पद्मे अर्कमंडले वा ध्यात्वा समादाय तत्कुंभोदके 'इदं विष्णु'रिति मन्त्रान्ते रुक्माभं – तप्तहाटककान्तियुतं रक्ते रक्तवर्णे नेत्रे लोचनान्ते, आस्यं रक्तवर्णं, पाण्योः पादयोश्च तले रक्ते यस्य तं रक्तास्यनेत्रपाणिपादं श्रीवत्साख्यो रोमावर्तः – कालिमा वा दक्षिणस्तनभागोपरि अंको लांछनं तं श्रीवत्सांकं, चत्वारो भुजा यस्य तं चतुर्भुजं, पीतं स्वर्णवर्णमंबरं वस्त्रं धारयमाणं पीतांबरं शंखचक्रधरं सौम्यं सोमवत्प्रियदर्शनं कलाभिः करचरणाद्यैः सहवर्तमानं सकलमेवं ध्यात्वा 'विष्णुमावाहयामी'त्यावाह्याभ्यर्च्य प्रणमेत् । अपि वा तत्तत्कल्पोक्तवत् कुर्यात् । एवं सुवर्णवर्णां रक्तास्यनेत्रपाणिपादां द्विभुजां पद्मधरां श्रियं, श्यामवर्णां महीञ्चावाह्याभ्यर्च्य प्रणमेत् । ततोऽग्नौ हौत्रशंसनं प्रधानहोमश्च । चतुरावर्त्य हुत्वेत्यादि । चतुष्कृत्वो हुत्वा तत्तन्मन्त्रेणाष्टोत्तरशतं जुहुयात् । नाम्नेति । यस्य यन्नाम केशवो रामः कृष्ण इत्यादि तेन प्रणवादि स्वाहान्तेन नाम्ना साज्यं चरुमष्टोत्तरशतं जुहुयात् । तथा तत्कल्पोक्तमन्त्रेण समिदाज्यचरुभिः जुहुयात् । रात्रिशेषं नयेत् । गृहे वायव्यां

दिशि ऐशान्यां वा देवस्यायतनमालयं तस्मिन् देवायतने वा अग्निहोत्रगृहे वा अर्चास्थाने अर्चार्थं पीठं दारवाद्यासनं तस्मिन् अर्चापीठे। रत्नमिति जात्येकवचनम्। पूर्ववत् पद्मरागादिमणीन् तदलाभे प्रतिनिधिं सुवर्णं वा मध्यादि नवसु दिक्षु सुदृढं सन्न्यस्य तत्र देवस्य श्रीभूम्योश्च प्रतिष्ठापनं कृत्वा यथोक्तं व्याहृतिन्यासमावाहनञ्च कुर्यात। (इत्येकादशः खंडः)

(अथ द्वादशः खंड) अथ नित्यार्चनम्। सायं प्रातः नित्यहोमान्ते 'अतो देवा' इति देवं प्रणम्य देवस्य दक्षिणपार्श्वे कूर्मासने समासीनः प्राणानायम्य संकल्प्य मातृकान्यासं कृत्वा 'ब्रह्म ब्रह्मान्तरा' त्वेति हृदयं 'द्यौर्द्यौर' सीति शिरः 'शिखे' तिशिखाञ्चाभिमृश्य 'सकृद्देवानामायुधै' रिति कवचं 'नारायणा' येति दिक्बन्धनञ्च कृत्वा 'सूर्योऽसि – 'चन्द्रो'ऽसीति मन्त्राभ्यां नेत्रयोः प्रणवेन हृदये 'सुदर्शनं – 'रविपा' मिति हस्तयोर्दक्षिणवामयोरभिमर्शनं कृत्वा आभुरण्यादिभिर्मन्त्रैः करयोरंगुलिषु न्यासं कृत्वा 'अन्तरस्मिन्नि' त्यात्मानं ब्रह्माणं ध्यात्वा उक्तन्यासान्तराणि यथाशक्ति तत्तन्मन्त्रजपेन सार्धं कृत्वा अर्चनायारमेत। पूर्वेद्युस्समर्पितपुष्पदामादिकं पर्युषितं निर्माल्यं उद्धृत्य अर्चापीठं साधावेन पाणिना संशोध्य मार्जयित्वा पूर्ववत् रुक्माभमित्यादिरीत्या देवं ध्यात्वा कुशपुष्पादिपूजाद्रव्यैरन्यतमेन मन्त्रासनं कल्पयित्वा पादप्रक्षालनाय जलं – पाद्यं सतुलसीदलं शंखेनादाय पादयोः संक्षाल्य पुनर्जलं गृहीत्वा आचमनं मुखे दर्शयेत्। स्नापनं ततो वस्त्राभरणैरलंकारश्च। पूर्ववदाचमनम्। पादे किरीटे कंठे सर्वांगेषु यथालाभं पुष्पाद्यैरलंकुर्यात्। गन्धं मलयादि ललाटोरस्स्थलभुजेष्वालेपयेत्। धूपं धूपार्थपरिमलद्रव्यैः परितो दद्यात्। दीपं साज्यवर्तिदीपितं पार्श्वयोर्दर्शयेत्। अर्घ्यार्थं जलं साक्षतदूर्वादियुतमर्घ्यं दक्षिणहस्ते दद्यात् पुनराचमनं दद्यात्। हविस्साज्यव्यञ्जनमोदनं पृथक् पात्रे प्रक्षिप्य परिषिच्य निवेदयेत्। पानीयं स्वादुशीतलं जलं निवेद्याचमनं दद्यात्। मुखवासं – कर्पूरादिवासितं तांबूलं दत्वा द्वादशाष्टाक्षराभ्यां पुष्पाणि पादयोः अर्पयेत्। तं – सत्यज्ञानानन्दादिलक्षणं, यज्ञपुरुषं 'अमूर्ताम्न्याहुतिः प्रोक्ता' इत्याद्यमूर्तयजनप्राप्यं यज्ञफलदातारं ध्यायन् ध्यानयोगेन साक्षात्कुर्वन् 'नित्यैश्वर्यो

भवे' ति मंगलानि प्रयुंजानः पुरुषसूक्तेन संस्तूय वैष्णवऋग्भिः स्तोत्रं कृत्वा प्रणामं पञ्चविधं भगवच्छास्त्रोक्तं कुर्यात्। 'यज्ञेषु विहीनं तत्संपूर्ण' मिति भगवत्समूर्तार्चनफलं श्रुतिर्वदति। तस्मात् द्विजातिः ब्रह्मक्षत्रियवैश्याः नित्यं सायं प्रातः गृहे स्वगृहे अनेन विधिना विष्ण्वाराधनं कुर्युः। आलये आलयार्चायामधिकुर्वाणाः कुर्युः। तदाराधनेन परं विष्णोः पदमपुनरावृत्तिकं आराधका गच्छेयुः। 'तदाराधनेन संसारार्णवनिमग्नो जीवात्मा परमात्मानं प्रविशति' इति भगवान् मरीचिः (इति द्वादशः खण्डः)

अथ षष्ठः पटलः (अथ त्रयोदशः खंडः) अथ ग्रहशान्तिम्—गृह्णन्तीति-ग्रहाः—लोकानां जनानां यात्रां प्रवृत्तिं स्वायत्तीकुर्वन्तीति तथोक्ताः। तस्मात्—यस्माल्लोकयात्रा ग्रहायत्ता तस्मात्कारणात्—आत्मविरुद्धे—विरोधे तत्परिहारार्थं ग्रहान् आदित्यादीन् वक्ष्यमाणान्—आत्मविरुद्धो यो ग्रहः—तं वा सम्यक् पूजयति। आह च योगीश्वरः 'पूज्या ग्रहाश्चैव विधानतः,' 'श्रीकामः शान्ति-कामो वा ग्रहयज्ञं समाचरेत्। वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्नपि॥' इति शान्तिनिमित्तान्युक्ता ग्रहपूजायाः आवश्यकत्वञ्च वदति 'ग्रहाधीना नरेन्द्रणा-मुच्छ्रायाः पतनानि च। भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः॥' इति। अयमर्थः। श्रीरिति—अभिलषितसिद्धिः। शान्तिरभ्युदयशान्तिः। वृष्टिः सस्यादि वृद्ध्यर्थं वर्षणम्। आयुरपमृत्युजयेन दीर्घकालसुखजीवनम्। पुष्टिः—अनवद्य-शरीरत्वम्। अभिचारः—अदृष्टोपायेन परपीडाजननञ्च ज्ञेयम् इति। आदित्य इत्यादि। अदितेरपत्यमादित्यः सूर्यः, चन्दयत्याह्लादयतीति चन्द्रः, अंगानि शरीराण्यारयतीति, अथ वा अंगारवर्णत्वादंगारकः। बुद्ध्यते सर्वमनेनेति बुधः, बृहतां वेदमन्त्राणां देवानां वा पतिः अधिगन्ता बृहस्पतिः, शुचं दुःखमसुराणां राति विनाशयति, अथ वा शुक्लवर्णत्वात् शुक्रः—शनैर्मन्दं चरतीति शनैश्चरः, रहयति स्थगयति चन्द्रसूर्याविति राहुः, ध्वजवत् स्थिरं तिष्ठतीति केतुः। एते नव ग्रहाः। ग्रहाणां वर्णा उच्यन्ते रक्तेत्यादिना। रज्यत इति रक्तः—कोकनदकान्तिः, सिनोति मालिन्यमिति सितः मौक्तिकवर्णः, रागमतिक्रम्य वर्तत इत्यतिरक्तं बन्धूकपुष्पकान्तिः, श्यामः—कर्णिकारपुष्पकान्तिः, पिबति—

चित्तं हरतीति पीतं काञ्चनपुष्पाभम् । सितासिते व्याख्याने, कर्षति चित्तमिति कृष्णमञ्जनाभम् । धुनोति नेत्रमिति धूम्रं कृष्णमिश्रितलोहितवर्णम् । एते वर्णाः । एतेषामधिदेवता उच्यन्ते अनलेत्यादिना । अनति त्यनलोऽग्निः । अपां पतिर्वरुणः । गूहति सेनाः रक्षतीति गुहः स्कन्दः । हरति पापानीति हरिर्विष्णुः । इन्दतीतीन्द्रः सुरपतिः । हंसवत् शच्यति गच्छति (?) इति शची इन्द्राणी । प्रजानां पतिः प्रजापतिः ब्रह्मा । शिष्यत इति शेषः सर्पराजः । यमयति प्राणिन इति यमः कृतान्तः । एते अधिदेवाः । तस्मादित्यादि । शुद्धे देशे तुषास्थिरोमलोष्टादिरहिते मनोरमे हृद्ये देशे षोडशस्तंभयुक्तां त्रिपङ्क्तिकं चतुरश्रां चतुर्द्वारयुतामग्निशालां प्रपां वा कल्पयित्वा गोमयेन यागशालां तां लेपयित्वा तस्मिन्नुपलिप्ते स्थले यस्य यस्य ग्रहस्य यद्यत् स्थानमुक्तं तत्र तत्र रजितेन ताम्रेण वा निष्कत्रयादहीनेन यथाशक्ति वक्ष्यमाणवत् पीठानि कारयित्वा स्थापयेत् । अशक्तश्चेत् तंडुलैः शालिभिः व्रीहिभिः सिकताभिर्वा द्वादशांगुलायामविस्तारं चतुरंगुलोन्नतं वेदिं कृत्वा तत्र ग्रहानावाहयेत् । चतुरश्रमित्यादि । चतस्रः – अश्रयः कोटयो यस्य तत् चतुरश्रम् । वर्तते परितः इति वृत्तम् । त्रुटति चतुरश्रस्य मध्यं अथ वा त्रुट्यते च्छिद्यते सन्नम्यत इति च त्रुट्याकारं – डमरुकाकृति । त्रीणि कोणानि यस्य तत् – त्रिकोणम् । अष्टावश्रयो यस्य तत् अष्टाश्रम् । चन्द्रस्यार्धमिवाकारः यस्य तदर्धचन्द्राकारम् । वज्रस्येवाकारो यस्य तत् वज्राकृति । दण्डस्य लगुडस्येवाकारो यस्य तत् दंडाकृति । ध्वजस्य पताकाया इवाकारो यस्य तत् ध्वजाकृति । इति क्रमेण तेषां ग्रहाणां पीठानामाकारः । एवंरूपाणि पीठानि कल्पयित्वा यथाशक्ति सुवर्णेन निष्कप्रमाणेन तत्तद्ग्रहरूपाणि प्रतिमारूपाणि कारयेत् । अशक्तश्चेत् तत्प्रमाणानि राजतप्रतिमारूपाणि वा कारयेत् । एवं ग्रहाधिदेवानां प्रतिमारूपाणि च यथाशक्ति कारयित्वा तत्तत्स्थाने मंडलोपरि वस्त्रे तत्तत्प्रतिमां संस्थाप्य अर्चयेत् । अशक्तः पीठेषु प्रत्येकं कूर्चं प्रागग्रं निधाय तत्तद्दक्षिणपार्श्वे तत्तदधिदेवानां पीठानि तत्तद्ग्रहाकृतीनि, अथवा चतुरश्राणि कल्पयित्वाऽर्चयेत् । आहवनीयेत्यादि । कुंडलक्षणादिकं भगवच्छास्त्रे द्रष्टव्यम् । अग्नीन् यथाविधि कल्पयित्वा

यजमानस्याग्निररण्यारोपितश्चेन् तामरणिं लौकिकारणिं वा आदाय मथित्वा साधयेत् । ततः ग्रहाणां पूजनम् । यजमानः पत्न्या सह स्वलंकृत्य प्राणानायम्य 'सर्वारिष्टशान्त्यर्थं ग्रहयज्ञं करिष्ये' इति संकल्प्य आचार्यादीन् एवं वरयेत् । एकं प्रधानमाचार्यं ग्रहपूजार्थमेकमधिदेवार्चनार्थमेकं मन्त्रजपार्थमेकं समिदाज्यचरूणां प्रत्येकं होमार्थं त्रीन्, एकमेकं वा विभवानुसारेण वरयेत् । तान् वस्त्रगन्धमाल्यादिभिर्यथाशक्ति पूजयित्वा तत्तत्कर्मणि नियोजयेत् । अथ पूजाक्रमः । काश्यपगोत्रं कलिंगदेशमभयवरदकमलहस्तं सप्ताश्वयुक्तरथस्थं रक्तवर्णं रक्तांबरं चित्रध्वजशोभितं मकुटाद्याभरणयुतं सपरिवारं प्राङ्मुखमादित्यं – 'आदित्यमावाहयामी'ति । आत्रेयगोत्रं यवनदेशं श्वेतवर्णं श्वेतांबरचित्रध्वजशोभितं गदावरदपद्महस्तं मकुटाद्याभरणयुतं दशाश्वयुक्तरथस्थं सपरिवारं पश्चिमाभिमुखं चन्द्रं – 'चन्द्रमावाहयामी'ति । भारद्वाजगोत्रं विन्ध्यदेशं अतिरक्तवर्णमतिरक्तांबरचित्रध्वजशोभितं वरदशक्तिशूलगदाहस्तं मकुटादिभूषणान्वितं मेषारूढं सपरिवारं दक्षिणाभिमुखमंगारकं – 'अंगारकमावाहयामी'ति । आत्रेयगोत्रं मगधदेशं श्यामवर्णं श्यामांबरचित्रध्वजशोभितं मकुटादिभूषणान्वितं वरदगदाखड्गचर्महस्तं सिंहवाहनं सपरिवारं उत्तराभिमुखं बुधं–'बुधमावाहयामी'ति । आंगीरसगोत्रं सिन्धुदेशं पीतवर्णं पीतांबरचित्रध्वजशोभितं मकुटादिभूषणान्वितं दंडाक्षमालाकमंडलुवरदहस्तं सिंहवाहनं सपरिवारमुत्तराभिमुखं बृहस्पतिं – 'बृहस्पतिमावाहयामी'ति । भार्गवगोत्रं सिन्धुदेशं श्वेतवर्णं श्वेतांबरचित्रध्वजशोभितं मकुटादिभूषणान्वितं वरदाक्षसूत्रदंडकमंडलुहस्तं सिंहवाहनं सपरिवारं पूर्वाभिमुखं शुक्रं – 'शुक्रमावाहयामी'ति । काश्यपगोत्रमान्ध्रदेशं नीलवर्णं नीलांबरं चित्रध्वजशोभितं मकुटाद्याभरणान्वितं वरदाभयबाणधनुर्हस्तं गृध्रवाहनं सपरिवारं पश्चिमाभिमुखं शनैश्चरं – 'शनैश्चरमावाहया'मीति । वसिष्ठगोत्रमंबरदेशं कृष्णवर्णं कृष्णांबरचित्रध्वजशोभितं करालवदनं खड्गचर्मशूलवरदहस्तं नीलसिंहासनस्थं मकुटादिभूषणन्वितं सपरिवारं दक्षिणाभिमुखं राहुं – 'राहुमावाहयामी'ति । जैमिनिगोत्रं मध्यदेशं नानावर्णं नानावर्णांबरचित्रध्वजशोभितं मकुटाद्याभरणान्वितं विकृतास्यं वरदगदाहस्तं गृध्रवाहनं सपरिवारं दक्षिणाभिमुखं केतुं 'केतुमावा-

हयामी' ति । आवाह्य आसनाद्यैरभ्यर्च्य अधिदेवानर्चयेत् । अयं क्रमः । सिन्दूरवर्णं शक्त्याद्यायुधधरं मेषारूढमनलं, स्फटिकाभं पाशधरं मकरवाहनमप्पति वरुणं, प्रवालप्रभं शक्तिधरं मयूरवाहनं गुहं स्कन्दं, श्यामवर्णं शङ्खचक्रगदापद्मधरं गरुडवाहनं विष्णुं, पीतवर्णं वज्रधरमैरावतवाहनं त्रिदशाधिपमिन्द्रं, स्वर्णवर्णां ऐरावतारूढां शचीं, शोणवर्णं पद्माक्षवलयधरं चतुर्मुखं प्रजापतिं, श्वेतवर्णं फणामणि-शोभितं शेषमावाहयामीत्याद्यावाहनम् । करवीरैरित्यादि । पद्म–कैरवबन्धूक–वासन्तिका पीतयूथिका जाती–न्दीवरा–तसी–पाटलास्तत्रोच्यन्ते । तद्वर्णवर्णैः पुष्पैर्गन्धैरित्यादि । अथवा बोधायनादिमतेन वा अर्चनं कुर्यात् । शुद्धोदनेत्यादि । शुद्धं श्वेतमन्नं शुद्धौदनम् । पयसि पक्वमन्नं पायसम् । गुडेन सह पक्वमन्नं गुडौदनम् । दध्ना पृक्तमन्नं दध्योदनम् । गुडक्षीराभ्यां सह पृक्तमन्नं गौलिकम् । चित्रं–नाना-वर्णमन्नं चित्रौदनम् । तिलैः पक्वमन्नं कृसरम् । माषैस्सह पक्वमन्नं माषौदनम् । कणैः जीरकैः सह पक्वमन्नं कणौदनम् इत्यन्नानि निवेदयेत् (इति त्रयोदशः खंडः)

(अथ चतुर्दशः खंडः) अर्केत्यादि । अर्कस्य सूर्यस्य प्रियोऽर्कः, पुण्यानि पत्राण्यस्येति–पालाशः, खदिरति (?) स्थिरं तिष्ठतीति खादिरः, अपकृष्टः अमार्गादित्यपामार्गः, अश्वरूपी वैश्वानरोऽत्र तिष्ठतीत्यश्वत्थः, उन्दनादुदुंबरः, शमयति दोषानिति शमी, दूरं वाति गच्छतीति (?) दूर्वा, कौ भूमौ शेत इति कुशम्, एतानीध्मानि अन्वर्थानि । त्रिमधुराक्तानि–त्रयो मधुराः पदार्थाः– शर्करामधुक्षीराणि तैरक्ताभिः तत्तदुक्ताभिस्समिद्भिः तत्तदुक्तेन चरुणा आज्येन च प्रत्येकं यथाशक्ति जुहुयात् । पञ्चाग्निविधानेन शान्तिं कर्तुमशक्तः एकाग्नौ सभ्ये आदित्यादीनां होमं कुर्यात् । ग्रहाणामेवम् । अधिदेवानाञ्च विना समिच्चरू केवलमाज्येन तत्तद्ग्रहाहुतिसंख्याहुतीः तत्तद्ग्रहाणामग्नौ जुहुयात् । तत्तदिध्मेष्वेकमेकमिध्मं होमात्पूर्वं होमान्ते वा यजमानेन पूर्णाहुत्यर्थं निर्दिश्य तेन होमः कार्यः । ततः सर्वप्रायश्चित्तार्थं तत्तदग्नौ मिन्दाहुत्याश्राविताद्दीन् आज्येन सकृत्सकृद्धुत्वा अन्तहोमं हुत्वा अग्निमरण्यादिष्वारोप्य रक्षेत् । पूर्वोक्तचरुभिः ब्राह्मणान् भोजयित्वा । आचार्यमृत्विजश्चोद्दिष्टान् तैस्तैः ग्रहनिवेदितैरन्नैः अन्यान् शुद्धौदनेन च भोजयित्वा ततस्तैस्सह यजमानः तत्तद्ग्रहांस्तैस्तैर्मन्त्रैः

पुष्पाञ्जलिं दत्वा प्रणम्य यथोक्तदानानि कुर्यात् । एतत् ग्रहशान्तिकर्म शुभर्क्षेषु आरभ्य कुर्यात् । एतेनेत्यादि । दुःखा इति लिंगव्यत्ययः छान्दसः । मूलाश्रेषादिजात शिथिलजात कपोतारोहणादिसर्वदोषशान्तिर्भवति । अन्यथा--अकृतग्रहशान्तिकस्य महत्तरो दोषः अत्यन्तो दोषः दुःखव्याध्यादिकं पापञ्च सम्पद्यते । यथा भगवच्छास्त्रे शान्तिकल्पोपन्यासे भगवान्मरीचिः । 'अद्भुत-शान्तिः प्रभूतशान्तिः महाशान्तिः, शान्तिः, शुद्धिरिति शान्तिः पञ्चधा भव' तीत्यारभ्य 'आचार्यमृत्विजश्च वरयित्वा नववस्त्रोत्तरीयांगुलीयकाद्यैरलंकृत्य अग्नि-कुंडेष्वाघारं हुत्वा आदित्यांगारक मन्द बुध सित बृहस्पति चन्द्रेभ्यः प्रागाद्यु-दगन्तं प्रदक्षिणं ध्यात्वाऽऽवाह्याभ्यर्च्य अष्टाक्षरेणायुतं अष्टोत्तरशतं वा अभिमृश्य ग्रहशान्त्युक्तविधानेन तत्तद्दैवत्यं चरुसमिदाज्यादिभिः नित्यमष्टोत्तरशतं हुत्वे-त्यादि । अन्यत्र मरीचिः । 'द्वितीयावरणे प्राग्द्वारादुत्तरे पश्चिमाभिमुखो रक्तवर्णः शुक्लांबरधरो द्विभुजः पद्महस्तः सप्ताश्ववाहनो हयध्वजो रेणुका-सुवर्चलापतिः खकारबीजः अव्धिघोषणरवस्सहस्रकिरणो मंडलावृतमौलिः श्रावणे मासि हस्तजः आदित्यः 'आदित्यं भास्करं सूर्यं मार्ताडं विवस्वन्त'मिति । तद्दिगीशस्य दक्षिणे पश्चिमाभिमुखः श्वेताभो रक्तांबरधरः द्विभुजः इक्षुचापभृत् मंडलावृतमौलिः हिरण्मयोऽष्टाश्ववाहनः कुलीरध्वजो हंसरवः रोहिणीशः सकारबीजस्सौम्यजः(?) 'वासिष्ठं सोमं यज्ञांगमिन्दुं चन्द्र'मिति, दक्षिणे च उत्तराभिमुखो बन्धूकवर्णो नीलांबरधरः शक्तिपाणिः शरभध्वजः शुकजुष्टापतिः अश्विनीजातः अश्ववाहनः शंखरवो नामाद्यक्षरबीजः 'अंगारकं वक्रं रक्तं धरासुत'मिति । तस्य पश्चिमे च उत्तराभिमुखः श्यामवर्णो रक्तांबरधरो द्विभुजो रथवाहनः सिंहध्वजश्शंखरवो नामाद्यक्षरबीजस्सुशीलापतिश्श्रविष्ठाजातो बुधः 'बुधं श्यामं सौम्यं श्रविष्ठाज'मिति । पश्चिमे दिगीशस्य दक्षिणे प्राङ्मुखः पीताभः श्यामांबरधरो दर्भहस्तः पूरितमकुटः कृष्णाजिनधरः कुशध्वजो हंसवाहनः तिष्यजस्तारापतिः नामाद्यक्षरबीजो बृहस्पतिः 'पीतवर्णं गुरुं तैष्यं बृहस्पति'मिति । तस्योत्तरे प्राङ्मुखः रजतवर्णो वल्कलांबरधरोऽजिनजटाधरो मेघवाहनः त्रवध्वजो रोहिणीजो नामाद्यक्षरबीजस्सुकलापतिः शंखरवः शुक्रः 'शुक्रं भार्गवं

काव्यं परिसर्पिण ' मिति । उत्तरे दिगीशस्य पश्चिमे दक्षिणामुखोऽञ्जनामः द्विभुजः कुशचीरांबरधरो रेवतीजः कुमुदापतिः वराहध्वजवाहनः शखरवो नामद्यक्षरबीजो मन्दः 'सूर्यपुत्रं मन्दं रैवत्यं शनैश्चर' मिति । तत्प्राच्यां दक्षिणामुखः श्यामाभो जपांबरधरो द्विभुजो नागचूलिकामस्तकः पाशायुधो मंडलावृतमौलिः सर्पध्वज-वाहनः आश्लेषाजः जरापतिः नामाद्यक्षरबीजः राहुः 'राहुं दैतेयमुरगेशं ग्राहक ' मिति । प्राच्यां पश्चिमाभिमुखो धूमवर्णः श्वेतांबरधरो नारीशः अन्यत्सर्वं राहोरिव केतुः 'केतुं कृष्णवर्णं रौद्रं प्रकाशिन ' मिति । यद्दिग्द्वारं तद्द्वार-पार्श्वेऽर्चयेत् । इति (इति चतुर्दशः खंडः) इति षष्ठः पटलः ।

(इति चतुर्दशः खंडः) इति षष्ठः पटलः

इति चतुर्थः प्रश्नः

## अथ पञ्चमः प्रश्नः

-*०*-

### प्रथमः खण्डः

**अथ आहिताग्नेः पत्न्याः गृहस्थस्य स्त्रियाः ब्रह्मचारिणः अनारोपितकार्यस्य च दहनविधिं व्याख्यास्यामः ॥ १ ॥**

अथ निषेकाद्यष्टादशसंस्कारकथनानन्तरम्। **अहिताग्नेः**—हविर्यज्ञयाजिनः स्वाध्यायपरस्य च। अनेन सदाचारनिष्ठत्वमवगम्यते। **पत्न्याः** आहिताग्नेः पत्न्याः—पत्नीशब्दार्थस्तत्र पारिभाषिको गृह्यते, मुख्यत्वात्। **गृहस्थस्य** अनाहिताग्नेः। **ब्रह्मचारिणः** उपनीतस्य **अनारोपितकार्यस्य** अनुपनीतस्य, चकाराद्विधुरविधवादीनामपि। **दहनविधिं** अग्निसंस्कारविधिं। **व्याख्यास्यामः**। द्वाभ्यामुपसर्गाभ्यां अपेक्षितविस्तरसंकोचौ द्योतितौ। पत्न्यपेक्षया पूर्वमृतस्याहिताग्नेः, आहिताग्नेः भर्तुरपेक्षया पूर्वमृतायाः तत्पत्न्याः, अनाहिताग्नेः एवमेव गृहस्थस्य च। अत्र विशेषः।

'एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम्।
दाहयित्वाऽग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥

मनुः— 'भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि।
पुनर्दारक्रियां कुर्यात् पुनराधानमाचरे'दिति।

याज्ञवल्क्यः— 'दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।
आहरेद्विधिवद्दारान् अग्नींश्चैवाविलम्बयन् ॥

वृद्धमनुः— 'द्वितीयां चै तु यो भार्यां दहेद्वैतानवह्निना,
जीवन्त्यां प्रथमायान्तु सुरापानसमं हि तत्' इति ॥

जैमिनिः— 'आहिताग्निश्चेत् पूर्वमृतां जायां निर्मन्थ्येन दहेत सान्तपनेन' त्रेति। सान्तपनाग्निः—कपालाग्निः।

यत्तु —

विष्णुः — 'मृतायामपि भार्यायां वैदिकाग्नीन् न हि त्यजेत् ।
उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरे' दिति ॥

व्यासः — 'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ॥

नित्याग्निहोत्रं प्रेतायै न स्त्रियै दातुमर्हति ।
नाप्यादधीत पूर्वाग्निष्वग्निहोत्रं समाचरेत्' ॥

इत्यादिवचनजातम् । एतत्सर्वं जातकाग्निविषयम् । आधानादिकृतकनिष्ठाविषयं शङ्कितज्येष्ठादिविषयं वा ।

स्मृत्यन्तरे — 'जाताकाग्नौ विवाहश्चेत् भार्याया मरणे सति ।
विभज्यार्धेन तां दग्ध्वाऽन्यार्धेनोद्वहेत्पुनः ॥

सर्वेण दाहश्चान्याग्निः विवाहे लौकिको भवेत् ।
तां वा दग्ध्वा लौकिकेन उद्वहेत्सततं हुनेत्' ॥ इति

स्मृत्यन्तरे 'पत्न्योरेका यदि मृता तां दग्ध्वा स्मार्तवह्निना ।
आदधीतान्यया साध्व्या चाधानं विधिना गृही ॥

स्त्रीमात्रमविशेषेण दग्ध्वा वा वैदिकाग्निभिः ।
विवाह्याऽदधते यद्वाऽऽधानमेवास्ति तद्वयोः (?) ॥

एकाकी वाऽदधीताग्निं विवाहश्चेन्न सिद्ध्यति ।
नित्येष्ट्याग्रयणावग्निहोत्राण्येव समाचरेत्' ॥ इति

एवं च स्वसाद्वा पत्न्यन्तराद्वा पूर्वमृतां भार्यामनाहिताग्निरौपासनाग्निना दहेत् अग्निहोत्रेणाहिताग्निरिति सिद्धम् ।

**यथोक्तैः त्रैवार्षिकैरिष्टैः आयुरात्मीयं परीक्ष्य तृतीये पञ्चमे नवमे चाह्नि मुमूर्षुः बान्धवान् पञ्चनिधानाहूय पूर्वं प्रियं भाषित्वा ऐहिकं संभोगं पारलौकिकश्चाऽत्मनो विभजेत् ॥ २ ॥**

**यथोक्तै**रित्यादि । श्रुतिस्मृतिपुराणादिषूक्तैः **त्रैवार्षिकैः**—त्रिवर्षादौ संभवद्भिः, त्रिवर्षाभ्यन्तरे वा फलद्भिः । **अरिष्टैः**—दुर्निमित्तैः मरणचिह्नैः । **आत्मीयमायुः** सम्यक् **परीक्ष्य** । परीक्षाक्रममाह **सामब्राह्मणे** । 'अथ यः कामयेत पुनर्न प्रत्याजायेयमिति रात्रिं प्रपद्य पुनर्भूम्मयो भूम् । कन्यां शिखण्डिनीं पाशहस्तां युवतिं कुमारिणीमादित्यः चक्षुषे वातः प्राणाय सोमो गन्धायाऽपः स्नेहाय मनोऽनुज्ञाय पृथिव्यै शरीरं सा हैनमुवाच अस्मिन् संवत्सरे मरिष्यसि अस्मिन्नयने अस्मिन् ऋतौ अस्मिन् मासेऽस्मिन्नर्धमासे अस्मिन् द्वादशरात्रे अस्मिन् षड्रात्रेऽस्मिन् त्रिरात्रेऽस्मिन् द्विरात्रेऽस्मिन्नहोरात्रेऽस्मिन्नहनि अस्यां रात्रौ अस्यां वेलायामस्मिन् मुहूर्ते मरिष्यस्येहि स्वर्गं लोकं गच्छ-देवलोकं वा ब्रह्मलोकं वा क्षत्रलोकं वा विरोचमानस्तिष्ठ विरोचमानामेव हि योनिं प्रविश नाहं योनिं प्रवेक्ष्यामि भूतोत्तमाया ब्रह्मणो दुहितुः संराग-वस्राया जायते म्रियते संधीयते च रात्रिस्तु मा पुनातु रात्रिःस्वमेतत्पुण्यान्न यत्पुराणमाकाशं तत्र मे स्थानं कुर्वपुनर्भवाय अपुनर्जन्मन एतावदेव रात्रेर्व्रतं रात्रेर्व्रतञ्च'इति । तथा—चन्द्रमा इवाऽदित्या दृश्यन्ते रशनाभिरिवाभिमुख्या ये तच्छिद्रा वा रात्रे च्छायां पश्येत्तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनानि । अथ स्वप्नानि पुरुषं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनं हन्ति आशुवायुरेनं प्रकर्षत्येनं गिरति खादित्वा सन्निधिति बिंबानि भक्षयति एकं पुंडरीकं धारयति खरैर्वराहैर्युक्तो याति कृष्णां धेनुमकृष्णवत्सां नलदमाली दक्षिणाभिमुखो वा(?) जियति सयद्येतेषां किञ्चित् पश्येत् तनुवो वा यन्ना त्मावृत्तञ्च रात्रेर्वृत्तञ्च' इति च ।

आनुशासनिके—'त्रैवार्षिकं द्विवार्षिकं वार्षिकं वा समुत्थितम् ।
षाण्मासिकं मासिकं वा सप्तरात्रिकमेव वा ॥

सर्वांस्तदर्थान्वा विद्यात् तेषां चिह्नानि लक्षयेत् ।
पुरुषं हिरण्मयं यस्तु तिष्ठन्तं दक्षिणामुखम् ॥

लक्षयेदुत्तरेणैव मृत्युस्त्रैवार्षिको भवेत् ।
शुक्लमंडलमादित्यं रक्तं सम्यक् प्रपश्यतः ॥

संवत्सरद्वयेनैव तस्य मृत्युं समादिशेत् ।
द्वितीयामात्मनः च्छायां छिद्रां योऽभिप्रपश्यति ॥

मृत्युस्संवत्सरेणास्य जानीयात्सुविचक्षणः ।
विशिरस्कां यदा छायां पश्यन् पुरुषमात्मनः ॥

जानीयादात्मनो मृत्युं षण्मासेनेह बुद्धिमान् ।
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुते यदि ॥

जानीयादात्मनो मृत्युं मासेनेह विचक्षणः ।
शवगन्धमुपाघ्राति अन्यद्वासुरभिं नरः ॥

देवतायतनस्थाने सप्तरात्रेण मृत्युभाक् ।
कर्णनासापनयनं दन्तदृष्टिविरागता ॥

ततः प्राणान् स मुंचेत तमीशानमनुस्मरेत' ॥ इति

अन्यत्र — 'अनिष्टानि तु वक्ष्यामि विहितानि मनीषिभिः ।
संवत्सराद्विमोक्षस्तु संभवेत्तु शरीरिणः ॥

योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन ।
तथैव ध्रुवमित्याहुः पूर्वेंदुं दीप एव च ॥

चण्डभासं दक्षिणतस्तेऽपि संवत्सरायुषः ।
परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ॥

आत्मच्छायां कृतीभूतां तेऽपि संवत्सरायुषः ।
अतिद्युतिरतिप्रज्ञा अप्रज्ञाचाद्युतिस्तथा ॥

प्रकृतेर्विक्रियापत्तिः षण्मासे मृत्युलक्षणम् ।
शीर्ष्णा नाभिर्यथा (?) चक्रं च्छिद्रं सोमं प्रपश्यति ॥

तथैव च सहस्रांशुं सप्तरात्रेण मृत्युदः ।
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ॥

देवतायतनस्थस्तु षड्रात्रेण स मृत्युभाक् ।
कर्णनासापनयनं दन्तदृष्टिविरागता ॥

संज्ञालोपो निरूषत्वं सद्योमृत्युनिदर्शनम् ।
अकस्माच्च द्रवेद्यस्य वाममक्षि नराधिप ॥

मूर्ध्नि यस्योत्पतेद्धूमः सद्योमृत्युनिदर्शनम् ।
एतादृशान्यनिष्टानि विदित्वा मानवोत्तमः ॥

निशि चाहनि चात्मानं योजयेत्परमात्मनि ।
प्रतीक्षमाणस्तं कालं यः कालः प्राकृतो भवेत्' ॥ इति

सिद्धनागार्जुनीये विंशपटले कालज्ञानप्रकारः ।

'रोचनैः कुंकुमैर्लाक्षानामिकारक्तसंयुतैः ।
द्वादशारं लिखेत्पद्मं तद्बहिश्चैव तत्समम् ॥

षोडशारं ततो बाह्ये मूलबीजं दले दले ।
प्रथमस्य दले वर्षा मासाश्चैव बहिर्दले ॥

दिवसाः षोडशारे तु साध्यनाम च कर्णिके ।
मन्त्रेण पूजयेच्चक्रं नदन्ते तं निरीक्षयेत् ॥

यद्दले चाक्षरं लुप्तं तदा मृत्युर्न विद्यते ।
वर्षमासदिनं पश्येत् तस्य नामं (?) परस्य वा ॥

यदा वर्णं न लुप्तं स्यात् तद्दिने म्रियते ध्रुवम् ।
वर्षद्वादशपर्यन्तं कालज्ञानं शिवोदितम्' ॥ इति

'उर्व्यां कालपुरुषोत्तम संहर विश्वमूर्ते कालाक्षकाय अन्तकालं प्रदर्शय प्रधानकालं प्रदर्शय स्वाहा' । अमुं मन्त्रं नित्यमष्टोत्तरसहस्रं जप्त्वा पञ्चोपचारैः सप्तदिनपर्यन्तमनेनैव पूजयेत् । प्रत्ययो भवति । तथाऽन्यत्र —

'मार्गशीर्षस्य कृष्णायां पञ्चम्यां नीरजं शुभम् ।
भूर्जपत्रं समानीय लाक्षाकुंकुमरोचनैः ॥

स्वकीयानामिकारक्तैः लिखेद्विद्वान् शिवोदिताम् ।
क्रमपूजां विधायाऽऽदौ पश्चाद्विद्यां समर्चयेत् ॥

शरावयुगमध्यस्थां जातीपुष्पैः सुवेष्टिताम् ।
शुभे पीठे विधृत्याथ तां विद्यां पूजयेन्निशि ॥

प्रातः क्रमार्चनं भूयः कुर्यात् पूजां कुमारिका ।
साधकस्त्वेकचित्तेन पश्चाद्विद्यां विलोकयेत् ॥

वर्णाधिक्ये भवेद्राज्यं मात्राधिक्ये च संपदः ।
समत्वे सौख्यमारोग्यं हानिर्बिन्दुविलोपनात् ॥

मात्राहीने भवेद्व्याधिः मरणं बिन्दुनाशतः' ॥ इति

'ह्रीं हूं म्लों महापतये रक्ष रक्ष माममृतोद्भवे म्लें ह्रीं भ्रूं विच्छे विच्छे'

'उत्तराभिमुखस्थो यो यदि जानाति दक्षिणाम् ।
दिङ्मूढस्स तदा ज्ञेयः सप्तमासान्न जीवति ॥

शुद्धं निर्मलमादित्यं विरविं (तं) यदि पश्यति ।
तद्वर्षान्ते क्षयं याति नान्यथा भैरवोदितम् ॥

सितं हरितकृष्णं वा सशूलं भानुमण्डलम् ।
यः पश्यति तदाऽऽसौ वै वर्षादूर्ध्वं न जीवति ॥

रविबिंबं जले दृष्टे संपूर्णे न मृतिः क्वचित् ।
खंडे दिक्षु क्रमान्मृत्युः एकषट्त्रिद्विमासतः ॥

मध्ये छिद्रे दशाहेन तद्दिने धूमसंकुले ।
अरुन्धतीं ध्रुवं सोमच्छायायां वा महापथम् ॥

यो न पश्यति निस्तेजाः वर्षान्ते म्रियते ध्रुवम् ।
सच्छिद्रो दृश्यते चन्द्रो तद्वद्वा दर्पणे रविः ॥

दृश्यते निष्प्रभो वापि यस्यासौ म्रियतेऽब्दतः ।
संपूर्णोपहृते सूर्ये .... .... सो न दृश्यते ॥

पक्षान्ते जायते मृत्युः कालज्ञाने शिवोदितम् ।
यस्य वा स्नातमात्रस्य हृदि पद्म यदिष्यते (?) ॥

भूमौ वा मस्तके वा स सप्तमासान् न जीवति ।
अग्रतः पृष्ठतो वापि यस्य स्यात् खंडितं पदम् ॥

कर्दमे पांसुपुंजे वा सप्तमासान् न जीवति ।
कृष्णरक्तानि वस्त्राणि रक्तमाल्यानुलेपनम् ॥

स्वप्ने यो लभतेऽकस्मात् षण्मासान्ते न जीवति ।
राक्षसैर्भूतवेतालैः श्वानसूकरगर्दभैः ॥

गृध्रैः काकैरुलूकैर्वा महिषैश्च क्रमेलकैः ।
स्वप्ने वेष्टितमात्मानं पश्येदब्दं न जीवति ॥

अशिरस्कां यदा पश्येत् आत्मछायामथापि वा ।
सुकृष्णास्तारकाः पश्येत् षण्मासान्ते न जीवति ॥

स्वप्ने देहं स्वकं स्थूलं तैलाक्तं वाऽथ पश्यति ।
भीतः क्रुद्धोऽथ वा नित्यं मासादूर्ध्वं न जीवति ॥

निशि चापं ततश्चोल्कां मेघेऽशनिनिदर्शनम् ।
यः पश्येन्म्रियते सोऽपि षण्मासाच्छंकरोदितम् ॥

शंखवर्णे भ्रुवोर्मध्ये गुल्फयोर्मर्मसन्धिषु ।
स्पन्दनं यस्य नैवास्ति मासादूर्ध्वं न जीवति ॥

चक्षुषि श्रवसोर्नित्यं न शृणोत्यपि निश्चितम् ।
दीपगन्धं न जानाति वर्षादूर्ध्वं न जीवति ॥

विनाशं कुंकुमं प्रोक्तं पिशाचं दिव्यपत्तनम् (?) ।
यदि पश्यत्यसौ स्वप्ने दशाहात्सो न जीवति ॥

ओष्ठयोर्धूसरत्वं वा शुष्कं वा तालुदेशके ।
स्कन्धौ वा भङ्गमायातौ षण्मासान्ते न जीवति ॥

भुञ्जतो यस्य वा नित्यं यूका वा मक्षिकादयः ।
त्यजन्ते वाथ वैरस्यात् (?) षण्मासान्ते न जीवति ॥

कालज्ञानमिदं ज्ञात्वा तस्य कुर्वीत वञ्चनाम् ।
योगाभ्यासेन मन्त्रैर्वा ध्यानैर्वाऽथ रसायनैः ॥

ब्रह्मविष्णुरुद्रभेदान् कालस्यांशत्रयं क्रमात् ।
ज्ञेयं जननमारभ्य मेरुतन्त्रे शिवेरितम् ॥

वर्षाण्येकादश ब्रह्मा शरीरं व्याप्य तिष्ठति ।
तथा विष्णुस्तथा रुद्रः एवमावर्तयेत्पुनः ॥

ब्रह्मकाले नाभिपद्मे विष्णुकाले हृदंबुजे ।
कंठाब्जे रुद्रकाले तु ज्ञात्वा कालस्य वञ्चनाम् ॥

कालसंकर्षणीं विद्यां ज्योतीरूपां जपेत्ततः ।
कालो विमुखतां याति लक्षजापे कृते सति ॥

'ओं ह्रीं प्रें क्षां ह्रां सम्मोहिनीं चंडीं कालसंकर्षिण्यै नमः' एवं जपेत् ।
अयं मन्त्रः ।

'कं स्वाहा हुनेत् कुब्जिकां जपेद्वाथ नवात्मकम् ।
पश्चिमाम्नाययुक्तस्य प्रोक्तेयं कालवञ्चना ॥

नाभितो ब्रह्मरन्ध्रान्तं सर्पाभ्यां ज्योतिरूपिणीम् ।
प्रोल्लसन्तीं जपेन्नित्यं मायां कालस्य वञ्चनाम्' ॥

ह्रीमिति माया

'स्वकीयं ग्रसते योऽसौ चित्तं कालकलाकुलम् ।
ग्रासान्तेन स्मरेत्किञ्चित् कालस्तस्य करोति किम्' ॥

'पक्षत्रयेऽपि मेधावी वामतः क्षीणमारुतः ।
मासादौ वत्सरादौ वा पक्षादौ वा यथातथम् ॥

क्षयकालं परीक्षेत वायुचारवशाद् बुधः ।
अहोरात्रं यथैकं न यदि ते यदि मारुतः ॥

तस्य वर्षत्रयान्मृत्युः दशाहे मासतो मृतिः ।
श्वासो यदि वशाद्याम्ये भवेन्मृत्युर्दिनान्तरे ॥
एवं कालेषु सर्वेषु मृत्युकालं विचारयेत्' ॥ इति

स्वरशास्त्रे: — 'वत्सरस्यादिकाले तु सम्मते चोत्तरायणे ।
अनन्तरं वहेद्वायुः दक्षिणे पञ्चनाडिकाः ॥

ततस्सव्ये तथा पञ्च शतायुश्चोदयं भवेत् ।
घटिका षड्भवेद्यस्य तस्याशीतिरितीरितम् ॥

घटिकास्सप्त यस्य स्यात् द्विषष्ट्यायुरितीरितम् ।
घटिकाष्टौ यदि चरेत् पञ्चाशत्तस्य निर्दिशेत् ॥

घटिकानां नव चरेत् अष्टाविंशसमाः स्मृताः ।
दिवसार्धे वहेद्वामे पञ्चविंशतिवत्सराः ॥

दिवा यस्य वहेद्वायुः द्वादशाब्दं स जीवति ।
अहोरात्रं चरेद्वायुः दशाब्दं तस्य जीवितम् ॥

दिनद्वयं वहेद्वायुः षड्वर्षाणि स जीवति ।
चतुर्दिनन्तु यस्य स्यात् चतुरब्दं स जीवति ॥

पञ्चरात्रं वहेद्वायुः तस्यायुर्वत्सरत्रयम् ।
दशरात्रं वहेद्यस्य द्विवर्षे मरणं भवेत् ॥

भवेत्पञ्चदशाहानि तस्यायुर्वत्सरो भवेत् ।
दिनानां विंशतिर्वामे षण्मासायुस्स जीवति ॥

पञ्चविंशतिरह्नां चेत् त्रिमासायुस्स कीर्तितः ।
षड्विंशतिदिनान्यस्मिन् द्विमासान्मरणं भवेत् ॥

सप्तविंशति चेद्याम्ये मासमेकं स जीवति ।
अष्टाविंशतिवारेऽस्मिन् मासार्धं तस्य जीवितम् ॥

एकोनत्रिंशदेकस्मिन् दशरात्रं स जीवति ।
अह्नां त्रिंशद्वहेद्याम्ये सप्ताहान्मरणं भवेत् ॥

एकत्रिंशद्वहेद्यस्य तस्यायुर्द्व्याहिकं भवेत् ।
एकाहान्मरणं याति त्रयस्त्रिंशद्वहेद्यदि ॥

यदि प्रवर्तिते(?) सौम्यं विततं प्राणिनां तथा ।
पञ्चाहे रात्रिचारेण त्रीण्यब्दानि स जीवति ॥

द्व्यब्दन्तु दशरात्रेण अब्दश्च द्वादशेन तु ।
त्रिंशद्दिनानि चैकेन वहते यदि मारुतः ॥

षण्मासं जीवितं तस्य पञ्चविंशे त्रिमासकम् ।
षड्विंशतौ तु पक्षः स्याद्वहते यदि मारुतः ॥

दशाहमेकोनत्रिंशत् त्रिंशत्पञ्चाहमुच्यते ।
एकत्रिंशे तु चत्वारि द्वात्रिंशे त्रिदिनं भवेत् ॥

त्रयस्त्रिंशद्दिनान्येकं मारुते जीवितं दिनम् ।
मकरायनादेवमादि सम्यगेतन्निरूपयेत् ॥

पौर्णमास्यां प्रदोषान्ते पश्चिमाभिमुखः स्थितः ।
छायामनिमिषः पश्येदापादतलमस्तकम् ॥

ग्रीवायां सोमबीजन्तु न्यसेत्स्वस्य कलामितम् ।
स्थित्वा निमील्य तद्व्योमं पश्येच्छायां स पश्यति

श्वेता चेत्सकला छाया दीर्घं जीवति मानवः ।
कृष्णा चेद्रोगसहितः कृशा चेद्रोगपीडितः ॥

त्रिमुखं यदि पश्येत्तु षण्मासं तस्य जीवितम् ।
अदृष्टे दक्षिणे हस्ते त्रिमासं तस्य जीवितम् ॥

वामहस्ते तथाऽदृष्टे मासमेकं प्रकीर्तितम् ।
अर्धमासं समुद्दिष्टमदृष्टे दक्षिणे पदे ॥

पादे न दृष्टे वामे तु पञ्चाहं तस्य जीवितम् ।
अशीर्षं यदि पश्येत्तु दिनद्वयमुदीरितम् ॥

सर्वांगहीने दृष्टे तु तद्दंडसदृशं दिनम् ।
सहस्रकिरणछायामप्येवं लक्षयेद्बुधः ॥

सूर्यबीजममावास्यासंगवश्चात्र विद्यते ।
रक्तं सूर्यस्थितं चन्द्रः मूत्रद्वारेण लक्षयेत् ॥

रक्ते च कार्यहानिः स्यात् सिते कार्यश्च सिद्ध्यति ।
कर्बुरेऽर्थक्षयं पीते हन्यात् कृष्णे भवेद्गतः ॥

नीले विदेशगमनं हरिते वा सुरेश्वरम् ।
एकधारा भवेत्सिद्धिः बहुधारा न सिद्ध्यति ॥

स्फुटिते भंगमायाति संस्थितो यज्ञपञ्जरे ।
जयः प्रदक्षिणावर्ते वामावर्ते भयं भवेत् ॥

मूत्रं पुरीषं वायुश्च समतां यान्ति भूतले ।
तद्दिने विघ्नसंपत्तिः सप्ताहान्मरणं भवेत् ' ॥ इति

**मार्कण्डेयः —** 'देवमार्गं ध्रुवं शुक्रं सोमे छायामरुन्धतीम् ।
यो न पश्यत्यगस्त्यं स न जीवेद्वत्सरात्परम् ' ॥ इत्यादि

**एवं लक्षणैः** स्वमरणं **परीक्ष्य । मुमूर्षुः** — मर्तुकामः ।

'जन्तोर्जातस्य मरणमवश्यंभावि तत्त्वतः ।
तस्मान्मृत्योर्न भेत्तव्यं धर्मः कार्यो हितेच्छया ' ॥

**इति मरणमाकांक्षन् । बान्धवान् पञ्चविधानाहूयेति ।**

**भृगुः —** 'भ्रातृभार्यास्वसृपतिस्नुषाजामातृवंशजाः ।
पञ्चसंबन्धिनो ज्ञेयाः सुखदुःखानुभाविनः ' ॥ इत्युक्ताः

पूर्वं प्रियमित्यादि ।

नारदः — 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।
समांशभागिनी माता पुत्राणां स्यान्मृते धवे' ॥ इति

'मनुः पुत्रेभ्यो दायं व्यभजत' इति श्रुतेश्च पत्नीपुत्रादीनामुपभोगार्थं परलोकार्थमात्मनश्च धनं विभजेत् । तेन धनेन ज्येष्ठ एव कुर्यात् ।

मरीचिः — 'अन्यैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥
स्नेहेन चेत् पृथक्कुर्यात् मासिकादीनि चैव हि ।
सपिंडता विभक्तानां कर्तव्या प्रतिपुत्रकम्' ॥ इति

इदं वचनमन्योन्यविरुद्धविषयम् ।

**उपस्थितेऽहनि शुचौ प्रदेशे सिकतातले दर्भान् प्रागग्रानास्तृणाति ॥ ३ ॥**

**दक्षिणाग्रानित्येके ॥ ४ ॥**

म्रियमाणं च तं दृष्ट्वा कर्ता भूम्यां शुभस्थले ।
देवालये नदीतीरे गृहे वापि वनस्पतौ ॥
आलिप्य दक्षिणाग्रेषु कुशेष्वेनं निवासयेत् ।
उत्तानं दक्षिणग्रीवं तमुद्दिश्य तु तान् ददेत् (?) ॥ इति

**तत्राऽसीत शयीत वा दक्षिणशीर्षम् ॥ ५ ॥**

योगेन देहत्यागे समर्थश्चेत् तत्राऽसीत । अशक्तश्चेत् दक्षिणशीर्षं शयीत ।

**अस्याध्वर्युः 'शन्नो मित्र' इति शान्तिमात्मनः कृत्वा 'आयुषः प्राण' मिति मुमूर्षोः दक्षिणे कर्णे जपेत् 'संज्ञान' मिति वामे च ॥ ६ ॥**

अध्वर्युः – विहितः पुत्रादिः । अनेककर्तृसंभावनाज्ञापनार्थं सामान्यवाचित्वेन अत्र अध्वर्युशब्दः प्रयुक्तः ।

स्मृति

ब्राह्मादि मन्त्रवत् [illegible] [illegible]रसः सुतः ।
तदभावे तु पौत्रश्च प्र[illegible]ः पुत्रिकासुतः ॥

क्षेत्रजो दत्तकः क्रीतः कृत्रिमो दत्त एव च ।
अपविद्धश्च पत्नी च गूढजः कन्यकासुतः ॥

पौनर्भवः सहोढोत्थानन्दनो द्विसुतीकृतः ।
दौहित्रो धनहारी च भ्राता तत्पुत्र एव च ॥

पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च ।
सपिंडस्सोदको .... .... मातुस्सहोदरः ॥

स्त्री च शिष्यर्त्विगाचार्याः जामाता च सखापि च ।
उत्पन्नबन्धुरिक्थेन कारयेदवनीपतिः' ॥

अत्र पुत्रिकापुत्र इत्यत्र पुत्रिकैव । भर्तृनियोगादेव देवरात् सपिंडाद्वा उत्पन्नः – क्षेत्रजः । मातापितृभ्यां दत्तो – दत्तकः । क्रीतः – क्रयगृहीतः । धनक्षेत्रादिप्रलोभेन पुत्रीकृतः – कृत्रिमः । मातापितृभ्यां परित्यक्तोऽहं तव पुत्रो भवामीति स्वयमेवात्मदानेन पुत्रत्वं गतो दत्तः । मात्रा पित्रा च दोषादिवशात् त्यक्तोऽपविद्धः । पत्नी – ब्राह्मादिचतुर्विधविवाहान्यतमेनोढा । गृहे प्रच्छन्नमुत्पन्नो – गूढजः । एतेषां लक्षणमानुशासनिके ।

भीष्मः

'आत्मा पुत्रस्तु विज्ञेयः प्रथमो बहुधा परे ।
स्वे क्षेत्रे संस्कृते यं तु पुत्रमुत्पादयेत्स्वयम् ॥

तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ।
अग्निं प्रजापतिश्चेष्ट्वा वराय प्रतिपादितः ॥

पुत्रिका स्यात् दुहितरि संकल्पेनापि वा सुतः ।
तत्त्वे जातः प्रमीतस्य क्लीबस्य पतितस्य वा (?) ॥

स्वधर्मेण नियुक्तेन स पुत्रः क्षेत्रसम्मतः ।
माता पिता च दद्यातां यमद्भिः पुत्रमापदि ॥

सुदृढं प्रीतिसंयुक्तौ विज्ञेयो दत्तिमः सुतः ।
सदृशन्तु प्रकुर्याद्यं गुणदोषविचक्षणम् ॥

पुत्रं पुत्रगुणैर्युक्तं विज्ञेयस्तु स कृत्रिमः ।
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य च ॥

स भवेद्गूढजो नाम तस्य स्याद्यस्य तल्पजः ।
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ॥

यं पुत्रं प्रतिगृह्णीयादपविद्धस्स उच्यते ।
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ॥

कानीनं तं वदेन्नाम्ना वोढुः कन्यासमुद्भवः ।
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ॥

वोढुस्स गर्भो भवति सहोढ इति चोच्यते ।
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ॥

स सुतस्तस्य सदृशः क्रीतो नाम बुधैः स्मृतः ।
सा पित्रा च परित्यक्ता विधवा स्वेच्छयापि वा ॥

उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ।
मातापितृविहीनो वा त्यक्तो वा स्यादकारणात् ॥

आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्स उच्यते ।
द्वादशैते परे प्राहुरेवं धर्मस्य पाठकाः ॥

आत्मा पुत्रस्तु विज्ञेयस्तस्यानन्तरजश्च यः' ॥ इति

एवमुक्तप्रकारेण द्वादशविधपुत्राभावे पत्न्येव कर्त्री पत्युः, पत्न्याश्च पतिः ।

'पतिरेव क्रियाः कुर्यादपुत्रायाः मृतस्त्रियाः ।
एकभर्तृकपत्नीनामपुत्रा निधनं गता ॥

अन्यस्याः पुत्रवत्त्वेऽपि कर्ता भर्तैव तत्र तु ।
पत्यभावे तु सापत्न्याः पुत्र एव नियुज्यते ॥

तदभावे तु तत्पुत्रः आसन्नोऽन्यस्ततः परम् ।
अन्योऽपि योऽपि (?) कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यप्यकृतचूडः स्याद्यदि स्यात्तु त्रिवत्सरः ' ॥ इति ।

मनुः — 'कृतचूडस्तु कुर्वीत उदकं पिंडमेव च ।
स्वधाकारं न कुर्वीत वेदोच्चारं न कारयेत्' ॥

अन्यत्र — 'अगृहीताक्षरः पुत्रः पितृसंस्कारमर्हति ।
अन्यैरुच्चारयेन्मन्त्रमिति शातातपोऽब्रवीत् ॥

पितुः पुत्रेण कर्तव्याः पिंडदानोदकक्रियाः ।
अशक्तावग्निदहनं शेषमन्यस्समापयेत् ॥

अतः श्राद्धं सपिंडान्तं प्रत्यब्दं श्राद्धमेव च ।
मात्रादेः कार्यमन्येन स्वपपितर्यपि जीवति ॥

न पुत्रस्य पिता कुर्यात् नानुजस्य तथाऽग्रजः ।
स्नेहेन यदि वा कुर्यात्सपिंडीकरणं विना ॥

अन्याभावे पिता वापि कुर्वीतापि सपिंडताम् ।
यो दद्याच्छ्राद्धमन्यस्मै सत्स्वनन्तरकर्तृषु ।
व्यर्थं भवति तच्छ्राद्धं भवेच्च पितृघातुकः ' ॥ इति

गौतमः — 'दाहदानादिकं कर्म स्वकर्तव्यमकुर्वताम् ।
अयशो वंशनाशश्च नरकश्च न संशयः ' ॥ इति

**शान्तिमित्यादि** । प्रसंगादत्र सर्वप्रायश्चित्तमुच्यते । कर्ता स्नात्वा आर्द्रवासाः परिषत्प्रदक्षिणं कृत्वा अनुग्रहार्थं यथाशक्ति सुवर्णं दत्वा प्रणम्योत्थाय गोत्रस्य शर्मणः मम जन्माभ्यासात् जन्मप्रभृति एतत् क्षणपर्यन्तं मया कृतानां अज्ञानतः सकृत्कृतानामज्ञानतोऽभ्यस्तानां ज्ञानतस्सकृत्कृतानामज्ञानतोऽभ्यस्तानामज्ञानतो ज्ञानतश्च चिरकालाभ्यस्तानां निरन्तराभ्यस्तानां प्रकाशकृतमहापातकचतुष्टयव्यतिरिक्तानां तत्समानां तदतिदिष्टानामुपपातकानां

संकलीकरणानां मलिनीकरणानां अपात्रीकरणानां जातिभ्रंशकरणां प्रकीर्णानां सर्वेषां पापानामपनोदनार्थं प्रायश्चित्तमुद्दिश्योपदिश्यतामिति विज्ञापयेत् । अशक्तौ पुत्रादिः 'अस्मत्पितु' रिति वदेत् । ततो विधायकैरेवं वक्तव्यम् । विधायकाः कुशकुसुमपाणयः प्राङ्मुखास्समुत्थाय अनुवादकमेवं वदेयुः । 'अहो विद्वन् विदुषामग्रेसर विहितविविधशक्यप्रत्याम्नायरूपप्रतिपदोक्तप्रायश्चित्तानुवादनकुशल हे अनुवादक गोत्रादिविशिष्टेन अनेन यजमानेन विज्ञापितानां पापानां जन्मप्रभृति एतत्क्षणपर्यन्तानां महापातकतत्समतदतिदिष्टव्यतिरिक्तानां अज्ञानतस्सकृत्कृतानामुपपातकानां संकरीकरणानां मलिनीकरणानामपात्रीकरणानां जातिभ्रंशकराणां प्रकीर्णकानां सर्वेषां पापानामेकमब्दमपनोदकं तदेव द्विगुणीकृतं अज्ञानतोऽभ्यस्तानामुपपातकानामपनोदकं तदेव त्रिगुणीकृतं ज्ञानतः सकृत्कृतानां तेषामपनोदकं तदेव षड्गुणीकृतं ज्ञानतोऽभ्यस्तानां तेषामपनोदकं तदेव पञ्चगुणितं प्रकाशकृतव्यतिरिक्तानां तत्समतदतिदिष्टानां सर्वेषामेतेषां पापानामपनोदकं भवति । एतदेवाशेषसभानिर्णीतं प्रायश्चित्तमस्मै यजमानाय अनुवद इति त्वां प्रेरयामः । त्वमपि तमेवमनुवादं सविस्तरमुच्चैरूर्ध्वबाहुः त्रिवारमनुवद' इति । अनुवादकः 'तथे' त्युक्त्वा यजमानाभिमुखस्सन् त्रिवारमनुवदेत् । गोत्रादियुक्त यजमान अशेषा एषा परिषत् त्वदीयां विज्ञापनां समाकर्ण्य त्वया समर्पितामिमां दक्षिणां यथोक्तदक्षिणामिव स्वीकृत्य त्वदुक्तनिमित्तानामपनोदकं सर्वप्रायश्चित्तात्मकमेतत् निर्णीतं प्रायश्चित्तं तवोपदिशेति विधायकमुखेन मां प्रेषितवती अहमप्युपदिशामि सावधानः समाकर्णय । गोत्रादिविशिष्टेन त्वया जन्माभ्यासात् जन्मप्रभृति एतत् क्षणपर्यन्तं त्वया कृतानां प्रकाशकृतमहापातकव्यतिरिक्तानां महापातकातिदिष्ट महापातकातिदेशिकरूपातिपातकानां महापातकसमरूपपातकानां संकरीकरणानां मलिनीकरणानामपात्रीकरणानां जातिभ्रंशकराणां प्रकीर्णकानां सर्वेषां पापानामपनोदकं षड्गुणितं षडब्दं प्रायश्चित्तं भवति । एतत्प्रायश्चित्तं प्राच्योदीच्यांगगोदानशालाग्निहोमसहितं संपूर्णमनुष्ठेयम् । त्वञ्च साक्षात् चर्यायां समर्थश्चेत् तथाकुरु; अशक्तश्चेत् प्रत्याम्नायान्वाऽऽचर । प्रत्याम्नायाः कीदृशा इति चेत्, विध्युक्त-

धेनुदानं तन्मूल्यदानं वा उपवासादिकं अयुतगायत्रीजपः प्राणायामशतद्वयं तिलहोमसहस्रं द्वादशाधिकधान्यदानं संहितामात्रवेदपारायणं द्वादशब्राह्मण-भोजनं समुद्रगानदीस्नानमेवमादयः, एषु प्रत्याम्नायेषु तव शक्यप्रत्याम्नायैः सर्व-प्रायश्चित्तं प्राच्योदीच्यांगगोदानशालाग्निहोमसहितं संपूर्णं कुरु, पूतो भविष्यसि' एतत्प्रायश्चित्तमधिकारानुगुणं भवति । षड्गुणितषडब्दमुत्तमाधिकारिणः, मध्य-माधिकारिणो द्विगुणमधमाधिकारिणस्त्रिगुणम् । अस्मिन् प्रायश्चित्ते त्वया शक्यप्रत्याम्नायैः सम्यगनुष्ठिते सति गोत्रादिविशिष्टस्त्वं परिषत्सन्निधावुक्तेभ्यः पापेभ्यो मुक्तो भूयाः' इति वदेत् । गोत्रादियुक्तः स यजमानः स्वेन प्रायश्चित्ते अनुष्ठिते सति परिषत्सन्निधौ विज्ञापितेभ्यः प्रकाशकृतमहापातक-व्यतिरिक्तेभ्यः महापातकातिदिष्टरूपेभ्यः महापातकव्रतातिदेशिकरूपेभ्यः तत्सम-रूपपातकेभ्यः उपपातकेभ्यः संकरीकरणेभ्यः मलिनीकरणेभ्योऽपात्रीकरणेभ्यो जातिभ्रंशकरणेभ्यः प्रकीर्णकेभ्यः सर्वेभ्यः पापेभ्यो मुक्तो भूयादिति भवन्तो ब्रुवन्त्वित्युक्ते विधायकेन परिषदप्येकवाक्येन उच्चैः 'तथाऽस्तु' इति ब्रूयात् ।

'बाल्यात्प्रभृति यत्किञ्चित् पातकञ्चोपपातकम् ।
षडब्देनैव शुद्ध्यन्ति महतः पातकादृते ॥

'रहस्य यत्कृतं पापं पातकञ्चोपपातकम् ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥
तत्संसर्गं तथा कृत्वा साम्यञ्चैवातिदिष्टकम्' ॥ इत्यतिदिष्टम्

'षडब्देनैव शुद्ध्येत्तु मनुष्यो वीतमत्सरः ।
महापातकतुल्यानि पापान्युक्तानि यानि तु ॥
अनुपातकसंज्ञानि तन्न्यूनमुपपातकम्' ॥ इत्युपपातकम्

गुरूणामत्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य विनाशनम् ॥
निषिद्धभक्षणं जैह्म्युत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।
निक्षेपस्य च सर्वं हि स्वर्णस्तेयसमं मतम् ॥

सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्' ॥ इत्यनुपातकानि

'गोवधो व्रात्यता स्तेयमृणानाञ्चानपाक्रिया ।
अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥

भृतादध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्धुषं लवणक्रयः ॥

स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः ॥

धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम् ।
पितृमातृसुतत्यागस्तथा चारामविक्रयः ॥

कन्याया दूषणञ्चैव परिविन्दकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥

आत्मनोऽर्थे क्रियारंभः मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥

इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंस्रयन्त्रविधानञ्च व्यसनान्यात्मविक्रयः ॥

शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ।
तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥

असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम्' ॥ इत्युपपातकानि

'ग्राम्यारण्यपशूनाञ्च हिंसा मलिनकारणम् ।
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ॥
फलेक्षुकुसुमस्तेयमधैर्यञ्च मलावहम्' ॥ इति मलिनीकरणानि

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
संकरीकरणं ज्ञेयं मीनाहिमहिषांस्तथा(?) ॥ इति संकरीकरणानि

'निन्दितेभ्यो धनादानं वाणिज्यं कृषिजीवनम् ।
असभ्यभाषणं शूद्रसेवनं .... .... ॥ इत्यपात्रीकरणानि

ब्राह्मणस्य रुजं कृत्वा घ्रातिरघ्रेयमद्ययोः ।
ज्यैह्मयं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥

इति जातिभ्रंशकराणि

अन्यन्निमित्तं जातं यत् तत्प्रकीर्णकमुच्यते' ॥

इति प्रकीर्णकानि

'अतिदिष्टेषु सर्वेषु पादोनं तद्व्रतं स्मृतम् ।
सर्वेषामेव पापानां यत्प्रायश्चित्तमीरितम् ॥

पादोनं तत्प्रदातव्यं व्रतं पापातिदेशयोः ।
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ॥

प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च' ।
अर्वाक् तु द्वादशाद्वर्षात् अशीतेरूर्ध्वमेव च ॥

अर्धमेव भवेत्पुंसां तृतीयस्तत्र योषिताम् ।
स्त्रीणामर्धं प्रदातव्यं बालानां रोगिणां तथा ॥

पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः' ॥ इति

एवं सामान्येनाध्वर्युशब्देन संस्कर्तारमुक्त्वा तस्यात्मशान्तिञ्च प्रतिपाद्यानन्तरकृत्यमाह 'आयुषः प्राण' मित्यादि जपेदिति ।

**प्राप्ते प्रयाणकाले शुक्लमहो मासाः षडुत्तरायणमग्निर्ज्योतिरनेन पथा ब्रह्मपदमपुनरावृत्त्यमेत्येति, धूमः कृष्णो रात्रिः मासाः षट् दक्षिणायनं चान्द्रमसमेतज्ज्योतिः प्राप्य निवर्तन इति गती चोभे विज्ञाय शान्तिं ज्योतिष्मतीं जपति ॥ ७ ॥**

प्राप्त इत्यादि । प्रयाणकाले – प्राणनिर्गमनकाले । चकारेण ब्रह्मनिष्ठकृत्यं वदति । ब्रह्मनिष्ठश्चेत् 'ब्रह्मविदाप्नोति परम्' 'भृगुर्वै वारुणि' रित्यनुवाकौ तस्य दक्षिणे कर्णे जपति । शुक्रमह इत्यादि । ननु–अर्चिरादिमार्गस्य ब्रह्मविद्विषयत्वात् आहिताग्नित्वमात्रेण ब्रह्मवित्त्वासंभवात् अर्चिरादिमार्गस्य कथमत्र प्रतिपादनमिति चेत् – सत्यम् । 'अग्नयो वै त्रयी विद्या देवयानः पन्थाः गार्हपत्य' मित्यादिना गार्हपत्याद्युपासनात् देवयानमार्गप्राप्तिश्रवणात् ।

'अमूर्तश्च समूर्तश्च द्विविधं कर्म वैदिकम् ।
अमूर्ताऽग्न्याहुतिः प्रोक्ता समूर्तं बेरपूजनम्'

इति अमूर्तार्चनस्य भगवदाराधनरूपत्वात्

'मानसी होमपूजा च बेरपूजेति सा त्रिधा'

इति भगवतः त्रिविधोपासनप्रतिपादनात् ।

'यत्सूत्राद्यन्तमध्येषु गीयते विष्णुरव्ययः' इति

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये'

इत्युपक्रमोपसंहारादिषु सूत्रखंडेषु 'नारायणपरायणो निर्द्वन्द्वो मुनिः' इति 'सदा अध्यात्मरतो ध्यानयोगी नारायणं परं ब्रह्म पश्यन् धारणां धारयेदक्षरं परं ब्रह्माप्नोति 'नारायणपरं ब्रह्मेति श्रुति' रिति, तथा 'अतीन्द्रियं सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृतपानवत् सर्वदा तृप्तिपरं परंज्योतिःप्रवेशमिति विज्ञायते' इति चोक्तत्वात्. 'यतो वा इमानि' इत्यादिना जगत्कारणत्वेन प्रसिद्धं 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादि ब्रह्मस्वरूपशोधकवाक्यप्रतिपन्नं सत्यत्वादिविशिष्टं 'नारायण परं ब्रह्मे' त्यादिवाक्यैः 'परं ब्रह्म – परतत्त्व – परंज्योतिः – परमात्मादिशब्दवाच्यं श्रीमन्नारायणमेव श्रवणमनननिदिध्यासनादिभिः श्रोतव्यत्वेन मन्तव्यत्वेन ध्यातव्यत्वेन उपायत्वेन उपेयत्वेन च सूत्रे प्रतिपादितत्वाच्च श्रीवैखानससूत्रोक्तधर्मानुष्ठानात् ब्रह्मप्राप्तिरनिवार्येति कृत्वा-संकोचेनार्चिरादिमार्गः प्रतिपादितः । श्रीभाष्ये च विद्याशब्देन भगवदाराधन-

मेवाच्यते। तदेवं विद्यावत् (समूर्तार्चनरूपक्रियापि) विद्यावत्त्वपृथक्त्वेन(१) स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनित परमपुरुषाप्रीतिं विनाशयति' इति। **छान्दोग्ये**। 'तद्यथा पुष्करपलाश आपो न शिष्यन्ते एवमेवंविदि पापं कर्म न श्लिप्यते' इत्युपक्रम्य 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाण-पक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादा-दित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति। तत्रैव **अष्टमे**:—'अथैतैरेव रश्मिभिः ऊर्ध्वमाक्रमन्ते' इति।

**बृहदारण्यके**: — 'ते य एवमेतद्विदुर्ये चामी त्वरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मा-सानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यं आदित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति' इति **तत्रैवान्यथा**। 'यदा पुरुषोऽस्माल्लोकात् प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीर्षते यथा रथचक्रस्य खंडेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीर्षते यथा दुंदुभेः ख' मित्यादि। **कौषीतकिनः**। 'स एवं देवयानं पन्थानमापद्य अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य वा एतस्य ब्रह्मलोकस्यारो ह्रदः मुहूर्ता येन्ये-ष्टिहाः विरजानदील्योवृक्षः सालज्यं संस्थानमपराजितमायतनं इन्द्रप्रजापती द्वारगोपौ विभुप्रमितं विचक्षणाऽऽसन्दी अमितौजाः पर्यंकः प्रिया च मानसी प्रतिरूपा च चाक्षुची च पुष्पाण्यादायावयतौ वै च जगत्यंबाश्चांबावयवाश्चाप्स-रसोऽम्बया नद्यस्तमित्थं विदागच्छति तं ब्रह्माभिधावतममयशसा विरजां वायं नदीं प्रापन्नवायं जिगीष्यती' ति। तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं वीणाहस्ताः तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मलोकालंकारेणालंकृतो ब्रह्म-विद्वान् ब्रह्मैवाभिप्रैति स आगच्छत्यारंह्रदं तन्मनसाऽत्येति तमृत्वा संप्रति

विदो मज्जन्ति स आगच्छति मुहूर्तान्येष्टिहान् तेऽस्मादपद्रवन्ति स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते धुनुते तद्यथा प्रियाः ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन् रथचक्रे पर्यवेक्षेत एव-महोरात्रे पर्यवेक्षेत एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि स एष विसुकृतो विदुष्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति । स आगच्छति ल्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छत्य-पराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति स आगच्छति विचक्षणामासन्दीं बृहद्रथन्तरे सामनी पूर्वौ पादौ श्यैतनौधसे चापरौ पादौ वैरूपवैराजे शाक्वररैवते तिरश्ची सा प्रज्ञयाहि विपश्यति स आगच्छत्यमितौजसं पर्यङ्कं स प्राणः तस्य भूतं भविष्यच्च पूर्वौ पादौ श्रीश्चराचरौ बृहद्रथन्तरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्यमृचश्च सामानि च प्राचीनतानं यजूंषि तिरश्ची-नानि सोमांशवः उपस्तरणमुद्गीथः उपश्रीश्श्रीः उपबर्हणं तस्मिन् ब्रह्माऽस्ते तमित्थंवित् पादेनैवाग्र आरोहति तं ब्रह्माऽऽह कोऽसीति तं प्रतिब्रूयात् । ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्यायै रेतः संवत्सरस्य तेजो-भूतस्यात्मा भूतस्य त्वमात्माऽसि यस्त्वमसि सोऽहमस्मीति तमाह कोऽहमस्मीति सत्यमिति ब्रूयात् किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सत् अथ यद्देवाश्च प्राणाश्च तद्यं तदेतया वाचा अभिव्याह्रियते सत्यमित्येतावत् इदं सर्वमिदं सर्वमसीत्येवैनं तदाह तदेतत् श्लोकेनाभ्युक्तम् । 'यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति हि विज्ञेयः ऋषिर्ब्रह्ममयो महा' निति । तमाह केन पौंस्नाऽसि नामान्याप्नोतीति प्राणेनेति ब्रूयात् केनस्त्रीनामानीति वाचेति केन नपुंसकनामानीति मनसेति । केन गन्धानिति घ्राणेनेति ब्रूयात् केन रूपाणीति चक्षुषेति केन शब्दानीति श्रोत्रेणेति केनान्नरसानीति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनानन्दं रतिं प्रजातिमित्युपस्थेनेति केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति प्रब्रूयात् । तमाहापो वै खलु मे ह्यसावयं लोक इति

सा या ब्रह्मणि चिति या व्यष्टिः तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद । स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा नोपजनं स्मरन्निदं शरीर' मित्यादि । अर्चिरादिमार्गेण गतस्य न पुनरावृत्तिः । यथा क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति ।' इति देवयानमार्गं प्रतिपाद्य धूमादिमार्गश्च कथ्यते । धूमः कृष्ण इत्यादि । छान्दोग्ये यथा । 'अथ य इमे ग्रमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासान् तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते असौ वै खलु दुर्निष्प्रपतरं यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति । तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा' इत्यादि । गती चोभे विज्ञायेत्यादि । चकारात् यमलोकगामिनी गतिरपि ज्ञातव्यं इति स्मारयति । तथा छान्दोग्ये । 'अथ य इह निषिद्धकारिणो मृताः क्रूरैः यमकिंकरैः निर्दयं बद्धाः निशितशूलतप्तवालुकांगारकीर्णेन छायाजलरहितेन तमोवृतेन यममार्गेण नीयमानाः निर्दयं स्वकर्मानुरूपं यमेन चोदिताः रौरवादिषु बहुबाधामनुभूय अतो निवृत्ताः दुष्टचरणाः अभ्याशोह यत्ते कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । अथैतयोः पथोर्न कतरेण पथा तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्मात् जुगुप्सेत' इति । एवं तिस्रो गतीर्विज्ञाय शान्तिं ज्योतिष्मतीं जपति । यममार्गगमननिरसनार्थं ज्योतिर्जपः ।

यत्तु—

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतन्तु गर्हितम्' ॥

इतीदं वचनम्–तदन्नब्रह्मविद्विषयम्। 'उद्वयं तमसस्परी'ति ज्योतिष्मती। उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् स्वं स्वं पश्यन्तमुत्तरम्। देवं

उद्यन्नद्यमित्रमहः। उद्यन्नद्यविनो भज। पिता पुत्रेभ्यो यथा। उद्यन्नद्यमित्रमहः। आरोहन्नुत्तरां दिशम्' इति ज्योतिष्मती संज्ञा।

**ऋग्विधाने शौनकः॥**

'इमां ज्योतिष्मतीमुक्त्वा युक्तो योग बलेन च।
स्वाभिप्रेतेन मार्गेण तर्तुं शक्तोत्युपासकः'॥ इति।

अथवा 'ज्योतिष्मतीं त्वासादयामि' इत्यस्य मन्त्रस्य नाम–तस्य बुद्धिप्रसादकत्वात्।

**इन्द्रियाणीन्द्रियार्थेषु निरुद्धय क्रमेण घंटावसानिके पदत्रये निविष्टो नानाविधे स्वयंज्योतिषि ब्रह्मण्यद्वितीये तद्योऽसौ सोऽहमित्यात्मोपासनक्रमेण वा समादधीत॥ ८॥**

अभ्यस्तयोगश्चेत् समर्थो ब्रह्मविद्या पूर्वावस्थायोगबलेन देहात् मृत्यु(१) कामस्य संक्षेपेण तत्प्रकारमाह **इन्द्रियाणी**त्यादिना।

मनुः— 'श्रोत्रं त्वक् चक्षुषी जिह्वा नासिकाचेति पञ्चमः।
पायूपस्थौ हस्तपादौ वाक् चैव दशमी स्मृता।
ज्ञानं कर्मेन्द्रियाश्चैते मनश्चैकादशं स्मृतम्'॥ इतीन्द्रियाणि

'शब्दः स्पर्शो रसो रूपरसगन्धाश्चेतीन्द्रियार्थकाः।
वचनादानगत्यागमैथुनकानि च।
विषयेभ्यश्च सर्वेभ्यः प्रत्याहृत्येन्द्रियाणि च'॥ इतीन्द्रियार्थाः

इति योग शास्त्रोक्तमार्गेण निरुद्धय – प्रत्याहृत्य

'इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्'॥

इति वचनात् ।

'गच्छंस्तिष्ठन्नोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ।
नोपयाति यथा चित्तात् सिद्धिं मन्येत तां तदा' ॥

इति धारणां प्रपद्य क्रमेण घंटावसानवत् —

'मनो बुद्धिरहंकारश्चित्तञ्च करणान्यमी' ।

इति चतुर्दशकरणैर्युक्तस्य पूर्वोक्तशब्दादिभिस्सह जाग्रदवस्थायां त्यागसमये वर्णनादवत् वर्णे क्षीयमाणे सति पदत्रये जाग्रत्स्वप्नसुषुप्तीत्यवस्थात्रये **विष्टः** । निविष्ट इति केश्चित् व्याख्यातम् । अवस्थान्तरापत्तिषु 'ओमित्येकाक्षरम्. नम इति द्वे अक्षरे नारायणायेति पञ्चाक्षराणि, एतद्वै नारायणस्याष्टाक्षरं पद' मित्याद्युक्तपदत्रये अष्टाक्षरे निविष्टः अष्टाक्षरमहामन्त्रमर्थानुसंधानेन स्मरन् — यद्वा — घंटावसानवदस्मिन् प्रणवे ह्रस्वदीर्घप्लुतरूपेणोच्चार्यमाणेषु प्रणवांगेषु पदत्रयेषु प्लुते निविष्टः इत्यर्थः । तत्र विशेषश्रवणात् । यथा **उपनिषदि** । 'अथ हैनं शैव्यस्सत्यकामः पप्रच्छ स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्त-मोंकारमभिध्यायीत कतमं वा व स तेन लोकं जयतीति । तस्मै स होवाच एतद्वै सत्यकाम परश्चापरश्च ब्रह्म यदोंकारः तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति । स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महि-मानमनुभवति । अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरु-न्नीयते स सोमलोके विभूतिमनुभूय पुनरावर्तते । यः पुनरेतत्त्रिमात्रेणैव ओमित्ये-तेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्मात् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः । तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्य-न्तरमध्यमासु सम्यक् प्रयुक्तासु न कंपते ज्ञः ॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते । तमोंकारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तम-जरममृतमभयं परं' चेति । किञ्च ।

उपनिषदन्तरे – 'अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः ।
उद्धृता विष्णुना लक्ष्मीरुकारेण तथोच्यते ।
मकारस्तु तयोर्दास इति प्रणवलक्षण' मिति ॥

'स्वोज्जीवनेच्छा यदि चेत् स्वसत्तायां स्पृहा यदि ।
आत्मदास्य हरेः स्वाम्यं स्वभावञ्च सदा स्मर' इति ॥ च स्मृतेः

'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति श्रुतेश्च 'सर्वकारणभूताय सर्वरक्षकाय सर्वशेषिणे श्रियःपतये स्वाभाविकशेषभूतोऽह' मित्यनुसन्धानमत्रा-द्दिष्टम । दासत्वशेषत्वयोः भेदाभावात् । तथा ---

'अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत
मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम ।
उकारोऽनन्यार्हं नियमयति संबन्धमनयोः
त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत' ॥

इतिवत् प्रणवार्थानुसन्धानम् ।

अष्टाक्षरानुसंधाने तु 'सर्वकारणभूताय सर्वरक्षकाय श्रियःपतये एवाहमनन्यार्हनिरुपाधिकशेषभूतः तच्चरणारविन्दयोरात्मात्मीयभरं न्यस्यामि । नारायणायैव सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविधकैंकर्याणि स्यु' रिति प्रकारेण पदत्रये निविष्टः । यद्वा पदत्रये निवेष्ट इति पाठान्तरे ब्रह्मपरत्वेन वक्तव्यम् । पदत्रये – स्थानत्रये 'अंभस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्' इति श्रुतिप्रसिद्धपरमपद क्षीराब्धि श्रीवेंकटाचलादिस्थानेषु निविष्ट इत्यर्थो बोध्यः । स्वयं ज्योतिषि ब्रह्मण्यद्वितीये । नारायणोपनिषदि । 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति । ........नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात् प्रजापतिः प्रजायते । नारायणाद्द्वादशादित्या रुद्रा वसवस्सर्वा देवतास्सर्वाणि च छन्दांसि । नारायणादेव समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणे प्रलीयन्ते । एतदृग्वेदशिरोऽधीते । अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च

नारायणः । शक्रश्च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । विदिशश्च नारायणः । ऊर्ध्वश्च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् । निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति कश्चित् । य एवं वेद' । इति । तथा —

'बुद्धिं तु सारथिं कृत्वा मनःप्रग्रहवान् नरः ।
प्रयाति परमं पारं विष्ण्वाख्यं पदमव्ययम्' ॥

एतद्धि नारायणस्योपनिषत् । अथ यो ह वै नारायणस्योपनिषदमधीते । स सर्वेभ्यो घोरेभ्यो विमुक्तो भवति । स सर्वांश्च लोकानवाप्नोति । ब्रह्मत्वञ्च गत्वा अमृतत्वञ्च गच्छति' इति । इत्थं नानाविधे ब्रह्मरुद्रादिरूपे स्वयं ज्योतिषि स्वयं प्रकाशे ब्रह्मणि । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मे'त्यादि वाक्यैः अखिलजगत्कारणभूते 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपशोधकवाक्यसिद्धे सत्यत्वादिविशिष्टे 'आनन्दो ब्रह्मे'त्यादिबोधिते निरतिशयानन्दस्वरूपे 'नारायणपर ब्रह्मे'त्यादिवाक्यैरुक्ते 'परं ब्रह्म — 'परतत्त्व — 'परं ज्योतिः — 'परमात्मा' दिशब्दवाच्ये श्रीमन्नारायणे । **तद्योऽसौ सोऽहमित्यादि** । 'योऽहं जीवात्मा — तद्ब्रह्म । योऽसौ परमात्मा — सोऽहम्' इति । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' इति । योऽहं जीवात्मा सोऽहं तच्छरीरभूतः, योऽसौ परमात्मा स मच्छरीरी इत्यर्थे सोऽहमित्यनुसन्धानम् । **समादधीत** — सन्दध्यात् । शेषशेषिभावानुसन्धानं वा अत्र भाव्यम् ।

**यस्मात् प्रयाणकाले यं ध्यायति तन्मय एव भवत्यात्मेति ब्रह्मवादिनो वदन्ति ॥ ९ ॥**

एवं योगमार्गेण जीवात्मपरमात्मनोस्संयोग उक्तः । शक्तस्य परमपदे, अशक्तस्य क्षीराब्धिशयनादौ, तत्राप्यशक्तस्य अर्चावतारे श्रीवेंकटेशादिदिव्यमंगलविग्रहे च अन्तिमस्मृतिः आवश्यकी । तदेतत् प्रमाणयति—**यस्मादित्यादिना** ।

शौनकः 'विष्ण्वाख्यं ब्रह्म दुष्प्रापं विषयाकृष्टचेतसाम् ।
मनुष्येषु च तत्प्राप्तावुपायं परमं शृणु ॥
तदाकारं स्मरेद्वापि तन्नामानि स्मरेद्वदेत् ।
'अन्त्यकाले तमेवाऽथ स्मरन्मुक्त्वा कलेबरम् ॥
यः प्रयाति त्यजन् देहं स याति परमां गतिम्' ॥ इति

श्रीगीतायाम् — 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः' ॥ इति

नारदः — 'जपन्नष्टाक्षरं याति तद्विष्णोः परमं पदम् ॥ इति

**तदेवं दैवकृते प्रतिसंहारे गन्धात्मकं भूमेर्गुणमापः प्रथमं ग्रसन्ति ॥ १० ॥**

**तदेव**मित्यादि । वक्ष्यमाणलक्षणेन पञ्चभूतलयादिरूपेण **दैवकृते** — स्वकर्मणा कृते, यद्वा — परमात्मकृते **प्रतिसंहारे, गन्धात्मकं भूमेर्गुणं** प्रकृतिभूताः **आपः प्रथमं ग्रसन्ति** । ततो निर्गन्धा भूमिः काठिन्यं त्यजति । प्रलयत्वाय कल्पते ॥ इति

व्यासः — 'अस्तगन्धा ततो भूमिः' इति ।

**तदाऽस्य भ्रमतीव शरीरं व्यावतिष्ठेत ॥ ११ ॥**

यदा देहः प्रलीकाठिन्यवान् भवेत् **तदाऽस्य** म्रियमाणस्य शरीरं चक्रयन्त्रे निधाय भ्रमितमिव **व्यावतिष्ठेत** — व्याकुलमवतिष्ठेत ।

**अपां गुणोद्रेकादिन्धितोऽग्निः प्रविश्य प्राणायतनमर्माणि दारयन्नाडीमुखेभ्यो रसं दहति ॥ १२ ॥**

**अपा**मित्यादि । कारणभूतास्वप्सु कार्यभूते गुणे प्रलीने **अपां गुणोद्रेकादिन्धितो** — दीपितोऽग्निः । **दारयन्** — तापेन भेदयन् **नाडीमुखेभ्यो** निस्सृतं **रसं दहति** ।

**तदा दह्यमानमिव शरीरं मन्यते ॥ १३ ॥**

**ततः कीलालं शुष्यति ॥ १४ ॥**

तत इति । कीलालं रक्तं जलञ्च शुष्यति । जलैकशरणत्वात् श्लेष्मणः । तन्नाशेन श्लेष्माधिष्ठितस्वाशयबन्धो (मुक्तो?) भवति ।

**मुक्तबन्धे श्लेष्मणि पित्तेन महाग्नौ पतिते स चाग्निः अर्था-भावात् शाम्यति ॥ १५ ॥**

मुक्तेत्यादि । दह्यवस्त्वभावात् शाम्यति । स्वप्रकृतिं वायुमेत्य तल्लोपमेति (?) ।

**वायुस्तिर्यगूर्ध्वमधश्चैव शरीरं व्यालोलयति ॥ १६ ॥**

वायुरित्यादि । व्यालोलयति — व्याकुलयति । निरोधाभावादितश्चेतश्च धावति ।

**तस्मान्मुह्यति ॥ १७ ॥**

तस्मादिति । मुह्यति — नष्टस्मृतिः मोहं गच्छति ।

**तदा स्वैः स्वैः कर्मभिरुन्मुक्ताः पञ्च वायवो विसृजन्त्यात्मनः स्थितिम् ॥ १८ ॥**

तदेत्यादि । विसृजन्ति — स्वस्थानाच्चलन्ति । परस्परं प्राणश्चापानश्च प्रतिहन्येते ।

'प्रयात्यूर्ध्वं यदा प्राणस्तदाऽपानोऽप्यधस्तथा ।
यदा समानः कार्याग्निं सन्धुक्षयति पाचितुम् ॥

तदा तत्पक्वमुक्तन्तु समादाय च धावति ।
व्यानो जन्तोस्तु तद्देशमापादतलमस्तकम् ॥

उदानः प्राणसहितो निमेषोन्मेषकारकः ।
हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ॥
उदानः कण्ठदेशस्थो व्यानस्सर्वशरीरगः ॥ इति

वायूनां स्थानानि कर्माणि च आत्मनः स्थितिं पञ्च वायवो विसृजन्ति ।

**अभिनिष्क्रामतश्चोच्छ्वासो ब्रह्म मुक्त्वा दृतेरिव मन्दं मन्द-मूष्माणमुदावहति ॥ १९ ॥**

अभिनिष्क्रामत इत्यादि । **अभिनिष्क्रामतः** प्राणवायोः उच्छ्वासः । ब्रह्मनाडीमुक्तः **उदावहति** – निर्गमिष्यति । यथा **दृते**र्मुखेन वायुः प्रविशति निर्गमिष्यति तथा । दृतिः – चर्मभस्त्रिका ।

**तदा वेगेनोत्थाय वायुर्मूर्तिः भ्रमन्निवास्य कण्ठे खुरखुरायमाणो विश्वमेव विहरन् जलूकावत् पदात् पदान्तरं विन्दन्नुत्क्रामति ॥ २० ॥**

तदित्यादि । **वायुः मूर्तिः** मूर्तीकृतः मुख्यप्राणः भ्रमतीव कंठनाडीमुखादिसप्तद्वारसन्धिषु 'खुरु खुरु' इति शब्दं कुर्वन् **विश्वं** जीवात्मानमेवं **विहरन्** – विकृष्य हरन्, जलूकावत्, जलूका – रक्तग्राहिणी क्षुद्रजन्तुविशेषः । तद्वत् **पदात्पदान्तरं विन्दन्** लभन्, **उत्क्रामति** ।

**ब्रह्माण्डे** :— 'प्रथमं स्मारकञ्चैव द्वितीयं प्रेतभाषणम् ।
तृतीयं चित्तविभ्रंशः चतुर्थे श्वास ऊर्ध्वगः ॥

पञ्चमश्चोर्ध्वदृष्टिः स्यात् षष्ठे तु स्वरभेदनम् ।
सप्तमश्चांगवैकल्यं वक्तृस्पर्शनमष्टमम् ।
नवमं स्विन्नगात्रत्वं दशमे मरणं भवेत्' ॥

इति दशाक्रमः उच्यते ।

ननु – अशक्तस्यापि ब्रह्मविदः 'शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या निष्क्रमणे भवन्ति' इति योगमार्गेण प्राणत्यागसामर्थ्याभावात् सुषुम्नया नाड्या उत्क्रमणासंभवात् ब्रह्मप्राप्तिरपि न संभवतीति चेत् – न । 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारः विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इति

वेदान्तसूत्र एव ब्रह्मविद्यासामर्थ्यात् भगवच्छेषशेषिभावानुसन्धानसिद्धेः अर्चिरादिगत्यनुस्मृतियोगाच्च। तदोकः—हृदयकमलस्याग्रं प्रज्वलति। तेन सुषुम्नानाडीं जानाति। तयोर्ध्वमेतीति। श्रुतिः। 'तस्यैतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतेनैष आत्मा निष्क्रमति। चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इति।

ग्रन्थान्तरे :- 'अनन्ता रश्मयस्तस्य दीपवत्संस्मृता हृदि।
सितासिताः कद्रुनीलाः कपिला मेचकाः स्थिताः॥
.... .... तेषां यो भित्वा सूर्यमंडलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्।
यदस्यान्यद्रश्मिशतमूर्ध्वमेति च संस्थितम्' (?)॥ इति

अतो ब्रह्मविद्यानिष्ठस्य यदा कदा वा येन केन मार्गेण वा मृतस्य ब्रह्मप्राप्तिस्संभवत्येव। एतत्सर्वमस्माभिः वेदान्तसूत्रभाष्यादिषु प्रपञ्चितम्।

**धर्माधर्मावूर्ध्वभागाऽधोभागौ च ज्ञानाज्ञाने सुखदुःखे च ईश्वरवशात् तेन सह प्रतिष्ठेयाताम्॥ २१॥**

एवं गच्छता तेन कौ सह गच्छत इत्यत्राह **धर्माधर्मावित्यादि**। **ऊर्ध्वभागाऽधोभागौ च**। धर्मेणोर्ध्वभागः स्वर्गादिः, अधर्मेणाधो भागः नरकादिः। यद्वा—ऊर्ध्वभागो ब्राह्मणजन्मादिः—अधोभागो निकृष्टजात्यादिः। **ज्ञानाज्ञाने**। ऊर्ध्वभागं गतस्य ज्ञानमधोभागं गतस्याज्ञानम्। तथा **सुखदुःखे** च। एतत्सर्वं **ईश्वरवशात्**। 'एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्यः उन्निनीषति' इत्यादि।

**तेन सह** आत्मना सह। **प्रतिष्ठेयाताम्**—जवेन सहगच्छतः।

'तेन देवशरीराणि सधामानि प्रपद्यते।
येनैकरूपाश्चाधस्तात् रश्मयो हि मृदुप्रभाः।
इह कर्मोपभोगाय तैस्संसरति सोऽवशः'॥ इति

यद्वा -- परमात्मना सह । श्रुतिः । 'प्राज्ञेनाऽऽत्मना अन्वारूढः उत्सर्जन् या' तीति ।

'ददाति यत्पार्थिव यत्करोति
यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापि तर्षा
नान्यस्तदश्नाति स एव कर्ता' ॥ इति ।

अत एव 'सुकृतदुष्कृते चैव गच्छन्तमनुगच्छत' इत्युक्तम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने प्रथमः खण्डः

## अथ द्वितीयः खण्डः

अथो वै विगतानिलचेष्टं देहं मृत(क)माज्ञाय गेहाद्बहिः शुचौ देशे 'चित्तिस्त्रु' गादिना स्नापयित्वा आज्याभिषेचनं ग्राम्यालंकरणं बर्हिषा पादकरयोरंगुष्ठौ च बध्नीयात् ॥ १ ॥

अथो-अथ इत्येकार्थौ-उत्क्रमणानन्तरम्। वै प्रसिद्धौ। विगतानिलचेष्टं-निमेषादिवायुचेष्टारहितं देहं मृतमाज्ञाय – मृतमिति ज्ञात्वा। तदनन्तरम्।

'धनिष्ठापञ्चकमृतौ पञ्च रत्नानि तन्मुखे।<br>
न्यस्याहुतित्रयं कृत्वा हुने 'वह वपा' दिकम् ॥<br>
त्रिपुष्करे मृतं तद्वद्धिरण्यशकलं मुखे।<br>
न्यस्य पिष्टमयं कृत्वा पुरुषत्रितयं(?) ततः ॥<br>
होमं प्रतिमुखं कुर्यात् ततो 'वह वपा' मिति।<br>
भद्रे त्रिपदनक्षत्रे भौमार्कशनिवासरे ॥<br>
पुष्करत्रययोगे च द्विपुष्कर विलोचने (?)।<br>
.... .... मरणे चैव खट्वायां मरणे तथा ॥<br>
अन्तरिक्षे च मरणे आशौचमरणे तथा।<br>
प्रत्येकञ्च स्नानमृतौ (?) त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥<br>
ऊर्ध्वोच्छिष्टे अधोच्छिष्टे निशायां मरणे तथा।<br>
स्नापयित्वा मुमूर्षुञ्च स्नात्वा कर्ताऽऽर्द्रवाससा ॥<br>
उत्क्रान्तिवैतरिण्यौ च दद्यात् दानानि चैव हि।<br>
प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण योजयेत् ॥<br>
'अत्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रमणसिद्धये।<br>
तुभ्यं संप्रददे धेनुमिमामुत्क्रान्तिसंज्ञिताम् ॥<br>
यमद्वारे महाघोरे तप्ता वैतरिणी नदी।<br>
तां ततुं संप्रयच्छामि कृष्णां वैतरिणीं तु गाम्' ॥ इति

दशदानानि — 'गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रौप्यं लवणमित्याहुः दशदान्यान्यनुक्रमात् ॥

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥

सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तपुण्यफलदा अतश्शान्तिं प्रयच्छ मे ॥

तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः ।
तिलदानादस्माद्धि मे पापं नाशय केशव ॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

कामधेनुसमुद्भूतं सर्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥

शीतोष्णवातसन्त्राणं लज्जाया रक्षणं परम् ।
देहालंकरणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥

धन्यं करोषि दातारमिह लोके परत्र च ।
तस्मात्त्वमुच्यसे धान्यमतश्शान्तिं प्रयच्छ मे ॥

यथा सर्वेषु देवेषु प्रवरोऽयं जनार्दनः ।
तथा रसानां प्रवरस्त्वमेवेक्षुरसो गुडः ॥

... ... ... ... ... ... ..., ॥

पितृप्रीतिकरस्त्वं हि रौप्य चन्द्रमसद्युते ।
शान्तिस्त्वद्दानतो मे स्यादिह लोके परत्र च ॥

रसानामग्रजं श्रेष्ठं लवणं बलवर्धनम् ।
तस्मादस्य प्रदानेन शान्तिर्मेऽत्र परत्र च ॥

निवर्तनमिता भूमिः द्रोणद्वयमितास्तिलाः ।
निष्कत्रयं सुवर्णं स्यात् आज्यं प्रस्थचतुष्टयम् ॥

सूक्ष्मवस्त्रत्रयं धान्यं सार्धं खारित्रयं भवेत् ।
गुलं षष्टिपलञ्चैव रौप्यं निष्कचतुष्टयम् ॥
लवणं सार्धखारि स्यात् दशदानप्रमाणकम् ।
निवर्तनमिता भूमिः दश दण्डं निवर्तनम् ' ॥ इति

मृते तूत्क्रान्तिदानञ्च स्त्रीणां कर्णजपं तथा ।
अन्यत्सर्वं प्रकुर्वीत क्रमेणैव यथाविधि ॥ इति

अथ प्रेताधानमुच्यते । विच्छिन्नवह्निश्चेत्प्रेतः 'यो अश्वत्थश्शमीगर्भ' इत्यरणिं मथित्वा चरति । 'अश्वत्थाद्धव्यवाहात्' इत्यरणी अभिमन्त्र्य । अत्र 'आयुर्मयि' इत्यस्य लोपः । अरणी पूर्वाहृते एव भवतः । आयतनानि कल्पयित्वा तूष्णीमुद्धत्य अवोक्ष्य, सर्वाधानिनो लौकिकारणावग्निं मथित्वा निधाय तस्मिन्, अर्धाधानिनः औपासने 'जातवेदो भुवनस्य रेतः – 'अयन्ते योनि' रिति द्वाभ्यां अरणी निष्टप्य गार्हपत्यस्य (?) तस्मात् प्रेतसन्निधौ निधाय 'येऽस्याग्नयो जुह्वतो मांसकामाः संकल्पयन्ते यजमानमांसम् । जानन्तु तस्मै हविषे सादिताय स्वर्गं लोकमिमम् 'शर्माणं प्रेतं नय' न्त्विति अग्निं मन्थति । तत 'उपावरो' हेत्यविकारेणोपावरोहति । 'उपावरोह जातवेद अमुं स्वर्गाय लोकाय नय प्रजानन् । आयुः प्रजां रयिमस्मासु धेहि प्रेताहुतिञ्चास्य जुषस्व स्वा' हेति वा उपावरोह्य गार्हपत्यायतने निधाय तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा आहवनीये तूष्णीं जुहुयात् । प्राचीनावीती । विश्वधान्यादि सर्वं तूष्णीं कृत्वा प्रागग्रैः दक्षिणाग्रैश्च परिस्तीर्य दक्षिणेन गार्हपत्यं पात्राणि संभृत्य 'या धेनुर्मृतवत्सा परवत्सा इति योजिता तां धेनुं प्राचीनावीती तूष्णीं दोग्धि । अप उपस्पृश्य दक्षिणत उपविश्य परिषिच्य गार्हपत्यादाहवनीयं धारां कृत्वा । अत्र 'धृष्टिर' सीत्यादि लुप्यते, अर्थाभावात् । शीते भस्मन्यधिश्रित्य अग्निहोत्र होमसंक्षालनं निनीय पुनरग्निहोत्र पर्यग्निं कृत्वा दक्षिणत उद्वास्य वेद्यां प्रतिष्ठाप्य अन्तिके कृत्वा स्रुवमग्निहोत्रहवणीञ्चादाय निष्टप्य अग्निहोत्रहवणीं सम्मृज्य । 'ओमुन्नेष्या' मीत्यादि निवर्तते स्रुचि सकृदेव सर्वं तूष्णीमुन्नीय अभिमृश्य समिधमधस्तात् स्रुग्दंड उपसंगृह्य अपरेण गार्हपत्यं कूर्चं निधाय

विहारस्य दक्षिणाग्नेरपि दक्षिणतः प्राङ्ङाहृत्य मध्यदेशे निगृह्योद्यम्य अपरेणाहवनीयं कूर्चमुपसाद्य समिधमाधाय अप उपस्पृश्य सर्वं तूष्णीं जुहुयात् । लेपादि सर्वं तूष्णीं करोति । नोत्तराहुतिः । 'सोमाय पितृमते स्वधा नमः स्वा' हेति पूर्वाहुतिं हुत्वा कूर्चे उपसाद्य उत्तरतः कूर्चे लेपं निमृज्य गार्हपत्यं प्रतीक्ष्य 'अग्नये कव्यवाहनाय स्विष्टकृते स्वाहा' इत्युत्तराहुतिं हुत्वा स्रुचमुद्गृह्य उदीचीं ज्वालां त्रिरतिवल्गयति । लेपमवमार्ष्टि । कूर्चे स्रुचं निधाय दक्षिणतः स्थंडिले नीचा पाणिना लेपं विमार्ष्टि । अप उपस्पृश्य । न भक्षयति । 'उच्छिष्टभाजो जिन्व' इत्यादि 'सप्तर्षीन् प्रीणीहि' इत्यन्तम् । उत्सेचनं न कुर्यात् । सर्वाग्निषु तूष्णीं जुहुयात् । न परिषिञ्चति । परिस्तरणानि च प्रहरेयुः । स्रुवादीन् प्रक्षाल्य । 'अपि प्रे अग्ने स्वां तनुमुप्याद् द्यावा पृथिवी उर्जमस्मासु धेहि' इत्यग्निहोत्रस्थाल्यां बर्हिरक्त्वा आहवनीये अनुप्रहरति । सा अग्निहोत्रस्य संस्थितिः । एवं मृताग्निहोत्रं कुर्यात् । यद्यग्निहोत्रकाले पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत शीते भस्मनि 'अग्नये कव्यवाहनाय' इत्युत्तराहुतिं निनीय मृताग्निहोत्रवत् 'अपि प्रे अग्न' इत्यन्तं कुर्यात् । अथवा नोत्तराहुतिम् । पितृमेध एव प्रथमभूतां 'परे युवाँ स' मित्यृचं पितृमेधात्पूर्वमुत्तराहुतिस्थाने हुत्वा वैश्वदेवादि कुर्यात् । साऽग्निहोत्रसमाप्तिः । यद्यपरपक्षे म्रियते स्रुवमग्निहोत्रहवणीञ्चादाय निष्टप्येत्यन्तं कृत्वा उन्नयनकाले कृष्णपक्षस्य यावन्ति शेषदिनानि तावन्ति सायमर्धान्युन्नयनानि शरावस्थायां स्रुचि अन्यशरावस्थायां प्रातरर्धञ्च गृहीत्वा 'अयर्वाक (?) समिध' मित्यादि कृत्वा होमकाले तत्तन्मन्त्रेण तत्तदाहुतीस्तथैव हुत्वा 'कूर्चे उपसादयति' इत्यादि बर्हिःप्रहरणान्तं कृत्वा दर्शमप्यपकृष्य तत्स्थाने 'अग्नये स्वाहा – 'इन्द्राय स्वाहा' इतीन्द्रयाजिनः 'महेन्द्राय स्वाहा' इति महेन्द्रयाजिनः पूर्णाहुतिं जुहुयात् । यदि नक्तं मृतस्तदपकृष्य प्रातरग्निहोत्राहुती सायं होमेन पृथगुन्नीय जुहुयात् । यदिष्टिमन्वारभ्य यजनीयेऽहनि मृतः तदा 'अग्नये स्वाहा – 'विष्णवे स्वाहा – 'अग्नीषोमाभ्यां स्वाहा' इत्याहुती जुहुयात् । अमावास्यायामप्येवम् । यदि मध्ये मृतः तूष्णीं निर्वापाद्युपचारेण प्रधानहवींषि

मादयित्वा सर्वेभ्यो हविर्भ्यः समवदाय 'अग्नये — विष्णवे — अग्नीषोमाभ्यां स्वा' हेत्येकाहुतिं जुहुयात् । असोमयाजी चेदग्नीषोमीयवर्जम् । एवमेव चातुर्मास्यपशुबन्धसोमेष्वपि । एवं यज्ञसूत्रोक्तेन पितृमेधविधिना अग्निहोत्रेण पितृमेधप्रथमाहुतिं 'परे युवाँस' मित्याहवनीये गार्हपत्ये दक्षिणाग्नौ सभ्याव-सथ्ययोश्च जुहुयात् । 'तूष्णीमन्वाहार्ये' इति **भारद्वाजः** । मरणात्पूर्वमेव कृताग्निहोत्रश्चेत् 'परे युवाँस' मिति होमेन सह दक्षिणाभिमुखः प्राचीनावीती औपासनाग्निं परिस्तीर्य वैश्वदेवं कुर्यात् ।

अनाहिताग्निविषये :—

'अथ विच्छिन्नवह्निश्चेद्यजमानो मृतो यदि ।
प्राजापत्यं मासि हीने षण्मासे त्वैन्दवं स्मृतम् ॥

अब्दहीने तप्तकृच्छ्रं प्राजापत्यं तथैन्दवम् ।
प्राजापत्यश्च यच्चान्द्रे तत्पकृच्छ्रे द्वयं स्मृतम् ॥

वत्सरे वत्सरे चैव प्राजापत्याः षडुच्यते ।
प्राजापत्यक्रियाशक्तौ धेनुं दद्यात्सदक्षिणाम् ॥

गवामभावे निष्कं वा तदर्धं पादमेव वा ।
नास्तिके द्विगुणं कृच्छ्रं त्रिगुणन्त्वतिनास्तिके ॥

अशक्तस्य सदाचारस्यार्धं कल्प्यं प्रमादतः ।
प्रायश्चित्तं चरित्वैवं दद्याद्द्रव्यञ्च भौतिकम् ॥

संकल्प्य यजमानायतने प्रेतं निधाय च ।
पश्चिमे गार्हपत्यस्य मन्थे ..... .... न योजयेत् ॥

नष्टाग्निः श्रोत्रियाग्निन्तु व्याहृत्या निक्षिपेद्बुधः ।
कुण्डे वा स्थण्डिले वापि उपस्थाय ततः परम् ॥

'जुष्टो दमूनां' पर्यूह्य पर्युक्ष्याऽऽज्यं विलाप्य च ।
उत्पूतं द्वादश गृह्य स्रुचि तूष्णीं हुनेत्ततः ॥

चतुर्गृहीतैर्जुहुयात्समव्याहृतिभिस्ततः ।
'पूर्वं देवाः 'प्राणापानौ 'मा त्वा वृक्ष' द्वयं ततः ॥
'अग्नेभ्या 'अग्ने अंगिरश्च 'पुनरूर्जा 'सहे' ति च ।
'अयाश्च वै 'ब्राह्मण एकहोता-'भूरग्नये हुते अग्निसिद्धिः' इति
विहृत्य पूर्ववद्धुत्वा वैश्वदेवादिकं भवेत् ।
कालेऽतीते तिलैरेव वैश्वदेवं सयाम्यकम् ॥
पैतृकं व्याहृतिहोमश्चान्ते चेत्सर्वनिष्कृतिः ।
पञ्चगव्यैः कुशोदैश्च क्षालयेदशुचिः स्वयम् ॥
अरण्यारोपिते वह्नौ मथित्वा विहरेत्ततः ।
आत्मारोपितवह्निश्चेत् लौकिकं शवपाणिना ॥
स्पर्शयित्वाऽवरोह्यैवं विसृज्य जुहुयात्पुनः ।
आरोपितारणेर्नाशे गृहीत्वा विधिनाऽरणिम् ।
मथित्वा पुनरादध्यात् प्रेताधानविधानतः' ॥ इति

धनिष्ठापञ्चकस्मृतौ —

'कांस्यसौवर्णरजतवस्त्ररत्नान्यनुक्रमात् ।
अथवा पञ्चरत्नानि कांस्यञ्च तिलसंयुतम् ।
दद्याद्ब्राह्मणवर्येभ्यो दोषमाशु व्यपोहति' ॥ इति
'उडुतिथियोगे ग्रामे वारभयोगे च वाटिकायाञ्च ।
तिथिवारभयोगे गृहे त्वशुभं पुनः पतति' ॥
भद्रे सुतविनाशस्स्यात् दाराणां विपदासु च ।
अंगारके सोदरस्य गुरूणाञ्च गुरौ तथा ॥
तिलतंडुलपिष्टेन त्रिरूपाणि च कारयेत् ।
रक्तवस्त्रेण चाच्छाद्य नवशूर्पोपरि क्षिपेत् ॥
श्मशाने निक्षिपेच्छूर्पं चितोपरि निधाय च ।
पुनर्दहनमन्त्रेण सशूर्पं दह्यते ततः ॥

पश्चाद्ब्राह्मणत्रयेभ्यो वसु दद्यात्स्वशक्तितः ।
वालकं शंखपुष्पी च कुष्ठञ्चैव वसा तथा ॥

नागकेसरचूर्णञ्च सर्वौषधिगणो मतः ।
पुष्पैस्तु गन्धमाल्याद्यैः माधवांघ्रिसमर्पितैः ॥

यदि प्रेतमलंकुर्यान्न याति परमां गतिम् ।
अर्कज्ञार्कीन्दुवारेषु मरणं शुभदं भवेत् ॥

अपि नन्दाजयापूर्णारिक्तासु मरणं यदि ।
वर्गोत्तमस्थिते चन्द्रे तथा वर्गोत्तमोदये ।
प्रेतकृत्यादयो वर्ज्याः नृणामन्विच्छतां सुखम् ' ॥ इति

प्राचीनावीती कर्ता कुर्यात् ।

स्मृतिसारसमुच्चये-'ऋत्विगादिर्यथा कुर्याद्धोमं श्राद्धक्रियां क्वचित् ।
उपवीत्यैव कुर्वीत कर्तुः स्यादपसव्यकम् ' ॥ इति

अत्र संस्कारस्त्रिविधः – पितृमेधोऽहोरात्रमेधो ब्रह्ममेध इति । विधुरविध-वादिनामेकर्चाविधिरुत्तरत्र निरूप्यते ।

कर्ता स्नात्वा प्राणानायम्य 'गोत्रादियुक्तमेनं पितृमेधविधिना ब्रह्ममेध-विधिना वा संस्करिष्यामि' इति प्राचीनावीती संकल्प्य, पूर्वं स्नापनम् । **गेहाद्बहिः शुचौ** देशे इत्यादि स्पष्टम् । ततः कर्णजपादि ।

'कर्णे जपेदाप्तवाक्यं मन्वादिभिरुदीरितम् ।
अनन्तरं मृतं दृष्ट्वा कर्ता रोदनवर्जितः ।
तत्प्रेतत्वविमोक्षार्थं कुर्याद्दाहादिकाः क्रियाः ' ॥ इति

'सदर्भहस्तो जानूर्ध्वं दक्षिणे दक्षिणोत्तरौ ।
कृत्वा जानुनि कर्तव्यमेतत्कर्म करोमि यत् ।
स्वमानसेन वाचा वा स तु संकल्प उच्यते ' ॥

इति संकल्पलक्षणञ्च ज्ञेयम् ।

बोधायनः – 'शुचौ देशे गोमयालिप्ते देशे परिश्रिते केशश्मश्रु-नखानि वापयित्वा – अनाहिताग्नेः स्त्रियाश्च' इत्यारभ्य 'अथैषा पत्नी केशान् विसृज्य अद्भिरेनं स्नापयति' इत्यन्तम् । भारद्वाजश्च । 'अथास्य दक्षिणेन विहारं परिश्रिते केशश्मश्रुनखानि वापयित्वा नलदेनालिंपति । नलदमालां प्रतिमुञ्चति' इति । नलदः उशीरः ।

षट्त्रिंशन्मते: – 'प्रेतदेहं शुभैर्गन्धैः स्नापितं संविलेपितम् ।
दग्ध्वा ग्रामाद्बहिः कुर्यात्सचेलस्नावनं जले' ॥ इति

प्रचेताः – 'प्रेतसंस्नापनं कृत्वा पुष्पैर्वस्त्रैश्च पूजनम् ।
श्मशानं नीयते पश्चात् ततस्संस्कृत्य यत्नतः' ॥ इति

**'यस्यो भोक्ता. कल' इत्यहतेन वाससा पादतो दशान्तमाच्छादयति ॥ २ ॥**

**तथैव शयनमभ्युक्ष्य 'गांगया' इति शाययीत ॥ ३ ॥**

**नैतदन्ये स्पृशन्ति ॥ ४ ॥**

**अनाहिताग्न्यादीनां सर्वौषधियुक्तेनोदकुंभेन श्मशाने स्नानालंकारौ स्यातामिति विशेषः ॥ ५ ॥**

अनाहिताग्नेरित्यादि । अत्र सर्वौषधिगणने ।

पराशरः – 'व्रीहयश्च यवाश्चैव गोधूमाश्चणकास्तथा ।
प्रियंगवो ह्युदाराश्च कोद्रवाश्च सपल्लवाः ॥
आढक्यश्चणकाश्चैव गणास्सप्तदश स्मृताः ॥ इति

गृह्यः – 'गृहे वाऽनाहिताग्नीनां मन्त्रस्नानमलंकृतिः' ॥ इति च

**उखास्वग्नीनादाय यज्ञभाण्डानि नवानि मृण्मयानि घटशरावादीन्यौदुंबराणि समित्परिधिशाखापत्राण्युदारबर्हिर्हिरण्यशकलतिलाक्षतदधिमधुक्षीराज्यादीनि संभृत्य उत्तरमग्नं पूर्वतस्तस्मान्न्यस्यति ॥ ६ ॥**

उखास्वित्यादि – उखासु – मृत्पात्रेषु । यज्ञभाण्डानि यथाऽऽयतनं निदध्यात् ।

'स्फ्यं कपालान्यग्निहोत्रहवणीं शूर्पकं ध्रुवाम् ।
जुहूमुपभृतं चैव स्रुवमाज्यस्य पात्रकम् ॥
उलूखलञ्च मुसलं कृष्णाजिनमथो शमीम् ।
दृषदञ्चोपलञ्चैव प्राशित्रहरणं तथा ॥
इडापात्रं मदन्तीञ्च धृष्टिरर्णापदेशकौ (?) ।
सान्नाय्यकुम्भ्यौ दोहन्यौ स्थाल्यन्वाहार्यसंज्ञिता ।
पात्रं कूर्चद्वयं वेदमैषीकं पात्रसंहतिः' ॥ इति पात्राणि ।

चातुर्मास्ययाजी चेत् तानि च नवानि मृन्मयानि घटशरावादीनीति । **समिदित्यादि**–एतान्यौदुंबराणि । **उत्तारः**–उत्तार्यते अनेनेत्युत्तारः–आसन्दी । **बर्हिः**–परिस्तरणाद्यर्थान् दर्भान्, दर्भरज्जुं । नव हिरण्यशकलानि । **आज्यादीनीति**–आदिशब्देन अत्रानुक्तान् संभारान् परशुं पुष्पाण्यहतं वासश्चेति, तान् संभृत्य प्रेतस्योत्तरपूर्वस्यां न्यस्यति ।

**स्नात्वाऽध्वर्युः पितृमेधविधिना अग्निहोत्रेण यथास्वमग्नौ दक्षिणामुखः प्राचीनावीती परिस्तीर्य सतिलेनाक्षतेन वैश्वदेवं हुत्वा गृहदेवताभ्यो बलिं हरेत् ॥ ७ ॥**

स्नात्वेत्यादि । अहुतश्चेत् मृताग्निहोत्रं हुत्वा अनाहिताग्निश्चेत औपासनं कृत्वा अग्निषु पितृमेधेन विधिना अग्निहोत्रेण यथास्वमग्नौ दक्षिणामुखः प्राचीनावीती परिस्तीर्याज्यं विलाप्योत्पूय जुहूं स्रुचञ्च निष्टप्य सम्मृज्य जुह्वां गृहीत्वा 'परे युवाँस' मित्यग्निषु हुत्वा वैश्वदेवं जुहुयात् । ब्रह्ममेधश्चेत् अत्र 'होतृंश्च पितृमेधञ्च संसृज्य विधिरुत्तर' इति । सप्तभिः 'चित्तिस्स्रु' गित्यारभ्य 'आस्मासु नृम्णं धात्स्वाहा' इत्यन्तं हुत्वा । एवं 'पृथिवी होता' इत्यादिना सप्तभिर्हुत्वा सतिलेनाक्षतेन तूष्णीमौपासने वैश्वदेवं हुत्वा गृहदेवताभ्यो बलिं हरेत । तूष्णीं नत्तद्दिक्षु ।

**शवस्य भारकाः सपिण्डाः पञ्चसंबन्धिवर्गा वा तदन्ये (वा) समानौ द्वौ चत्वारो वा स्नाता दर्भरज्जुसंवीता दर्भाम्बरधराः स्युः ॥ ८ ॥**

**पुत्राः त्रियष्टिकायोगेन अग्नीनसंकरं गृह्णीयुः ॥ ९ ॥**

**शवस्य भारका** इत्यादि। **दर्भरज्जुसंवीता** इत्यादि। दर्भरज्जुना कृतसंवीताः निवीतिनः – ब्रह्मतेजोरक्षणार्थम्। दर्भांबरधराः – दर्भसहितैकांबराः। **आश्वलायनः**। 'अन्वञ्चोऽधोनिवीताः प्रवृत्तशिखाः ज्येष्ठप्रथमाः कनिष्ठजघन्या' इति।

**कुंभश्च पत्नी। १० ॥**

**कुंभश्चेति** – पत्नी अन्या वा।

**इतराण्यन्येऽनुनयन्ति ॥ ११ ॥**

**पश्चादुत्तारेण 'मेरोरंह' इति मृतकमुद्धृत्य यथाप्रवेशं गृहान्निर्गमय्य हरेयुः ॥ १२ ॥**

शूद्राहृतं चिताकाष्ठमभावे प्रोक्ष्य चाहरेत्।
प्रेतभूतं द्विजं शूद्रो निर्हरेन्न कदाचन' ॥ इति

**पश्चादित्यादि**। उत्तारेण – आमन्त्र्या। ब्रह्ममेधश्चेत् 'मेरोरंह' इति 'भर्ता सन्' इत्यनुवाकेन चोद्धृत्य।

स्मृतिः — 'औदुंबर्यामथाऽसन्द्यां वहेदूर्ध्वमुखं शवम्।
न ग्रामाभिमुखं नाधो नयेयुश्च सगोत्रजाः ॥

वृद्धाः प्रेतस्य पुरतः स्त्रियो वृद्धाश्च पृष्ठतः।
अधःकृतोत्तरीयास्स्युः प्रतिमुक्तशिरोरुहाः।
गच्छेयुर्बान्धवाः पश्चात् कर्तुः प्रेतस्य चान्तरे' ॥ इति

यस्याऽऽनयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च।
प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते ॥ इति

व्यासः -- 'पूर्वाभिमुखो नेतव्यो ब्राह्मणो बान्धवैर्गृहात् ।
उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा ।
दक्षिणाभिमुखः शूद्रः निर्हर्तव्यस्स बान्धवैः' ॥ इति

वृद्धमनुः - 'कुर्युस्सपिंडास्सजलाः प्रेतनिर्हरणक्रियाः ।
संबन्धिनो वा शिष्या वा समाना वर्णतो द्विजाः' ॥ इति
'हीनं यो निर्हरेद्वर्णं प्रेतजातिसमो भवेत्' ॥ इति च

**ग्रामान्ते पालाश्या शम्या वा शाखया अप्रदक्षिणं 'अपेत वीत' इति त्रिवीथीस्त्रिरपक्रमं दक्षिणान्तं मार्जयित्वा 'अहोभिरद्भिः' इति दक्षिणस्यां (नां) उत्सृजति ॥ १३ ॥**

**तत्र तिलाक्षतोदकैः प्रोक्ष्य 'मेरोरंह' इति दक्षिणशीर्षमवतारयेयुः ॥ १४ ॥**

'[illegible]' इति [illegible]

**उत्तरस्याम्युद्धाराव[illegible]स्वसेतेन कुर्वीरन् ॥ १५ ॥**

**तथैव [illegible] संस्थाप्य निधाय [illegible]हायन्त्यां दक्षिणाग्रेषु दर्भेषु त्रिगुणेष्वग्रगाणि त्रीणि मृत्पिण्डान्यवाच्यन्तं न्यस्य हव्येन विष्णुं ब्रह्माणं तिलाक्षतोदकैर्दक्षिणाभिमुखोऽभ्यर्चयति ॥ १६ ॥**

**तथा अपसव्यं कव्येन रुद्रं पूजयेत् ॥ १७ ॥**

तथेत्यादि । अत्र हव्यकव्यशब्दप्रयोगाच्चरुद्वयमित्यवगम्यते । मन्त्रेण विष्णुं ब्रह्माणमिति पाठे विष्णवे नमः ब्रह्मणे नमः श्मशानवासिने रुद्राय नमः इति पूजां कुर्यात ।

**आधानक्रमेण दक्षिणाभिमुखः स्वेस्वेऽग्नौ जुहुयात् ॥ १८ ॥**

आधानेत्यादि । मृत्पिण्डपूजादिकं विधुरविधवादीनामपि कर्तव्यमिति ज्ञापयितुं द्विरुक्तिः ।

धात्रे, अर्यम्णे, अँशाय, मित्राय, वरुणाय, त्वष्ट्रे, इन्द्राय, पूष्णे, भगाय, विवस्वते, पर्जन्याय, विष्णवे स्वाहा व्याहृतीः। ब्रह्मणे स्वाहा व्याहृतीः। 'रुद्रेभ्यः' अथमन्त्यं होमः। 'मृगव्याधाय, शर्वाय, भवाय, पिनाकिने, भवनाय, ईश्वराय, स्थाणवे, कपालिने, निर्ऋतये, अजएकपदे, अहिर्बुध्नियाय स्वाहे' ति व्याहृतीः ॥ १९ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः

पूर्ववत्पूजनं मृत्पिण्डानाम् ॥ १ ॥

पूर्ववत् । यथावच्च ।

मृतकस्य चेलोपमार्जनैः सिम्वातं 'वातास्ते वान्तु' इति त्रिः कृत्वा तथा श्मशानेक्षणमुद्धृत्य अनु यज्ञभाण्डं नयति ॥ २ ॥

मृतकस्येत्यादि । त्रिः कृत्वा । त्रिरप्रदक्षिणं त्रिः प्रदक्षिणम् । उत्तरत्र सव्यापसव्यमित्युक्तत्वात् । कनिष्ठप्रथमाः पूर्वं, पश्चात् ज्येष्ठप्रथमाः । एवं त्रिः कुर्यात् । अत्र बोधायनः । 'कनिष्ठप्रथमाः प्रकीर्णकेशाः त्रिरपसलैः परियन्ति सिग्भिरुपवातयन्तः । एवममात्या एवं स्त्रियः । संयम्य केशान् यथेतं त्रिः पुनः परियन्ति' इति । 'त्रिरपसलैरप्रदक्षिणं दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् विस्रस्य दक्षिणानूरूनाघ्नानाः प्रदक्षिणं परीत्य' इति केचित् । 'सव्यानुद्ग्रथ्य दक्षिणान्विसृज्य सव्यानूरूनाघ्नानाः अनभिधून्वन्तः स्त्रियः परियन्ति' इति भारद्वाजः । एवं सिम्वातं कृत्वा 'मेरोरंह' इति 'भर्ता स' त्रीणि च मृतकमुद्धृत्य अनु — पश्चात् यज्ञभाण्डानि नयन्ति ।

मृत्पिण्डं वैष्णवं तेषामप्सु क्षिपति ॥ ३ ॥

ब्राह्मं तत्रैव पिदधाति ॥ ४ ॥

रौद्रमादाय गच्छेत् ॥ ५ ॥

चितोद्देशं वनं नदीतीरं शिलोच्चयं वा प्रत्यग्दक्षिणतश्च प्रवणं गृह्णाति ॥ ६ ॥

भिन्नाच्छिन्नमलवल्मीककेशकपालास्थितुषाङ्गारोषरेरिणपाषाण- वृक्षमूलोद्देशान् वर्जयेत् ॥ ७ ॥

तत्र चिताप्रमाणं कायमात्रायामं तदर्धविस्तारं गृहीत्वा पूर्ववत् शाखया सहिरण्यया वा प्रमार्ज्योत्सर्जनमभ्युक्षणञ्च ॥ ८ ॥

तत्रेत्यादि । 'अपेत वी' तेत्याद्युत्सर्जनम् ।

तासु वीथिषु 'अपसर्पत प्रेता' इति तिस्रो नव वा कर्पूदक्षिणापवर्गाः स्फ्येन परशुना वा भागावगाढमित्ता र्ं मध्यपूर्वापरतश्च खनति ॥९॥

तिलतण्डुलानामपसव्यं मुष्टिभिः 'यमाय 'कालाय 'मृत्यवे दहनपतये 'पितृभ्यः स्वधा नम' इति ताम्तथा पूरयित्वा शेषान् सर्वतो विकीर्य मध्ये मृत्पिण्डेन सह हिरण्यशकलमवदधाति ॥ १० ॥

तिलतंडुलानित्यादि । यमायेत्यादिषु त्रिषु पदेषु दहनपतये पितृभ्यः इति प्रत्येकं संबध्यते । 'यमाय दहनपतये पितृभ्यः स्वधानमः। कालाय दहनपतये पितृभ्यस्स्वधानमः । मृत्यवे दहनपतये पितृभ्यस्स्वधानमः' इति पूरणम् । ताः कर्षूः, तथा खननप्रकारेण ।

दक्षिणाग्रैः दर्भैः तत्प्रमाणेगस्तीर्य शंकुं तद्विमागेच्छ्रयं दक्षिणाग्राण्येधांसि चिनोति ॥ ११ ॥

दक्षिणाग्रैरित्यादि । शंकुं – शंकून् एधसां दार्ढ्यायावश्यकान् सुदृढं निखाय दक्षिणाग्राण्येधांसि चिनोति ।

'कुरु म' इति सांगं कृष्णाजिनमधोलोम दक्षिणग्रीवं यथाहिताग्निरास्तृणाति ॥ १२ ॥

चितापूर्वं मृतकं तथा निधाय अग्नींश्च सर्वानिध्म दक्षिणामुखः प्राचीनावीती परिस्तीर्य यथा मन्त्रौ जुहोति ॥ १३ ॥

चितापूर्वमित्यादि । तथा निधाय - चितायाः पूर्वं 'मेरोरंहः -- 'भर्ता स' इति, ऐशान्यामग्न्यादिभागांश्च निधाय । परिस्तीर्य – गार्हपत्यादीन् परिस्तीर्य – परिषिच्य होमः ।

'अग्नये -- 'सोमाय – 'इन्द्राय, 'यमाय -- 'वरुणाय – 'कुबेराय – 'पृथिव्यै – 'अद्भ्यः – 'तेजसे – 'वायवे – 'आकाशाय -- 'अहंकाराय – 'बुद्ध्यै – 'इन्द्रियेभ्यः – 'पुरुषाय – 'सूर्याय - 'जीवाय – 'मनसे – 'पञ्चभूताधिपतये – 'परमपुरुषाय -- 'शुक्राय - 'धर्माय -- 'ध्रुवाय, 'वृषाय स्वाहा' इति -- व्याहृतीः ॥ १४ ॥

'शिवं या' त्विति मृतकं प्रोक्ष्य चितायां तिलानवकीर्य तत उद्धृत्य अवतारयेयुः ॥ १५ ॥

शिवमित्यादि । 'मेरोरंहः – 'भर्ता सन्नि' ति मन्त्राभ्यामुद्धारः अवतरणञ्च ।

सप्तसु प्राणमार्गेषु अवाचीनपाणिः हिरण्यशकलानि सप्त मधुनाऽक्तानि 'आ ओ वह' इति प्रत्यस्यति ॥ १६ ॥

सप्तेत्यादि । हिरण्यशकलप्रक्षेपणात्पूर्वं सुवर्णं गृहीत्वा 'सुवर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयँ सुशेवा विश्वाःस्पृधो अभिमातीर्जयेम । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम् । तेनामृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिगृहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिगृहीता । कामँ समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते कामदक्षिणा । उत्तानस्त्वांगीरसः प्रतिगृह्णातु' इति प्रथमं संमृज्य, 'देवस्य त्वा सवितुः प्रसवे' इत्यारभ्य 'राजा त्वा वरुणो नयतु देवि दक्षिणे सोमाय वासः तेनामृतत्वमश्या' मिति पूर्ववत् द्वितीयं संमृज्य, तृतीये 'देवस्य त्वा' इत्यारभ्य 'देवि दक्षिणे रुद्राय गां तयाऽमृतत्वमश्या' मित्यादि पूर्ववत् । चतुर्थे तु 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे वरुणायाश्वं तेनामृतत्वमश्या' मिति पूर्ववत् । पञ्चमे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे प्रजापतये पुरुषं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । षष्ठे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे मनवे तल्पं तेनामृतत्वमश्या' मिति पूर्ववत् । सप्तमे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे त्वष्ट्रेऽजां तयाऽमृतत्वमश्या' मित्यादि पूर्ववत् । अष्टमे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे पूष्णेऽविं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । नवमे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे निर्ऋत्या अश्वतरगर्दभौ ताभ्याममृतत्वमश्या' मित्यादि पूर्ववत् । दशमे 'देवस्ये' त्यारभ्य 'देवि दक्षिणे हिमवतो हस्तिनं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । एकादशे 'देवस्य त्वे' त्यारभ्य 'गन्धर्वाप्सराभ्यस्स्रगलं-

करणे ताभिरमृतत्वमश्या' मित्यादि पूर्ववत् । द्वादशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे विश्वेभ्यो देवेभ्यो धान्यं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । त्रयोदशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे वाचेऽन्नं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । चतुर्दशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे ब्रह्मण ओदनं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । पञ्चदशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे समुद्रायापः ताभिरमृतत्वमश्या' मित्यादि पूर्ववत् । षोडशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे उत्तानायांगीरसायाः तेनामृतत्वमश्या' मित्यादि पूर्ववत् । सप्तदशे 'देवस्य त्वे' त्यारभ्य 'देवि दक्षिणे वैश्वानराय रथं तेनामृतत्वमश्या' मित्यादि पूर्ववत् । इति प्रत्येकं प्रेतहस्तं सम्मृज्य अनन्तरं 'आ ओं वहे' ति मन्त्रं प्राणमार्गेषु आस्यघ्राणचक्षुःश्रोत्रेषु आज्याक्तान् हिरण्यशकलान् न्यस्यति । ब्रह्ममेधश्चेत्—'आ ओं वह' त्युक्त्वा 'सुवर्णं घर्म' मित्यादि वाक्यैश्च 'समानसीन आत्मा जनाना' मित्यास्ये हिरण्यशकलं निधाय 'आ ओं वह' 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानँ सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् । अन्तः प्रविष्टं कर्तारमेतम् । त्वष्टारँ रूपाणि विकुर्वन्तं विपश्चिम् । अमृतस्य प्राणं यज्ञमेतम् । चतुर्होतॄणामात्मानं कवयो निचिक्युः । अन्तः प्रविष्टं कर्तारमेतम् । देवानां बन्धु निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । चतुर्होतॄणामात्मानं कवयो निचिक्युः' । इति नेत्रयोर्द्विः । 'आ ओं वह—'शतं नियुतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणाति । इन्द्रस्यात्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम् । इन्द्रँ राजानँ सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिँ रश्मीनां भुवनं बिभर्ति । अनिर्भिण्ण-स्सन्नथ लोकान् विचष्टे । यस्यांडकोशँ शुष्कमाहुः प्राणमुल्बम् । तेन क्लृप्तोऽ-मृतेनाहमस्मि' इति कर्णयोर्द्विः । 'आ ओं वह—'सुवर्णं कोशँ रजसा परीवृतम् । देवानां वसुधानीं विराजम् । अमृतस्य पूर्णां तामु कलां विचक्षते । पादँ षड्ढोतुर्न किला विवित्से । येनर्तवः पञ्चधोत क्लृप्ताः । उत वा षड्ढा मनसोत क्लृप्ताः । तँ षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति ।

अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानँ शतधा चरन्त'मिति दक्षिणघ्राणे । 'आ ओं वह—'इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवानाँ हृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद् ब्रह्मण उज्जभार । अर्कँ श्चोतन्तँ सरिरस्य मध्ये । आयसिंत्सप्त पेरवः । मेहन्ति बहुलाँ श्रियम् । बह्वश्वामिन्द्रगोमतीम् । अच्युतां बहुलाँ श्रियम् । स हरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । बह्वश्वामिन्द्रगोमतीम् । अच्युतां बहुलाँ श्रियम् । मह्यमिन्द्रो नियच्छतु । शतँ शता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुभीरश्मिरिन्द्रः । प्रमँहमाणो बहुलाँ श्रियम् । रश्मिरिन्द्रस्सविता मे नियच्छतु । घृतं तेजो मधुमदिन्द्रियम् । मय्ययमग्निर्दधातु । हरिः पतंगः पटरी सुपर्णः । दिविक्षयो नभसा य एति । स न इन्द्रः कामवरं ददातु । पञ्चारं चक्रं परिवर्तते पृथु । हिरण्यज्योतिस्सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । सप्त युञ्जन्ति रथमेकचक्रम् । एको अश्वो वहति सप्तनामा । त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसन्नमन्तु । श्वेतँ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् । रोहिणीः पिंगला एकरूपाः । क्षरन्तीः पिंगला एकरूपाः । शतँ सहस्राणि प्रयुतानि नाव्यानाम् । अयं यश्श्वेतो रश्मिः । परिसर्वमिदं जगत् । प्रजां पशून् धनानि । अस्माकं ददातु । श्वेतो रश्मिः परिसर्वं बभूव । सुवर्मह्यं पशून् विश्वरूपान् । पतंगमक्तमसुरस्य मायया । हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतंगो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानाँ स्वर्यं मनीषाम् । ऋतस्य पदे कवयो निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । अग्निस्ताँ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । वीतँस्तुके स्तुके ।

युवमस्मासु नियच्छतम् । प्रप्र यज्ञपतिं तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । तेषाँ सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैक-रूपाः । वायुर्नाँ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन् गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । तेषाँ सप्तानामिहरन्तिरस्तु । राय-स्पोषाय सुप्रजास्त्वाय सुवीर्याय । इन्द्रो राजा ' इत्यनुवाकशेषेण वामघ्राणे च सप्ताज्याक्तानि हिरण्यशकलानि प्रत्यस्येत् । अलाभे तत्राऽऽज्यबिन्दून् । तत्र श्रुतिः । 'अमेध्यं यत् पुरुषशीर्षममृतं खलु वै प्राणा अमृतं हिरण्यं प्राणेषु हिरण्यशकलान् प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैस्समर्थयति ' इति । तथा 'अमृतं वा आज्यम् – 'प्राणो वा आज्यम् ' 'ज्योतिर्वै हिरण्यम् ' – 'अमृतं वै हिरण्यम् ' इति । 'पुरुषाहुतिर्ह्यस्य प्रियतमे ' ति । प्रेतत्वदोषनिवारणार्थ-मिदमुक्तम् ॥

**आज्याक्तानीत्येके ॥ १७ ॥**

**अलाभे (तस्य) सप्ताऽऽज्यबिन्दूनिति विज्ञायते ॥ १८ ॥**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

--*o*--

तिलतंडुलदधिमधुक्षीराणां यथ लाभमिश्रमास्ये क्षिपेत् ॥ १ ॥

तदास्यं दर्भेण स्पृशन् द्विश्चतुर्होतं जपति ॥ २ ॥

तदास्यमित्यादि । 'आ ओ वहे' ति मन्त्रेण स्पर्शनम् ।

'पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता' । इति चत्वार्यासीदन्तानि चतुर्होत्रम् ॥ ३ ॥

तथा नासिकापुटयोर्दशहोत्रम् ॥ ४ ॥

'चित्तिस्स्रुक् ! चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाऽध्वर्युः' इत्येतानि दश आसीदन्तानि दशहोत्रम् ॥ ५ ॥

तथा अक्ष्णोः षड्ढोत्रम् ॥ ६ ॥

सूर्यं ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अन्तरिक्षमात्मा । अंगैर्यज्ञम् । पृथिवीँ शरीरैः' इत्येतानि षडासीदन्तानि षड्ढोत्रम् ॥ ७

तथा कर्णयोः पञ्चहोत्रम् ॥ ८ ॥

'अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता' । इत्यास्तामासीदन्तानि पञ्चहोत्रम् ॥ ९ ॥

तथा कीकसासु सप्तहोत्रम् ॥ १० ॥

'महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च । यज्ञस्याभिगरौ । अयास्य उद्गाता' इति सप्त आस्तामासीदन्तानि सप्तहोत्रम् ॥ ११ ॥

जघने दक्षिणाग्रेषु दर्भेषु यज्ञपात्राणि प्रयुनक्ति ॥ १२ ॥

उत्तरेण प्रोक्षणीं संस्कृत्य मृतं पात्रं दारुचिताश्च प्रोक्ष्य अथ दर्शपूर्णमासवत् तूष्णीमाज्यानि गृह्णाति ॥ १३ ॥

उत्तरेणेत्यादि । एकदर्भपवित्रेण प्रोक्षणीः संस्कृत्य पात्राणि मृतकं दारुचितिश्च प्रोक्ष्य दक्षिणपाणिना स्रुवं जुहूमुपभृतं प्राशित्रहरणं दर्भांश्चादाय गार्हपत्ये निष्टप्य दर्भाग्रैः स्रुवादीन् दर्शपूर्णमासवत् तूष्णीं सम्मृज्य पुनः प्रतितप्य दक्षिणे निधाय दर्भानग्नौ प्रहृत्य 'इदं विष्णु' रित्याज्यस्थालीं दक्षिणे अधिश्रित्य आज्यमेकपवित्रवत्यामाज्यस्थाल्यां निर्वाप्य गार्हपत्यदक्षिणे अधिश्रित्य उत्तरेण प्रोक्षणीं स्फ्यस्य रेखायां सादयित्वा एकपवित्रेण पुनराहारं त्रिरुत्पूय जुहूं धारयमाणः आज्यस्थाल्यां वेदेनोपयम्य स्रुवेण दर्शपूर्णमासवत् आज्यानि गृह्णाति ।

जुह्वां घृतं उपभृति दधि ध्रुवायां मधु क्षीरमग्निहोत्रहवण्याम् ॥ १४ ॥

जुह्वां इत्यादि । चतुर्जुह्वां – होमहवन्यां घृतम् । अष्टावुपभृति – दधि, उपभृद्गति पृषदाज्यधान्याम् । चतुर्ध्रुवायां मधु । क्षीरमग्निहोत्रहवण्याम् ।

अपि वा आज्यमेव सर्वासु ॥ १५ ॥

यान्यासेचनवन्ति पात्राणि तानि संपूरयति ॥ १६ ॥

यानि इत्यादि । दर्भेषु दक्षिणापवर्गं संसाद्य ।

अभ्युक्ष्येतराणि पात्राणि अवाचीनोति ॥ १७ ॥

अभ्युक्ष्येत्यादि । अवाचिनोति । अवाङ्मुखानि सादयति ।

तथा 'अग्न आयाहि' इति जुह्वा घृतदानम् ॥ १८ ॥

तथेत्यादि । अक्ष्णोः घृतं दद्यात् (एतिसाष्टवनिश्च ?)

'इषे त्वोर्जे' त्वेत्युपभृता दधि देयम् ॥ १९ ॥

'अग्निमीले' इति ध्रुवया मधु ॥ २० ॥

'शन्नो देवी' रित्यग्निहोत्रहवण्या क्षीरं ददाति ॥ २१ ॥

शन्नो देवीरित्यादि । 'अग्न आया' हीत्यादिमन्त्राणां द्विरावृत्तिः । अत्र बोधायनः । 'नाना चतुर्गृहीताभ्यामक्ष्णो जुहो' तीति । अत्र घृतादिद्रव्याणामक्ष्णोर्दानम् ।

तानि तिलाक्षतादीनि तथा अपोह्य दर्शपूर्णमासानुयोज्यान्यस्मै उपाहरति ॥ २२ ॥

तानीत्यादि । अस्मै -- मृतकाय, वक्ष्यमाणप्रकारेण दद्यात् । आसेचनवतां पुनरप्याज्येन पूरणं कर्तव्यम् ।

'अग्नेऽमृळमहां असी' ति स्फ्यं जुहूं दक्षिणे हस्ते निदध्यात् ॥ २३

'वाजसनी' त्युपभृतं सव्ये ॥ २४ ॥

'विश्वं (दिधक्षुः)' इति ध्रुवामुरसि ॥ २५ ॥

तत्रैव 'अग्निमश्वत्थात्' इत्यरणिमग्राग्रम् ॥ २६ ॥

'या ते काकुत्सुकृता' इत्यग्निहोत्रहवणीमास्ये ॥ २७ ॥

'आस्यत' मित्याज्यस्रुवौ नासिकापुटयोः ॥ २८ ॥

'वारुणा' वित्याज्यस्थालीं कण्ठे ॥ २९ ॥

'करा' विति प्राशित्रं भित्वा वा कर्णयोः ॥ ३० ॥

'मुहुरराण' इत्युलूखलमुसलौ हन्वोः ॥ ३१ ॥

'हर्य' इति ग्रावाणकौ दत्सु यदि तौ स्याताम् ॥ ३२ ॥

'षट्चम' इति कपालानि शिरःस्थाने ॥ ३३ ॥

तेनैव ललाटे एककपालम् ॥ ३४ ॥

'विष्णोरराट' मिति प्रोच्य पिष्टसंयम (व) नीमुदरे ॥ ३५ ॥

विष्णोरित्यादि । दर्शपूर्णमासयोरुपयोगयोग्यानि पात्राणि 'अवैम प्रेताय लोकाय स्वा' हेति (सक्तु) जुहोति ।

परशुं 'मुदिते मे' इति छित्वा चैकं शूर्पं पार्श्वयोः ॥ ३६ ॥

'अस्ये' ति सान्नाय्यकुंभं वंक्षणे यदि सन्नयेत् ॥ ३७ ॥

'सत्यग्रंते' ति दृषदुपले अंडयोः ॥ ३८ ॥

'सत्यं बर्हिर्ज्योतिर्ज्योतिषे' त्यग्निहोत्रस्थालीमन्वाहार्यपचनञ्च पृष्ठयोः (प्रतिष्ठयोः) ॥ ३९ ॥

'इन्द्र (स्य इ) सेने' त्युपानहरणी पादयोः ॥ ४० ॥

'मनीषिणां सदंदं' ति अर्दं कूर्चं चूलिकायाम् ॥ ४१ ॥

'चन्द्रमाप्रसा' विति इडापात्रं शिरस्स्थाने ॥ ४२ ॥

अत्र विशेषः । 'चमसमुपस्थे' इत्याश्वलायनः । 'शिरस्तः प्रणीताप्रणयन' मिति बोधायनः ।

तत्रैव तथोपसादनीम् ॥ ४३ ॥

एवं यथास्थानकल्पयित्वा अवशिष्टानि प्रक्षेपण्यादीनि लौकिकसंभारमाण्डानि 'धेनुर्वहाणा' मित्यन्तरा सक्थिनी निक्षिपेत् ॥४४॥

स्फ्यादीनि यज्ञपात्राणि 'इममग्ने चमस' मिति निर्वपेदित्येके ॥ ४५ ॥

**स्फ्यादीनीत्यादि** । प्रकारान्तरेण 'इममग्ने चमस' मिति यज्ञपात्रनिर्वापस्यायं क्रमः ।

'इममग्ने चमसं – 'अग्निर्यजुर्भिः' इति स्फ्यं जुहूञ्च दक्षिणहस्ते निदध्यात् । 'इममग्ने चमसं - 'सविता स्तोमैः' इति वपाहवनीः । 'इममग्ने चमसं – 'इन्द्र उक्थामदैः' इति उपभृतं सव्ये हस्ते । उपभृद्वत् पृषदाज्यधानीं– 'इममग्ने चमसं – 'मित्रावरुणावाशिषा' इति ध्रुवामुरसि – 'इममग्ने चमसं 'अंगिरसो धिष्णियैरग्निभिः' इति अधरारणिं दक्षिणाग्रं मुखे – 'इममग्ने चमसं 'अदितिर्वेद्या' इति दक्षिणनासापुटे निष्टक्य (?) स्रुवं – 'इममग्ने चमसं 'सोमो दीक्षया' इति वामनासापुटे अग्निहोत्रस्रुवं, – 'इममग्ने चमसं – 'त्वष्टेध्मेन' इति आज्यस्थालीं कंठे – 'इममग्ने चमसं 'विष्णुर्यज्ञेन' इति दक्षिणकर्णे,

'इममग्ने चमसं' 'वसव आज्येन' इति वामे च प्राशित्रहरणं; यद्वैकं छित्त्वा खण्डे वा — 'इममग्ने चमसं' 'आदित्या दक्षिणाभिः' इत्युलूखलं दक्षिणहस्ते, 'इममग्ने चमसं' 'विश्वे देवा ऊर्जा' इत्युर्वीं वामे हस्ते — 'इममग्ने चमसं' 'ध्रुवा स्वगाकारेण' इति अवहननपाषाणं दन्तेषु — 'इममग्ने चमसं बृहस्पतिः पुरोधया' इति कपालानि शिरःस्थाने — 'इममग्ने चमसं' 'प्रजापतिरुद्गीथेन' इति एककपालं ललाटे (आकाशपृथिव्यम्) — 'इममग्ने चमसं' 'अन्तरिक्षं पवित्रेण' इति पात्रमग्नोमुखमुदरे — 'इममग्ने चमसं 'वायुः प्राणैः' इत्युदरे परशुं — 'इममग्ने चमसं 'अर्हॅश्रद्धया' इति दक्षिणपार्श्वे — 'इममग्ने चमसं 'अग्निर्यजुर्भिः' इति वामपार्श्वे च शूर्पेहृदश्चेत्, यद्येकं खण्डे वा — 'इममग्ने चमसं 'सविता स्तोमै' रिति सान्नाय्यकुंभे ऊरुमूले — 'इममग्ने चमसं 'इन्द्र उक्थामदैः' इति दक्षिणेऽण्डे हवदं — 'इममग्ने चमसं 'मित्रावरुणावाशिषा' इति वामेऽण्डे च वृषणयोः — 'इममग्ने चमसं 'अंगिरसो धिष्णियैरग्निभि' रिति शिश्ने शम्यां, 'इममग्ने चमसं 'मरुतस्सदोहविर्धानाभ्याम् आपः। प्रोक्षणीभिः' इति अग्निहोत्रस्थालीमन्वाहार्यपचनञ्च जघनयोः — 'इममग्ने चमसं 'ओषधयो बर्हिषा' इति गार्हपत्याद्धविराहरणकलसं (?) पादमध्ये — 'इममग्ने चमसं, 'अदितिर्वेद्या' इति हविरासादनकूर्चं वेदञ्च चूलिकायां 'इममग्ने चमसं 'त्वष्टेध्मेन' इति इडापात्रं शिरःपार्श्वे — एवं सर्वत्र पूर्वं 'मिममग्ने चमस' मित्युक्त्वा 'अग्निर्यजुर्भि' रित्यादिवाक्यैरेकैकेनैकैकं पात्रं निधाय 'धेनुर्वेहाणा' मिति सर्वत्र पूर्वमुक्त्वा 'विष्णुर्यज्ञेन' इत्यादिवाक्यैः लोहसंभारभांडानि 'विश्वे देवा ऊर्जा' इत्यादिभिः घटशरावादीनि च ऊर्वोर्मध्ये निक्षिपेत् । 'प्रजापतिरुद्गीथे' नेति चमसमुपस्थे 'अन्तरिक्षं पवित्रे' णेत्यादिभिः शिरसि प्रणीताप्रणयनञ्च निक्षिपेत्। अन्त्यवाक्ये अनुवाकवाक्यशेषाणां परिसमाप्तिः।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने चतुर्थः खण्डः ।

## अथ पञ्चमः खण्डः

अनाहिताग्नेः स्रुवादीनि 'धेनुर्वहाणा' मित्यादधीत ॥ १ ॥

अनाहिताग्नेः स्रुवं छित्वा 'धेनुर्वहाणां 'अग्निर्यजुर्भिः सविता स्तोमै' रिति नासिकापुटयोः 'धेनुर्वहाणां' 'इन्द्र उक्थामदैः' 'मित्रावरुणावाशिषा' इति द्वाभ्यां दक्षिणेतरहस्तयोः जुहूपजुहू – 'धेनुर्वहाणां' 'अंगिरसो धिष्णियै-रश्मिभिः' 'मरुतस्सदोहविर्धानाभ्यां' इति पृथक् पृथगरणी वक्षुरसि – 'धेनुर्वहाणां 'आपः प्रोक्षणीभिः' इति मुखे प्रोक्षणीं – 'धेनुर्वहाणां 'ओषधयो बर्हिषा' इत्याज्यस्थालीं 'धेनुर्वहाणां' 'अदितिर्वेद्या' इति चरुस्थालीं जघने – 'धेनुर्वहाणां' 'सोमो दीक्षया। त्वष्टेध्मेन' इति वेदं कूर्चं पृथक्। .... .... .... .... 'धेनुर्वहाणां' 'विष्णुर्यज्ञेन' 'वसव आज्येन' इति द्वाभ्यां .... ........ णायनं 'धेनुर्वहाणां' 'आदित्या दक्षिणाभि' रित्याद्यैः अन्यदिनि ऊर्वोर्मध्ये निक्षिपेत्।

'इममग्ने चमस' मिति कृताञ्जलिः पुरतः स्थित्वा प्रोक्ष्य कृष्णाजिनमादाय ऊर्ध्वलोम्ना तेनाच्छादनं करोति ॥ २ ॥

'इममग्न' इत्यादि। ऐशान्यां स्थित्वा अंजलिं कृत्वा उपस्थानं कुर्यात्। कृष्णाजिनास्तरणमाहिताग्निविषयम्।

बान्धवाः कनिष्ठप्रथमाः (त्रयः) त्रियस्सर्वे वा सिग्वातेन पूर्ववत् सव्यापसव्यं त्रिःकृत्वोपवीजयन्ति ॥ ३ ॥

. बान्धवा इत्यादि। आहिताग्नेरनाहिताग्नेश्च 'वातास्ते वान्त्वि' ति पूर्ववत् सिग्वातोपवीजनम्।

यस्मात्सिग्वातादेष पथि सुखं यातीत्यामनन्ति ॥ ४ ॥

पत्नी पुत्रस्सनाभिरन्यो वा समानो जलपूर्णकुंभमादाय शिरस्तः प्रसव्यं सिञ्चन् पर्येति ॥ ५ ॥

पत्नीत्यादि। शिरस्तः – शिरःप्रदेशादारभ्य।

पृष्ठतोऽध्वर्युरास्थितः शिरस्स्थं परशुना घटं किञ्चित् भिनत्ति ॥ ६ ॥

तां धारामनुमन्त्रयते 'इमा आपो मधुमत्योऽस्मिँस्ते लोक उपदुह्यन्ता' मिति ॥ ७ ॥

द्वितीयं पर्येति मध्यतो भिनत्ति ॥ ८ ॥

तां धारामनुमन्त्रयते 'इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उपदुह्यन्ता' मिति ॥ ९ ॥

तृतीयं पर्येति तत उपरिष्टाद्भिनत्ति ॥ १० ॥

तां धारामनुमन्त्रयते 'इमा आपो मधुमत्यस्स्वर्गे ते लोक उपदुह्यन्ता' मिति ॥ ११ ॥

ततः स कुंभं पृष्ठतः क्षिपति ॥ १२ ॥

यदि पूर्वतः क्षिपेत् न शर्मणे कुलस्येति ॥ १३ ॥

ताः कपालावशेषाः प्राणस्थानेषु सर्वेषु 'भूः पृथिवी' मित्यपो नयति ॥ १४ ॥

प्राचीमुदीचीं वा निष्क्रम्य दिशं शिखी यज्ञोपवीती अप उपस्पृश्य प्राणायामं कृत्वा आर्द्रा ओषधीः वनस्पतिँ हिरण्यं वा आलभेत ॥ १५ ॥

गां ब्राह्मणान्वा ईक्षयित्वा 'देवस्य त्वा' इति शक्त्या दक्षिणामध्वर्युप्रभृतिभ्यो दद्यात् ॥ १६ ॥

गामित्यादि । अत्राध्वर्युराग्नीध्रः—परिचारकः (?) इत्यर्थः । उपद्रष्टा । असपिंडा वाहकादयः प्रभृतिशब्देनोच्यन्ते ।

अत्र वरं ददाति ॥ १७ ॥

अत्रेति । अत्र तस्मिन् काले । वरमध्वर्यवे ददाति । भारद्वाजः । 'अत्र पत्नी सौभद्रं वरं ददाति सहस्रपणमूल्यम्' इति । कात्यायनः । 'गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्य अश्वो वैश्यस्य वासांसि रथसहस्रं दुहितुर्मतः'

इति (१)। अत्र अध्वर्युणा कर्तव्यं 'शन्नो मित्र' इत्यारभ्य कर्णजपाज्याभिषेचना-ग्निहोत्रहोमाङ्गुष्ठबन्धनारण्यादिपात्रचयनान्तम् । संकल्पो मृत्पिण्डपूजा सिग्वात उदकुंभसेचनमग्निदानमुपस्थानादि यजमानकृत्यम् । ननु – कर्णजपादिक-मध्वर्युणा कथं कर्तुं युज्यत इति चेत -- सत्यम् । 'त्रींस्त्रीन् पुरोडाशशकलान् प्राचीनावीतिनः पिंडदानमन्त्रैः यजमानपितृभ्यो निवपन्ती'ति श्रौते उक्तत्वात, अत्रान्त्येष्ट्यामध्वर्युणा कर्तुं युज्यते ।

अथ अध्वर्युः अग्नीन् प्राज्वाल्य नियुञ्जीत ॥ १८ ॥

अथेति । अध्वर्युकृत्यपरिसमाप्तिद्योतनार्थमथशब्दः । अग्निप्रदाने कर्तारं नियुञ्जीत ।

(अप) सव्येन मुक्तशिखः प्राचीनावीती आग्नेय्यां 'अग्निर्यजुर्भिः, सविता' इति संभारैः, 'सेनेन्द्रस्य, 'धेना' इति पत्नीभिराहवनीयं ददाति ॥ १९ ॥

सव्येनेत्यादि । सव्येन प्राचीनावीतिनस्तेन निवीतेन मुक्तशिखः आग्नेय्यां चितायां । 'अग्निर्यजुर्भिः' 'सेनेन्द्र' स्येति संभारयजुर्भिः पत्नी-भिश्चाहवनीयं ददाति । ब्रह्ममेधश्चेत्' ज्योतिष्मतीभिस्सह । एवं तत्तदग्नि-भिस्तन्तन्मन्त्रैः ज्योतिष्मतीभिस्सह कुर्यात ।

'वाचस्पते विधे नामन्' इति ग्रहैः 'वाचस्पते वाचो वीर्येण' इत्यृतुभिः नैर्ऋत्यामन्वाहार्यम् ॥ २० ॥

'सोमस्सोमस्य, 'वाचस्पतेऽच्छिद्रया वाचा' इति ग्रहैर्वायव्यां गार्हपत्यम् ॥ २१ ॥

'वाचस्पते – 'वाग्घोता' इत्युत्तरस्यां पुरस्ताच्च सभ्यावसथ्यौ दत्वा 'ब्राह्मण एकहोता' इति स्थित्वा हृदयं जपति ॥ २२ ॥

वाचस्पते इत्यादि । सभ्यावसथ्यौ यदि पुरस्ताच्च ददाति । शेषाधानी चेत 'अग्निर्यजुर्भिः 'सेनेन्द्र' स्येति औपासनाग्निमाहवनीयवत्

दद्यात् । ब्रह्ममेधश्चेदौपासनाग्नेरपि ज्योतिष्मतीभिर्दानम् । हृदयं जपति । हृदयानुवाकं जपति–'सुवर्णं घर्म' मिति ।

**आज्याक्ताभ्यां पाणिभ्यां परावृत्तमुखोऽगुष्ठबन्धौ विमुच्य पादावुपलिंपति ॥ २३ ॥**

**आज्याक्ताभ्यामित्यादि । परावृत्तमुखः** प्रेतमनिरीक्षमाणः । अंगुष्ठबन्धमोचनं प्रोक्षण समादधान (?) इति केचित् ।

**ऐशान्यां कृताञ्जलिः 'अयं घर्म' इत्युपतिष्ठेत** ॥ २४ ॥

**ऐशान्यामित्यादि ।** ब्रह्ममेधश्चेत् 'सहस्रशीर्षा – 'अद्भ्यश्च' इति द्वाभ्यामनुवाकाभ्यामुपस्थानम् ।

**अनाहिताग्नेः 'सुवर्णं घर्म' इत्युपस्थानम् । इतरेषां कपालसन्तपनाग्निना एकर्चया दहनमित्येके** ॥ २५ ॥

**अनाहिताग्नेरित्यादि ।** प्रेतस्य चि.... जहविषा तदा जुहुयात् । पिष्टेन वा । न जुहुयाद्वा । 'प्रयासायस्वाहे' ति द्वादशाहुतीराज्येन हुत्वा 'हरिं हरन्त' मिति षड्चं ऋगन्ते प्रणवं शंसेत् । चितायाः पश्चिमतः .... .... तासु सिकतासु अयुग्भिरुदकुम्भैः पूरयित्वा 'आप्यायस्वमदिन्तमे' ति कर्तृप्रथमा ज्ञातयः प्रोक्षयेयुः ॥

अत्र प्रसंगात् ब्रह्ममेधः गृह्यपरिशिष्टोक्तः प्रदर्श्यते ॥ यथा :–

'संस्कारो ब्रह्मनिष्ठानां सदाचारवतामपि ।
ब्रह्ममेधोऽतिफलदो न सर्वेषां द्विजन्मनाम् ॥

न सामान्ये श्मशाने स्यात् पुण्यक्षेत्रे चरित्यके (?) ।
द्विजानामपवर्गार्थं तत्त्वतस्तत्त्वदर्शिभिः ॥

ऋषिभिस्तपसो योगात् वेष्टितुं पुरुषोत्तमम् ।
होतंश्च ब्रह्ममेधश्च संसज्य विधिरुत्तरः ॥

विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ।
पूर्ववत् पितृमेधस्स्यात् विशेषस्तु प्रवक्ष्यते ॥

'आयुषः प्राण' ब्रह्म भृगुः दक्षिणे श्रवणे जपत् ।
'संज्ञान' मिति चान्यस्मिन् ततः स्नानादिकं चरेत् ॥

'परे युवांम' मित्यन्ते वैश्वदेवस्य पूर्वतः ।
एतैश्च 'पृथिवी चाग्निः 'सूर्यं ते च महाहविः ॥

'वाग्घोते' त्यादिभिः षड्भिः होतृभिस्सग्रहैर्हुनेत् ।
उद्धृत्य 'मेरोरहे' ति श्मशानं पूर्ववन्नयेत् ॥

चित्यां निधाय पत्नी चेत 'सने' त्युपनिपातयेत् ।
स्वर्णेन 'देवस्य' त्वेति हस्तसम्मार्जनं स्मृतम् ॥

सर्वत्र 'आ ओ व' हेति हिरण्यशकलान् न्यसेत् ।
आस्ये 'सुवर्ण' मित्युक्त्वा 'ब्रह्मेन्द्र' मिति नेत्रयोः ॥

कर्णयोः 'शतमि' न्न्विति सुवर्णं कांस्य (?) दक्षिणे ।
घ्राणे वामेऽपि चेन्द्रोरण्य (?) नुवाकस्य शेषतः ॥

आस्यतण्डुलदानादि कुर्यात्पात्रं नियोजयेत् ।
'इमम' ग्नेति सर्वत्र 'अग्निर्यजुर्भि' रिति च क्रमात् ॥

एकमेकैकवाक्येन समाप्यैवादितः पुनः ।
अनाहिताग्नेः 'धेनु' श्चेत्यग्निरन्यैश्च निर्वपेत् ॥

अन्त्यपात्रे तु शेषाणां पात्राणाञ्च समापनम् ।
कृताञ्जल्यादिकं कृत्वा अग्निदानोक्तमन्त्रकान् ॥

उक्त्वा ज्योतिष्मतीञ्चापि तत्तदग्नीन् क्रियादिकम् ।
'अयं घर्म' स्य चान्ते वा 'सुवर्णं घर्म' मेव वा ॥

सहस्रशीर्षा – 'अब्ध्य' इति उपस्थायानुमन्त्रयेत् ।
एवं 'ब्राह्मण ए' केति चित्तेनाज्यं हविर्हुनेत् ॥

'प्रयासा' येति चाज्येन 'हरि' रित्यादिषड्चम् ।
'गन्त' (?) प्रणवं शंसेत् 'आप्यायस्वे' ति कर्षयः (?) ।
उपस्थानं वारुणादि 'इयुष्टे' इयान्विधिः (?) ॥ इति

**इतरेषाम्** । ब्रह्मचारिविधुरविधवादीनाम् ।

स्मृतिः--- 'यतिव्रत्योः कपालाग्निः तुषाग्निर्बालकन्ययोः ।
विधुरं विधवाञ्चैव दहेदुत्तपनाग्निना' ॥ इति

वृद्धवसिष्ठः--- 'तुषाग्निना दहेत्कन्यां व्रीहीणां यवकस्य वा ।
अथवोत्तपनीयेन कपालेनानलेन वा ॥
दर्भेष्वग्निं समारोप्य पुनर्दर्भेषु संस्थितः ।
पुनस्तद्वत्तृतीयेषु वह्निरुत्तपनः स्मृतः ॥
कपालमग्नौ प्रक्षिप्तं नतञ्चैव तुषे क्षिपेत् ।
करीषे वा समुद्भूत स तूक्तः तुषपावकः ॥
यावत्यग्निं (?) कपालेनाग्निसंभवः ।
तावत्कपालसंभूतः पावकः परिकीर्तितः ॥
यस्मिन् देशे स्थितो वह्निं स तान्यत्र मृतो यदि (?) ।
चरुः प्रविकृतः कार्यः पूर्णाहुतिरथापरः ॥
देशान्तरस्थिते वह्नौ दूरदेशस्थितः सुतः ।
अग्निमुत्पाद्य कर्तव्यं प्रेतकार्यं द्विजोत्तमैः ॥
भर्तुः सञ्चयनादर्वाक् भार्याया मरणे सति ।
चिताग्निना तु कर्तव्यं तस्यास्संस्कारकर्म हि ॥
ऊर्ध्वं माता यदि मृता घटिकानन्तरं पिता ।
गार्ह्याग्निना पितुः कुर्यान्मातुरुत्तपनाग्निना ॥
दंपत्योर्मरणे प्राप्ते दशाहाभ्यन्तरे यदि ।
ज्येष्ठेनैव तु कर्तव्यं मातापित्रोस्तु नानुजैः' ॥ इति

वसिष्ठः — 'ज्येष्ठे सन्निहिते चान्ते वर्तमाने क्रियान्तरे ।
पित्रोः पुत्रेण कर्तव्यं द्वितीयेनानुजेन वा' ॥ इति

यमः — 'यजमाने चितारूढे पात्रन्यासे तथा कृते ।
वर्षादिभिर्हते चाग्नौ ततः पृच्छामि याज्ञिकाः ॥

शेषं लब्ध्वार्धदण्डेन निर्मन्थ्यं तत्र कारयेत् ।
शेषालाभे तथा कुर्यात् अग्निशेषस्य वा पुनः ॥
अप्सु प्रास्यति शेषं तत् अग्निर्यस्तु मृदा (?) बुधैः' इति

देवलः अग्निसंस्करणञ्चैव नग्नप्रच्छादनं तथा ।
स्नानं तिलोदकं कुर्यादूर्ध्वमस्तमयाद्रवेः ।
स्नात्वा गृहं विशेद्विप्रो रात्रौ चेदुदयाद्रवेः' ॥ इति

संग्रहे निषेधः प्रेतसंग्रहणञ्चैव नग्नप्रच्छादनं तथा ।
स्नानं तिलोदकं रात्रौ पुनरेवाचरेद्बुधः (?) ॥

इदं वचनं पितृभ्रातृमातादिव्यतिरिक्तविषयम् ।

बृहस्पतिः — 'मातापित्रोर्मृतिप्राप्तौ पुत्रैर्दाहादि कर्म च ।
प्राप्तकाले तु कर्तव्यं तिथ्यादि न तु दोषकृत्' ॥ इति

गार्ग्यः — 'शुक्रादिशुभवाराश्च नन्दा चैव चतुर्दशी ।
उत्तरात्रयरोहिण्यः पूर्णचन्द्रश्च जन्म च ।
एतेष्वपि च कर्तव्यं मातापित्रोर्विशेषतः' ॥ इति

स्मृत्यन्तरे — 'जन्मत्रयं सञ्चयने श्राद्धे च दहने गुरोः ।
नैव दोषावहं प्रोक्तमन्येषामपि सर्वथा ।
प्रत्यक्षमरणे पित्रोर्न पश्येत्तिथिवारभम्' ॥ इति

संवर्तः 'सूतिका या तु भर्त्रा तु यदाऽनुमरणोत्सुका ।
सद्यः शुद्धिमवाप्नोति भर्तुः पापापहारिणी' ॥ इति

'पुत्रस्त्वनुपनीतोऽपि पित्रोस्संस्कारमर्हति' ।
अन्योऽप्युच्चारयन्मन्त्रान् तेन कर्माणि कारयेत् ॥

असंस्कृतेन पत्या च अग्निदानं समन्त्रकम् ।
कर्तव्यमितरत्सर्वं कारयेदन्यथैव तु ॥ इति

कौण्डिन्यः — 'दीक्षितोऽप्येकपुत्रस्तु मातापित्रोर्मृतिर्यदि ।
संस्कृत्य शालामागत्य यज्ञशेषं समाचरेत्' ॥ इति

वृद्धगार्ग्यः 'ज्येष्ठस्य तु क्रतोर्मध्ये मातापित्रोर्मृतिर्यदि ।
दीक्षारूपं निधायात्र संस्कुर्यात्पितरौ हि सः ॥

गतौ यामत्रयादर्वाक् कर्तुर्वै वपनं भवेत् ।
अन्येषान्तु सपिंडानां श्वोभूते वपनक्रिया ॥

पित्रोर्मृताब्दे गर्भाब्दे सदा पर्वणि पर्वणि ।
आहिताग्निर्वपेत्केशान् न वपेदितरस्तयोः ॥

बहूनामेककार्याणामेकस्यापि यदुच्यते ।
सर्वेषां तद्भवेत्कार्यमेककार्यहिता हि ते' ॥ इति

देवलः — 'संस्कार्यश्च पिता पुत्रैः भ्रातरश्च कनीयसा ।
मातुलस्याप्यपुत्रस्य स्वहृया अवचा मताः (?) ॥

दहनादि सपिंडान्तं ब्रह्मचारी करोति चेत् ।
अन्यत्र मातापित्रोः स्यादुपनीय पुनः शुचिः ॥

आचार्यपितुपाध्यायान् निर्हृत्यापि व्रती व्रती ।
संकटान्नं न चाश्नीयात् न च तैः सह संवसेत् ॥

मातामहं मातुलञ्च तत्पत्न्यौ चानपत्यके ।
व्रती संस्कुरुते यस्तु व्रतलोपं न तस्य हि' ॥ इति

आश्वमेधिके: — 'देवालये सभामध्ये श्मशाने राजसन्निधौ ।
समन्त्रोच्चारणं कुर्याच्छूद्रदोषो न विद्यते ॥ इति

'मृताहे केशवपनं दशाहे शेषवापनम् ।
सन्निधाने सपिंडानां वपनं स्याद् गुरोर्मृतौ ॥

महागुरूणां सर्वत्र दाहकस्यागुरावपि ।
अतिक्रान्ते दशाहे तु शेषमाहः (?) प्रशस्यते ॥

श्राद्धे च शाव (जाप)क्षौरे च शुभाः काला अशोभनाः ।
आधाने यज्ञदीक्षायां मातापित्रोर्गुरोर्मृतौ ॥

गर्भवान् वपनं कुर्यात् नान्यत्रेति व्यवस्थितिः ।
अन्तर्वत्नापि कर्तव्यं पित्रोर्मरण एव तु ।
नान्येषां वपनं कुर्यात ब्रह्महत्यासमं भवेत ' ॥ इति

लौगाक्षिः 'पत्नी पुत्रः स्नुषा पौत्रः भ्रातृतत्पुत्रका अपि ।
पितरौ च यदेकस्मिन म्रियेरन्वासरे तथा ।
आद्यमेकादशे कुर्यात् त्रैपक्षे तु सपिंडताम ॥ इति

वृद्धमनुः — 'भार्यापुत्रकनिष्ठानां शिष्याणाञ्च यवीयसाम् ।
संस्कर्तुर्वपनं नैव यदि कुर्यात कुलक्षयः ॥ इति

कात्यायनः — 'मृतावपि कनिष्ठानां वपनं न कदाचन ।
मृतावपि कनिष्ठानां वपनं न विधीयते ' ॥ इति

हारीतः — 'दंपत्योस्सह मृत्यौ तु सह दाहादिकाः क्रियाः ।
प्राग्दाहादन्यनाशेऽपि तदूर्ध्वन्तु पृथक्क्रिया ॥

दंपत्योस्सह संस्कारे मृतावनुमृतावपि ।
उदकादि सपिंडान्तं प्रेतकार्याणि यान्यपि ॥
कुर्यात्समानतन्त्रेण सांवत्सरिकमेव च ' ॥ इति

हेमाद्रौ — 'अथानुमरणे पत्नी स्नात्वा भर्त्रा सहैव तु ।
पथस्तुरीयमासाद्य सिग्वातैरुपवीज्य च ॥

नमस्कृत्वा चितारूढं भर्तारन्तु प्रसन्नतः ।
प्रदक्षिणं परीत्याथ भर्तुर्दक्षिणमाविशेत् ॥

'इयं नारी ' ति मन्त्रेण शाययेन्मातरं सुतः ।
पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ॥

प्रदक्षिणमुपस्थानं चरुकार्यं चितिस्तथा ।
सञ्चयस्तर्पणं गर्तः सपिंडीकरणं सह ॥

पित्रा सहैव मात्रा च सपिंडश्च (?) सुतेन तु ।
ज्येष्ठेन सह कर्तव्यं निमित्तार्थं पृथक् भवेत् ।

'सह व्रते तयोस्सहैव पितृमेध' ॥ इति सूत्रम्

बोधायनः-- '[म्रि]यमाणस्य चेद्भार्या सूतिकर्तुमर्ता तु वा ।
दुर्गां मनस्वतीं हुत्वा ततस्तन्तुमतीमृचम् ॥

'उद्बुध्यस्व' 'त्रयस्त्रिंशत' व्याहृत्या च समस्तया ।
व्याहृत्या त्रिरनाज्ञातं महाव्याहृतिभिस्तथा ।
चतुर्गृहीतं .... .... ... ... .... ॥

यदा आहिताग्निरप्सु म्रियेत तस्य प्रायश्चित्तम् । 'इमं मे वरुण 'तत्त्वाया' मीति द्वे चतुर्गृहीते जुहुयात् । विषहतो म्रियेत 'न मोक्षस्तु सर्पेभ्य' इति निम्रुभिश्चतुर्गृहीतेनाज्यं जुहुयात् । पशुभ्यो म्रियेत 'अगावो अगन्निन्द्रो यज्वन' इति द्वे चतुर्गृहीते जुहुयात् । अशनिहतो म्रियेत 'मूर्धानं दिव' इति । दंष्ट्रिभ्यो म्रियेत 'दंष्ट्राभ्यां मलिम्लू' निति द्वे चतुर्गृहीते जुहुयात्

श्वसूकरसृगालाद्यैः ग्रामसूकरकुक्कुटैः ।
शवास्थिभस्मदेहानां स्पर्शनञ्चेत् प्रमादतः ।
'गव्यैः प्रक्षाल्य कृच्छ्राणां त्रितयञ्च समाचरेत्' ॥ इति

शंखः -- 'अपुत्रायाः पतिर्दद्यात् सपुत्राया न तु क्वचित् ।
भार्या वा दंपती दद्यात् भर्तृभार्ये परस्परम् ॥

सकृन्म्रियन्ते बहवः कर्ता चैव तथापि च ।
मरणस्य क्रमेणैवमुदकादि समाचरेत ॥

मरणं क्रमशो दृष्ट्वा मरणानुक्रमेण तु ।
समानमिदमुद्दिष्टमन्येषामग्रजं विना ॥

अन्येषामग्रजस्यापि समवायेऽग्रजः प्रभुः ।
अग्रजस्यापि पित्रोश्च संघाते पितरौ प्रभू ॥

एवं पित्रोः क्रियामध्ये परेषां पैतृकोपरि ।
पित्र्युपरते पित्रोः मातृश्राद्धं निवर्तयेत ॥

मातर्यपि च वृत्तायां पितृश्राद्धादनं समः ।
एकगतं जलं दद्यात् श्राद्धश्चैकदिने भवेत् ॥

यस्य केशादिशलाजाता दशमेऽहन्यवापिताः ।
आशौचं तस्य केशेषु लीयते नात्र संशयः ॥

जले चतुष्पथे वापि महावृक्षस्य सन्निधौ ।
केशश्मश्र्वादिवपनं न कुर्यादनुभाविनः ॥

(सहैव च) मृतौ पित्रोः पितृमेधक्रिया सह ।
उदकं पिंडदानञ्च श्राद्धं कुर्यात् पृथक् पृथक् ।
सपिंडीकरणञ्चैव सहैव पृथगेव वा ' ॥ इति

संग्रहे: — 'मातुर्दशाहमध्ये तु पिता यस्य प्रमीयते ।
पैतृकन्तु यथाकालं पितुस्सर्वं समापयेत ॥

ततो मातुस्त्रिपक्षादौ शेषकर्म समाचरेत ।
मातर्यग्रे प्रमीतायामशुद्धो म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यात् मातुः कुर्यात्तु पक्षिणीम् ॥

पित्राशौचस्य मध्ये तु मातुर्दशदिनं पिंडानि दत्वा पितृशिलया सहोद्वासनं यावत्पित्राशौचं दद्याद्वा इति केचित् । उभयत्र सह श्राद्धम् ।

ऋष्यशृंगः — 'पत्न्याः पुत्रस्य तत्पुत्रतद्भ्रात्रोस्तनयस्य च ।
स्नुषास्वस्त्रोश्च पित्रोश्च संघातमरणं यदि ।
अर्वागब्दान्मातृपितृपूर्वं कर्म समाचरेत् ' ॥ इति

देवलः 'पित्रोरुपरतौ पुत्रः श्राद्धं कुर्याद्द्वयोरपि ।
अनुवृत्तौ तु नान्येषां संघातमरणेऽपि च ' ॥ इति

लौगाक्षिः — 'पत्नीपुत्रस्नुषापौत्रभ्रातृतत्पुत्रका अपि ।
पितरौ च यदेकस्मिन् म्रियेरन्वासरे तथा ।
आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिंडताम्' ॥ इति

देवलः — 'एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिंडनं त्रिपक्षे स्यादनुयानमृतिं विना ॥

आशौचे तु व्यतिक्रान्ते अज्ञातक्रमयोस्तु वा ।
पित्रोस्सह क्रियैव स्यात् ऊहो द्विवचनेन तु ॥

अनुयानमृतौ पित्रोः एकशय्याचितिस्तथा ।
प्रत्येकमञ्जलीहेतोः(?) नग्नप्रच्छादनादिकम् ॥

एकदैवाग्निदानं स्यात् एकप्राणि तिलाञ्जलिः ।
अस्थिसञ्चयनन्त्वेकं नवश्राद्धं पृथक् पृथक् ॥

वृषोत्सर्जनभेदश्च मासिकानां पृथक् क्रिया ।
सपिंडीकरणन्त्वेकं सुतस्सवै समाचरेत् ॥

अन्वारोहे तु भर्त्रैव नान्यैरस्थिसंपिंडत.(?) ।
सपिंडीकरणादूर्ध्वं पितामह्यादिभिस्सह' ॥ इति

'पतिव्रता अन्यदिनेऽनुगच्छेद्या
स्त्री पतिं चित्यधिरोहणेन ।
दशाहतो भर्तुरघस्य शुद्ध्येत्
श्राद्धद्वयं स्यात् पृथगेककाले' ॥ इति

अन्यत्र 'पूर्वेद्युर्मृतभर्तारमनुयातुं यदीच्छति ।
भार्या चान्द्रायणं कुर्यात् न तत्पर्युषितं भवेत् ॥

चितौ भर्त्रानुशयनमन्वारोहणमब्रुवन् ।
केचित् प्रज्वलिते वह्नौ प्रवेशमपरे जगुः ॥

अग्निप्रवेशनादूर्ध्वं पैतृमेधिकमन्त्रकान् ।
कर्म स्मरन् पठेत्कर्ता तेन सा संस्कृता भवेत् ॥

रजस्वला चेत् स्नात्वाऽन्यद्वस्त्रं धृत्वाऽग्निमाविशेत ।
गर्भिणी नानुयानन्या बलादपि कदाचन ॥

न विप्रा पतिदेहेन विनाग्नौ साग्निके विशेत ।
भर्तुः संस्कारमेवास्याः संस्कारमिति केचन ॥

स्त्रीपिंडं भर्तृपिंडेन संयोज्यं पुनरेव तत् ।
पित्रादिपिंडैः संयोज्यमिति शास्त्रस्य निश्चयः ॥

पितामहादिभिर्वापि पुत्रवत्याः परं जगुः ।
रजस्वलाऽपि भर्तारं नारी याऽनुमुमूर्षते ।
स्नात्वाऽन्यद्वस्त्रसंयुक्ता चितिं समधिरोहयेत्' ॥ इति

भृगः 'या समारोहणे युक्ता भर्त्रा चित्यां पतिव्रता ।
सा मृतेऽहनि संप्राप्ते पृथक् पिंडं समर्हति ॥ इति

उशनाः 'एकचित्यां समारूढदंपत्योर्मरणं यदि ।
पृथक् श्राद्धं तयोः कुर्यात् ऊनाद्याश्च पृथक् पृथक् ॥

मृतौ भर्तरि या नारी आशौचान्ते रजस्वला ।
श्राद्धशेषं प्रकुर्वीत स्नात्वा सूत्रं विमुञ्चति ॥

अन्वेति या तु भर्तारं सुवासिन्यवसायतः (?) ।
गन्धपुष्पाद्यलंकारः तांबूलादि न दुष्यति ॥

अन्तर्दशाहे प्रेतस्य पुनः प्रेतस्य संस्कृतौ ।
तस्माच्छुद्धिः पूर्वशेषादेकोद्दिष्टं यथोदितम्' ॥ इति

शंखः 'आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यः कर्ता स दशाहं समापयेत्' ॥

इतीदं पुत्राभावविषयम् ।

गृह्यः — 'लोकाग्नावितरोद्वाहं कृत्वा संसृष्टवह्निमान् ।
एकभार्यामृतौ वह्नीन् विभज्यात्र पृथक् पृथक् ॥

'अग्नये विविचये स्वाहा' हुत्वा भागौ विनिर्दिशेत् ।
पूर्वस्या दक्षिणं भागमितरस्यास्तथोत्तरम् ॥

या तु वश्यमृता भार्या तद्भागं विनियोजयेत् ।
पूर्वौपासनवह्नौ तु यस्योद्वाहः परः कृतः ॥

तस्यैकपत्नीविगमे कृत्स्नाग्निर्विनियुज्यते ।
ततस्तस्यां क्रियायान्तु वृत्तायां वह्निसंगतिः ॥

'देशान्तरस्थौ पितरौ मृतौ चे-
दन्योऽपि कुर्यादखिलञ्च पैतृकम् ।
दाहं विना तानि पुनश्च सर्वे
ज्येष्ठोऽपि कुर्यादनुजैः सपिंडनम्' ॥

इदं पुत्रादिव्यतिरिक्तकृत्यम् ।

गार्ग्यः — 'कृतक्रियेऽपि पितरि दशाहं सूतकं भवेत् ।
मुख्यकर्ता विदेशस्थः काले काले श्रुतो यदि ॥

तिलवारि प्रकुर्वीत पिंडदानं विवर्जयेत् ।
अन्यो यदि दहेत्प्रेतं पुत्रोच्छिष्टाच्च सोदरात् ॥

दशमं वा हरेदंशं पञ्चमं सर्वमेव वा ।
बहुरिक्थस्य दशममल्परिक्थस्य पञ्चमम् ॥

अपुत्रपितृभार्यस्य सर्वमेव हरेन्नरः ।
अनिच्छन् दक्षिणां पूर्वमग्निं प्रेते निधाय च ॥

य पश्चादिच्छते रिक्थं गतं नेयं स वंचितः (?) ।
मुख्यकर्ता विदेशस्थो मातापित्रोर्मृतौ यदि ॥

विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ।
पूर्ववत् पितृमेधस्स्यात् विशेषस्तु प्रवक्ष्यते ॥

'आयुषः प्राण' ब्रह्म भृगुः दक्षिणे श्रवणे जपत् ।
'संज्ञान' मिति चान्यस्मिन् ततः स्नानादिकं चरेत् ॥

'परे युवांम' मित्यन्ते वैश्वदेवस्य पूर्वतः ।
एतैश्च 'पृथिवी चाग्निः' 'सूर्यं ते च महाहविः ॥

'वाग्घोते' त्यादिभिः षड्भिः होतृभिस्सग्रहैर्हुनेत् ।
उद्धृत्य 'मेरोरंहे' ति श्मशानं पूर्ववन्नयेत् ॥

चित्यां निधाय पत्नी चेत 'सने' त्युपनिपातयेत् ।
स्वर्णेन 'देवस्य' त्वेति हस्तसम्मार्जनं स्मृतम् ॥

सर्वत्र 'आ ओ व' हेति हिरण्यशकलान् न्यसेत् ।
आस्ये 'सुवर्ण' मित्युक्त्वा 'ब्रह्मेन्द्र' मिति नेत्रयोः ॥

कर्णयोः 'शतमि' न्विति सुवर्णं कांस्य (?) दक्षिणे ।
घ्राणे वामेऽपि चेन्द्रोरप्य (?) नुवाकस्य शेषतः ॥

आस्यतण्डुलदानादि कुर्यात्पात्रं नियोजयेत् ।
'इमम' ग्नेति सर्वत्र 'अग्निर्यजुर्भि' रिति च क्रमात् ॥

एकमेकैकवाक्येन समाप्यैवादितः पुनः ।
अनाहिताग्नेः 'धेनु' श्चेत्यग्निरन्यैश्च निर्वपेत् ॥

अन्त्यपात्रे तु शेषाणां पात्राणाञ्च समापनम् ।
कृताञ्जल्यादिकं कृत्वा अग्निदानोक्तमन्त्रकान् ॥

उक्त्वा ज्योतिष्मतीञ्चापि तत्तदग्नीन् क्रियादिकम् ।
'अयं घर्म' स्य चान्ते वा 'सुवर्णं घर्म' मेव वा ॥

'सहस्रशीर्षा – 'अग्न्य' इति उपस्थायानुमन्त्रयेत् ।
एवं 'ब्राह्मण ए' केति चित्तेनाज्यं हविर्हुनेत् ॥

मृतं बालश्च विप्राश्चानाथं विप्रमनुव्रजन् ।
सद्यः स्नानेन शुद्धिः स्यात् .... ... ' ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने पञ्चमः खण्डः ।

## अथ षष्ठः खण्डः

सो (म उ) पवीती 'मन्त्वा सिञ्चामि' इति शान्तिं जप्त्वा उपतिष्ठेत। 'उद्वयं तमस' इत्यादित्यम्। अतोऽप्रदक्षिणमनीक्षमाणा ग्रामधर्मेण अधोमुखा निवर्तेरन् ॥ १ ॥

सोपवीती इत्यादि। 'उद्वयं तमसः, 'तरणिर्विश्वदर्शत' इत्यादित्योपस्थानम्।

श्मशानान्निर्गच्छतो विजने दर्भरज्जुं प्रसार्य एको 'मा वतर' तेनि वारयेत् ॥ २ ॥

'न पुनरवतरिष्याम' 'इत्यधस्तात् तुल्याः प्रयान्ति ॥ ३ ॥

विसृज्याऽन्येऽनुयाता गच्छन्ति ॥ ४ ॥

तथैव विजने अपः प्रपद्यमानान् पूर्वोक्तां शाखां प्रसार्य स्यालो वा सपिंडो वा राजपुत्रो वा वारयेत् ॥ ५ ॥

प्रतिमन्त्रेण तोयधिं दक्षिणामुखाः (सर्वे) प्रकीर्णकेशाः प्रपद्येरन्। अप्सु मङ्क्त्विमज्ज्योत्तीर्य आचम्य दक्षिणामुखाः प्राचीनावीतिनो मुक्तशिखास्सर्वे सनाभयो दक्षिणाग्रेषु दर्भेषु उदुंबरपर्णेषु तिलाक्षतेषु त्रिरुदकाञ्जलिं तिलमिश्रं प्रेतस्य गोत्रनामपूर्वमास्रावयेत् (?) ॥ ६ ॥

'असावेतत्त उदक' मिति सव्योत्तराभ्यां पाणिभ्यां ददते ॥ ७ ॥

याज्ञवल्क्यः— 'कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान्।
स्नातानपवदेयुस्तान् इतिहासैः पुरातनैः ॥

मानुष्ये कदलीस्तंभनिस्सारे सारमार्गणम्।
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः
कर्मभिः स्वशरीरोत्थैः तत्र का परिदेवना ॥'

गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति' ॥ इति

गृह्यः — 'सव्यं जान्वाच्य नदीतीरे श्वभ्रं कृत्वा जलं ददेत्' इति । अनन्तरं 'असौ पुण्यलोकान् गच्छत्वित्यनुगृह्यतां' इति संप्रार्थ्य निश्शोकः स्नात्वा कर्म समारभेत् ।

'श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुंक्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्या यथोदिताः' ॥ इति

हारीतः — 'कुर्वीत सर्वकर्माणि ब्राह्मणानामनुज्ञया ।
ब्राह्मणैरभ्यनुज्ञानात् दोषा नश्यन्त्यसंशयः' ॥ इति

स्मृत्यन्तरे — 'दिवैव प्रेतकार्याणि ह्यपराह्णेऽस्थिसञ्चयः ।
रात्रौ दग्ध्वा तु पिंडान्तं कुर्यात् प्रेतोदकक्रियाम्' ॥ इति

श्रीधरः — 'शुभेक्षणं तदा वर्ज्यं सर्वे व्ययविनाशदाः ।
रात्रौ न कुर्यात्प्रेतस्य संध्ययोरुभयोः क्रियाः ॥

तीर्थस्नाने श्वभ्रं कृत्वा तत्र जलाञ्जलिं दद्यात् ।

गार्ग्यः — 'श्रियो यशो विपत्सौख्यं रोगो नाशश्च संपदः ।
अर्कवारादिवाराणां पाषाणस्थापने फलम्' ॥

श्वभ्रे पाषाणं स्थाप्य प्रेतमावाह्य द्विरुदकाञ्जलिं दद्यात् ॥

असौ इत्यत्र संबुद्ध्या नामग्रहणम् ।

याज्ञवल्क्यः — 'न ब्रह्मचारिणः कुर्युरुदकं पिंडमेव च' ॥ इति

मनुः — 'आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्' ॥ इति

अन्यत्र — 'शय्यस्पृष्टो यथा विप्रः विण्मूलं कुरुते यदि ।
श्रोत्राचमनमित्युक्तं स्नानादाचमनं वरम्' ॥ इति

बृहस्पतिः — 'भानुवारे भृगोर्वारे मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात् स मातृपितृघातुकः' ॥ इति

रत्नावल्याम् — 'तिथिवारसमायोगे निषेधो य उदाहृतः ।
ऋषिभिस्तर्पणे नित्ये निमित्ते न तु बाधते' ॥ इति

संवर्तः — 'पूर्वाह्णे चापराह्णे च तोयमाशौचगामिभिः ।
संस्कर्त्रैव बलिं दद्यात् स हि प्रेतस्य बान्धवः' ॥ इति

स्मृत्यन्तरे — 'नवभिर्दिवसैर्दद्यात् नवपिंडान् समाहितः ।
दशमं पिंडमुत्सृज्य रात्रिशेषाच्छुचिर्भवेत्' ॥

इतीदमापस्तंबविषयम् ।

'सायं प्रातर्द्विजातीनां पिंडानप्युदकं ततः ।
विंशतिं पिंडमुत्सृज्य ब्राह्मणः शुचितामियात्' ॥ इति

विष्णुः— 'तिलोदकांस्तथा पिंडान् नवश्राद्धानि यानि च ।
रात्रौ न कुर्यात्सन्ध्यायां यदि कुर्यान्निरर्थकम्' ॥ इति

पारस्करः — 'गृहीत्वा प्रेतपाषाणं गच्छेद्देशविपर्यये ।
अप्यकृत्यापि कुर्वीत न त्वेतदवशेषयेत्' ॥ इति

ऋष्यशृंगः — 'प्रथमेऽहनि यः पिंडस्तेन मूर्धा प्रजायते ।
चक्षुश्श्रोत्रे नासिके च द्वितीयेऽहनि जायते ॥

भुजौ वक्षस्तथा ग्रीवा तृतीयेऽहनि जायते ।
नाभिर्जानुर्गुदं लिंगं चतुर्थेऽहनि जायते ॥

ऊरू तु पञ्चमे ज्ञेयौ षष्ठे मर्माणि निर्दिशेत् ।
सप्तमे तु सिरास्सर्वा जायन्ते नाऽत्र संशयः ॥

अष्टमे तु ततः पिंडे सर्वरोमाण्यनन्तरम् ।
नवमे वीर्यसंपत्तिर्दशमे क्षुत्परिक्षयः ।
अशौचान्ते ततः सम्यक् पिंडदानं समाप्यते' ॥ इति

गृहीत्वा लगुडं यत्नात् सर्वदुष्टनिवारणात् ।
'अद्यप्रभृत्यादशाहं प्रेतरूपः शिले ! भव ॥

पिंडोदकाञ्जलींश्चैव दास्यामस्तव सन्निधौ' ।
इत्युक्त्वा प्रेतमावाह्य कृत्वाऽश्मनि पदं शनै' रिति ॥

यत्तत्र स्त्रिय इत्यादि । गृहे यत्कर्तव्यं शुद्ध्यादिकं तत् स्त्रियः कुर्वन्ति । यद्वा तत्काले यत्कर्तव्यं तत्कृत्यज्ञाः स्त्रियो यदाहुः तत् स्वयमेव कुर्युः ।

**गोमयेन गृहं शोधयित्वोपलिप्य उल्कया त्रिर्दग्ध्वा पुष्पतिलाक्षतैः 'स्वस्त्यस्तु वो गृहाणां' इति यस्मिन् देशे प्राणोत्क्रान्तिः तत्र च विकीर्य द्वारस्य निर्गमनदक्षिणभागे समनुलिप्य पुष्पाद्यवकीर्य अश्म वह्नि हिरण्य गोमयोदुंबरपत्र तिलाक्षतानि निधाय धूपदीपादिना उद्गतांस्तावत्प्रतिगृह्णीयुः ॥ ९ ॥**

प्रतिगृह्णीयुः । निंबपत्रौषधिद्रव्येण सह तद्गृहवृद्धाः स्त्रियः प्रतिगृह्णीयुः । 'तव कदाचिदप्येवं मा भवतु' इति प्रतिवदन्त्यः प्रतिगृह्णीयुः ।

याज्ञवल्क्यः – 'इति संश्रुत्य गच्छेयुः गृहं बालपुरस्सराः ।
विदश्य निंबपत्राणि नियता द्वारवेश्मनः' ॥ इति

**यस्मिन् देशे प्राणोत्क्रान्तिः तत्र—**

मत्स्यपुराणे:— 'क्षीरोदकाभ्यां संपूर्णं मृत्पात्रे वियति न्यसेत् ।
रक्ते तत्रैव तद्रक्षेत् आप्रदानाद्यथा स्मृतिः ॥

सर्वदाहोपशान्त्यर्थमध्वश्रमविनाशनम् ।
तस्मादाधेयमाकाशे दशरात्रं पयस्सदा' ॥ इति

गृह्यः — 'द्वारस्य दक्षिणे कृत्वा उदग्द्वारं प्रपां ततः ।
देशनिम्नविस्तारं तत्र गर्तं विधाय च ।
तद्दक्षिणे प्रेतवेदिं तत्र प्रेत उदङ्मुखः' ॥ इति

तदश्म सपर्वं वस्त्रतोयेनाप्लुत्य धान्याक्षतं सतिलमालभ्य ततो वह्निं सुवर्णं गोमयञ्च स्पृष्ट्वा तत्र स्थित्वा अनासन्नान् विसृज्य वृद्धाग्रं गृहं प्रविश्य लोकयात्रामासीरन् ॥ १० ॥

तदश्मेत्यादि । तदश्म यथोक्तं प्रपावेद्यां स्थापयित्वा तत्र प्रेतमावाह्य तिलैरभ्यर्च्य 'गोत्र शर्मन् प्रेत एतत्ते वासोदकं ददा'मीति त्रिर्दत्वा ।

श्रीधरः — 'वामपार्श्वे गृहद्वारे शिलास्तिस्रो निधाय च ।
तासु वस्त्राणि संपीड्य सायं प्रातर्बलिं ददेत्' ॥

इतीदं बौधायनः

'द्वारस्य दक्षिणे पार्श्वे बहिः कुर्याद्यथावटम् ।
एकमश्मानमादध्यात् इष्टकां वाऽग्रजन्मनाम्' ॥ इति

अंगिराः — 'बहिः कुंडे प्रदानं स्यात् कर्तुः स्नात्वा विधानतः ।
गन्धमाल्योदकेनार्च्य दद्याद्भिर्प्ववाङ्मुखः' ॥ इति

विज्ञानेश्वरः — 'नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
सवस्त्रं शोधयित्वाऽदौ ततः स्नानं समाचरेत् ॥

सचेलन्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रो दद्याद्दशाञ्जलीन् ॥
ततः स्नानं पुनः कुर्याच्छावाशौचं प्रकारयेत्' ॥ इति

'अप्सु सकृन्निमज्ज्य त्रिरुदकाञ्जलिं दद्या' दित्याश्वलायनः ।

स्मृत्यन्तरे: — 'श्राद्धमेकोत्तरं वृद्ध्या कर्तव्यन्तु दिनेदिने ।
आवसनाद्दलीनान्तु द्विगुणं प्रत्यहं परे ॥

एकोत्तरं यथाशक्ति भुक्तिं दद्याद्दिनेदिने
दशमांशं शतं वापि सहस्रं वा सहेमकम्
देयं विप्रस्य तत्पुत्रैः यथालाभं यथाविधि' ॥ इति

स्मृत्यन्तरे: — 'पूर्वाह्णे चापराह्णे च तोयमाशौचगामिनाम् ।
संस्कर्तैव बलिः कार्यो न तु रात्रौ कदाचन' ॥ इति

गृह्यः — 'सायं प्रातः प्रदेयार्थ (?) मेकदैवापराह्णके ।
एकोत्तरप्रवृद्ध्या वा आदशाहं बलिस्तथा ॥

तदाद्यैकाञ्जलिस्त्वेकस्त्रयो वाऽतो विवर्धते ।
तत्राद्ये पञ्चपञ्चाशत् तृतीये पञ्चसप्ततिः ॥

केचिच्छताञ्जलीनाहुः तत्रैकाहविवर्धनात् ।
दश वा पञ्चपञ्चाशत् पञ्चसप्ततिरेव वा ॥

शतं वाऽञ्जलयस्तेषु पक्षेष्विच्छा नियामिका ।
न वृद्धिप्रहवार्ता चेत् दद्यात्पिंडांस्तथा दश' ॥ इति

व्यासः — 'एकैकोत्तरवृद्ध्या तु प्रत्यहं द्विजभोजनम् ।
वर्णानामानुपूर्व्येण वर्णयन्त्याप्रदानतः ।
जलं प्रेतस्य मध्याह्ने दद्याद्यावद्विशुद्ध्यते' ॥ इति

अखण्डादर्शे — 'ततो गृहं समावृत्य चरुं कुर्यात्स्वयं ततः ।
द्भिः प्रक्षाल्य तु तद्द्रव्यं कर्तव्यं श्रपणं ततः ॥

आदाय दक्षिणाग्रांस्तु दर्भानास्तीर्य विन्यसेत् ।
कुक्कुटांडप्रमाणन्तु पिंडमित्यभिधीयते' ॥ इति

पराशरः · 'पिंडं प्रदीयते साग्रं दर्भेषु च गुलेन वा ।
पयसा फलमूलैश्च मिश्रितं दक्षिणामुखः ॥

प्रेताय गोत्रनामभ्यां प्रदद्यान्मुष्टिसम्मितम् ।
तूष्णीं प्रसेकं पुष्पञ्च धूपं दीपं तथैव च ।
प्रेतपिंडं बहिर्दद्याद्दर्भमन्त्रविवर्जितम्' ॥ इति

श्रीधरः — 'विप्रस्य दशपिंडाः स्युः क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः' ॥ इति

बृहस्पतिः — 'भानुवारे भृगोर्वारे मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात् स मातृपितृघातुकः' ॥ इति

रत्नावल्याम् — 'तिथिवारसमायोगे निषेधो य उदाहृतः ।
ऋषिभिस्तर्पणे नित्ये निमित्ते न तु बाधते' ॥ इति

संवर्तः — 'पूर्वाह्णे चापराह्णे च तोयमाशौचगामिभिः ।
संस्कर्तैव बलिं दद्यात् स हि प्रेतस्य बान्धवः' ॥ इति

स्मृत्यन्तरे — 'नवभिर्दिवसैर्दद्यात् नवपिंडान् समाहितः ।
दशमं पिंडमुत्सृज्य रात्रिशेषाच्छुचिर्भवेत्' ॥

इतीदमापस्तंबविषयम् ।

'सायं प्रातर्द्विजातीनां पिंडानप्युदकं ततः ।
विंशतिं पिंडमुत्सृज्य ब्राह्मणः शुचितामियात्' ॥ इति

विष्णुः— 'तिलोदकांस्तथा पिंडान् नवश्राद्धानि यानि च ।
रात्रौ न कुर्यात्सन्ध्यायां यदि कुर्यान्निरर्थकम्' ॥ इति

पारस्करः — 'गृहीत्वा प्रेतपाषाणं गच्छेद्देशविपर्यये ।
अपकृष्यापि कुर्वीत न त्वेतदवशेषयेत्' ॥ इति

ऋश्यशृंगः — 'प्रथमेऽहनि यः पिंडस्तेन मूर्धा प्रजायते ।
चक्षुश्श्रोत्रे नासिके च द्वितीयेऽहनि जायते ॥

भुजौ वक्षस्तथा ग्रीवा तृतीयेऽहनि जायते ।
नाभिर्जानुर्गुदं लिंगं चतुर्थेऽहनि जायते ॥

ऊरू तु पञ्चमे ज्ञेयौ षष्ठे मर्माणि निर्दिशेत् ।
सप्तमे तु सिरास्सर्वा जायन्ते नाऽत्र संशयः ॥

अष्टमे तु ततः पिंडे सर्वरोमाण्यनन्तरम् ।
नवमे वीर्यसंपत्तिर्दशमे क्षुत्परिक्षयः ।
अशौचान्ते ततः सम्यक् पिंडदानं समाप्यते' ॥ इति

'पञ्चहीनैरशीत्यंतैः भोजनैस्तिलतर्पणैः ।
पिंडैर्विंशतिभिश्चैव भोक्तृ रूपं प्रकल्पयेत् ॥

उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।
पूर्वदत्ताञ्जलीन् पिंडान् पुनरित्याह गौतमः ॥

आद्यदेशादन्यदेशे प्रेतपिंडं क्षिपेद्यदि ।
पूर्वदत्ताञ्जलीन् पिंडान् पुनरित्याह शाकलः' ॥ इति

अगस्त्यः 'राजकार्यनियुक्तानां वैश्यानाञ्चातिपातिषु ।
पाषाणमुत्तरेन्मध्ये बलिकर्म समापयेत्' ॥ इति

'शिलाविनाशे सति वततोऽऽन्या-
'मायातु' मन्त्रेण निधाय कुंडे ।
'यमाय सोमं सुनुते' ति मन्त्रा-
दाज्याहुतीर्लौकिक एव वह्नौ' ॥ इति

'शिलान्तरे स्थापिते तु दृष्टा नष्टा शिला यदि ।
'यमे इवे' ति मन्त्रेण ताञ्च न्यस्याथ तर्पयेत् ॥

चेत् चण्डालादिभिः स्पृष्टः पिंडो यद्युपहन्यते ।
प्राजापत्यत्रयं कृत्वा पुनः पिंडं समाचरेत ॥

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ।
नवमे एकादशे चैव षण्णवश्राद्धमुच्यते ॥

नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥ इति

देवलः — 'तृतीये पञ्चमे वाऽथ सप्तमे नवमे तथा ।
अहन्येकादशे चैव नवश्राद्धानि पञ्च वै' ॥ इति

गार्ग्यः — 'नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु
यदि कुर्यान्नवश्राद्धं कुलक्षयकरं भवेत् ॥

न त्रिजन्मसु नन्दायां चतुर्दश्याञ्च वह्निभे ।
यदि कुर्यान्नवश्राद्धं कर्ता यमपुरं व्रजेत्' ॥ इति

विधिरत्ने 'सप्तविंशतिभं चैव चतुर्विंशतिभं तथा ।
कर्तुश्च पुत्रदाराणां त्रिजन्मर्क्षादि वर्जयेत्' ॥ इति

गार्ग्यः — 'सप्तविंशं चतुर्विंशमृक्षं दारविनाशनम् ।
पौष्णमादित्यमैन्द्राग्नं रोहिणी तिस्र उत्तराः ॥

आवहे पुरदूरेण (?) कर्तुर्मरणमत्र वै ।
गुरुशुक्रेन्दुसौम्यानां वारवर्गोदयं विना ॥

मन्दार्ककुजवाराणां वारवर्गोदयाः शुभाः ।
पाषाणस्थापने श्रेष्ठा मन्दभौमार्कवासराः ॥
उत्थापनेन (?) क्रियास्ते मातापित्रोर्गुरोश्शुभाः' ॥ इति

एवं नवश्राद्धपर्यन्तं कृत्वा । धान्याक्षतमित्यादि ।

याज्ञवल्क्यः — 'विदश्य निंबपत्राणि नियता द्वारि वेश्मनः ।
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् ॥
प्रविशेयुस्समालभ्य कृत्वाऽश्मनि पदं शनैः' ॥ इति

**तत्र स्थित्वा** — द्वारे स्थित्वा । **अनासन्नान्** — ज्ञातिव्यतिरिक्तान् । **लोकयात्रां** — लोकप्रवृत्तिम् । यथा

'जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसी' त्यादि विधया ॥

**आसीरन्** — प्राप्नुयुः (?) । यद्वा - लोकगतिम् ।

**तदेवमहोरात्रमुपोष्य प्रातः पूर्ववत्पथोपस्थाय चितास्थीन्युपसंहृत्य पयसा आज्येन प्रक्षाल्य आकृतिं कृत्वा पुष्पादिभिरभ्यर्च्य अन्नापूपाद्यैः तूर्ष्णीं निवेद्य एतेन विधिना आकृतिं दहेत् ॥ ११ ॥**

तदेवमित्यादि । प्रथमेऽहनि कर्तव्यस्याद्यमासिकस्य एकादशेऽहनि विधीयमानत्वात् **तदेवमहोरात्रमुपोष्ये**त्युपवासमात्रं विधीयते । **पूर्ववत्पथा** - पूर्वं येन पथा श्मशानं गताः तेनैव पथा श्मशानं **प्रत्युपस्थाय** – गत्वा । 'पुनर्दहनकर्म करिष्यामी' ति संकल्प्य । **एतेन विधिना** – एकर्चया । **आकृतिं दहेत्** ।

**गृह्यः** —'अस्मात्त्व' मिति मन्त्रोऽयं पुनर्दहनकर्मणि' इति । मन्त्रान्तरेण वा इति कैश्चिद्व्याख्यातम् ।

**यस्मात्कुलस्य मांगल्यमुत्तरा च गतिर्भवति ॥ १२ ॥**

'अमन्त्रपूर्वदग्धानामंगवैकल्यशोषणम् ।
चंडालादिहतानाञ्च पुनर्दहनमिष्यते' ॥ इति

**तदह्नि तं चिन्तयित्वा सतंडुलं वस्त्रं कांस्यं पानीयञ्च दद्यात् ॥ ३ ॥**

सतंडुलमित्यनेन दीपसहितमुच्यते ।

**स एष नग्नप्रतिच्छन्दो (न्नो) ऽस्य भवति ॥ १३ ॥**

'नग्नप्रच्छादनं दद्यात्तदह्न्येव प्रयत्नतः ।
विप्राभावे सगोत्रायाऽशौचिने वा विशेषतः ॥
नवश्राद्धवदभ्यर्च्य हुत्वा पिंडं प्रदाय च' ॥ इति

**श्रीधरः** — 'नग्नप्रच्छादनं दद्यात् भोजनेन सह द्विजः ।
ससुवर्णं सोदकुंभं सवस्त्रं वेदपारगे ।
तथैव देयं तद्विप्रे तद्द्वितीयेह्नि वापयेत्' ॥ इति

**स्मृत्यन्तरे** — 'वासस्तंडुलमृत्पात्रं कांस्यमुद्दीपनं घृतम् ।
दहनानन्तरं दद्यात् स तु नग्नपरिच्छदः ॥
वासस्तंडुलमुदकुंभं प्रदीपं कांस्यभाजनम् ।
नग्नप्रच्छादनश्राद्धे ब्राह्मणाय प्रदापयेत्' ॥ इति

'नवश्राद्धं मासिकञ्च यद्यदन्तरितं भवेत् ।
तदुत्तरेण सन्दद्यात्सर्वाण्येकादशेऽहनि ' ॥ इति

नवश्राद्धे ब्राह्मणवरणादिकमेकोद्दिष्टवदामेन कर्तव्यम् ॥ 'श्रीविष्णो आमं रक्षस्वे ' त्यूहः ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने षष्ठः खण्डः

## अथ सप्तमः खण्डः

**स्नात्वा गुरवे पानीयार्थं शक्त्या दक्षिणां दत्वा सायं प्रातः त्रिरुदकाञ्जलिं दत्वा नित्यमेकैकं वर्धयित्वा तर्पयेत् ॥ १ ॥**

स्नात्वेत्यादि । गुरवे – उपद्रष्टे । यद्वा गुरवे ।

**पूर्ववदपो नामम्ना आदाय अश्मान्प्लुत्याभ्यर्च्य बलिं ददाति ॥२**

पूर्ववदित्यादि – पूर्ववत् – प्रथमदिवसवत् । तिलामलकहारिद्रादिभिः गृहद्वारशिलादि स्नाप्य वासोदकेन अश्म आप्लुत्य । बलिं ददाति । बलिशब्देन पिंडश्चोपलक्षितम् । 'सायं प्रातः प्रदेयार्थमेकमेवापराह्णक' मिति वचनात् । 'दहनप्रभृत्याहिताग्ने' रित्युत्तरत्र वक्ष्यमाणत्वात् आहिताग्नेः पुनर्दहनाद्येव आशौचोदकदानादिकम् । मरणदिनादारभ्यानाहिताग्नेः । दहनात्परमिति केचिद्वदन्ति ।

गालव :– 'त्रिपक्षात्पूर्वतस्साग्नेः भवेत्संस्कारवासरात् ।
ऊर्ध्वं मृतदिनेऽनग्नेः सर्वाण्येव मृताहतः' ॥ इति

जातूकर्णिः – 'ऊर्ध्वं मृताहाद्यच्छ्राद्धं त्रिपक्षान्त उदाहृतः ।
अधस्तु कारयेद्दाहात् आहिताग्नेर्द्विजन्मनः' ॥ इति

वसिष्ठ :– 'ऊर्ध्वं मृताहाद्यच्छ्राद्धं मृताहाद्येव तद्भवेत् ।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः' ॥ इति

**जलान्तमादशाहात् ॥ ३ ॥**

जलान्तमित्यनेन गृहद्वारि वासोदकमात्रमेव । न तिलोदकम् ।

**ततः प्रभृत्येकभक्ता निरानन्दा अधश्शायिनो भवेयुः ॥ ४ ॥**

तत इत्यादि ।

स्मृत्यन्तरे :— 'अनैजसेषु पात्रेषु कन्दमूलफलाशिनः ।
बन्धुदत्ताशना वा स्युः यावत्प्राणस्य धारिणः ॥

संभोजनञ्च बन्धूनां कर्तव्यं प्रेतवेश्मनि ।
तैलाभ्यंगं न कुर्वीत अंगसंवाहनं तथा ॥

सर्वाभावे स्वमश्नीयुः भवेयुर्ब्रह्मचारिणः ।
आप्रदानञ्च सर्वेषां प्रत्यहं स्नानमिष्यते ॥

रात्रौ सुप्तश्च सर्वेषां प्रत्येकं शुद्धभूतले ।
शयनं वापि कर्तव्यं समीपे प्रेतवेश्मनि' ॥ इति

मरीचि :— 'प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमे तथा ।
ज्ञातिभिस्सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्' ॥ इति

**मातापित्रोर्हतवासाः परिवत्सरं ब्रह्मचारिव्रतं चरेत् ॥ ५ ॥**

**यस्माच्चीर्णपितृव्रतो वंशं वर्धयेत् ॥ ६ ॥**

**मातापित्रोरित्यादि** । मातापित्रोर्मरणादिनादारभ्य संवत्सरपर्यन्तं **हतवासाः** अनुल्बणवस्त्रः । उष्णोदकतैलाभ्यंगगन्धपुष्पमैथुनादिप्रतिषिद्धकर्मवर्जितः **ब्रह्मचारिव्रतं चरेत्** ।

'प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नापि पित्र्यञ्च यावत्पूर्णो न वत्सरः' ॥ इति वचनात्

'स्नानञ्चैव महादानं स्वाध्यायञ्चाग्निपूजनम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने' ॥ इति

सत्यव्रतः — 'मातापित्रोर्मृतौ प्राप्ते अर्वाक्संवत्सराद्यदि ।
मैथुनन्तु समासाद्य प्राजापत्यं समाचरेत् ॥

यदि शुक्रान्तसंयोगः कृच्छ्रं चान्द्रायणं चरेत् ।
आहितो यदि गर्भः स्यात् ब्रह्महत्याव्रतं चरेत्' ॥ इति

'षण्मासान् वर्जयेत् क्षौरं तैलतांबूलयोषितः ।
ज्येष्ठादीनां मृतौ प्राप्ते मातापित्रोस्तु वत्सरम्' ॥ इति

एतत्सर्वमकृतसपिंडीकरणविषयम् ।

'कृते सपिंडीकरणे च पित्रोः न ब्रह्मचर्यं परिरक्षणीयम् ।
तद्रक्षणे चापि महत्फलं स्यात् निवर्तने च स्खलने न दोषः' इति

स्मृत्यन्तरे :— 'सपिंडीकरणं यावत्तावद्वृद्ध्यादि नेष्यते ।
तत्सोदरस्य पुत्रस्य न त्वन्यस्य सगोत्रिणः' ॥ इति

संग्रहे :— 'अकृतप्रेतकार्ये तु न कुर्यादात्मनः शुभम् ।
कुर्यादेव शुभं कर्म मुख्यकर्तुश्च सन्निधौ ॥

सपिंडीकरणश्राद्धमकृत्वा शुभकर्मकृत् ।
ध्रुवमाप्नोति नरकं सपिंडानां मृतौ क्रमात् ॥

असपिंडीकृते प्रेते पितृत्वं नोपपद्यते ।
न च नैमित्तिकं काम्यमिष्टापूर्तादिकं न च ॥

नित्यकर्माणि कुर्वीत स्मृत्युक्तानि तथैव च ।
वंशजानामसंस्कारे त्वाशौचन्तु कथं भवेत् ॥

दशाहात्परतश्शुद्धिः ज्ञातीनाञ्च विशेषतः ।
गर्भादिप्राशनान्तानि प्राप्तकालं न लंघयेत् ॥

ज्ञातीनां प्रेतकार्याणि अकुर्वन्नपि कारयेत् ।
भ्रात्रादीनां प्रमीतानां त्रयाणान्तु सपिंडनम् ॥

कृत्वा तु मंगलं कार्यं नेतरेषां कथञ्चन' इति ।
'सपिंडीकरणात्पूर्वं शोभनं न विधीयते ॥

यदि चेत्तत्कृतं कर्म कर्तुर्नाशाय कल्पते ।
न कुर्यात्प्रेतकार्याणि नित्यनैमित्तिकान्यपि ॥

न कुर्यात्तावदाशौचं यावत्प्रेतस्य मोक्षणम् ।
भ्राता वा भ्रातृपुत्रो वा सपिंडश्शिष्य एव वा ॥

सपिंडीकरणं कुर्यादिति .... .... .... ।
प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा ॥

अपकृष्यापि कुर्वीत कर्ता नान्दीमुखे द्विजः' ॥ इति

गालवः— 'सपिंडीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते ॥

नासपिण्डीकृते प्रेते पितृकार्यं प्रवर्तते ।
सपिंडीकरणं कृत्वा कुर्यात्पित्र्यं शुभानि च' ॥ इति

वत्सरान्तसपिंडीकरणाभिप्रायेण परिवत्सरं ब्रह्मचारिव्रतं चरेदित्युक्तम् । उत्तरत्र 'मासे तैलसंपर्कस्तृतीये वा मंगलयोगो भवति' इति वक्ष्यमाणत्वात् स्मृतिप्रतिपादितत्वाच्च सपिंडीकरणान्तमेव पितृव्रतम् ।

संग्रहे :— 'मातुर्दशाहमध्ये तु पिता यस्य प्रमीयते ।
पैतृकन्तु यथाकालं पितुस्सर्वं समापयेत् ।
ततो मातुस्त्रिपक्षादौ शेषकर्म समाचरेत्' ॥ इति

इदं न सर्वसम्मतम् । (अनुतुषांविषये ?) ।

'मातर्यग्रे प्रमीतायामशुद्धो म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्' ॥इति

'मातुर्दीक्षान्तरे चैव पिता मरणमाप्नुयात् ।
दहनादि क्रियां कुर्यात् वपनं नैव कारयेत् ॥

प्राग्वत्सरात्कृतोद्वाहः स्नातको गर्भिणीपतिः ।
व्रती च न वपेत्पित्रोः वपेत्कर्ताप्यगोत्रजः' ॥

इत्यादिवचनैः व्रतिनोऽपि विधीयमानत्वात् पूर्वमृताया मातुः संघातमरणे उत्पनाग्निविधानात् 'मातुः कुर्यात्तु पक्षिणी' मिति पक्षिणीविधानात् बहुस्मृति-

विरोधाच्च मातुर्दीक्षायां वपनं (न?) कर्तव्यम् (?)। किञ्च अकृतसपिंडीकरण-विषयमिति केचित्।

व्याघ्रः— 'विद्ध्यादौरसः पुत्रो जनन्या और्ध्वदैहिकम्।
तदभावे स पत्नीकः कुर्यादेव यथाविधि'॥ इति

देवलः— 'एकाग्रमरणे पित्रोरन्यस्यान्यदिने मृतौ।
सपिंडनं त्रिपक्षे स्यादनुयानमृतिं विना'॥ इति

लौगाक्षिः— 'पितर्युपरते पित्रोर्मातुः श्राद्धस्य वर्तयेत्।
मातर्यपि च वृत्तायां पितुः श्राद्धं निवर्तयेत्'॥ इति

हारीतः— 'दंपत्योस्सह मृत्यौ तु सह दाहादिकाः क्रियाः।
प्राग्दाहादन्यनाशे च तदूर्ध्वन्तु पृथक्क्रियाः॥

दंपत्योस्सह संस्कारे मृतावनुमृतावपि।
उदकादि सपिंडान्तं प्रेतकार्याणि यान्यपि॥

कुर्यात्समानतन्त्रेण सांवत्सरिकमेव च।
प्रदक्षिणमुपस्थानं चरुकार्ये बलिस्तथा॥

सञ्चयस्तर्पणं गर्तं सपिंडीकरणं सह।
पित्रोस्सहैव मात्रा च कर्तव्यन्तु सुतेन तु॥
ज्येष्ठेन सह कर्तव्यं (?) निमित्तार्थं पृथक् भवेत्'॥ इति

हेमाद्रिः— 'अथानुमरणे पत्नी स्नात्वा भर्त्रा सहैव तु।
पथस्तुरीयमासाद्य सिग्वातैरुपवीज्य च॥

नमस्कृत्य चितारूढं भर्तारन्तु प्रसन्नतः।
प्रदक्षिणं परीत्याथ भर्तुर्दक्षिणमाविशेत्॥

'इयं ना' रीति मन्त्रेण शाययेन्मातरं सुतः।
पृथक्चितिं समारुह्य न विप्रा गन्तु मर्हति॥
भर्तुः संस्कारमेवास्याः संस्कारमपरे जगुः'॥ इति

और्व :– 'बालापत्याश्च गर्भिण्यो ह्यस्पृष्टरजसस्तथा ।
रजस्वला राजसुते .... .... .... ॥

संग्रहे – 'मृतानान्तु सपिंडानां काले बहुतिथे गते ।
तान् सर्वान् सह संस्कुर्यात् त्रिरात्रेण यथाविधि ॥

एकोद्दिष्टं चतुर्थेऽह्नि तेषां पिंडं पृथक् पृथक् ।
सपिंडीकरणं तेषां सह वा पृथगेव वा ॥

हविरग्निं दैवत्यं निर्वाश्चपञ्चोदपात्रकम् ।
यद्येक आदौ कुर्वीत तन्त्रेणेत्याह कुंडिनः ॥

मृतानामेकवंश्यानां काले बहुतिथे गते ।
तान् सर्वान् सह संस्कुर्यात् एकाहेन पुनस्सुधीः ॥

यद्येकं श्राद्ध........मनेकश्चैकवासरे ।
दैवं पित्र्यञ्च तन्त्रं स्यात् पृथक् पाको न विद्यते ॥' इति

अंगिरा :– 'दाहकस्स्याद्दशाहे तु (?) पितरौ चेद्दहेत्पुनः ।
नैव तु शुद्धिः स्यात् पित्रोस्तद्दिवसाद्भवेत्' ॥ इति

नारदः – 'अन्तर्दशाहे चेत्कर्तुः पुनः प्रेतस्य संस्कृतिः ।
तस्माच्छुद्धिः पूर्वशेषात् एकोद्दिष्टं यथोदितम्' ॥ इति

संवर्तः – 'पूर्वकर्ता दशाहे तु पितरौ चेद्दहेत्पुनः ।
पूर्वेण शुद्धिर्नैव स्यात् पित्रोस्तद्दिवसाद्भवेत्' ॥ इति

प्रजापति : 'आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥

प्रारब्धे प्रेतपिंडे तु मध्ये चेज्जननं भवेत् ।
तथैवाशौचपिंडांस्तु तेषां दद्याद्यथाविधि' ॥ इति

बोधायन : 'उदकं पिंडदानञ्च त्रियहं स्यात् त्रिवर्षतः ।
दशाहं पिंडदानं स्यात् अष्टमाब्दात्परं स्थितम् ॥

कन्याबालकुमारेभ्यः त्र्यहं पिंडोदकक्रियाः ।
कुर्याद्दशाहमाशौचं वर्तते च न संशयः ॥

शिशोस्त्रिवत्सरादूर्ध्वमुदकं पञ्चसप्ततिः ।
त्रिरात्रात्पिंडमुदकं सर्वेषां तर्पणं भवेत् ॥

समानपिंडयोग्येषु सपिंडः सह वा भवेत् ।
तन्त्रेण देवाः पितरो निमित्तं प्रतिपूरुषम् ॥

बहूनामेककर्तृणामेकश्चेद्बहुधा भवेत् ।
तत्रैकवचनं कुर्यात् बहिरेको द्विजाः पृथक् ॥

पञ्चमाद्वत्सरादर्वाक् प्रमीतो यदि बालकः ।
नग्नप्रच्छादनञ्चैव नवश्राद्धं तथैव च ।
अस्थिसञ्चयनञ्चैव न कुर्यात्कल्पविद्द्विजः' ॥ इति

**यस्माच्चीर्णेत्यादि — स्पष्टम् ।**

**चतुर्थेऽहन्यस्थिसञ्चयनं कुर्यात् ॥ ७ ॥**

'अस्थिसञ्चयने योगो देवानां परिकीर्तितः ।
प्रेतीभूतं ततोद्दिश्य यश्शुचिं न करोति चेत् (?) ॥

देवतानान्तु यजनं तं शपन्त्यथ देवताः ।
पूर्वं दग्धाः श्मशानेषु देवताः परिकीर्तिताः' ॥ इति

पूर्वाह्णे शुभदः प्रोक्तो मध्याह्ने मध्यमः स्मृतः ।
अपराह्णश्च रात्रिश्च वर्जयेत्सञ्चये बुधः' ॥ इति

**श्रीधरः—** अस्थिसञ्चयनं कार्यं पूर्वाह्णे तु शुभावहम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे विनाशनम् ॥

चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा ।
अस्थिसञ्चयनं कार्यं वर्णानामनुपूर्वशः' ॥ इति

पारस्कर: — 'चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य तु ।
अष्टमे नवमे चैव विधिस्स्याद्वैश्यशूद्रयोः' ॥ इति

विष्णु :— 'चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा ।
अस्थिसञ्चयनं कार्यमिति विष्णुस्मृतौ स्मृतम्' ॥ इति

पराशर: — 'चतुर्थेऽहनि कर्तव्यमस्थिसञ्चयनं नृप' ॥ इति

कात्यायन: — 'अपरेद्युस्तृतीये वा चतुर्थे पञ्चमेऽपि वा ।
सप्तमे पञ्चमे वापि अस्थिसञ्चयनं भवेत्' ॥ इति

भरद्वाज: — 'अपरेद्युस्तृतीयस्यां पञ्चम्यां पूर्वशौचिनः ।
शुद्धिरिति .... .... सूतिनां मृतिनाञ्च सा ॥

सूतिनाममिदं हित्वा प्रेतस्य च सुतानपि ।
अन्तर्दशाहे दाहे तु शेषतः शुचयोऽखिलाः ।
बहिर्दशाहे दाहे तु दाहादि त्रिदिनं समम्' ॥

'सप्तम्यां वा अस्थीनि सञ्चिन्वन्ति' ॥ इति ।

संग्रहे — 'नन्दायां भार्गवेऽर्के च चतुर्दश्यां त्रिजन्मसु ।
बृहस्पतौ तथाऽश्रेषा पुण्ये हस्ते तथैव च ॥

नास्थिसञ्चयनं कुर्यात् कुलक्षयकरं हि तत् ।
फल्गुनीद्वयमाषाढं तथा प्रोष्ठपदद्वयम्' ॥

'नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ।
कुर्वतः प्रेतकार्याणि कुलक्षयकराणि तु ॥

वर्गोत्तमे स्थिते चन्द्रे तथा वर्गोत्तमोदये ।
प्रेतकृत्या विवर्ज्याः स्युर्नृणामन्विच्छतां सुखम् ॥

नक्षत्राण्युत्तमान्याहुः आस्थितानि शुभैर्ग्रहैः ।
शुक्रवीक्षितराश्यादि किञ्चित्सर्वं विगर्हितम् ॥

सर्वदा शुक्रवारश्च गुरुवारश्च गर्हितः ।
चन्द्रचन्द्रजवारौ द्वौ वर्गौ मध्यममीरितौ ॥

गुरुशुक्रारशन्यर्कनन्दायाञ्च त्रिजन्मसु ।
उत्तरादित्रिहस्तेषु पुष्ये नैवास्थिसञ्चयः' ॥ इति

श्रीधरः — 'अस्थिसञ्चयनं कार्यं जन्मत्रयविवर्जितम् ।
पूर्णायाञ्च विशेषेण नन्दायाञ्च विवर्जयेत्' ॥ इति

ज्यौतिषे — 'रोहिण्यां वसुपञ्चके त्रिपद्भे युग्मांघ्रिभे पैतृभे
नन्दाकामचतुर्दशीभृगुशनिक्ष्माजार्कभद्रासु च ।
प्रेतश्राद्धमृतास्थिसञ्चयविधिस्त्रैपक्षिकोनत्रयं
तद्वंशक्षयदं भवेदिति तदा दानानि कुर्यात्सुधीः' ॥ इति

एवं चतुर्थेऽहनि

'चरुं पुष्पं जलं क्षीरं कुंभञ्च सपिधानकम् ।
संभृत्यौदुंबरीं शाखामयुजोऽस्थीनि चिन्वते' ॥ इति

प्रचेताः — 'ततोऽन्नं पानमादाय संस्कृतं विधिवत्सुधीः ।
गत्वा पितृवनं तत्र पूजयेत्पितृदेवताः ॥

क्षीरेणाभ्युक्ष्य चास्थीनि सतोयेनापसव्यया ।
याज्ञिकस्य तु वृक्षस्य शाखां संगृह्य सच्छदाम् ।
अस्थीन्युत्तरगात्रेभ्यः नवपभाण्डे निवेदयेत् ॥

'गोत्रस्य शर्मणः प्रेतस्य अस्थिसञ्चयनं कर्म करिष्या' मीति संकल्प्य क्षीरोत्सिक्तेन (?) औदुंबरशाखया शरीराण्यवोक्ष्य शेषे चैव यथाक्रमं त्र्यहानि त्रीणि प्रेतभूतस्तु (?) उत्तिष्ठेति अयुग्भिरुदकुंभैरवोक्षितमवोक्ष्य श्मशानवासिभ्यो भूतेभ्यश्च बलिं दत्वा अयुजः स्त्रियस्सञ्चिन्वन्ति नूतनमृत्पात्रे अस्थीन्यादाय वरं दत्वा यज्ञीयवृक्षमूले पुण्यनद्यां समुद्रे वा [illegible]क्षिपति ।' इति

मत्स्यपुराणे — 'ज्योतिर्विदुक्तसमये स्वशास्त्रोक्तविधानतः ।
अस्थिसञ्चयनं कृत्वा कुर्यात्तद्भस्म वेदिकाः ॥

यवगोधूमपिष्टैर्वा शालिपिष्टैर्मृदापि वा ।
पर्णैस्तु कुर्याद्वै तत्र तत्र (?) स्थाप्य शिलात्रयम् ॥

अञ्जलिभ्योऽञ्जलीर्दद्याद्गन्धपुष्पाक्षतानपि ।
तत्र पिंडत्रयं देयं दक्षिणाग्रकुशेषु तु ॥

एकं श्माशानवासिभ्यः प्रेतायैव तु मध्यमम् ।
प्रदद्याच्च परं पिंड प्रदद्याच्चोदकाञ्जलीन् ।
दत्वाऽस्थीनि च गंगायां प्रक्षिपेद्भुवि वा क्षिपेत्' ॥

**सप्तमेऽहनि - चितां पिधाय पैष्टिकमाकारं कृत्वा पुष्पतिल-चूर्णलाजधूपदीपाक्षतैः पूजयित्वा बलिं निवेद्य जलं दद्यात् ॥ ८ ॥**

**सप्तमेऽहनीत्यादि ।** सप्तमेऽहनि चितां पिधायेत्युक्तत्वादिदमेव चिता-पिधानम् ।

'चितास्थीनि समभ्युक्ष्य पिंडाकारं निधाय च ।
उपवीती दक्षिणस्यामावाह्याभ्यर्च्य यत्नतः ॥

श्मशानवासिभूतेभ्यो बलिं तांबूलकं ददेत् ।
पैष्टिके प्रेतमावाह्य गन्धपुष्पसुधूपकैः ॥

दीपाक्षतैरर्चयित्वाऽऽपूपलाजतिलादिभिः ।
बलिना च निवेद्याथ तांबूलञ्च प्रणम्य च ॥

अथ प्रेतं समुद्वास्य मृत्पात्रेऽस्थि निधाय च ।
पुण्यनद्यां समुद्रे वा सास्थि भस्म विनिक्षिपेत् ॥

यज्ञीयवृक्षमूले वा खनेद्वापि कुशस्थले ।
अस्थिसञ्चयनं कृत्वा तथा चैवं समाचरेत् ॥

नद्याद्यसन्निधाने तु काले वाऽन्यत्र निक्षिपेत् ।
ब्रह्मचार्येकभक्ताशी कृष्णाजिनकृतास्थि च ॥

यद्वा तीर्थं नयेत्स्नायात् स्पृष्ट्वा चेन्नित्यकर्मणि ।
स्नानं कृत्वा ततः स्नाप्य केशवादिकनामभिः ॥

प्रक्षाल्य पञ्चगव्यैस्तु पुष्पाद्यैश्च प्रपूजयेत् ।
धेनुं दत्वा च विप्राय सुसंकल्प्य समाहितः ॥

'आपो हि' ष्ठेति च प्रोक्ष्य मृत्पात्रेऽस्थि निधाय च ।
रत्नं सुवर्णं निक्षिप्य मृत्पात्रेण पिधाय च ॥

ब्राह्मणान् समनुज्ञाप्य वरुणञ्च प्रणम्य च ।
'यावदस्थि मनुष्याणां गंगातोयेषु तिष्ठति ॥

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
प्रसीद वरदे देवि सर्वपापप्रणाशिनि ॥

अमुकस्य प्रयच्छाद्य गतिं पुण्याञ्च शाश्वतीम् ।
अघमर्षणपूर्वञ्च धर्माय च नमाम्यहम्' ॥

इत्युक्त्वैवं निधायांसे नद्यां वा विनिमज्जयेत् ।
'दिवं गच्छेत्युपस्थानमेवं तीर्थजले क्षिपेत् ।
'गंगे' ति तीर्थे नं स्मृत्वा न्यसेत्तत्फलमाप्नुयात्' ॥ इति

व्यासः — 'यस्यास्थीनि मनुष्यस्य क्षिपेयुर्लवणांभसि ।
तावत्स्वर्गनिवासोऽस्ति यावदिन्द्राश्चतुर्दश ॥

यावदस्थि मनुष्याणां गंगातोये वसत्यपि ।
तावद्वर्षसहस्राणि दिव्यानि दिवि मोदते' ॥ इति

प्रचेताः — 'वृक्षमूले शुचौ देशे पुण्यस्थाने निधापये' दिति ।

अस्थिसञ्चयनं भारद्वजेनोक्तम् — यथा । 'अपरेद्युस्तृतीयस्यां पञ्चम्यां सप्तम्यां वा अस्थि सञ्चिन्वन्ति । क्षीरोत्सिक्तेनोदकुंभेनोदुंबरशाखया पक्त्वा दधत्

शरीराण्यवोक्षति 'इयं ते अग्निमन्था' मेति । अत एवांगारान् दक्षिणा निर्वृत्य तिस्रस्स्रुवाहुतीर्जुहोति 'आपस्स्र' जेति प्रतिमन्त्रम्। अयुग्भिरुदकुंभैः स्ववोक्षित-मवोक्षति । यस्मात् पुनर्विलननं न स्यात् । सासव्ये(?) हस्ते नीललोहितसूत्राभ्यां बृहतीफलमाबद्ध्य सव्येन पदाऽश्मानमास्थाय प्रथमा अनन्वीक्षमाणा अस्थी-न्यादत्ते 'उत्तिष्ठात' इति । दक्षिशिरसो वा । 'इदन्त एक' मिति द्वितीया 'पर ऊत एक' मिति तृतीया पादपर्यन्तास्थीन्यादाय 'उत्तिष्ठ प्रेत ए' हीत्यु-त्थापयेत् । अन्यत्सर्वं पूर्ववत् । चिताभस्मादिकं सर्वं पिधाय तक्षाकारं लिखित्वा शिलात्रये पूर्वोक्तान् श्मशानवासिनः प्रेतसखींश्चाभ्यर्च्य बलिं दत्वा विसर्जयेत् । यद्वा पैष्टिकमाकारं कृत्वा तत्र बल्यादिकं दत्वा उद्वासयेत्' इति । 'पैष्टिकमाकारं कृत्वा' इति सूत्रे उक्तत्वात् ।

**दशमेऽहनि तीर्थस्य विसर्जनम् । उदकाप्लुतं तदश्म भूमौ तत्रैव तीर्थस्थाने पिधाय बलिस्थाने पायसं प्रस्थतंडुलैः पक्वं त्रिभि-मृत्पात्रैर्गृहीत्वा तेनैवाश्मना सह पिदध्यादिति विसर्जनम् ॥ ९ ॥**

**दशमेऽहनीत्यादि** । इदं मातापितृविषयम् ।

यमः— 'अर्वाग्दशाहात्पित्रोस्तु कुहूर्यदि तदा भवेत् ।
द्विचन्द्रदोषो नास्त्यत्र कर्तव्या च क्रिया सुतैः' ॥

इति त्रिरात्रात्पूर्वविषयमिति केचित् ।

श्लोकगौतमः— 'पित्रोराशौचमध्ये तु यदि दर्शस्समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत्त्र्यहात्परम्' ॥ इति

कालादर्शः— 'दर्शो दशाहमध्ये स्यादूर्ध्वतन्त्रं समापयेत् ।
त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः' ॥ इति

इदमौरसविषयम् ।

'दशाहमध्ये विधुसंक्षयश्चेत् दद्युर्दशाहं तिलवारिपिंडम् ।
पुत्रीसुतो दत्तक औरसश्च शेषास्सुतास्तत्र समापयेयुः' इति

स्मृत्यन्तरे: — 'प्रवृत्ताशौचमध्ये तु यदि दर्शः प्रपद्यते ।
समाप्य चोदकं पिंडं तद्दिनेनौरसः सुतः' ॥ इति

श्रीधरः — 'मातापित्रोर्मृतिप्राप्तौ दशाहे मध्यतोऽपि वा ।
वनस्पतिगते सोमे शिष्टाहं पूर्ववत् क्षिपेत्' ॥ इति

ऋष्यशृंगः — 'आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनः ।
समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः' ॥ इति

पैठीनसिः — 'आद्यैर्दैवे च (?) कर्तव्याः प्रेतपिंडोदकक्रियाः ।
दर्शस्संक्रमणश्चापि दशाहान्तर्यदा भवेत् ॥

तावदेवोत्तरं तन्त्रं समाप्यमिति केचन ।
समाप्य चोदकं पिंडं स्नानमात्रं समाचरेत् ॥

चतुर्दशीमृतः कश्चित् ततः प्राप्नोत्यमातिथिः ।
पिंडोदकं दशाहान्तं तस्मिन्नेवाहनि क्षिपेत्' ॥ इति

स्मृत्यन्तरे — 'इन्दुक्षये मृतिर्यस्य स्त्रिया वा पुरुषस्य वा ।
चन्द्रस्यादर्शनात्पूर्वं दशपिंडानि कारयेत्' ॥ इति

प्रचेताः — 'प्रथमेऽहन्यमावास्या तत्तोदकबलिं हरेत् ।
अथ वा तत्प्रभृत्येव जलपिंडांस्तु वापयेत् ॥

चतुर्दशीमृतः कश्चित् ततः प्राप्नोत्यमातिथिः ।
तिलोदकं ततः पिंडास्समाप्या दशमेऽहनि ।
पित्रोस्तु यावदाशौचं तावत्कुर्यादतन्द्रितः' ॥ इति

उशनाः — 'द्विचन्द्रदर्शनं यावद्बलिपिंडक्रिया भवेत् ।
द्विचन्द्रदर्शने दोषो महानित्यवधार्यताम् ।

त्यजेत्संक्रमणं भानोर्मध्यतः प्रेतकार्यतः' ॥ इति

पुनः पुष्करः— 'फलमूलैश्च पयसा शाकेन च गुडेन च ।
तिलमिश्रन्तु दर्भेषु पिंडं दक्षिणतः क्षिपेत् ॥

प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहकम् ।
पिंडेषूनं न कुर्वीत न दोषस्त्वधिके कृते' ॥ इति

एवमेकोत्तरवृद्धया तिलोदकं तीर्थशिलायां गृहे वासोदकं पिंडबलिप्रदानानि एकोत्तरवृद्धया ब्राह्मणभोजनानि अकृतानि नवश्राद्धानि च दत्वा दशमेऽहनि महाक्षुदुपशमनार्थं प्रभूतबलिं दद्यात् । 'गोत्रस्य शर्मणः प्रेतस्य महाक्षुदुपशमनार्थं बलिप्रदानं करिष्यामि' इति संकल्प्य 'बलिं ददामि' इति दद्यात् ।

'आरवारे च सौरे च गुरुवारे च भार्गवे ।
पाषाणस्थापनोत्थाने सञ्चयश्च कुलक्षयः ॥
गुरुशुक्रेन्दुसौम्यानां वारवर्गोदयं विना ।
मन्दार्ककुजवाराणां वारवर्गोदयाः शुभाः' ॥
'पाषाणस्थापने श्रेष्ठा मन्दभौमार्कवासराः ।
उत्थापने सशौक्रीयाः मातापित्रोर्गुरोश्शुभाः' ॥ इति

दशमेऽहन्येवं पिंडबलिप्रदानानि कुर्यात् । उदकाप्लुतं तदश्मेत्यादि ।

गार्ग्यः — 'प्राप्तकालमतिक्रम्य कुर्याद्यदि बलिक्रियाम् ।
तस्यैव वारनक्षत्रतिथिराश्यशकादयः (?) । इति

स्मृत्यन्तरे — 'चतुर्थे पञ्चमे वापि सप्तमे नवमेऽपि वा ।
अश्मोत्थानं तथा कुर्यात्तेषामन्यतमे च हि' ॥ इति

तीर्थस्थाने वासोदकतिलोदकदानानि कृत्वा 'गोत्रं प्रेतमस्मात्पाषाणादस्मिन् कूर्चे उद्वासयामीत्युद्वास्य तदश्म तत्रैवावटे पिधाय 'अस्मद्गोत्रं वर्धता' मिति तत्र व्रीहीनवकीर्य उपवीती भूत्वा अवटं पूरयेत् । बलिस्थाने पायसं प्रस्थतंडुलैः पक्वं त्रिभिर्मृत्पात्रैः गृहीत्वा पूर्ववदुद्वास्य तेनैवाश्मना सह पिदध्यात् । अनन्तरं कूर्चमादाय तीर्थस्थानतः कूर्चेन सह जले विसर्जयेत् ।

स्मृत्यन्तरे :— 'अश्मानं प्रक्षिपेदप्सु सर्ववर्णेष्वयं विधिः ।
आब्राह्मणानामथ वा शूद्राणामथ वा पुनः ॥

त्रिपादर्क्षेषु भद्रासु गुर्वारभृगुवासरे ।
शिलोत्थानं न कुर्वीत कुर्वन् कुलविनाशन ' मिति ॥

गृह्ये: — 'धर्मोदकं प्रार्थ्य विप्रान् आप्यं तत्रैव तृप्तये' ॥ इति

'धर्मोदकं दीयता' मिति यजमानेन प्रार्थितास्सर्वे 'धर्मोदकं ददामी'ति दद्युः ।

'मातापित्रोर्मृतिप्राप्तौ पुत्रेर्दाहादिकर्म च ।
प्राप्तकाले कृतं तस्य व्यतीयान्न तु दोषकृत् (?) ॥

गार्ग्यः 'शुक्रादीनि तु (?) वारश्च नन्दा चैव चतुर्दशी ।
उत्तरात्रयरोहिण्यः पूर्णचन्द्रश्च जन्म च ॥

एतेष्वपि च कर्तव्यं मातापित्रोर्विशेषतः ।
जन्मत्रये सञ्चयने भ्रातुश्च दहने गुरोः ॥

'मृताहे केशवपनं दशाहे शेषवापनम् ।
शावे च सूतके चैव दशाहे वपनं स्मृतम् ॥

तिथिवारर्क्षयोगानामनपेक्षेति गौतमः ।
यस्य केशाश्शिरोजाता दशमेऽहन्यवापिताः ॥
आशौचं तस्य केशेषु लीयते नात्र संशयः' ॥ इति

संग्रहे: — 'दशाहेऽश्मानमुत्थाप्य शान्तिहोमं समाचरेत् ।
सर्वाङ्गक्षौरकर्मान्त ज्ञातीनां वपनं भवेत्' ॥ इति

शान्तिहोमस्तु आपस्तंबादिविषयः ।

**सायेऽहन्युच्छिष्टपात्राण्युद्दीप्य तीर्थे विसृज्य स्नात्वा एकादशमेकोद्दिष्टमन्ये चाचक्षते ॥ १० ॥**

**सायेऽहनीत्यादि । उद्दीप्य । तैजसानामुद्दीपनम् । यद्वा अत्यन्तोपहतानि दाहयेत्, तीर्थे वा विसृजेत् । स्नात्वा ।**

देवल: — 'दशमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ।
असमक्षे सपिंडानां जलदानन्तु दाशमे' (?) ॥ इति

एकादश्यामित्यादि । अनेन 'मृतेऽहनि तु कर्तव्यं प्रतिमासन्तु वत्सरम्' इत्याद्यमासिकस्य मृतेऽहनि कर्तुमयुक्तत्वात् एकादशेऽहनि कर्तव्यम् । 'आद्यमेकादशेऽहनि' इति । अन्येऽपि स्मृतिकर्तारः एकादश्यामेवाहन्याहुरित्यभिप्रायेणोक्तम् ।

**वानप्रस्थस्य पत्न्याश्च गृहस्थवद्दहनं कुर्यात् ॥ ११ ॥**

**वानप्रस्थस्येत्यादि** । वानप्रस्थगृहस्थयोः संस्कारे भेदो नास्ति । दशमेऽहनि रात्रौ मांगल्यसूत्रं प्रेतपत्नी त्यजेत् ।

स्मृत्यन्तरे :— 'मृते भर्तरि या नारी आशौचान्ते रजस्वला ।
श्राद्धशेषं प्रकुर्वीत स्नात्वा सूत्रं विमुञ्चति' ॥ इति

तथाऽन्यत्र — 'अकृत्वा वपनं मूढः प्रेतकर्मणि वर्तते ।
तिलोदकं पिंडदानं श्राद्धञ्चैव निरर्थकम्' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने सप्तमः खण्डः ।

## अथ अष्टमः खण्डः

**योह वै धर्माधर्मौ परित्यज्य दक्षिणे देवान् अदक्षिणे पितॄन् समावेश्य सर्वमात्मनि पश्यन् यतिः आत्मयाजिनस्तस्य वेदोऽग्निरिति ब्रह्मवादिनो वदन्ति ॥ १ ॥**

**यो ह वा** इत्यादि । ह वा इति प्रसिद्धवन्निर्देशः । यः स्वस्य दक्षिण-भागे देवान् वामभागे पितॄन् समारोप्य धर्माधर्मौ परित्यज्य सर्वं परं ब्रह्म-शरीरभूतं जगन्मय्येव प्रतिष्ठितमिति पश्यन् ।

'अहं हरिस्सर्वमिदं जनार्दनो नान्यस्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वंद्वगता भवन्ति' ॥

इति वचनात् । असौ यतिः । अनेन परमहंसो लक्ष्यते । एकाध्वर्यवमात्मयज्ञं संकल्प्य आत्मानमात्मनि यो यजते स आत्मयाजी तस्य **वेदोऽग्निरिति ब्रह्मवादिनो वदन्ति** । अनेन वेदस्नातक अवगम्यते (?) ।

**तथा योगी देवसायुज्यकः परकायप्रवेशीत्येतेऽनग्नयः ॥ २ ॥**

**तथेत्यादि । योगी** 'ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिना' मित्युक्तलक्षणः । **देवसायुज्यकः** – परब्रह्मसायुज्यार्थं योगनिरतः । **परकाय-प्रवेशी** – योगशास्त्रविहितयोगवशात् जितपवनः स्वेच्छानिर्गमनकुशलः स्वशरीरं विसृज्यान्यशरीरं प्राप्तः । एतेऽप्यनग्नयः । औपासनाद्यग्निमन्तोऽपि पश्चादेवंविधास्सन्तो मृताश्चेत् तेषां शरीरमग्निना न दहेदित्यर्थः ॥

**शरीरमेतेषां न स्पृश्य काष्ठैरन्तरीकृत्य रज्जुभिर्बद्ध्वा समुद्रगां नदीं नीत्वा वालुकप्रदेशे श्वभ्रं खनति ॥ ३ ॥**

**तत्रासयित्वा वालुकैरेव पिदध्यात् ॥ ४ ॥**

**शरीरमित्यादि । न स्पृश्य** तद्ग्रामवासी अन्यो वा पुत्रो वा वहनकाले न स्पृशन् याज्ञिकैः काष्ठैः धर्मोक्तैः तृणैरन्तरीकृत्य काष्ठतृणान्तरित-

मन्त्रैरदहनं कृत्वा अप्रमादं रज्जुभिश्च बद्धा समुद्रगां नदीं नीत्वा तदभावे प्रागुदग्वा आसित्वा सिकताप्रदेशे अन्यत्र शुद्धस्थले वा पुरुषप्रमाणनिम्नं तावन्मात्रं दक्षिणोत्तरायाम तदर्धविस्तारं वृत्तं वा श्वभ्रं खात्वा प्राङ्मुखमुदङ्मुखं वा तत्रासयित्वा वालुकैरेव पिदध्यात् । प्रणवेनेति केचित् ।

अत्र गाथा भवन्ति ॥ ५ ॥

'यथा सन्न्यासिनां कायं ये वहन्ति द्विजातयः ॥ ६ ॥

पदे पदे यज्ञफलं लभेरन्नानुपूर्वशः ॥ ७ ॥

अनाथानां शवश्चैव ये वहन्ति द्विजातयः ॥ ८ ॥

तत्संस्कारकृतो ये च ये च श्राद्धानि कुर्वते ॥ ९ ॥

तेषामेव फलं प्रोक्तमश्वमेधस्य धर्मतः ॥ १० ॥

मृतानान्तु शरीरं यदग्नेर्हविरिति स्मृतम् ॥ ११ ॥

तस्मात्पुण्यशरीराणि दहन् सद्यश्शुचिर्भवेत् ॥ १२ ॥

परदेशगतस्यापि सद्यश्शौचं विधीयते' ॥ १३ ॥ इति विज्ञायते ॥

दहनं विज्ञायते (?) ।

पराशरः — 'मित्रबन्धुसुहृत्पुत्रधनधान्यगृहोज्झितम् ।
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते' ॥ इति

प्रसंगात् धर्मे वक्ष्यमाणकुटीचकबहूदकादीनामाहिताग्न्यनाहिताग्नीनां खननसंस्कारोऽत्र प्रतिपाद्यते । यथा: – 'सन्न्यासिनोऽनाहिताग्नेर्देहं मृतं पुत्रोऽन्यो वा तणैरन्तरीकृत्य शुद्धैः ब्राह्मणैः यन्त्रेण वा सन्नीय समुद्रगायां नद्यां तीरे वा सैकते देशे सृगालादिभिरस्पृश्यं यथा तथा अवटं खनति । गायत्र्या स्नापयित्वा तत्रावटे आसयित्वा शाययित्वा वा दक्षिणहस्ते वैष्णवैर्मन्त्रैः त्रिदंडं सन्न्यस्य सव्ये 'यदस्य पारे रजसः' इति शिक्यमप्पवित्रमुदरे सावित्र्या भिक्षापात्रं गुह्यप्रदेशे 'भूमिर्भूमि' मिति काषायं मृद्ग्रहणीं कमंडलुञ्च सन्न्यस्य

पिदध्यात् । तस्मिन् सृगालादिभिः स्पृष्टे तत्कर्ता पापीयान् भवति । आहिताग्नेः अग्नीनात्मन्यारोप्य सन्न्यासिनो मृतदेहं गायत्र्या स्नापयित्वा पूर्ववद्भैरलंकृत्य शुद्धे देशे निधाय लौकिकाग्नौ तदग्नीनुपावरोहेत्यवरोप्य 'पवित्रन्त' इति घृतक्षीरमास्ये प्रक्षिप्य पूर्ववत् त्रिदंडादीन् न्यस्य ब्रह्ममेधेन पितृमेधेन वा विधिना आहिताग्निमन्त्रैः तदग्निभिर्दहनमाचरति । तयोराशौचोदकबलिपिण्डदानैकोद्दिष्टादीन् नैव कुर्यात् । नारायणबलिं वा यः कुर्यात् सोऽश्वमेधफलं समाप्नुयात्' इति ।

नारदः — 'नास्योदकक्रिया कार्या न बलिर्नास्थिसञ्चयः ।
नारायणबलिं दद्यात् संप्राप्ते द्वादशेऽहनि' ॥ इति

मनुः — 'एकोद्दिष्टं न कुर्वीत सन्न्यासिनान्तु सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥
सपिंडीकरणं तेषां न कर्तव्यं सुतेन तु ।
त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते' ॥ इति

उशनाः — 'ऋत्विजां दीक्षितानाञ्च यज्ञकर्म प्रकुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे राष्ट्रविप्लवे ।
आपद्यपि च कष्टायां सद्यश्शौचं विधीयते' ॥ इति

'सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने अष्टमः खण्डः ।

—:※०※:—

## अथ नवमः खण्डः

अथ आपद्दाह्याः ॥ १ ॥

अथेत्यादि । आपद्दाह्याः । गृहस्थवत् होतृमेधादि विधिना संस्कारा-भावात् गौणदहनविधानाच्च आपद्दहनम् ॥

**स्नातको विधुरः कृतचौलो दन्तजातो वा कुमारः कुमारी च विधवा वीरविधवा अप्रजा अमृतविधवा सूतिका मूढगर्भिणी पतिघ्नी निन्दिता घोरा यशोघ्नी पुत्रघ्नी दीक्षितोज्झिता त्यक्तभर्तृका अनार्तवा पाषण्ड-मूकबधिरा मन्त्रवर्जिता पापबुद्धिः दुश्शीला स्त्री च दहनमेतेषामापद्दा-ह्यमाचक्षते ॥ २ ॥**

**स्नातक** इत्यादि । **स्नातकः** विद्यास्नातको व्रतस्नातको विद्याव्रत-स्नातकश्चेति त्रयोऽपि । समावर्तनानन्तरं विवाहविरहेण मृतः । **विधुरो** मृतदारः पश्चादकृतविवाहः । प्रथमे तृतीये वा संवत्सरे **कृतचौलः कुमारः** ।

> 'शिशुरादन्तजननादाचौलाद्बालकः स्मृतः ।
> कुमारकस्तु विज्ञेयः शिशुरामौञ्जिबन्धनात्' ॥ इति

जातदन्तो वा । **कुमारी** च । **विधवा** – विगतभर्तृका । **वीरविधवा** आत्रेयीति केचिद्वदन्ति । **सृतविधवा** – पुत्रवती सूतिका सधवाऽपि । अन्तर्दशाहे मृता । **मूढगर्भिणी** – गर्भेण सह मृता । **पतिघ्नी** – येन केन प्रकारेण भर्तृहिंसका । **निन्दिता** – स्वदुर्गुणवशात्सर्वजननिन्दिता । **घोरा** त्रिविधकरणेनापि क्रूरा । **यशोघ्नी** – दुर्वृत्तेन स्वकुलयशोनाशिनी । **पुत्रघ्नी** – कामक्रोधादिवशात् स्वपुत्रघ्नी, यद्वा – स्वस्य वा परस्त्रीणां वा गर्भपातनपरा । (धर्मघ्नी – नित्यनैमित्तिकादिधर्मनाशिनी) **दीक्षिता** – पत्यौ जीवति तच्छुश्रूषामकुर्वाणा । तदनुज्ञां विनैव ।

'जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनश्चैव स्त्रीशूद्रपतनानि षट्' ॥

'पत्यौ जीवति या नारी उपोष्य व्रतचारिणी ।
आयुस्सा हरते भर्तुः सा नारी नरकं व्रजेत्' ॥

इति स्वपतिमारककर्माचरणात् दीक्षिता । उज्झिता — येन केनाप्यसत्कर्मणा भर्त्रा त्यक्ता । अनार्तवा —

'षोडशाद्वत्सरादूर्ध्वं यावन्न रजसि स्थिता ।
साऽनार्तवा तु विज्ञेया सर्वधर्मबहिष्कृता' ॥ इत्युक्ता

पाषंडा — वेदबाह्याचाररता । यद्वा ।

'अस्मादन्यं परत्वेन चिन्तयाना अचेतनाः ।
नारायणाज्जगन्नाथात्ते वै पाषंडिनः स्मृताः' ॥

इति श्रीमन्नारायणव्यतिरिक्तदेवतान्तरपराः । मूकबधिरा आत्मनि संभावितदुःखादिकं वक्तुमसमर्था । मन्त्रवर्जिताः — पूर्वोक्ता मन्त्रवत्संस्काररहिताः । यद्वा — आसुराद्यूढा अमन्त्रसंस्कृतगर्भजनिताश्च । पापबुद्धिः — यस्या बुद्धिः पापबुद्धिनिवेशा सा पापबुद्धिः । दुश्शीला — दुराचारपरा । चकारात् पाषंडादिपुरुषाश्च गृह्यन्ते । पुनरपि स्त्रीग्रहणेन पाषंडादिदोषदुष्टानां पुरुषाणां स्त्रियश्च संसर्गवशात् दोषदुष्टा इत्यभिप्रायेण पुनरपि स्त्रीग्रहणम् । इत्येतेषां स्नातकादीनामापद्विधानमापदि क्रियमाणममन्त्रकदहनं चाचक्षीत । चकारात् उदकदानादिक्रियायामपि त्रिरात्राशौचविधानादि यथासंभवमौर्ध्वदैहिकं नारायणबलिश्च कर्तव्यमिति सूच्यते । स्नेहाद्गुरादीनां गुणवतामपि विधिवत्कृते न दोषः । गौणेऽपि न दोषः ।

समन्त्रकापद्दहनविधानप्रयोगः । तूष्णीं प्रेतं स्नापयित्वा अंगुष्ठौ बद्ध्वा वस्त्रेणाच्छाद्य तूष्णीमाज्येन प्रमृज्य अभ्युक्ष्य उत्तरेण प्रेतमुद्धृत्य श्मशानं नीत्वा 'अपेत वीते' त्यादि कृत्वा प्रेतं निधाय मूर्तिपंडपूजादिकं कृत्वा चितां कृत्वा तत्र प्रेतमारोप्य हिरण्यशकलतिलतंडुलानि 'आ ओव' हेत्यास्ये निधाय

कपालसन्तपनाग्निं प्रज्वाल्य आज्यं विलाप्य परिस्तीर्य परिषिच्य आज्येन 'अस्मात्त्वम' धीति व्याहृतीश्च हुत्वा 'वातास्ते वान्त्वि' ति सिग्वातं कृत्वा 'इमा आप' इति कुंभं परीत्य धाराममभिमन्त्र्य कपालावशेषोदकं 'भूः पृथिवी' मित्यास्ये दत्वा कपालसन्तपनाग्निना 'असात्त्वम' धीति सावित्र्या दग्ध्वा नग्नं दत्वा चतुर्थेऽहन्यस्थीनि चित्वा नद्यादिषु निक्षिप्य दशमेऽहनि वा जलपिंड-दानादिकं सर्वं कृत्वा षोडश श्राद्धानि परेद्युः दत्वा (?) नारायणबलिं सपिंडीकरणं वा यथायोग्यं इति कुर्यात् । एषु गुणवत्सु कुर्यात् । अयमेवेच्छादहनविधिः ।

**यो वा आत्मयाजी स्नातकोऽप्राप्तगृहवृत्तो मृतदारो वा म्रियेत तस्य ह वै तद्ब्रह्म विफलं मा भूदिति विशेषार्थी यथा विभवानुरूपं दक्षिणां दत्वा तुल्यां काञ्चित्कन्यां तस्मै दापयित्वा तया सहोषितस्य प्राप्तगृहवृत्तस्य पूर्वोक्तेन विधिना दहनं कुर्यात् ॥ ३ ॥**

**यो वा** इत्यादि । **आत्मयाजी** – प्राणाग्निहोत्रविधानेन आत्मयज्ञ-मात्रयाजी । **स्नातको** – गुरुकुलान्निवृत्तः । **अप्राप्तगृहवृत्तः** – अकृतविवाहः स स्नातकः मृतदारश्चाप्राप्तपुनर्विवाहः अनपत्यः विधुरो वा म्रियेत **तस्य** स्नातकस्य विधुरस्य च । **तद्ब्रह्म**शब्देन तपो लक्ष्यते । 'ऋतं तप' इत्यादि श्रुतेः । 'तपस्स्वधर्मवृत्तित्व' मित्यादिवचनाच्च । पूर्वकृतं तपो विफलं मा भूदिति संस्कारकर्ता **विभवानुरूपं** यथाशक्ति **दक्षिणां** कन्यापित्रे 'अस्यानाश्रमिणो-विधिवद्दहनाधिकारसिद्ध्यर्थं इमां दक्षिणां गृहीत्वा भवत्कन्या दीयता' मिति प्रार्थनापूर्वं **दत्वा** । सोऽपि धर्मगौरवादंगीकरोति चेत् **तुल्यां** – समानजातीयां **काञ्चित्कन्यां** – बालां कुमारीं वा यथाविभवं **तस्मै** प्राप्तगृहवृत्ताय मृताय कन्यापिता 'काश्यपगोत्रां यज्ञपदामिमां कन्यां गौतमगोत्राय यज्ञदत्तशर्मणे अतीताय अग्निसिद्ध्यर्थं ददा' मीति **दापयित्वा** तां तत्समीपे आसयित्वा सप्तपदक्रमान्तं विवाहसंस्कारक्रियां तूष्णीं संकल्पेन कारयित्वा **तया सह** विधिप्रामाण्यादुषितस्य **प्राप्तगृहवृत्तस्य** सामर्थ्यात् शरीरं पूर्वोक्तविधिना समन्त्र-केन पितृमेधेन विधिना दाहयेत ।

**तथैव कन्यायाश्च मृतां प्राप्यौवनां तुल्येन पुंसा प्रामगृह्यकृतां दहेत् ॥ ४**

एवमेव कन्यामपि कन्यापिता वराय अन्नं दत्वा तूष्णीं पाणिग्रहणं कारयित्वा पूर्ववद्दाहयेत । उभयत्र दाहादि सपिण्डीकरणान्तसर्वधर्मा उपलक्ष्यन्ते ।

**दन्तजातस्य कृतचौलस्य वा संस्कारस्तथा तत्राग्नौ व्याहृतीर्हुत्वा सावित्र्या दहनं कुर्यात् ॥ ५ ॥**

दन्तजातस्येत्यादि । जातदन्तस्य कृतचौलस्य प्रथमवर्षे कृतचौलस्य वा पूर्वोक्तैकर्चादहनम् । तूष्णीं स्नापयित्वा श्मशानं नीत्वा शाखया प्रमृज्य चितां कृत्वा तत्र प्रेतं निधाय हिरण्यशकलतिलतण्डुलानि 'आ ओ व' इत्यास्ये दत्वा तस्य तस्याग्नौ (?) नो चेत् कपालसन्तपनेन वा आज्यं विलाप्य व्याहृति-चतुष्टयं हुत्वा 'वातास्त' इति सिञ्चातं 'इमा आपः' इति कुंभधारामन्त्रणञ्च कृत्वा भित्वा कुंभं कपालोदकं 'भूः पृथिवी' मित्यास्ये दत्वा तेनाग्निना सावित्र्या दहनं कुर्यात् । चतुर्थेऽहनि नद्यादावस्थीनि निक्षिपेत् । एष संस्कारः । यद्वा—वक्ष्यमाणवत् खननसंस्कारं कुर्यात् ।

**सूतिकां मूढगर्भिणीं पुंश्चलीमनार्तवां पाषंडमूकबधिरां मन्त्र-वर्जितां पापबुद्धिं दुश्शीलां स्त्रियं पुरुषं वा तूष्णीं दावाग्निना दहेत् ॥ ६**

**इत्यापदाद्यं विज्ञायते ॥ ७ ॥**

सूतिकामित्यादि । पुनरप्येतासां पुरुषाणाञ्च ग्रहणमत्रानुक्तान्यदोषयुक्तं पुरुषं स्त्रियञ्च संग्रहीतुम् । दावाग्निना—येन केनाप्यग्निना । अनेन—

देवलः—　'चंडालाग्निरमेध्याग्निस्सूतकाग्निश्च कर्हिचित् ।
　　पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचित' ॥ इति

एतानग्नीन् विहाय लौकिकाग्निना दाहयेदिति सूचितम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने नवमः खण्डः ।

## अथ दशमः खण्डः

—※○※—

**अथ अवटाहितकम् ॥ १ ॥**

अथेत्यादि। अवटाहितकम्। अत्र 'क' शब्देन शिर उच्यते। उत्तमाङ्गस्य शिरसो ग्रहणात् शरीरं लक्ष्यते। अवटनिक्षेप इत्यर्थः।

**बालस्य मरणे अलंकृत्य वाससा पत्रेण वा आच्छाद्य केनापि साधारं नयति ॥ २ ॥**

बालस्येत्यादि। ऊनद्विवार्षिकस्य बालस्य मरणे शरीरं संस्नाप्यालंकृत्य, वाससा, पत्रेण — कदल्यादिपत्रेण वा आच्छाद्य येन केनापि पत्रेण वा साधारं नयति।

**तत्र श्मशाने दक्षिणोत्तरमवटं तत्प्रमाणं खनति ॥ ३ ॥**

**घृतक्षीराभ्यामवटमभ्युक्ष्य दक्षिणाग्रं तिलदर्भानवकीर्य तत्र साधारमाधाय शवमाज्यमिश्रैस्तिललाजैरक्षतैर्वा आस्यं पूरयित्वा पिधायोपरि घृतक्षीराभ्यामुक्षणं बलिदानं वा कृत्वा गच्छेत् ॥ ४ ॥**

तत्रेत्यादि। साधारं — चेलखंडकदलीपत्रादिसहितम्। पूरयित्वा यमसूक्तं यमगाथां वा गात्वा अवटे निधाय पिधाय गच्छेत् — स्नानार्थं गच्छेत्।

**नास्योदकदानं कुर्यात् ॥ ५ ॥**

**त्र्यहं बलिं क्षिपेदिति विज्ञायते ॥ ६ ॥**

'त्रिवर्षादुदक' मित्यादिपूर्वमुक्तम् ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने दशमः खण्डः।

## अथ एकादशः खण्डः

अथ अदाह्यान् व्याख्यास्यामः ॥ १ ॥

अथेत्यादि । अदाह्यान् समन्त्रकं दग्धुमयोग्यान् । व्याख्यास्यामः — विस्तरसंकोचाभ्यामित्यर्थः । अमन्त्रकसमन्त्रकभेदेन विस्तरसंकोचौ ।

न दाह्योऽतुल्यो भवति ॥ २ ॥

नेत्यादि । अतुल्यः — वर्णतो वृत्ततश्चासमानः ।

तुल्योऽपि पापरोगान्वितो रज्जुशस्त्रविषविभ्रमप्रतिषिद्धहतश्चात्मघाती ब्राह्मणादिहीनहतोऽग्निदग्धोऽप्सु मृतो व्यालहस्तिपशुमत्तहतः स्वकिल्बिषाशनिभूतसंपातभृगुपतनमहौघपरिमर्षणमहाध्वगमनप्रवासदुर्गव्याध्युपेक्षा व्यर्थप्रायोपवेशनेषु मृतो न दाह्यो भवति ॥ ३ ॥

तुल्योऽपीत्यादि । इत्युक्तरीत्या तुल्योऽपि पापरोगान्वितादिरदाह्यः । पापरोगान्वितः —

मनुः — 'व्रात्यानां यजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनश्च(?) त्रिभिः कृच्छ्रैस्तु शुद्ध्यति' ॥

'ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
महापातकिनश्चैव तत्संयोगी च पञ्चमः' ॥ इत्युक्ताः

यद्वा — महापापरोगान्वितः । महापापरोगाः कर्मविपाके —

शातातपः — 'प्रायश्चित्तविहीनानां महापातकिनां नृणाम् ।
नरकान्ते भवेज्जन्म चिह्नांकितशरीरिणाम् ॥

प्रतिजन्म भवेत्तेषां चिह्नतः पापसूचनम् ।
प्रायश्चित्ते कृते वापि पश्चात्तापयुते पुनः ॥

महापातकजं चिह्नं सप्तजन्मसु जायते ।
उपपातोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥

दुष्कर्मजा नृणां रोगाः यान्ति चैव क्रमाच्छमम् ।
जपैस्सुरार्चनैर्होमैः दानैस्तेषां शमो भवेत् ॥

पूर्वजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य कुष्ठादिभिश्शमः ॥

कुष्ठश्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतिसारो भगन्दरः ॥

दुष्टव्रणं गंडमाला पक्षतोदोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥

जलोदरप्लीहगुल्मशूलशोकव्रणानि च ।
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥

रक्तार्बुदविसर्गाद्या उपपापोद्भवा गदाः ।
दन्तापवालिकश्चित्रवपुःकंपविचर्चिकाः ॥

वल्मीकुपुंडरीकाद्या रोगाः पापसमुद्भवाः ।
तथाऽर्शाद्या नृणां रोगा अभिशापाद्भवन्ति हि ।
अन्ये च बहुधा रोगा जायन्ते दोषसंकराः' ॥ इति

उपपातकादीनि प्रायश्चित्ते द्रष्टव्यानि । **रज्जुहतः**—रज्जुना उद्बन्धनं कृत्वा हतः । **शस्त्रहतः**—क्षुरकाद्यायुधादिहतः, मुक्तममुक्तं करमुक्तं यन्त्रमुक्तश्चेति चतुर्विधशस्त्राणामन्यतमेन हतः । **विषहतः**—स्थावरो जंगमः कृत्रिमश्चेति त्रिविधविषाणामेकेन हतः । स्थावरं, वत्सनाभादि, जंगमं सर्पादि, कृत्रिमं घृतमधुनोर्योगः कर्पूरजंबूफलरसयोर्योग इत्यादि । **विभ्रमहतः**—विदग्धनारीविलासे तद्वशेन स्त्रीषु सक्तः तद्दत्तौषधादिना जातरोगो मृतः । **प्रतिषिद्धहतः**— चौर्यपारदार्यशस्त्रग्रहणादिप्रतिषिद्धकर्मभिः परैर्हतः । यद्वा— परैर्हिंसितः । **आत्मघाती**—यः आत्मानं रज्ज्वादिभिः जिह्वोत्पाटनादिभिर्वा स्वयमेव म्रियते सः । स एव कारणान्तरादन्यैर्मारितश्चेत् प्रमादमरणे अत्यन्तदोषाभावाद्दाह्यो भवतीत्यर्थः ।

'अथ कश्चित्प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया' ॥ इत्युक्तेः ।

**ब्राह्मणादिहीनहतः**—ब्राह्मणाद्यैरन्त्य जातिभिश्च हतः(?)। **अग्निदग्धः**—गृहदाहादिवह्निना दग्धः । **अप्सु मृतः** । स्पष्टम् । **व्यालहस्तिपशुमत्तहतः** सर्पेण गजेन पशुना च मृतः । 'चतुष्पादः पशवः' इति श्रुतिः । **मत्तः**—पानेन। यद्वा—भूतावेशादिना मत्तः, तेन हतः । **स्वकिल्बिषहतः**—स्वकिल्बिषाणि पापानि ज्ञात्वा प्रायश्चित्त कर्तुमशक्तस्सन् मृतः । **अशनिसंपातमृतः**—अशनिपातेन दग्धो मृतः । **भूतसंपातहतः** भूतावेशादिना मृतः । **भृगुपतनमृतः**—भृगुपतनं—पर्वतात्पतनं—उपलक्षणाद्वृक्षादिभ्यः पतनञ्च । **महौघपरिसर्पणमृतः**—महौघः—समुद्रः, तत्र नावादिमारुह्य तरणं अतिवेगवत्सु नद्यादिषु परिसर्पणे गमने वा प्रमादात्तत्र मृतः। **महाध्वगमनमृतः** महाध्वनि चोरव्याघ्रादिभूयिष्ठेऽध्वनि गमनसमये प्रमादान्मृतः । **प्रवासदुर्गमृतः**—प्रवासाय दुर्गे चोरव्यालमृगहस्तिपशुकंटकादिभिर्गन्तुमशक्ये प्रमादान्मृतः। **व्याध्युपेक्षाप्रायोपवेशमृतः**—व्याध्याद्युपेक्षार्थे, व्याध्युपेक्षावशात् व्यर्थप्रायोपवेशेन मृतः। ईदृशो न दाह्यो भवति। दाहशब्देन स्नानालंकरणानुगमनसमन्त्रकदाहास्थिसञ्चयनोदपिंडश्राद्धदानादि प्रेतोपकारकाणामुपलक्षणम् । तान् दावाग्निना अमन्त्रकं दाहयित्वा दशाहेऽतीते प्रायश्चित्तं कृत्वा नारायणबलिं कृत्वा(?) दाहः कर्तव्यः । प्रमादमरणे यत्किञ्चित् प्रायश्चित्तं कृत्वा तथैव विधिवद्दहनं कुर्यात् । अप्रमादे तु **आपस्तंबः**—

'व्यापादयेद्य आत्मानं स्वयं योऽग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्योदकक्रिया' ॥ इति

**षट्त्रिंशन्मते**— 'गोब्राह्मणहतानाञ्च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकम्' ॥ इति

**व्याघ्रपादः**— 'यस्तु रज्ज्वादिनाऽऽत्मानं व्यापादयति दुर्मतिः ।
दशवर्षककृच्छ्रेण निष्कृतिस्तत्र कीर्तिता' ॥ इति

अंगिराः -- 'ब्राह्मणात् क्षत्रियाद्वापि वैश्याद्वा शूद्रतोऽपि वा ।
शस्त्रन्याधर्षणं कृत्वा स्वात्मानं घातयेद्यदि ॥

चंडालाद्यादिना वापि दंष्ट्रिणा वा निपातितः ।
तस्य पापविशुद्ध्यर्थं प्राजापत्यशतत्रयम् ॥

यदि कश्चित् प्रमादेन म्रियतेऽम्न्युदकादिभिः ।
प्राजापत्यातिकृच्छ्राभ्यां तप्तकृच्छ्रत्रयेण च ॥

चान्द्रायणेन च प्रेतस्त्वौर्ध्वदैहिकभाग्भवेत् ।
तद्दिने तु यथोक्तं स्यादन्यस्मिन् द्विगुणं भवेत् ।
अस्थनि द्विगुणं प्रोक्तं पालाशे तु चतुर्गुणम्' ॥ इति

स्मृत्यन्तरे:— 'औद्धत्यसाहसाभ्याञ्चत् तेषामावत्सरान्न हि ।
दाहं पिंडोदकादीनि प्रायश्चित्तमथाचरेत् ॥

यावत् षण्मासमित्यन्ये यावन्मासत्रयं परे ।
नास्ति प्रेतक्रियेत्याहुः प्रायश्चित्तमथाचरेत् ॥

विद्याद्यैर्मरणेत्याद्यैः (?) अद्भिस्सर्पेण वा पतेत् ।
सह प्राणानशास्त्रभिः (?) श्रृंग्युद्बन्धविषादिभिः ॥

पाषंडिनोऽभिशस्तस्य महापातकिनस्तथा ।
गर्भपुत्रपतिघ्नीनामशन्याद्यैर्मृतस्य च ॥

विषादिभिर्मृतानाञ्च संस्कारो नैव विद्यते ।
यावत् षण्मासमित्यन्ये यावन्मासत्रयं परे ॥

नास्ति प्रेतक्रियेत्याहुः प्रायश्चित्तमथाचरेत् ।
प्राजापत्यातिकृच्छ्रौ च तप्तकृच्छ्रत्रयं तथा ।
चान्द्रायणमतः कुर्यान्नारायणबलिं सुतः' ॥

इदं प्रमादमरणे -- अप्रमादमरणे विशेषः —

स्मृत्यन्तरे व्यासः–'नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा ॥
ब्राह्मणेन वधे प्राप्ते चंडालस्य करेण वा ।
आत्मानं शस्त्रनिर्घाते शूद्रवद्दाहयेद्विजम् ॥
भस्मास्थीनि गृहीत्वा तु विप्राणामनुशासनात् ।
क्षीरप्रक्षालनं कृत्वा तदस्थि प्रेतवद्दहेत् ।
पालाशवृन्तैस्तद्रूपं कृत्वा वा विधिवद्दहेत्' ॥ इति

यमः — 'जलादुद्बन्धनाद्भ्रष्टाः प्रव्रज्यान्नाशिकच्च्युताः? ।
विप्रप्रपतनप्राय (?) शस्त्रघातहताश्च ये ॥
न वै ते प्रत्यवसितास्सर्वलोकबहिष्कृताः ।
चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥

बुद्धिपूर्वमृतानामिदं प्रायश्चित्तं समुच्चयेन चरित्वा तच्छरीरस्य सद्योदाहः कर्तव्यः ।

षट्त्रिंशन्मते: — 'यानि कानि च पापानि गुरोर्गुरुतराणि च ।
कृच्छ्रातिकृच्छ्रचान्द्रैस्तु साध्यन्ते मनुरब्रवीत् ।
अनिर्दिष्टेषु सर्वेषु शुद्धिश्चान्द्रायणेन वा' ॥ इति

उशनाः — 'कृच्छ्रं चान्द्रायणं वापि सर्वपापप्रणाशन'मिति ।

अप्रमादे तु स एव

'अष्टौ कृच्छ्राणि वा कुर्यात् चान्द्रायणमथापि वा ।
दुर्मृतस्य विशुद्ध्यर्थं भगवान् वृद्धगौतमः' ॥ इति

स एव 'अथ कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
चंडालाद्रजकाच्चैव व्याघ्रसर्पादिना तथा ॥
चोरकैर्भृगुपातेन विषोद्बन्धनशस्त्रकैः ।
तस्य पापविशुद्ध्यर्थं नवकृच्छ्राण्यथाचरेत्' ॥ इति

तथा अंगिराः 'प्रमादान्म्रियते यस्तु भृग्वम्न्यनशनादिभिः ।
तस्य पापविशुद्ध्यर्थं कृच्छ्रषट्कं विधीयते' ॥ इति

अप्रमादे तु 'चंडालेनाग्निना वापि विद्युता ब्राह्मणेन वा ।
चोरेण दंष्ट्रिणा वापि विषेण पशुनापि वा ।
जलेन भृगुपातेन गलस्योद्बन्धनेन वा ॥
प्रायोपवेशनेनापि यः पञ्चत्वमुपागतः ।
तस्य पापविशुद्ध्यर्थं षण्मासं कृच्छ्रमाचरेत्' ॥ इति

स्मृत्यन्तरेः 'चंडालादुदकात् सर्पात् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिंडदानञ्च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥
आत्मानं घातयेद्यो वै विषशस्त्रादिभिर्द्विजः ।
तस्य पापविशुद्ध्यर्थं प्राजपत्यशतत्रयम् ।
जीवेत् कृच्छ्रेण शुद्ध्येत दत्वा गोमिथुनत्रयम्' ॥ इति

स्मृत्यन्तरे 'विषोद्बन्धनशस्त्राग्निसर्पविप्रादिघातिते ।
चंडालादिहते चैव कृच्छ्रं षाण्मासिकं स्मृतम्' ॥ इति

लेन्यत्र — 'चंडालेनाग्निनावापि विद्युता ब्राह्मणादपि ।
पथि वा पशुना वृक्षात्पातेनोद्बन्धनेन वा ॥
जले वा भोजने वापि यः पञ्चत्वमुपागतः ।
तस्य पापविशुद्ध्यर्थं पर्णकृच्छ्रं समाचरेत् ॥
पर्णोदुंबरजापत्रबिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहाभ्यस्तैः पर्णकृच्छ्र उदाहृतः ॥
पीत्वैतानि समस्तानि त्रिरात्रोपोषितश्शुचिः ।
काथयित्वा पिबेदब्भ्यः पर्णकृच्छ्रं समाचरेत्' ॥ इति

ब्राह्मे सनत्कुमारः-- 'प्रमादेनापि निश्शंकस्त्वकस्मादथ चोदितः ।
श्रृंगिदंष्ट्रि नखि व्याल विष विद्युज्जलादिभिः ॥

चंडालैर्वाऽथ चोरैश्च निहतो यत्र कुत्रचित् ।
तस्य दाहादिकं कुर्याद्यस्मान्न पतितस्तु सः ' ॥ इति

'मनुष्यवर्जं विप्राणां निहते मरणे सति ।
सद्य एव क्रियाः कार्या विप्राणामनुशासनात् ' ॥ इति

अपरार्क · 'दुर्मृते सद्य एव स्यात्संस्कारो हि द्विजन्मनाम् ।
लब्ध्वा कृच्छ्राणि विप्रेभ्य इति धर्मविदां मतम् ' ॥ इति

हारितः— 'भस्मास्थीनि गृहीत्वा तु विप्राणामनुशासनात् ।
क्षीरप्रक्षालनं कृत्वा तदस्थि प्रेतवत् दहेत् ॥

पुनर्विधानमन्त्रेण यथाविधि समाचरेत् ।
एवमेव विधिं कुर्यात् मरणे गर्हिते सति ' ॥ इति

पराशरः — 'शैलाग्निपतनं चैव प्रव्रज्याऽनाशकेषु च ।
कथं शुद्धिर्विधातव्या शुद्धिरेषा विधीयते ॥

प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च ।
वृषैकादशदानेन शुद्धिः पाराशरोऽब्रवीत् ' ॥ इति

सुमन्तुः— 'अधि(?)विद्युत्स्वयंपातचंडालब्राह्मणैर्हताः ।
एक द्वि त्रि चतुः पञ्च षडब्दैः शुद्धिमाप्नुयुः ' ॥ इति

शातातपः — 'वृद्धः शौचक्रियायुक्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्निपतनांबुभिः ॥

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं दत्वा चतुर्थे श्राद्धमाचरेत् ।
विध्युक्तमरणे चापि सद्यस्संस्कारमर्हति ' ॥ इति

एवं प्रमादमृतानां बुद्धिपूर्वमृतानाञ्च सामान्येन संस्कारादिविधानात् पापरोगान्विताशनिहतानां भूताविष्टस्य च बुद्धिपूर्वकमरणाभावात् रज्जुशस्त्रादिषु प्रामादिकाप्रामादिकमरणसंभवाच्च प्रमादमरणे 'तद्दिने तु यथोक्तं स्या'दित्युक्तप्रायश्चित्तं कृत्वा दाहः कर्तव्यः । अप्रमादे तु 'सद्यः पञ्चगुण'-मित्यादिकृत्वा दहेत् । आहिताग्नेस्तु यत्किञ्चित् प्रायश्चित्तं कृत्वा तदानीमेव दाहः कर्तव्यः । यद्याहिताग्निः मृतदारः कुशपत्न्यादिकल्पनया अग्नीनाधायाग्निहोत्रं कृत्वा दहेत् ।

व्यासः— 'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः' ॥ इति

स्मृत्यन्तरे — 'एकाकी वाऽऽदधीताग्नीन् विवाहश्चेन्न सिद्ध्यति ।
नित्येष्ट्याग्रयणावग्निहोत्रं कर्माणि नेतरत्' ॥ इति वचनात्

'यज्ञो हि श्रेष्ठतमं कर्मे'ति, 'एष खलु वा एतर्हीन्द्रः यो यजते' इति श्रुतेश्च आहिताग्नेरवश्यं दाहः कर्तव्यः । यत्तु -

'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि च दहेदग्नौ यजमाने वृथामृते' ॥

इतीदं वचनं तत ब्रह्महत्याद्यकृतप्रायश्चित्तविषयम् ।

आदन्तजननान्नाग्निराचौलकाद्वा इति ॥ ४ ॥

आदन्तजननादित्यादि । दन्तजननपर्यन्तं जातकाग्नौ सत्यपि न दाह्यः । तं खनेत् ।

'ऊनद्विवार्षिकं बालं निखनेन्नोदकक्रिया ।
आश्मशानादनुव्रज्य इतरैः ज्ञातिभिर्वृतः ।
यमसूक्तं ततो गाथां जपद्भिर्लौकिकाग्निना' ॥ इति

परे युवांस'मिति यमसूक्तम् । 'प्रकृतुने'ति यमगाथा ।

'यमो निहन्ता पितृधर्मराजा वैवस्वतो दण्डधरश्च काल: ।
प्रेताधिपो दत्तकृतानुसारी कृतान्तमेतद्दशकृज्जपन्ति ॥

नवपर्वतसंकाशो रौद्रकोपसमुद्भव: ।
कालो दण्डधरो देव वैवस्वत नमोऽस्तु ते ॥

इत्यादयो यमगाथाश्च । नामकरणात् प्राक् जातकाग्निमन्तमपि निखनेत् । जातकाग्निं विसृजेत् ।

गौतम: — 'नाम्न: प्राक् दहनश्चैव नोदकञ्च शिशो: स्मृतम् ।
अर्वाक् दशाहादस्याग्निं विसृजेच्छुष्कवीरुधा' ॥ इति

आचौलकाद्वेति - प्रथमवर्षे कृतचौलश्चेत् तदानीं न दाह: । तृतीयवर्षे चेद्दाहादिकं संभवति ।

'त्रिवर्षादुदकं पिंडं श्राद्धान्तं पञ्चमात्परम् ।
सप्तमात्सकलं श्राद्धं सपिंडीकरणं विना ॥

शिशोस्संवत्सरादूर्ध्वमुदकं पञ्चसप्तति: ।
यज्ञोपनयनात्पूर्वं पितृदेवत्यकं भवेत् ॥

आशौचं त्रिदिनं तत्र मातापित्रोस्समं तथा ।
आशौचकरणात्सद्यस्तदूर्ध्वमहरेव तु ॥

चतुर्थवर्षमारभ्य चौलाभावेऽप्यह: स्मृतम् ।
नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यात् नाम्नि वापि कृते सति' ॥

**आपञ्चमाद्वर्षाद्दारकस्य आसप्तमात्कन्याया नाग्नि: ॥ ५ ॥**

**आपञ्चमा**दित्यादि —

स्मृत्यन्तरे — 'पञ्चमाद्वत्सरादर्वाक् .... ... .... ।
त्रिरात्रात्पिंडमुदकं सर्वेषां तर्पणं भवेत् ॥

.... .... .... नवश्राद्धं तथैव च ।
अस्थिसञ्चयनञ्चैव न कुर्यात् कल्पवद्द्विजः' ॥

आसप्तमादित्यादि । यथा दारकस्य तथा कन्यायाः ।

**तूष्णीं भूमौ बलिनिर्वापणमित्येके ॥ ६ ॥**

**तूष्णीमित्यादि ।**

**बोधायनः** — 'उदकं पिंडदानञ्च त्र्यहं स्यात्त्रिवर्षतः ।
दशाहं पिंडदानं स्यादष्टमाब्दात्परं स्थितम् ॥

कन्याबालकुमारेभ्यः त्र्यहं पिंडोदकं भवेत् ।
कुर्याद्दशाहमाशौचं वर्तते च न संशयः ॥

दाहाद्येवोदकं पिंडं पञ्चमाब्दादि सञ्चयः ।
अग्निना संस्कृतस्योक्ताः पिंडदानोदकक्रियाः' ॥ इति

**लौगाक्षिः** — 'तूष्णीमेवोदकं दद्यात् तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानां अन्यत्रापीच्छाया द्वयम्' ॥ इति

**स्मृत्यन्तरे** — 'ऊनद्विवर्षा या कन्या कृतोद्वाहा मृता यदि ।
न्यस्यावटे पुनर्भूमौ दाह्या सा इति केचन ॥

त्रिवर्षात् प्राक् विवाहेऽपि मरणं याति कन्यका ।
निखनेद्वा क्षिपेद्वाऽपि पुनस्संस्कारमर्हति ॥

सप्तमाद्द्वादशादूर्ध्वं गृहस्थब्रह्मचारिणोः ।
सपिंडीकरणं कुर्यात् न प्रागिति यमोदितम् ॥

द्वादशाद्वत्सरादर्वाक् पोगंडमरणे सति ।
सपिंडीकरणं न स्यात् ऊर्ध्वं कुर्यात्सपिंडनम्' ॥ इति

पोगंडः — विकलांगः — चरमधातुरहितः ।

'अष्टमाद्द्वादशादूर्ध्वं गृहस्थब्रह्मचारिणोः ।
सपिंडीकरणं कुर्यात् नार्वागित्याह गौतमः ॥ इति

स्मृत्यन्तरे — स दग्धव्य उपेतश्चेत् आहिताग्न्या वृतार्थवत् (?) ।
दहनञ्च सपिंडान्तं सत्यधर्मोपलक्षणम्' ॥ इति

जाबालिः — 'मृतं बालञ्च विप्रञ्चानाथं विप्रमनुव्रजन् ।
द्विजः स्नानेन शुद्ध्येत घृताग्निप्राशनं विना ॥

अनाथमनुपेतञ्च प्रेतां कन्यामनुव्रजेत् ।
अनूचानं क्रतुश्रेष्ठं न प्राश्नीयात् घृतं द्विजः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्तचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने एकादशः खण्डः ।

## अथ द्वादशः खण्डः

अथ आकृतिदहनम् ॥ १ ॥

अथेत्यादि । अथ अनन्तरम् । देशान्तरे समन्त्रकं संस्काररहितानां मृतानामदृष्टशरीराणां दुर्मरणादिभिरलब्धास्थिमतामग्निमतामाकृतिदहनम् – पलाशवृन्तकल्पितशरीरप्रकृतिदहनं कर्तव्यम् ।

अन्यथा अनृणस्येष्टापूर्तं देवाः पितरश्च नाश्नन्ति ॥ २ ॥

अन्यथेत्यादि । अन्यथा – अकरणे 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वाऽऽसी'दित्यादिश्रुतिसिद्ध ऋणत्रयरहितस्य । इष्टापूर्तं – इष्टं – यागादि, पूर्तं – खातादि । हव्यकव्यादिकमपि देवाः पितरश्च नाश्नन्ति । 'अकृते प्रेतसंस्कारे न कुर्यादात्मनः शुभ'मित्यादिवचनैः ।

इष्टापूर्तें निर्वक्ति नारदः —

'आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ।
पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नप्रदानञ्चारामाः पूर्तमित्यभिधीयते' ॥ इति

स्मृत्यन्तरे — 'देशान्तरमृतानान्तु राजभिर्वा वृषादिभिः ।
तेषामंगं पलाशाद्यैः कृत्वा देहं दहेत्पुनः ।
शववत् प्रतिपत्तिश्च तेनाग्निस्पर्शनं विदुः' ॥ इति

यस्मात् कुलस्य मंगल्यायाऽऽकृतिदहनं विधीयते ॥ ३ ॥

तस्मान्मासे संवत्सरे वा काले पालाशशाखानां सपत्राणां षष्ट्यधिकशतत्रयं दर्भांश्च गृह्णाति ॥ ४ ॥

शुद्धे देशे गोमयेनोपलिप्य तिलाक्षतानवकीर्य यद्याहिताग्निः कृष्णाजिनमास्तीर्य तत्राऽऽकृतिं तावतीं करोति ॥ ५ ॥

शुद्धे इत्यादि । तावतीं – शरीरमात्राम् ।

तत्रास्थीनि पालाशदंडाः पत्राणि मांसं सिरा रोमाणि च दर्भा भवन्ति ॥ ६॥

तस्याङ्गान्युद्दिश्यास्थिगणना ॥ ७ ॥

शिरश्चत्वारिंशत् कंठं दश बाहू शतं अंगुलयो(ल्योर्द) दश वक्ष-स्त्रिंशत् उदरं विंशतिः वृषणे सीवन्याश्च सप्त शिश्नं त्रीणि ऊरू शतं जानुनी दश जंघे विंशतिः अंगुलयो(ल्योर्द) दश इति विन्यस्य पत्राणि मांसं सिरा रोमाणि च दर्भैः कृत्वा बध्नीयात् ॥ ८ ॥

शिर इत्यादि । बाहू शतम् – बाहुद्वये पञ्चाशत् पञ्चाशत् । अंगुल-यो(ल्यो)र्दश । करद्वयाभिप्रायेण द्विवचनम् । वृषणे सीवन्याश्च सप्त– वृषणे चत्वारि । सीवन्यामपानोपरि प्रदेशे त्रीणि, एवं सप्त । उरू शतं–पञ्चाशत् पञ्चाशदित्यर्थः । जानुनी दश – पञ्च पञ्च । जंघे विंशतिः – दश दश । अंगुलयो (ल्यो) र्दश – पादद्वयाभिप्रायेण द्विवचनम् । रोमाणि च – चकारात् सप्तधातुमयत्वं सूचितम् । दर्भैः कृत्वा बध्नीयात् । तत्तत्प्रमाणैः दर्भैः सह कृत्वा दर्भैः बध्नीयात् । यद्वा – पलाशवृन्तालाभे दर्भैर्वा कृत्वा बध्नीयात् ।

तदेवमाकृतिं पुरुषस्य स्त्रिया वा कृत्वा तस्य तस्याग्नौ व्याहृ-तीर्हुत्वा पूर्ववत् दहति ॥ ९ ॥

तदेवमित्यादि । तस्य तस्याग्नौ आहिताग्निश्चेत् त्रेताग्निभिः, अनाहिता-ग्निश्चेत् औपासनाग्निना, ब्रह्मचारिविधुरादीनां कपालसन्तपनाग्निना । पूर्ववत् – समन्त्रकत्वेन पूर्वोक्तप्रकारेण दहति । तथा च उत्तरत्र सूत्रे – "यद्याहिताग्निः प्रोषितो म्रियते यां दिशमभिप्रस्थितः स्यात् तां दिशं बाला अग्निभिस्तूष्णीं कक्षं दहेयुः । अपि वा आकृतिदहनं कुर्युः । तद्व्याख्यातम् । देशान्तरगतस्य मरणात् प्रत्यासन्नस्य वा पथिकृतेष्टिः कार्या । देशान्तरे मृतस्य शरीरं तैलद्रोण्यामवधाय शकटेनाहरेयुः । निर्मन्थ्येन दग्ध्वा वा कृष्णाजिने अस्थीन्युपनह्याहतेन वाससा अनुवेष्ट्य दीर्घवंशे प्रबद्ध्यानधो निदधानाः प्रयता मृन्मयपात्रभोजिनः तमाहरेयुः । ग्राममर्यादायां निधाय अग्नीनाहृत्य पात्राणि तैस्सह श्मशानं नीत्वा

दहेयुः। अप्रमीतं प्रमीत इति स्वजनात् श्रुत्वा आकृतिदहनादिपरिधानीयान्तं कर्म कुर्युः। यद्यागतः ततो जातकर्मोपनयनादिस्नानान्तं कृत्वा पूर्वमेवोपयच्छेत। (जायया) तया अग्नीनाधाय पुनस्सोमेन यजेत। व्रात्येन पशुनेति विज्ञायते" इति। सूत्रान्तरे च– 'यद्येतस्मिन् कृते पुनरागच्छेत् तं घृतकुंभादुद्धाप्य जातकर्मप्रभृति द्वादशरात्रं व्रतं चरित्वा तयैव जायया पूर्वभुक्तया पाणिग्रहणं विधीयते। तयैव अग्न्याधेयं कुर्वीत। व्रात्येन पशुना यजेत। गिरिं गत्वा अग्नये कामायेष्टिं निर्वपेत्। ईप्सितैः क्रतुभिर्यजेत' इति।

वृद्धमनुः— 'जीवन् यदि समागच्छेत् घृतकुंभे नियोजयेत्।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥

द्वादशाहं व्रतं तस्य त्रिरात्रमथवाऽस्य तु।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥

अग्नीनाधाय विधिवत् व्रात्यस्तोमेन वा यजेत्।
तथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु।
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः' ॥ इति

अन्यत्र— 'घृतकुंभे निधायैनं त्र्यहमेकाहमेव वा।
समुत्थाप्य शुभे लग्ने जातकर्मादि कारयेत्' ॥ इति

भृगुः— 'त्रिरात्रं कर्तुराशौचं पुनर्दहनकर्मणि।
त्रिचतुस्त्रिदिनेनोक्तं(?) आशौचाहे ततश्चरेत्' ॥ इति

शातातपः— 'आशौचस्य च ह्रासेऽपि पिंडान् दद्यात् दशैव तु।
दशरात्रे व्यतीते तु पित्रोश्चेदौर्ध्वदैहिकम्।
पुत्रः कुर्यात्तु वाऽऽशौचं दशरात्रमिति स्मृतम्' ॥ इति

मार्कण्डेयः— 'संस्कृत्याग्नौ दहेत्पश्चात् दशरात्रन्तु सूतकम्।
इतरेषां त्रिरात्रं स्यात् ज्ञातीनान्तु न सूतकम् ॥

कुशपर्णशरीराद्यैः त्रिरात्रं सूतकं भवेत् ।
विना पितृभ्यामन्येषां कारुण्यानां त्रिरात्रकम् ॥

संवत्सरेऽप्यतिक्रान्ते यः कुर्यात् पैतृमेधिकम् ।
मातापित्रोर्विनाऽन्येषामेकाहेन समापयेत् ॥

मन्त्रेण संस्कृतस्यापि असमामोदकस्य च ।
अर्वाक् दशाहादूर्ध्वं चेत् पुनस्संस्कारमर्हति ॥

दशाहमुदकं पिंडं पित्रोराकृतिकर्मणि ।
पित्रोरपि त्रिरात्रं स्यात् प्रागाशौचग्रहे सति' ॥ इति

स्मृत्यन्तरे — 'दग्ध्वाऽस्थि पित्रोः पुत्रस्तु दशाहं सूतकी भवेत् ।
तयोः प्रतिकृतिं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥

पुत्रादिनात्र कर्तव्यं पुनस्संस्कारकर्मणि ।
मातापित्रोर्दशाहं स्यात् अस्थिदाहे तथैव च' ॥ इति

तथा 'पितरि प्रोषिते प्रेते पुत्रो देशान्तरं गतः ।
कृतक्रिये त्रिरात्रं स्यात् सद्यस्सञ्चय इष्यते' ॥

इतीदं वचनं देशकालाद्यपेक्षया ।

शातुकर्णिः — 'पितरि प्रोषिते यस्य न वार्ता नैव चागतिः ।
पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् ॥

कुर्याच्चास्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमेव सर्वाणि प्रेतकार्याणि चाचरेत्' ॥ इति

संग्रहे — 'चतुर्थेऽहनि विप्राणामस्थिसञ्चयनं भवेत् ।
अस्थ्नां प्रतिकृतौ दाहे सद्यस्सञ्चय इष्यते ॥

यदा पालाशवल्काद्यैः कृत्वा प्रतिकृतिं दहेत् ।
भस्मास्थिवत् सञ्चिनुयात् सद्यो मन्त्रं जपेत्तु वा ॥

गते त्वाशौचदिवसे पुनर्दाहो यथा भवेत् ।
मरणादगृहीतस्य (?) त्रिरात्राच्छुद्धिरिष्यते ॥

अकृतस्य च पुत्रस्य संपूर्णाशौचमेव हि ।
प्रागाशौचग्रहाभावे ज्ञातीनां त्रिदिनं समम् ॥

प्राक् ग्रहेपि त्र्यहं कर्तुः अन्येषां तु न विद्यते ।
आशौचस्य ग्रहे येषां पूर्वं नासीत् परिग्रहः ॥

प्राक् गृहीणान्तु नैव स्यात् कर्तुरस्ति तथापि च ।
कर्ता चेत्तनयः पूर्वग्रही पूर्णं ततोदितम् (?) ॥

अन्तर्दशाहे दाहे तु पूर्वतः शुचयोऽखिलाः ।
बहिर्दशाहे दाहे तु दाहादि त्रिदिनं समम् ॥

न कुर्याच्चौलकर्मादि विवाहान्तं तथैव च ।
व्रतोपनयनञ्चैव सगोत्रे विद्धयसंस्कृते' ॥ इति

स्मृत्यन्तरे — 'पितरि प्रोषिते प्रेते पुत्रो देशान्तरं गतः ।
कृतक्रिये त्रिरात्रं स्यात् दशाहमकृतक्रिये ॥
प्रमीतपितृकः कुर्यादौर्ध्वदैहिकमादरात् ॥

यदि कर्तुमशक्तश्चेत् आशौचं नियमान्वितः ।
आदशाहादथोर्ध्वं वा यदि कार्यं पुनस्तथा ॥

त्रिरात्रं समतिक्रम्य श्राद्धं कुर्याद्यथाविधि ।
तस्य त्रिरात्रमाशौचमितरेषां न विद्यते' ॥ इति

पैठीनसिः — 'प्रोषितभ्रातृमरणे दत्तपिंडोदकक्रिये (?) ।
दशाहं सूतकं तत्र दशाहं पत्निपुत्रयोः ॥

भ्रातुर्देशान्तरमृतौ षण्मासाद्वत्सरादधः ।
दशरात्रं त्रिरात्रं स्यात् दशाहं दाहकस्य तु ॥

देशान्तरे मृतिर्यत्र अग्रजानुजयोः श्रुतौ ।
षण्मासाद्वत्सरादर्वाक् दशाहं त्र्यहमाचरेत्' ॥ इति

गालवः — 'कृतोदके तु षण्मासात् पक्षिणी त्वघमिष्यते ।
अपश्चेत्त्रिदिनं ग्राह्यमकृतोदे दशाधिकम्' ॥ इति

स्मृत्यन्तरे — 'गोत्रान्तरप्रविष्टानां दायमाशौचमेव च ।
ज्ञातित्वञ्च निवर्तन्ते तत्कुले सर्वमुच्यते ॥

दत्तस्य परिवेत्तृत्वं दायमाशौचमेव च ।
ज्ञातित्वञ्च निवर्तन्ते तत्कुले सर्वमुच्यते ॥

दत्तस्य परिवेत्तृत्वं दायमाशौचमेव च ।
गृहीतगोत्रात्संग्राह्यं श्रौतस्मार्तादिकं तथा' ॥ इति

मरिचिः — 'मात्रैक्या द्विपितृकौ भ्रातरावन्यशौचकौ ।
एकाहं सूतके प्रोक्तं त्रिरात्रं मृतके तयोः ॥

अनेकपितृकानेकमातृकौ तु परस्परम् ।
जन्मन्यह्नापि शुद्ध्येतां मरणे तु त्रिरात्रतः' ॥ इति

भारद्वाजः — 'अतीतकालजाशौचमाचार्यादिषु नेष्यते ।
मातापित्रोर्विना भ्रातुरब्दादुपरि नेष्यते ॥

श्वशुरयोश्च भगिन्याश्च मातुलान्याश्च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥

आशौचं पक्षिणीं रात्रिं मृता मातामही यदि ।
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥

अनुलोमाश्रितायास्तु भार्यायाः प्रसवे मृतौ ।
तथानौरसपुत्रस्य समीपे त्रियहं शुचिः ॥

व्यभिचारादिहीनेन जायेताथ मृतेऽथ वा ।
त्रिदिनं कर्तुरेव स्यात् सपिंडानान्तु नेदृशम् ॥

पित्रोर्मृतिश्श्रुतावन्तर्दशाहे शेषतः शुचिः ।
श्रवणाद्दिशाहान्तमिति यत्तदसांप्रतम् ॥

मातुस्सपत्न्यां मृतायां यावत्संवत्सरात् त्र्यहम्
स एव ह्यौरसे पुत्रे ह्युपनीते यदि त्वसौ ॥

मृतावन्तर्दशाहे .... .... ।
... पूर्वशौचेन या शुद्धिः सूतिनां मृतिनाञ्च सा ।
सूतिकामश्मवद्धित्वा प्रेतस्य च पिता सह ' ॥ इति

वृद्धवसिष्ठः — 'अग्रजस्तु यदानग्नीन् नादध्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥

स्वाशौचकालतस्त्वेव सूतिकाजनकोऽग्निदः ।
शुद्धचेरन्नघयोगेऽपि न पूर्वाशौचशेषतः ॥

मातापित्रोर्मृतौ चैव जननेऽप्यौरसस्य च ।
स्वाशौचापगमे चैव शुद्धिस्स्यान्नान्यकालतः ॥

पितृव्यानन्तरानेकान् (?) दग्ध्वा पूर्वाघतः शुचिः ।
पितरौ चेद्दहेत्तत्र दशाहाच्छुद्धिरग्निदः (?) ॥

अन्तर्दशाहे तत्कर्ता पुनः प्रेतस्य संस्कृतिः ।
तस्माच्छुद्धिः पूर्वशेषादेकोद्दिष्टं यथोदितम् ' ॥ इति

हारीतः — 'दाहकार्यद्वयं स्याच्चेत् कर्तुरैक्ये विशेषतः ।
पूर्वेणैव समाप्येत तोयं पिंडं द्वितीयकम् ' ॥ इति

अंगिराः — 'दाहकस्त्वादशाहे तु शवदाहं चरेद्यदि ।
पूर्वेणैव विशुद्धस्स्यात् पित्रोस्तद्दिवसाद्भवेत् ' ॥ इति

संवर्तः — 'पूर्वकर्ता दशाहे तु पितरौ चेद्दहेत्पुनः ।
पूर्वेण शुद्धिर्नैव स्यात् पित्रोस्तद्दिवसाद्भवेत् ॥

मात्राशौचस्य मध्ये तु पिता प्रेतत्वमृच्छति ।
पितुर्मरणमारभ्य पुत्राणां दशरात्रकम् ॥

पित्राशौचस्य मध्ये तु यदि माता प्रमीयते ।
दशाहात्पैतृकादूर्ध्वं मातुः कुर्यात्तु पक्षिणीम्' ॥ इति

देवलः — 'मृतं पतिमनुव्रज्य पत्नी चेज्ज्वलनं गता ।
न तत्र पक्षिणीं कुर्यात् पैतृकादेव शुद्ध्यति' ॥ इति

स्मृत्यन्तरे 'पूर्वेण वा परेणापि पित्रोः शावेन हीतरत् ।
आशौचं शुद्धिमाप्नोति न पित्रोः शावमन्यतः ॥

यत्र तूद्वाहिता कन्या पितृगेहे प्रमीयते ।
पित्रोस्त्रिदिनमन्येषामहरित्येक ऊचिरे ॥

पितृगेहादतोऽन्यत्र यदि कन्या प्रमीयते ।
पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः ॥

भगिनीनिलये भ्रातृमृतिश्चेन्मृतकं तथा ।
भगिन्यास्त्रिदिनं प्रोक्तं न तु स्याद्भगिनीपतेः ॥

अथान्यत्र मृतो भ्राता भगिनी वा विपद्यते ।
एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा ॥

ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च ये ।
मातुलस्यापि पुत्रस्य पत्न्यश्चैषां प्रजास्त्वथ ॥

मातरश्चैव सर्वेषां पक्षिणी स्वगृहे त्र्यहम् ।
मातामहे च तत्पत्न्यामाचार्ये च त्रिवत्सरम् (त्रिरात्रकम्?)' ॥ इति

स्मृत्यन्तरे — 'अस्थिसञ्चयनादूर्ध्वं प्रमादेन हृतं यदि ।
अस्थिप्रतिकृतीकृत्य तद्देशान्मृदमाहरेत् ॥

अस्थिवत्सञ्चयेद्विद्वान् तद्देशे भस्म वा ततः ।
प्रमाणमस्थिवत्कृत्वा तन्मन्त्रन्तु जपेद्बुधः ॥

जलप्रवाहे कूपे वा तीरेवाऽथ सरिद्वृते ।
जलौघे वास्थिनाशे तु तन्मन्त्रन्तु जपेद्बुधः' ॥ इति

तथाऽन्यत्र — 'अस्थिसञ्चयनादूर्ध्वं विच्छिन्ने तर्पणादिके ।
आरब्धे यदि पित्रोश्च पुनः संक्षिप्यते त्र्यहात् ॥
मातापित्रोर्दशाहं स्यात् अस्थिदाहे तथैव च' ॥ इति

मरीचिः — 'ब्राह्मणेन न कर्तव्यं शूद्रस्य त्वौर्ध्वदैहिकम् ।
शूद्रेण ब्राह्मणस्यापि विना पारशवात् क्वचित् ॥
अपरश्चेद्वर्णं .... पूर्ववर्णमुपस्पृशेत्' ॥ इति

विष्णुः — 'पूर्वं वाऽप्यपरं तत्र शावोक्तमाशौच' मिति ॥

पराशरः — 'योऽसवर्णस्तु मूल्येन नीत्वा चैव दहेन्नरः ।
सूतकन्तु भवेत्तस्य प्रेतजातिसमं तथा' ॥ इति

व्यासः — 'यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुद्धयेद्द्वादशाहेन भूमिपः ॥
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुद्धयति' ॥ इति

व्यासः — 'अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम् ।
सर्पिः प्राश्य ततः स्नात्वा प्राणायामैर्विशुद्धयति' ॥ इति

याज्ञवल्क्यः — 'प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्' ॥ इति

पराशरः — 'क्षत्रियं मृतमज्ञानात् ब्राह्मणो योऽनुगच्छति ।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुद्धयति' ॥ इति

लौगाक्षिः — 'वहनं दहनञ्चापि प्रेतस्यापि च गर्भवान् ।
न कुर्यादुभयञ्चात्र पित्रोः कुर्यादपि व्रती' ॥ इति

विष्णुः — 'द्विजः शूद्रस्यानुगमनं कृत्वा स्रवन्तीञ्च समासाद्य गायत्र्या अष्टशतं जपेत् । प्रेतभूमं स्पृष्ट्वा स्नायात् । घृतं प्राश्य विशुद्धयति' इति ।

पराशरः — 'ब्रह्मचारी गृहे येषां हूयते च हुताशनः ।
संपर्कञ्चेन्न कुर्वन्ति न तेषां सूतकं भवेत् ॥

प्रेतीभूतन्तु यश्शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥

त्रिरात्रे तु ततश्चीर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥

स्वाध्यायः क्रियते यत्र होमश्चोभयकालिकः ।
सायं प्रातर्वैश्वदेवो न तेषां सूतकं भवेत् ॥

'शिल्पिनः कारुका वैश्या दास्यो दासाश्च नापिताः ।
राजानः श्रोत्रियाश्चैव सद्यश्शौचाः प्रकीर्तिताः ॥

सव्रतस्सत्रपूतश्च आहिताग्निश्च यो द्विजः ।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥

उद्यतो निधने दाने आर्तो विप्रो निमन्त्रितः ।
तथैव ऋषिभिर्दृष्टं यथा कालेन शुद्ध्यति' ॥ इति

तथा — 'नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु ।
प्रवृत्तकृच्छ्रहोमादौ ब्राह्मणादींश्च भोजने ॥

गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥

निमन्त्रितस्य विप्रस्य स्वाध्यायनिरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्' ॥ इति

अत्राहिताग्निविषये अकृताग्निद्वयसंसर्गविषये **बौधायनः** । 'अथ यद्याहिताग्निः द्वे भार्ये विन्देत प्राक् संयोगान्म्रियेत स कथं तत्र कुर्यादिति । औपासनं संपरिस्तीर्य आज्यं विलाप्योत्पूय स्रुक् स्रुवं निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्यग्नौ परिश्रिते पूर्णाहुतिं जुहोति । समितं संकल्पेथा' मिति मिन्दाहुती व्याहृतीश्च हुत्वा अथैनमग्निं 'अयन्ते योनिर्ऋत्विय' इति समिधि समारोप्य गार्हपत्ये समिधमादधाति । 'भवतं नस्समनसा' विति गार्हपत्ये

चतुर्गृहीतं जुहोति। अग्नावग्निश्चरति प्रविष्ट' इत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति 'चित्तिस्स्रु' गिति। अथ गार्हपत्ये स्रुवाहुतीर्जुहोति। 'ब्राह्मण एकहोते' ति दशभिः। अथ प्राचीनावीतं कृत्वा अन्वाहार्यपचने जुहोति 'ये समानाः, ये सजाता' इति द्वाभ्याम्। अथान्वाहार्यपचन एवं स्रुवाहुतिं जुहोति। 'अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमस्वाहे' ति। अथ यज्ञोपवीतं कृत्वा दशगृहीतेन स्रुचं पूरयित्वा पुरुषसूक्तं मनसाऽनुद्रुत्य आहवनीये जुहोति। अथ स्रुवाहुतीर्जुहोति 'अग्नये विविचये स्वाहा' 'अग्नये व्रतपतये स्वाहा' 'अग्नये पवमानाय स्वाहा' 'अग्नये पावकाय स्वाहा' 'अग्नये शुचये स्वाहा' 'अग्नये ज्योतिष्मते स्वाहा' 'अग्नये भूतपतये स्वाहा' 'अग्नये पृथिकृते स्वाहा' 'अग्नये तन्तुमते स्वाहा' 'अग्नये वैश्वानराय स्वाहे'' ति। अथ स्रुचि चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति 'मनो ज्योतिर्जुषता' मिति। अत ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्यते' इति॥

प्रकृतमनुसरामः। सूतकानन्तरम्।

संवर्तः — 'आशौचे निर्गते कुर्यात् गृहं मार्जनलेपनैः।
सवासा जलमाप्लुत्य शुद्ध्येत्पुण्याहवाचनैः॥ इति

व्यासः — 'संपूज्य गन्धपुष्पाद्यैः ब्राह्मणांस्वस्ति वाचयेत्।
धर्मे कर्मणि संकल्पे संग्रामेऽद्भुतदर्शने॥

जयार्थेऽपि प्रतिष्ठादौ सर्वसंस्कारकर्मसु।
शुद्धिकामः पुष्टिकामः श्रेयस्कामश्च नित्यशः'॥ इति

यमः — 'पुण्याहवाचनं देवब्राह्मणस्य विधीयते।
एतदेव निरोंकारं कुर्यात् क्षत्रियवैश्ययोः॥

मन्त्रवर्जं हि शूद्राणां कुर्यात्पुण्याहमस्त्विति।
'स्वस्ती' ति वाचनश्चैव 'शुद्धिर' स्त्विति वाचनम्'॥ इति

**वृषोत्सर्जनम्**

एवमेकादशेऽह्नि प्रातः काले स्नात्वा पुण्याहं कृत्वा वृषोत्सर्जनं कुर्यात्।

शंखलिखितौ— 'प्रेतस्यैकादशाहे तु यस्य चोत्सृज्यते वृषः ।
पिशाचत्वादिमुत्तीर्य स्वर्गलोकं स गच्छति' ॥ इति

जाबालिः— 'एकादशाहे षाण्मासे पैतृके च तथैव च ।
वृषोत्सर्जं प्रकुर्वीत परस्तादुक्तकालतः ॥

शुक्रमौढ्यादि दोषेऽपि कुर्यादेकादशेऽहनि ।
प्रेतकार्ये वृषोत्सर्गे मौढ्यदोषो न विद्यते ॥

एकादशाहादन्यत्र प्रातःकाले तु यत्नतः ।
वृषोत्सर्गे कृते यत्र मूढबाल्यादि दोषदम् ।
कार्तिक्यामथ चित्रायां वृषोत्सर्गं प्रयत्नतः' ॥ इति

वृषोत्सर्जनात्पूर्वं नवश्राद्धं कृत्वा वृषोत्सर्जनं कर्तव्यम् ।

संग्रहे :— 'एकादशेऽह्नि संप्राप्ते स्नानं पुण्याहवाचनम् ।
वृषोत्सर्गञ्चाद्यश्राद्धं कुर्यात् षोडशरौद्रकम्' ॥ इति

'अनुत्सृष्टे वृषे नृणां प्रेतत्वं न विमुच्यते ।
एकादशेऽह्नि संप्राप्ते यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि' ॥

'तावको(?)ऽन्त्यवृषोत्सर्गममावास्या गयास्थि च ।
अष्टका च न कर्तव्या यावत्पितरि जीवति' ॥

'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्' ॥

'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

स्वर्गकामी वृषोत्सर्गं नान्दीमुखविधानतः ।
प्रेतार्थन्तु वृषोत्सर्गमेकोद्दिष्टविधानतः ॥

ब्राह्मणान् भोजयित्वाऽथ शक्त्या दद्याच्च दक्षिणाम् ।
शूलं चक्रमथान्यद्वा लाञ्छनं कारयेत्ततः ।
यस्य देवस्य यो भक्तस्तस्य चिह्नं समालिखेत्' ॥ इति

जाबालिः — 'पतिव्रता सुशीला च पुत्रिणी सुभगा मृता ।
नोत्सृजेद्वृषमेकन्तु सहगामुत्सृजेद्वृषम् ॥

पुत्रादन्यो यदा तस्याः श्राद्धकर्ता भवेद्यदि ।
तदैव वृषमुत्सृज्य पश्चात् श्राद्धं समाचरेत् ॥

अपुत्रा तु यदा नारी म्रियते भर्तुरग्रतः ।
वृषोत्सर्गो न कर्तव्यः एका गौर्दीयते तदा ॥

पितुरूर्ध्वं विधिं सम्यक् कृत्वा मातुश्च पुत्रकः ।
वृषमुत्सृज्य पश्चाद्धि पित्रोस्सह सपिंडनम् ॥

पतिपुत्रवती नारी म्रियते चोभयाग्रतः ।
वृषं नोत्सृजते पुत्र इति यत्तदसांप्रतम् ।
जीवपुत्रेण कर्तव्यं सुतेन प्रेतमुक्तये' ॥ इति

स्मृत्यन्तरे — आश्वयुक्पूर्णमास्याञ्च तथा वैशाख एव च ।
कृत्तिकायोगकार्तिक्यामिन्द्वर्कग्रहणे तथा ॥

मेषसंक्रमणे चैव तुलासंक्रमणेऽपि च ।
कर्काटके च मकरे संक्रान्तौ च मृतेऽहनि ।
आषाढ्यामपि यत्नेन पितृभ्यो वृषमुत्सृजेत्' ॥ इति

गृह्यः — 'वृषोत्सर्गविधिं वक्ष्ये येन प्रेतत्वमोचनम् ।
स्नात्वाऽथ वास्तुहोमान्ते प्रेतत्वस्य विमुक्तये ॥

वृषोत्सर्गं करिष्यंस्तु स्थालीपाकवदाचरेत् ।
चरुं पक्त्वाऽऽज्यभागान्ते जुहुा च चरुणा हुनेत् ॥

मयो भूरादिचतुर इहधृत्यादयश्चतुः ।
महीमूषुरिति द्वाभ्यामनूयाजादिगोयुगम् ।
प्रभ्राजमानामित्याद्यैः स्त्रीपुल्लिंगैरलंकृतम् ॥
तुभ्यमग्ने च तिसृभिः कारयेत्त्रिः प्रदक्षिणम् ।
मूलहोमान्तहोमौ च कृत्वा च वृषलाञ्छनम्' ।
'एतं युवान' मित्येनमभिमन्त्र्य वदेदिति ॥
'चतुस्सागरपर्यन्तं देवब्राह्मक्षितीग्त्यजेः ।
यथेष्टं विहरे' 'त्यापोहिष्ठाद्यैर्वात्र वारिणा ॥
प्रोक्ष्योत्सृजेत् गवां मध्ये' 'त्वां गाव' इति च ब्रुवन् ।
अभिमन्त्र्य जपेद्रौद्रं वृषोत्सर्गविधिस्त्वयम्' ॥ इति

अथ प्रयोगः । गोत्रस्य शर्मणः प्रेतस्य अद्य एकादशेऽहनि प्रेतत्व' विमोचनार्थं वृषोत्सर्जनं करिष्यामि इति संकल्प्य आघारं कृत्वा चरुणा होमः । 'मयो भूर्वातो अभिवातो स्रा ऊर्जस्वतीरोषधीरारिशन्तां पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड स्वाहा'—(रुद्रायेत्यादित्यागः) 'यास्सरूपा विरूप' एकरूपा यासामग्निरिष्ट्या नामानि वेद । या अंगिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्यमहि शर्म यच्छ स्वाहा'—'या देवेषु तनुवमैरयन्त यासाँ सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्रगोष्ठेरिरीहि स्वाहा- 'प्रजापतिर्मह्यमेताराणो विश्वैर्देवैः पितृभिस्संविदानः । शिवास्सतीरुपनो गोष्ठमा-कस्तासां वयं प्रजया सँ सदेम स्वाहा'—'इह धृतिस्स्वाहा' 'इह विधृतिस्स्वाहा' 'इह रन्तिस्स्वाहा' 'इह रमतिस्स्वाहा' 'महीमूषु मातरँ सुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीँ सुशर्माणमदितिँ सुप्रणीतिँ स्वाहा' 'सुत्रामाणं पृथिवीं द्यामनेहसँ सुशर्माणमदितिँ सुप्रणीतिम् । दैवीं नावँ स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये स्वाहा' । अत्र याज्यादिगोयुगम् । 'प्रभ्राजमानानाँ रुद्राणाँ स्थाने स्वतेजसा भानि । व्यवदातानाँ रुद्राणाँ स्थाने स्वतेजसा भानि । वासुकिवैद्युतानां रुद्राणां स्थाने स्वतेजसा भानि । रजतानाँ रुद्राणाँ स्थाने स्वतेजसा भानि । परुषाणाँ रुद्राणाँ स्थाने स्वतेजसा भानि ।

श्यामानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। कपिलानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। अतिलोहितानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। ऊर्ध्वानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। अवपतन्तानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। वैद्युतानाँ रुद्राणाँ स्थाने स्वतेजसा भानि। इति पुल्लिंगवचनम्। 'भ्राजमानीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। व्यवदातीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। वासुकि वैद्युतीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। रजतानाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। परुषाणां रुद्राणीनां स्थाने स्वतेजसाभानि। श्यामानाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। कपिलानाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। अतिलोहितीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। ऊर्ध्वानाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। अवपतन्तीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि। वैद्युतीनाँ रुद्राणीनाँ स्थानेस्वतेजसा भानि। इति स्त्रीलिंगवचनम्॥ गोमिथुनमलंकृत्य। 'तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह। पुनः पतिभ्यो जायांदा अग्ने प्रजया सह। पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्याः पतिस्स जीव शरदश्शतम्। 'अश्वा उत त्वया वयं धारा उदन्या इव। अतिगामहेमहि द्विषः। 'आतिष्ठेममश्मानम्' त्रिः प्रदक्षिणम्। मूलहोमान्तहोमौ वृषलाञ्छनम्। 'एतं युवानं परिवो ददामि तेन क्रीडन्तीश्चरत प्रियेण। मानश्शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम। नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि। अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्'। इत्यादि। एनमभिमन्त्र्य 'हे वृषभ पूर्वस्यां दिशि देवब्राह्मणसीमां परिहृत्य तत्रस्थतृणादिकं भक्षयित्वा समुद्रजलं पीत्वा यथेष्टं विहर'। एवं दक्षिणपश्चिमोत्तरादि आपोहिष्ठाद्यैः प्रोक्ष्य गवां मध्ये उत्सृजेत्। 'त्वां गावो वृणत राज्याय त्वाँ हवन्त मरुतस्स्वर्काः। वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि'। मध्यस्थमनुमन्त्रयते। 'नमस्ते रुद्रमन्यव उतोत इषवे नमः' इत्यादि जपेत्।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने द्वादशः खण्डः।

## अथ त्रयोदशः खण्डः

**अथ एकोद्दिष्टं व्याख्यास्यामः ॥ १ ॥**

अथेत्यादि । अथ – तर्पण बलिपिंडदानादिसकलौर्ध्वदैहिकानन्तरम् । **एकोद्दिष्टम्**–एकमुद्दिश्यक्रियमाणम् **व्याख्यास्यामः**–विस्तरसंकोचौ द्योतितौ । नवं पुराणं मिश्रञ्चेति त्रिविधं श्राद्धम् । तत्र नवश्राद्धादि नवम् । आद्यमासिकैकोद्दिष्टं पुराणम् । मासिकं मिश्रम् । प्रायश्चित्तगौरवादयं विभागो गम्यते ॥

हारीतः — 'चान्द्रायणं नवश्राद्धे प्राजापत्यन्तु मासिके ।
एकाब्दन्तु पुराणे तु प्रायश्चित्तं विधीयते' ॥ इति

याज्ञवल्क्यः — 'मृतेऽहनि तु कर्तव्यं प्रतिमासन्तु वत्सरम् ।
प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि' ॥ इति

भवत्रातश्च — 'श्राद्धमेकादशेऽस्मिन् यदि चन्द्रस्तु रोहिणीम् ।
आवहेदुत्तराख्या सा तद्भवेद्द्वादशेऽहनि' ॥ इति

ध्रुवेष्टेति जैमिनिः (?)

'एकादश्यां द्वादश्यां वे' ति बौधायनः ।

स्मृत्यन्तरे — 'न तिथिर्न च नक्षत्रं न ग्रहो न च चन्द्रमाः ।
कुर्यादेवापदि श्राद्धमाद्यमेकादशेऽहनि' ॥ इति

'आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः' ॥ इति

**दशमे चाह्नि अनशनमत्यये गुरुणाम् ॥ २ ॥**

दशमे इत्यादि । मातृपितृज्येष्ठभ्रात्राचार्यादीनां मरणे स्वकर्तृके दशमे चाह्नि अनशनम् ।

**त्रिशुक्लाः कृशवृत्तयो घृणावन्तस्सकलेन्द्रिया मुक्तयोनिदोषाः ब्राह्मणाः पात्रमित्यामनन्ति ॥ ३ ॥**

पात्रलक्षणमाह **त्रिशुक्ला** इत्यादिना । जन्म विद्या कर्म चेति त्रयः त्रिशब्दार्थः । एषु त्रिषु शुक्लाः त्रिशुक्लाः ।

महाभारते — 'येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
ते सेव्यास्तैस्समास्या हि शास्त्रेभ्योऽपि गरीयसी' ॥ इति

**कृशवृत्तयः** – स्पष्टम् । यद्वा
'अत्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः ।
अपरप्रेष्यभावाच्च भूय इच्छन् पतत्यधः' ॥
इति यथा लाभसन्तुष्टाः ।

**घृणावन्तः** — घृणा – दया, तद्वन्तः । **सकलेन्द्रियाः** – करणदोषादिरहिताः ।

**मुक्तयोनिदोषाः**-'स्त्रीशुद्धिरर्थशुद्धिश्च यस्य नास्त्यपि धर्मवान् ।
स नरो नरकं याति शिरश्छेदे कुतो भिषक्' ॥
इत्युक्तवदावश्यकस्त्रीशुद्धिरत्रोच्यते ।

**ब्राह्मणाः** — अनेन दशविधब्राह्मणा यथावर्णिताः गृह्यन्ते ।

**पात्रमित्यामनन्ति** । पतनात्त्रायत इति पात्रम् ।
'यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते' । इति

**एकस्त्रयः पञ्च सप्त नवैकादश वा शक्त्या निमन्त्रिता भवन्ति ॥४**

**एक** इत्यादि — वाशब्दो विकल्पार्थः ।

स्मृतिः — 'आद्यमासिकं एकश्चेत् भुंक्ते ब्राह्मात्स हीयते ।
तेनैकादशधा भित्वा भोजयेदाद्यमासिके' ॥ इति

अत्रिः — 'प्रेतार्थं सूतकान्ते तु भोजयेद्ब्राह्मणान् बहून्
आद्यश्राद्धनिमित्ते तु एकमेकादशेऽहनि' ॥ इति

विज्ञानेश्वरीये — 'वस्त्रालंकारशय्यादिपितुर्यद्वाहनादिकम् ।
गन्धमाल्यैस्समभ्यर्च्य श्राद्धभोक्त्रे प्रदापयेत् ॥

**एकादशदिने मृतकनिमित्तत्वान्नैमित्तिकमेकोद्दिष्टश्राद्धममन्त्रकमाचक्षीरन् । समन्त्रकं संस्कारं कृत्वा कथममन्त्रकम् ॥ ५ ॥**

**एकादशदिन** इत्यादि ।

'एकोद्दिष्टं द्विजः कुर्यान्मृतस्यैकादशेऽहनि ।
तत्र श्राद्धं न कुर्याच्चेत् पुनस्संस्कारमर्हति' ॥ इति

वसिष्ठः — 'यत्कृतं प्रेतमुद्दिश्य नवश्राद्धादिकं क्वचित् ।
अकृतं तद्विजानीयात् एकोद्दिष्टं विना कृतम्' ॥ इति

**तस्मात्सपिण्डीकरणवच्छ्रुत्वा श्राद्धमित्येतत् ॥ ६ ॥**

अत्रायं प्रयोगः — दशमेऽहनि रात्रावेकादशब्राह्मणान् एकं वा 'पितुर्गोत्रस्य शर्मणः प्रेतस्य एकोद्दिष्टश्राद्धे भोक्ष्यता'मिति निमन्त्र्यावसेत् । **बोधायनः** । 'एकोद्दिष्टेष्वयुग्मान् ब्राह्मणानसंबद्धान् परेद्युः प्रातरेव निमन्त्रयीत । तस्य क्षुरकर्म भवति स्नानञ्चेति । निमन्त्रितेऽध्वानं गते श्वानं पुनर्हुत्वा (?) च वासं करोति यद्ग्रामसूकरसंगमात्' इति ॥ एवंगुणविशेषणविशिष्टायां पुण्यतिथौ गोत्रस्य शर्मणः प्रेतत्वमोचनार्थं एकोद्दिष्टश्राद्धं करिष्यामीति संकल्प्य पुनरपि वरणं कृत्वा पादप्रक्षालनार्थमवटं कुर्यात् ।

विष्णुयामले — 'श्राद्धस्य चैककुंडं स्याद्गजपादेन लक्षणम् ।
सापिंड्यस्य त्रिकुंडं स्यात् वृत्ताकारन्तु दक्षिणम् ॥

त्रिकोणं मध्यमं कुंडमुत्तरं चतुरश्रकम् ।
आयामं तस्य विस्तारं तदर्धं खननं भवेत् ।
न्यूनातिरेकं यः कुर्यात् स भवेत्पितृघातुकः' ॥ इति

व्यासः — 'उदक् खनेत्तु देवानां मध्ये तु पितॄणां खनेत् ।
दक्षिणे तु निमित्तस्य त्र्यवटान्निखनेत्क्रमात्' ॥

'चतुरश्रन्तु देवानामुत्तरे पितॄणां मध्ये वृत्तं निमित्तस्य दक्षिणे त्रिकोणमेवं दक्षिणान्तं निखने' दिति ।

'नान्तः प्रक्षालयेत्पादौ दैवे पित्र्ये च कर्मणि ।
नोत्तरे दक्षिणे चैव पश्चिमे न गृहान्तरे ॥

सपिंडीकरणादूर्ध्वं कुंडप्रक्षालनं यदि ।
कुलक्षयकरं चैव नरके पातयेद्ध्रुवम् ।
सपिंडीकरणादर्वाक् कुंडमेव विधीयते ॥

एकोद्दिष्टसपिंडाभ्यामन्यश्राद्धे तु मोहतः ।
पादप्रक्षालनं कुंडे कुलक्षयकरं भवेत् ॥

प्रांगणे मंडलं कुर्याद्देवानां चतुरश्रकम् ।
वितस्तिमात्रं पित्रर्थे दक्षिणे वर्तुलं भवेत्' ॥ इति

अत्र त्रिकोणं निमित्तस्यैकमेव निखनेत्

'कुंडानि निखनेच्छ्राद्धे येनकेनापि शंकुना ।
आयसेन खनेच्चेत्तु निराशाः पितरो गताः' ॥ इति

एवं त्रिकोणगर्ते पादौ प्रक्षाल्याचम्य कृसरं तांबूलञ्च दत्वा अभ्यंगञ्च दत्वा स्नानाय विसृजेत् । दर्भेण स्थालीं बद्ध्वा 'प्रेताय जुष्टं निर्वपा' मीति तंडुलं निर्वाप्य लौकिकाग्नौ सतिलमोदनमेवं कव्यं पाचयेत् । ततः कर्ता पादौ प्रक्षाल्याचम्य 'पितुः गोत्रस्य शर्मणः प्रेतस्य मरणदिनादारभ्य एकादशेऽहनि कर्तव्यमेकोद्दिष्टश्राद्धं करिष्ये' इति संकल्प्य दक्षिणप्रवणे देशे स्थंडिलं कृत्वा तूष्णीमुल्लिख्यावोक्ष्य दक्षिणतो दक्षिणाग्रेषु दर्भेषु प्रोक्षणीपात्रमावाहनपात्रमाज्यस्थालीं दर्वीमौदुंबरसमिधं दर्भांश्च एकैकशस्सादयित्वा एकपवित्रमादाय प्रोक्षणीपात्रे तूष्णीं न्यस्य जलेनापूर्य तूष्णीमुत्पूय इध्मादीन् प्रोक्ष्य दर्भैरप्रदक्षिणं परिस्तीर्य आज्यस्थालीमादायाज्यं गृहीत्वा एकपवित्रेणोत्पूय दर्भोल्कं दर्शयित्वा पवित्रमग्नौ प्रक्षिप्य औदुंबरीं समिधमग्नौ क्षिप्त्वा तूष्णीं दर्वीमादाय घृतचर्वोः तूष्णीं

विहरणं कृत्वा दक्षिणतः आवाहनार्थमेकं पात्रं संस्थाप्य एकपवित्रं निक्षिप्य तिलानवकीर्य 'गोत्रं शर्माणं प्रेतं यममावाहयामि' इत्यावाह्य 'गोत्राय शर्मणे प्रेताय यमाय मुष्टं निर्वपामि' इति निर्वापणं कृत्वा आज्यचरू तानिदुक्के दर्शयित्वा उल्मुकमग्नौ प्रक्षिप्य तूष्णीं त्रिधा संवपनाहुतिं हुत्वा तूष्णीमाघारौ आसाव्य हुत्वा आज्यभागौ च हुत्वा औदुंबरीं समिधमादाय मूलाग्राभ्यां घृतं स्पर्शयित्वा तिलाज्यचरुभिरभ्यर्च्य अप्रदक्षिणं परिषिच्य 'एतं गोत्राय शर्मणे प्रेताय यमाय च स्वाहा' इति दक्षिणाग्रं हुत्वा एवमेव निरुप्तमाज्यं हुत्वा अप्रदक्षिणं परिषिच्य दर्भानग्नौ प्रहृत्य 'मन्त्रहीनं क्रियाहीन'मित्यादिनोपस्थाय प्रणामं कुर्यात् ।

**ततः स्नातानुलिप्तानहते वाससी वसानान् स्रक्कुंडलांगुलीयकधारिणो दक्षिणामुखान् प्राचीनावीतिनो दक्षिणाग्रेषु दर्भेषु सतिलेष्वासनेषु दक्षिणतोऽग्नेर्निवेश्य मापसव्यं वाचयनः सिकताभिरुदक्प्रागपरमरत्निमात्रं विनस्त्यायतं दक्षिणतो मागोन्नतं स्थानं कल्पयेत् ॥ ८**

ततः इत्यादि । दक्षिणामुखान् आसयित्वा 'अपेतवीते'ति संमृज्य । 'अक्रन्निमं प्रेतो लोकमस्मै' इति, स्त्रीविषये 'प्रेता लोकमस्मै' इति । 'अपहता असुरा' इत्यारभ्य 'यत्रास्य गतं मनः' इत्यन्तेन मन्त्रेण उल्लिख्योद्धृत्य 'उदीरतामवर उत्पर उन्मध्यमः प्रेतस्सौम्यः । असुंय इयायावृकं ऋतज्ञस्सनोऽवतु प्रेतो हवेषु' * इति जलेनाभ्युक्ष्य यथासनं मडलान्युपलिप्य अर्घ्यपात्रमादाय एकपवित्रं निक्षिप्य 'शन्नो देवी'रिति जलेन पूरयित्वा 'तिलोऽसि सोमदेवत्यो गोसवः प्रेतनिर्मितः । प्रत्नवद्भिः प्रत्नय एहि' इति तिलान् निक्षिप्य अर्घ्यपात्रे 'इमे तिलाः' 'इमे गन्धाः' 'इमानि पुष्पाणि' इत्यभ्यर्च्य 'उशन्तस्त्वा हवामहे' इत्यारभ्य 'प्रेतं हविषे अत्तवे' 'आयाहि प्रेत सौम्य' इति तिलदर्भेण 'गोत्रं शर्माणं प्रेतमावाहयामि' इत्यावाह्य 'अस्त्वासन'मित्यासनं 'या दिव्या' इत्यर्घ्यं 'अर्चत प्रार्चे'तेत्यर्चनं 'गन्धद्वारा'मिति गन्धं 'आयनेते' इति

---

* 'उदीरतामवरोत्परोन्मध्यमा प्रेता सोम्या । अमुं येयायावृकर्तज्ञा मानोऽवतु प्रेता हवेषु' इति स्त्रीणाम् ।

पुष्पाणि, 'धूर' सीति धूपं 'उद्दीप्य' स्वेति दीपं दत्वा सकलाराधनैस्त्वर्चितं कुर्यात्। सापसव्यमित्यादि। पिंडस्थानं कल्पयित्वा

**निधायौदुंबरीं शाखां पूर्ववत् दर्भेणापसव्यं कृत्वा खननं तिलानामुक्षणमयुग्मानां दक्षिणाग्रं बर्हिषामुदुंबरपत्राणाञ्चास्तरणम् ॥९॥**

निधायेत्यादि। पिंडस्थाने तूष्णीमौदुंबरशाखया संमृज्य अयुग्मोदुंबर-पत्रदर्भतिलास्तरणम् ॥

**तत्र सतिलाक्षतं पुष्पमेकं निधाय गोत्रनामादिना तस्यार्च-नम् ॥ १० ॥**

तत्रेत्यादि। दर्भास्तृते देशे। 'गोत्रं शर्माणं प्रेतमावाहयामि' इत्यावाह्य तिलैरभ्यर्चयेत्

**अभिघार्य कव्यस्थालीं तिलोदनेन अंगुलाग्रेषु सूक्ष्मं पिंडं कृत्वा पवित्रपाणिरवांगुष्ठजानुभ्यां भूमिं पीडयन्निर्वपति ॥ ११ ॥**

अभिघार्येत्यादि। पिंडं कृत्वा 'गोत्र शर्मन् प्रेत इमं पिंडं निर्वपामी'ति निर्वपति। ततः शूर्पेणाच्छाद्योपरि तिलदर्भान् न्यस्य आचामति ॥

**वस्त्रोत्तरीयादि दध्युपदंशबदरप्रभृति भक्ष्यं मुखवासञ्चार्प-येत् ॥ १२ ॥**

**सतिलाक्षतपवित्रमुदकुंभं निदध्यात् ॥ १३ ॥**

**शूर्पेणाच्छाद्य पिंडमुपरिष्टात् सतिलाक्षतं पुष्पं दर्भेण निद-ध्यात् ॥ १४ ॥**

**तदीयं वस्त्रं कांस्याद्युपानच्छत्रञ्च सर्वं निवेद्य तेभ्यो दानम् ॥ १५ ॥**

**पिंडशेषादि पात्रेषु तेषामभिघार्यार्पयित्वा 'भुञ्जता' मित्यं-गुष्ठमूलं गृहीत्वा भोजनं पूर्ववत् ॥ १६ ॥**

पिंडशेषादीत्यादि । पूर्ववत् । 'देवसवितः प्रसुवे'ति प्रोक्षणं परिषेकः, 'पृथिवी ते पात्रं 'इदं विष्णुर्विचक्रमे' 'विष्णो अन्नं रक्षस्व गोत्र शर्मन् प्रेत, इदमन्नं सपरिकरं तव तृप्त्यै तिष्ठतु' इति दत्वा आपोशनदानं भोजनञ्च ॥

**उच्छिष्टमपनीय बहिर्दक्षिणस्यामवटे प्रक्षिप्य सह पिंडेन तज्जलं स्रावयेत् ॥ १७ ॥**

**वायसेभ्यो बलिदानम् ॥ १८ ॥**

**अथवा श्वचंडालानुपहते देशे विसर्जनं पिंडस्य ॥ १९ ॥**

**श्येनकाकादीन् न वारयेत् ॥ २० ॥**

**यस्मात्तद्रूपाः पितर आगच्छन्ति ॥ २१ ॥**

**स्नात्वा स्वस्तिवाचनमक्षय्यदानमौपासनहरणं वैश्वदेवञ्च कुर्यात्पूर्ववत् ॥ २२ ॥**

**एकोद्दिष्टमिति ॥ २३ ॥**

एकोद्दिष्टमित्यादि । ब्राह्मणाभावे

गृह्यः— 'अशक्तौ ब्राह्मणाभावे .... स्मिन् वा लौकिकानले ।
अभ्यर्च्य विप्रवद्धोमे द्वात्रिंशत्कबलाहुतीः ॥

द्विवारं पुरुषसूक्तेन'यत्ते कृष्णे'ति वा पुनः ।
'उदीर'तेत्यष्टभिर्वा चतुर्वारं हुनेत वै ।
प्रेतोपकरणादीनि ब्राह्मणाय निवेदयेत्' ॥ इति

पूर्ववत् तूष्णीमग्निमुखादिकं कृत्वा प्रेताहुतिं हुत्वा पुरुषसूक्तश्चेत् द्विवारं, 'यत्ते कृष्ण' इति चेत् द्वात्रिंशत्, 'उदीरते'त्यष्टभिश्चतुर्वारं हुत्वा उत्तरं परिषिञ्चेत् । प्रयोगश्च । ब्राह्मणाभावात् एवंगुणविशेषणविशिष्टायां तिथौ अग्नावेकोद्दिष्टश्राद्धं करिष्ये इति संकल्प्य 'एकोद्दिष्टश्राद्धे भोक्ष्यता' मित्यग्नेर्वरणं पादप्रक्षालनादिसर्वोपचारानग्नावेव कृत्वा द्वात्रिंशत्कबलाहुतीर्हुत्वा परिषिच्य पिंडप्रदानं कृत्वा उद्वासयेत् । अनन्तरं स्नात्वा जलादिकं स्पृशेत् ।

तथा – 'विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनादिकम् ।
वैश्यः प्रतोदमग्निं वा यष्टिं शूद्रः कृतक्रियः' ॥ इति

कात्यायनः – 'प्रदद्याद्दक्षिणां तेभ्यस्सर्वेभ्यस्त्वनुपूर्वशः ।
यथाशक्ति प्रदद्यात्तु गोभूहेमादिकं तथा ॥
अक्षय्यं वाचयित्वा तैः प्रणम्यैतान् प्रसाद्य च ।
भुक्तशेषमनुज्ञाप्य स्वदायास्ताननुव्रजेत्' ॥ इति

याज्ञवल्क्यः 'एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
'उपतिष्ठता'मक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यता'मिति वदेत् ब्रूयु 'स्तेऽभिरतास्स्महे' ॥ इति

'भुंजीतपितृसेवित'मित्यस्यैकोद्दिष्टविशेषे निषेधः स्मर्यते ।
'नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितश्च यत् ।
दंपत्योर्भुक्तशिष्टश्च न भुंजीत कदाचन' ॥ इति

संग्रहे 'आशिषो द्विगुणा दर्भाः जपादि स्वस्तिवाचनम् ।
पितृशब्दस्य संबन्धः शवशब्दस्तथैव च ॥
पात्रालंभोऽथ दाहश्च (उपपात्रश्च) उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नस्सविकिरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणविसर्गौ च सीमान्तगमनं तथा ।
अष्टादशपदार्थाश्च प्रेतश्राद्धे विसर्जयेत्' ॥ इति

इति श्रीमत्कौशिकवंशयेन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ पञ्चमप्रश्ने त्रयोदशः खण्डः ।

## अथ चतुर्दशः खण्डः

अथ तथा मासिमासि तद्दिने पिंडनिर्वापः ॥ १ ॥

अथेत्यादि। अथ एकोद्दिष्टानन्तरम्। तद्दिने—मरणदिने। पिंड-निर्वापः—ब्राह्मणभोजनादिकमुपलक्ष्यते 'एकं पिंडं निरुप्यैकं भोजये'दिति मासिश्राद्धप्रकरणे उक्तम्। अत्रापि 'पूर्ववदेकोद्दिष्ट'मित्युक्तत्वाच्च। एतानि प्रेतश्राद्धानि प्रतिमासं सपिंडीकरणात्पूर्वं वा कर्तव्यानि। उक्तञ्च—

यमः— 'यस्यैतानि न कुर्वन्ति एकोद्दिष्टानि षोडश।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपी'ति ॥

पैठीनसिः— 'षाण्मासिकाब्दिकश्राद्धे स्यातां पूर्वेद्युरेव ते।
मासिकानि मृताहे स्युर्दिवसे द्वादशेऽपि वा' ॥ इति

व्यासः 'द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके।
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः'।
प्रथमं द्वादशेऽह्नि स्यान्मास्यूने तूनमासिक'मिति ॥ इति

गोभिलः 'ऊनषाण्मासिकं षष्ठे मासार्धे ह्यूनमासिकम्।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा' ॥ इति

र्णाजनिः— 'ऊनान्यूनेषु मासेषु त्रिषमाहेषु तानि वै।
त्रैपक्षिकं त्रिपक्षे स्याद्विषमेषु दिनेषु तत्' ॥ इति

गौतमः 'एकद्वित्रिदिनैरूने त्रिभागैरून एव वा।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः' ॥ इति

गालवः— 'त्रिभिर्वा दिवसैरूने एकेन द्वितयेन वा।
आद्यादिषु च मासेषु कुर्यादूनानि वै द्विजः' ॥ इति

सायणीये — 'त्रैपक्षिकोनषाण्मासे ऊनाब्दिकमथाचरेत् ।
एतेषामेव काले तु न पुनः करणं भवेत् ॥

आद्यं त्रैपक्षिकञ्चैव ऊनषाण्मासिकं विना ।
मासिकानि पुनः कुर्यात् स्वे तु काले यथा विधि ॥

त्रिपक्षादिषु कालेषु सापिंड्यं यश्चिकीर्षति ।
अवशिष्टमास्यानामपकर्षो भवेत्तदा ॥

एकोद्दिष्टं नवश्राद्धं श्राद्धान्यपि च षोडश ।
एकस्मिन् दिवसे कुर्यादेकोद्दिष्टन्तु निष्फलम्' ॥ इति

मरीचिः — 'मुख्यश्राद्धं मासिमासि अपर्यस्तामृतुं प्रति (?) ।
द्वादशाहेन वा भोज्यं एकाहे द्वादशोऽथवा (?) ॥

एकादशाहं प्रक्रम्य प्रत्यहञ्चैव मासिकम् ।
मासान्तर्गतकार्याणि तन्मासिकदिने चरेत् ।
एकादशेऽह्नि कुर्वाणस्सर्वञ्चैकदिने चरेत' ॥ इति

मासिकान्यप्येकोद्दिष्टदिवसे चेत् । आद्यमासिकोनमासिकद्वितीयमासिक-त्रैपक्षिक तृतीयमासिक चतुर्थमासिक पञ्चममासिक षाण्मासिकोनषाण्मासिक सप्तम-मासिकाष्टममासिक नवममासिक दशममासिकैकादशमासिकोनाब्दिकपर्यन्तानामे-कोद्दिष्टवत् ब्राह्मणभोजनं होमं पिंडप्रदानञ्च समानतंत्रेण कुर्यात् ।

'आद्यं पृथक्कृतञ्चापि पुनः कुर्यात्तु मासिकैः ।
मासिकानां द्विरावृत्तिः पुनरित्याह गौतमः ।
हुतेऽग्नौ तु पुनश्चैकादशविप्रान् निमन्त्रयेत्' ॥ इति

याज्ञवल्क्यः — 'अर्वाक् सपिंडीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे' ॥ इति

'द्वादशाहःप्रभृत्यस्य तृप्तये चान्नसंयुतम् ।
दद्यादहरहः कुंभं जलपूर्णन्तु तत्परम्' ॥ इति

अथ सोदकुंभश्राद्धम् ।

'प्रेतलोके तु वसतिः नृणां वर्षं प्रकीर्तितम्
क्षुत्तृष्णे प्रत्यहं तस्य भवेतां भृगुनन्दन' ॥ इति

मार्कंडेयः— 'यस्य संवत्सरादर्वाक् सपिंडीकरणं कृतम् ।
मासिकं सोदकुंभञ्च देयं तस्यापि वत्सरम्' ॥ इति

गौतमः— 'अथैनं पार्वणं श्राद्धं सोदकुंभमधर्मकम् (?) ।
कुर्यात्प्रत्याब्दिकश्राद्धात् संकल्पविधिनाऽन्वहम् ॥
आवहनाग्नौ करणं स्वधानिनयनं तथा ।
विकिरं पिंडदानञ्च संकल्पे परिवर्जयेत्' ॥ इति

**मासे तैलसंपर्कः ॥ २ ॥**

**तृतीये वा मंगलयोगो भवति ॥ ३ ॥**

**तृतीय** इत्यादि । **मंगलम्**—स्रक् चन्दनादयः । 'कृते सपिंडीकरणे च पित्रोर्न ब्रह्मचर्यं परिरक्षणीय'मिति वचनम् । भवतीति । वाशब्देन कालान्तरमपि गम्यते ॥

**यस्मादेकोद्दिष्टात् त्रिमासः षण्मासो वत्सर इति वा प्रेताध्यायनकालः । तस्मात्तेषु कालेष्विष्टकाले 'पितृस्थानगताय' इति क्रमेण त्रिभिः पिंडैः तस्य पिंडस्यारोपणं सपिंडीकरणं कुर्यात् ॥ ४ ॥**

यस्मादेकोद्दिष्टादित्यादि । वा—सपिंडीकरणस्य संवत्सरान्ते कर्तव्यस्य शरीरस्य अनित्यत्वाद्वा—'यस्मात्प्रेतपुरं प्रेतो द्वादशाहनि नीयते' इति वचनाद्वा—'संवत्सरप्रतिमा वै द्वादशरात्रय' इति श्रुतेर्वा द्वादशाहादिकालेषु सपिंडीकरणं कर्तव्यमित्यभिप्रायेणोक्तम् ॥

स्मृत्यन्तरे:— 'एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासिके ।
षष्ठे वैकादशाब्दे वा मासे वापि शुभागमे ॥
सपिंडीकरणं कुर्याद्देशकालाद्यपेक्षया ।
एकादशादित्रिदिने एकाहस्य द्वितीयके ॥

त्रयोदशेऽह्नि मासे वा त्रिपक्षे वा तृतीयके ।
षष्ठे वैकादशे मासे वत्सरे वा शुभागमे ॥

पिंडप्रवेशनं कुर्याद्येन लुप्तं न जायते ।
एकादशादित्रिदिने मासान्ते वापि यश्चरेत् ॥

न तारवाराद्विशुद्धिरन्यत्र तु विचारयेत् ।
साग्निकस्तु यदा कर्ता पुत्रो वाप्यग्निमान् भवेत् ॥

द्वादशाहे सदा कार्यं सपिंडीकरणं पितुः ।
अन्येषामपि सर्वेषां द्वादशाहो विशिष्यते' ॥ इति

काष्र्णाजनिः— 'सपिंडीकरणं कुर्यात्पूर्ववच्चाग्निमान् द्विजः ।
परतो दशरात्राच्चेत् कुहूरब्दोपरि ततः (?) ॥

एकादशाहमारभ्य यावदाषोडशाद्दिनात् ।
करणं कुर्यात् ततस्सप्तदशेऽहनि ॥

एकोद्दिष्टस्य दिवसे सपिंडीकरणं विना ।
श्राद्धं कुर्यात् पितृक्रोधात्स खलु ब्रह्महा भवेत्' ॥ इति

बृहस्पतिः— 'द्वादशाहादिकालेषु सपिंडीकरणं न चेत् ।
तत्र प्रशस्तसमयं परिशोध्य समाचरेत्' ॥ इति

प्रजापतिः— 'एकादशेऽह्नि विप्राणां द्वादशेऽहनि वा चरेत् ।
आशौचान्ते भवेद्राज्ञां वैश्यानां तु सपिण्डनम्' ॥ इति

भविष्यत्पुराणे— 'द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशेऽपि वा मासि मंगलं स्यादुपस्थितम्' ॥ इति

व्याघ्रः— 'आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते' ॥ इति

हारीतः— 'या तु पूर्वममावास्या मृतौ स्याद्दशमी भवेत् ।
सपिंडीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्' ॥ इति

प्रचेताः　'एकादशाहे कुर्वीत साग्निकस्तु सपिंडनम् ।
द्वादशाहादिकालेषु साग्निकोऽनग्निकोऽपि वा ॥

द्वादशाहातिक्रमे ....　....　।
....　.... प्रेतश्चेदाहितो भवेत् ॥

....　.... कर्ताऽनग्निर्यथा भवेत् ।
सपिंडीकरणं तस्य कार्यं पक्षे तृतीयके ॥

आशौचान्ते भवेद्राज्ञां वैश्यानाञ्च सपिंडनम् ।
शूद्राणाञ्च दशाहे तत्कर्ता तत्कालतः शुचिः' ॥ इति

विष्णुः　मन्त्रवर्जं हि शूद्राणां द्वादशाहे सपिंडनम् ।
एकादशादित्रिदिने एकाहस्य द्वितीयके ॥

त्रयोदशेऽह्नि वा मासे त्रिपक्षे वा तृतीयके ।
षष्ठेवैकादशे मासि वत्सरे वा शुभागमे ॥

सपिंडीकरणं कुर्याद्येन लुप्तिर्न जायते ।
सपिंडीकरणात्प्रेते पैतृकं पदमास्थिते ॥

आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते ।
ज्येष्ठपुत्रोऽनग्निमांश्चेत् कनिष्ठस्त्वग्निमान् यदि ।
कनिष्ठ एव कुर्वीत मातापित्रोस्सपिंडनम्' ॥ इति

पैठीनसिः　'सपिंडीकरणं पुत्रः पितुः कुर्वीत योऽग्निमान् ।
अनग्निस्तु क्रियां नान्यामेकोद्दिष्टादृते क्वचित् ॥

ज्येष्ठपुत्रोऽनग्निमांस्स्यात् कनिष्ठस्त्वग्निमान् भवेत् ।
ज्येष्ठेनैव तु कर्तव्यं कनिष्ठोऽग्नौ जुहोत्यथ' ॥ इति

**तस्मात्** – प्रेतत्वविमोचनकारणात् । प्रेतपिंडं गृहीत्वा त्रिधा विभज्य 'पितृस्थानगतायेति क्रमेण त्रिभिः पिंडैः तस्य **पिंडस्यारोपणं कुर्यात्** । अनेन सपिंडीकरणप्राधान्यमुक्तम् ।

**वैश्वदेवाऽघारं श्रपणं पूर्ववत् तिलोदनस्य ॥ ५ ॥**

**वैश्वदेवाघारं** इत्यादि । **पूर्ववत्**—अष्टकावत् । **सपिंडीकरणप्रयोगः** । 'पितुः गोत्रस्य शर्मणः प्रेतस्य प्रेतत्वविमुक्तिद्वारा वस्वादिपुण्यलोकप्राप्त्यर्थं तत्पितृपितामहप्रपितामहैः सह समानोदकक्रियासिद्ध्यर्थं पितामह प्रपितामहादीनां गोत्राणां शर्मणां वसुरुद्रादित्यरूपाणां पार्वणविधानेन पितुः गोत्रस्य शर्मणः एकोद्दिष्टविधानेन च एवमुभयात्मकं सपिंडीकरणमन्त्रेन हविषा पार्वणविधानेन अद्य करिष्ये' इति संकल्प्य पूर्वेद्युरेव विश्वेदेवार्थं द्वौ पित्रर्थं त्रीन् निमित्तार्थमेकं विष्ण्वर्थमेकमित्येवं वरयेत् ।

स्मृत्यन्तरे — 'सपिंडीकरणे विष्णुं नित्यमभ्यर्चयेद्द्विजः ।
सप्तकन्तु तदाख्यातं विना विष्णुं कथं तथा ॥

यत्किञ्चित्पार्वणश्राद्धं तत्र सर्वत्र वै द्विजः ।
यजेत विष्णुमित्येवं श्राद्धं सिद्ध्यति नान्यथा' ॥ इति

गृह्यः — 'पितुर्मरणमारभ्य द्वादशे दिवसे सति ।
पितामहादिभिस्सार्धं सापिंड्यस्य प्रसिद्धये ॥

समानोदकभावस्य सिद्ध्यर्थञ्चापि तत्सुतैः ।
पितामहानामन्येषां विधिना पार्वणेन तु ॥

स्वपितुः प्रेतभूतस्य एकोद्दिष्टविधानतः ।
इत्थञ्च पार्वणैकोद्दिष्टाभ्यामुभयरूपकम् ॥

सपिंडीकरणश्राद्धं पितृपूर्वमुदीरितम् ।
प्रेतपूर्वं वदन्त्येके तदसांप्रतमीरितम् ॥

विश्वेदेवार्चनं कृत्वाऽनन्तरं पितृपूजनम् ।
एकोद्दिष्टे निषिद्धन्तु यदस्यावहनादिकम् ।
तत्सपिंडीकृते त्वेकोद्दिष्टं... समाचरेत्' ॥ इति

एवं विश्वेदेवानां पितॄणामेकमेकं वा ब्राह्मणवरणं कुंडलये पूर्ववत् पादप्रक्षालनं कृत्वा आचम्य कुसरतांबूलादिकं अभ्यंगञ्च दत्वा स्नानार्थं विसृजेत्। ततो वैश्वदेवाधारं कृत्वा पूर्ववत् तिलोदनं कव्यमाविद्ध्य पाचयित्वा स्नात्वा आगतान् आहूय पूर्ववत्पादौ प्रक्षाल्याचम्य उक्तस्थानेष्वासयित्वा अष्टकावत् विश्वदेवयोः पितॄणां विष्णोश्च अर्घ्यावाहनादिकं एकोद्दिष्टवत् निमित्तस्य च पूजादिकं कुर्यात् । तत्र पितॄणामर्घ्यकाले,

याज्ञवल्क्यः— 'गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
'ये समाना' इति द्वाभ्यां शेषं पूर्ववदाचरेत्' इति

एवं पित्रर्घ्यपात्रेषु प्रेतपात्रोदकं 'ये समाना' इति किञ्चित् संयोज्य करणार्घ्यानि (?) दत्वा पूर्ववदभ्यर्च्य होममारभेत ।

अत्र स्मृतिः— 'पित्रोस्सपिंडीकरणे पार्वणे च विशेषतः ।
औपासनाग्नौ होमः स्यात् अन्येषां लौकिके भवेत् ॥
मातुस्सपत्न्यास्सापिंड्यं कुर्यादौपासने यदि ।
पुनर्विवाहः कर्तव्यो लौलिके न तु वैदिके ॥
पित्रोस्सपिंडीकरणं कार्यमौपासनेन तु ।
मातापित्रोर्विनाऽन्येषां लौकिकाग्नौ समाचरेत्' ॥ इति

'विश्वेभ्यो देवेभ्यो जुष्ट'मिति चरुं 'पितृभ्यो जुष्ट' मिति तिलोदनञ्च पचेत् । दक्षिणत उद्वास्य छुल्याञ्चेदत्राधिश्रित्य दक्षिणत उद्वासयेत् ।

**वैश्वदेवं हुत्वा प्राचीनावीती 'वीति होत्रं' इति समिधं कव्यमाविद्ध्य दग्ध्वा 'पृथिवीगतान्' 'अन्तरिक्षगतान्' दिविगता' निति पितॄणामावाहनम् ॥ ६ ॥**

**जुष्टाकारादि संत्रापनान्तं कर्म कुर्यात् ॥ ७ ॥**

वैश्वदेवमित्यादि । अग्नौ होमं करिष्य इत्युक्त्वा 'कुरुष्वे'ति तैरनुज्ञातः अग्निं परिषिच्य पूर्ववद्वैश्वदेवं पैतृकञ्च हुत्वा प्रेतार्थं समिधं कव्यमाविद्ध्य दग्ध्वा

'वीतिहोत्रमित्यादि तूष्णीं कृत्वा पूर्ववत्पिण्डं दत्त्वा शूर्पेणाच्छाद्य ब्राह्मणान् भोजयेत्। एकोद्दिष्टवत् प्रेतस्य होमं पिण्डं च दत्त्वा सर्वमुक्तमाचरेत्।

गृह्यः — 'नाम्ना होमं पितृभ्यश्च प्रेताय चरुणा हुनेत्' इति विशेषः।

**अक्षतादिनाऽर्चयित्वा तिस्रः समिधः 'अग्नये कव्यवाहनाय स्वधानमस्स्वाहा' इत्युत्तरस्यां 'सोमाय पितृमते स्वधा नमस्स्वाहा' इति दक्षिणतः 'यमाय चांगिरस्पतये स्वधानमस्स्वाहा' इति मध्ये चक्षुरास्यमिति होमश्च ॥ ८ ॥**

**'एते य इह पितरः' 'उशन्तस्त्वा' 'मा नो ददातु' इत्यृचः पितृदेवत्या हुत्वा 'पृथिवीगतेभ्यः पितृभ्यः' 'अन्तरिक्षगतेभ्यः पितामहेभ्यः' 'दिवि गतेभ्यः प्रपितामहेभ्यः' इति जुहुयात् ॥ ९ ॥**

स्मृत्यन्तरे — 'अक्रमेण मृतानाञ्च सपिंडीकरणं यदि।
यदि माता यदि पिता .... .... .... ।
चतुर्णां निर्वपेत्पिंडान् इति (?) पिंडैर्नियोजयेत्' ॥ इति

सुमन्तुः — 'त्रयाणामपि पिंडानामेकेनापि सपिंडने।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने चतुर्दशः खण्डः।

## अथ पञ्चदशः खण्डः

पूर्ववद्यथोक्तस्थाने 'निहन्मि सर्व'मिति तिलोदुंबरपत्रदर्भाना-स्तीर्यार्चयित्वा पितृंस्तत्स्थानात्प्रमुखतः तस्य च स्थानं कृत्वा तथैव तन्नाम्नाऽर्चयति ॥ १ ॥

पूर्ववदित्यादि । पूर्ववत् — एकोद्दिष्टवत् सिक्ताभिरुदक्प्रागपरमरत्नि-मात्रं वितस्त्यायतं दक्षिणतो भागोन्नतं स्थानं कल्पयित्वा तत् पिंडस्थाने । अर्च-यित्वा — आवाह्यार्चयित्वा । तस्य च — प्रेतस्य च । तथैव — पित्रादिवत् । 'प्रमुखतः पितृस्थानस्यैशान्ये नाम्नाऽर्चयति' इत्युक्तत्वात् । न(?) मन्त्रः । 'आम आगच्छ'त्विति भास्करादिभिरुक्तम् ॥

'आमा वाजस्ये'ति पात्रं संक्षालयति ॥ २ ॥

तत्र 'अग्निरिन्द्रा' इत्यन्नं निक्षिप्य सतिलं चरुं चतुर्धा कृत्वा पिंडान् करोति ॥ ३ ॥

'अयमोदन' इति पिंडांस्त्रीन् प्रधानान् निर्वपति ॥ ४ ॥

अयमोदन इत्यादि । त्रीन् प्रधानानिति — 'प्रथमं ये मृताः' इत्यादि-वक्ष्यमाणत्वात् प्रेतपिंडस्य ज्ञातिवर्गपिंडेन सह संयोजनासंभवात् प्रधानाः पित्रादित्रय उद्दिश्यन्ते । पितामहे जीवति प्रपितामह प्रप्रपितामह वृद्धप्रपितामहानामेव पिंडदानम् । प्रपितामहादयः पित्रादिशब्दवाच्या भवन्तीति ज्ञापयितुं 'प्रथमं ये मृता' इत्यादि वक्ष्यते ॥

प्रथमं ये मृतास्ते पितर उच्यन्ते ॥ ५ ॥

तत्पूर्वमृताः पितामहाः ॥ ६ ॥

तेषां पूर्वमृताः प्रपितामहाः ॥ ७ ॥

तेभ्यः परे ज्ञातिवर्गा भवन्ति ॥ ८ ॥

**तस्मात्तेषां चतुर्णां पिंडनिर्वापः क्रमेण भवति ॥ ९ ॥**

तस्मादित्यादि । उक्तञ्च

'चतुरो निर्वपेत्पिंडान् पूर्वं तेषु समापयेत् ।
ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते' ॥ इति

तस्मात् – 'लेपभाजश्चतुर्थाद्या' इत्यस्मात्कारणात् ॥

**तस्य च स्थाने तथैव पिंडमेकं निर्वाप्य 'पितृस्थानगताय' इति तत्पिंडं त्रिधा कृत्वा पिंडे पिंडे तदेकैकभागं निक्षिपति ॥ १० ॥**

तस्य चेत्यादि । प्रेतस्य च स्थाने । तथैव – एकोद्दिष्टवत् । प्रेतबहुत्वेऽपि स्थानमेकमेव । अन्यथा चेदनवस्था स्यात् – अनुक्तत्वात् – योग्यतासंभवाच्च स्थानमेकमेव । पूर्ववत् शूर्पप्रच्छादनान्तं कृत्वा ब्राह्मणान् भोजयित्वा तेष्वाचान्तेषु 'पितुर्गोत्रस्य शर्मणः प्रेतत्वविमुक्तिद्वारा वस्वादिपितृलोकप्राप्त्यै तत्पितृपितामहप्रपितामहानां गोत्राणां शर्मणां वसुरुद्रादित्यरूपाणां पिंडैस्सह गोत्रस्य शर्मणः पितुः प्रेतस्य पिंडं संयोजयिष्ये' इति संकल्प्य पश्चात् पितुः वैतरणीनद्युत्तरणार्थं वैतरणीगोदानं संकल्प्य गोदानं कुर्यात् । आसनादिभिः ब्राह्मणमभ्यर्च्य

'उत्थानं (?) दक्षिणाग्रीवं तमुद्दिश्य तु गां त्यजेत् ।
यथा कथञ्चिन्नो मृत्युः भविष्यति जनार्दन ॥

तन्तु कालं समुद्दिश्य दत्ता विप्राय गौर्मया ।
या वै वैतरणी प्रोक्ता पूयशोणितवाहिनी ॥

तामुत्तारय मां देवि भूत्वा त्वं कामदोहिनी ।
विष्णुदेवा द्विजाः प्रोक्ता भूरिपापद्विनाशनाः ॥

सदक्षिणा मया दत्ता तुभ्यं वैतरणी नमः ।
दत्ता गौर्यस्य सापिंड्ये स तां तरति नेतरः' ॥ इति

स्मृत्यन्तरे — 'वृषोत्सर्गेण चोत्क्रान्त्या वैतरण्या गया विना ।
प्रेतत्वादेव हीयेत दत्तैः श्राद्धशतैरपि ॥' इति

तत्पिंडं — प्रेतपिंडम् । त्रिधा कृत्वा । 'संगच्छध्वं' 'समानो मन्त्रः' इति द्वे मन्त्रे उक्त्वा 'पितुर्गोत्रस्य शर्मणः पिंडैकभागं तत्पितुः गोत्रस्य शर्मणो वसुरूपस्य पिंडेन सह संयोजयिष्ये' इति संयोजयेत् इति केचित् । पितः गोत्र शर्मन् त्वत्पितुर्गोत्रस्य शर्मणो वसुरूपस्य पिंडेन सह एतत्ते पिंडस्तस्मै ते स्वधा नमः' इति वा । एवं पितामह वृद्धप्रपितामहपिंडाभ्यां सह संयोजयेत् । पितृस्थानगताय—'समानीव' 'संज्ञानं' इति द्वाभ्यां आवाहनपात्रोदकं तत्पितृपितामहप्रपितामहानामावाहनपात्रोदकैस्सह संयोजयेत । एवमेवान्यपात्राणि ।

**यस्मादेष परिणतप्रणाने पितृत्वं प्राप्तवान् तस्माद्यत्नेनैनमुद्दिश्य पैतृकं कुर्यात् ॥ ११ ॥**

यस्मादित्यादि । तस्मात् — सपिंडीकरणात् पितृसमानत्वं प्राप्तवान् — प्राप्नोति ।

**तत्सर्वं जलपिंडदानादि विना अस्य नाम्ना 'पितृभ्य' इति कुर्यात् ॥ १२ ॥**

तत्सर्वमित्यादि । पिंडसंयोजनादूर्ध्वं प्रेतशब्दं विहाय कुर्यात ।

शातातपः — 'न पृथक् पिंडदानन्तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां ये मन्त्रेण नियोजिताः ।
यावन्तः पितृलोकाय पृथक् पिंड नियोजिताः (?) ॥ इति

अत्र स्वर्गपाथेयश्राद्धं केचिद्वदन्ति ।

**अवाच्यामवटं स्थ(ण्डि)लवदायतावनतं खनित्वा उदकुंभेन 'ऊर्जं वहन्ती'रिति तर्पयित्वा मुखवामादिदक्षिणां दत्वा शूर्पेणाच्छादयित्वा 'पितृभुक्तं' 'पितृजीर्ण'मित्युपजुह्वा अन्नहोमः ॥ १३ ॥**

**ब्राह्मणानां तर्पणमन्त्रेन पूर्ववत् ॥ १४ ॥**

अष्टकोक्तवत् तांबूलं दक्षिणादिकञ्च दत्वा विसृजेत् ।

'एष वोऽनुगतः प्रेतः पितृसामान्यमाप्तवान् ।
शिवं भवतु शेषाणां जायन्तां स्थिरजीविनः' ॥

इति संप्रार्थ्य पितॄन् (प्रेतयुक्तान्) विसृजेत् । पिंडसंयोजनादूर्ध्वं चतुर्थो विनिवर्तते' इति वचनात् 'एष पितृत्वं प्राप्त' इति वचनाच्च । पितुः प्रपितामहान् विहाय स्वपितृपितामहप्रपितामहान् इत्येव कुर्यात् ॥

**यथैवैतत् (स्व)वत्सो गवाश्वाजमहिषमंडलेषु यत्र क्वचन गतां गामन्वेष्य तामेव तर्पयति तथैव यथाविधि दत्तजलपिंडदानादि यत्र वा गतं तमेवानूद्दिश्य (वानुप्रविश्य) प्रीणयति ॥ १५ ॥**

अत्र गोवत्सदृष्टान्तमुखेन पितृभ्यः कव्यप्राप्तिप्रकारं प्रतिपादयति, यथेत्यादिना ।

'यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्' । इत्यादि

**तस्मात् प्रयत्नेन पैतृकं कुर्यात् ॥ १६ ॥**

तस्मादित्यादि । 'देवकार्यादपि मुने पितृकार्यं विशिष्यते' इति वचनात् पैतृकं कुर्यात् ।

**'मास नास्तिको भू'दिति ब्राह्मणमिति सपिंडीकरणम् ॥ १७ ॥**

**तस्मात् द्वितीये (तृतीये) वाह्नि तेभ्यस्त्रयाणां पिंडानां क्रमेण निर्वापणमष्टकां करोतीति विज्ञायते ॥ १८ ॥**

तस्मादित्यादि । तस्मात् – सपिंडीकरणात् । एतत्क्रमनिर्वापश्राद्धं पार्वणवत् पितृपितामह प्रपितामहानित्येव कुर्यात् । अत्र कानि चन प्रकृतानि वचनानि ।

'सपिंडे दाहदिवसे जनैस्तद्ग्रामवासिभिः ।
श्वस्ततो नैव गन्तव्यं गतश्चेन्मरणं ध्रुवम्' ॥ इति

अन्याश्च स्मृतयः ।

'पुत्रवत्याः स्त्रियाः पिंड पितामह्यादिभिस्सह ।
अपुत्रयोषितः पिंड भर्तृपिंडेन योजयेत' ॥

अत्र 'पित्राद्यैस्त्रिभिरे'वेति पाठान्तरञ्चास्ति ।

'आसुरादिविवाहेषु पुत्रो वा पुत्रिकासुतः ।
मातुस्सपिंडीकरणं मातामह्यादिभिस्सह ।
पतिः कुर्यादपुत्रायाः स्त्रीपिंडैस्सह योजनम् ॥

पत्यानुमरणे पत्न्याः पिंड पत्यैव योजयेत ।
स्त्रीभिर्वा पुत्रवत्यास्तु तत्पुनः पितृभिस्सह' ॥ इति

लौगाक्षिः — 'मातामहस्य गोत्रेण मातुः पिंडोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥

ब्राह्मादिषु विवाहेषु यानू(चो ?)ढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्तव्यास्तस्याः पिंडोदकक्रियाः ।
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्' ॥ इति

पैठीनसिः — 'अपुत्रायां मृतायान्तु पतिः कुर्यात्सपिंडनम् ।
श्वश्र्वादिभिस्सहैव स्यात् पुत्रवत्याः स्त्रिया भवेत् ॥

पिंडसंयोजनादूर्ध्वं प्रेतत्वस्य निवर्तनात् ।
मार्जनादिषु सर्वेषु चतुर्थो विनिवर्तते' ॥ इति

**देवलः** । 'पितृशब्दस्तु पितृसामान्यवाचकः । पितामहादिसंबन्धमत्र मन्त्रादिषूहयेत् ।

'अर्घ्योपस्थानमन्त्रन्तु प्रेतपूर्वं महामुनिः ।
आवहानादौ त्वन्यत्र प्रेतपूर्वत्वमूचिवान् (?) ॥

'भुञ्जानानामिमुख्येन पुण्यसूक्तानुकीर्तनम् ।
तदभिश्रवणं नाम तदप्यत्रोचिवान् मुनिः' ॥

व्युत्क्रमेण हि सापिंड्यं कार्यमाचार्यसम्मतम् ।
तथाऽप्यूर्ध्वस्य सापिंड्ये कृतेऽस्य पुनराचरेत् ॥

जीवत्पिता पितामह्या मातुः कुर्यात्सपिंडताम् ।
प्रमीतपितृकः पित्रा पितामह्यादि वा सुतः ॥

मृते पितरि च यथा जीवेद्वाथ पितामहः ।
तेन देयाः त्रयः पिंडाः प्रपितामहपूर्वकाः ॥

पुत्रवत्याः स्त्रियाः पिंडं पितामह्यादिभिस्सह ।
अपुत्रयोषितः पिंडं भर्तृपिंडेन योजयेत्' ॥ इति

बृहस्पतिः — 'मातर्यपि च वृत्तायां विद्यते च पितामही ।
प्रपितामहीपूर्वन्तु कार्यस्तत्राप्ययं विधिः ॥

सपितुः पितृकृत्येषु वेष्टकारो(?) न सिद्ध्यति ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति स्मृतिः ।
सपिंडता विवाहानां(?) कर्तव्य प्रतिपुत्रकम्' ॥

इति इदमन्योन्यविरुद्धविषयम् ।

जातुकर्णिः — 'प्रेतत्वञ्च विनिस्तीर्णं प्राप्तः पितृगणन्तु सः ।
च्यवते पितृलोकात्तु पृथक् पिंडनियोजितः ॥

क्लीबान्धपतितैर्नैव विष्टाभिः (?) स्त्रीभिरेव वा ।
ते त्वपुत्रैरदारैर्वा भ्रातृभिर्नैव पिंडकम् ॥

पत्नीविषयम् — 'नासपिण्डे कृते प्रेते पितृकार्यं च कारयेत् ।
कृतेषु धनमिश्रेषु सपिंडीकरणं विना ॥

स्त्रीपिंडं भर्तृपिंडेन संयोज्य पुनरेव तत् ।
पित्रादिपिंडे संयोज्यमिति शास्त्रस्य निश्चयः' ॥ इति

पुत्रवतीविषये । अनुमरणे स्त्रीपिंडं भर्तृपिंडेन संयोज्य पुनर्वर्गत्रयस्यापि पिंडं त्रेधा कृत्य पितृवर्गेण मातृवर्गेण च योजयेत् । 'संवत्सरे व्यतीते

तु पुनस्संस्कारमर्हति ' इति संवत्सरान्ते कृत्वैव पुनस्संस्कारपूर्वं सपिंडीकरणं कुर्यात् ॥

संधानविधौ । 'सपिंडीकरणान्येवं सहैव पृथगेव वा ।
निमित्तार्थं पृथक् कुर्यादन्येषां सकलं सह ।
पित्रादित्रयपत्नीनां भोज्या मातुः प्रति द्विजाः ॥
स्त्रीणामेव तु यत्तस्मान्मातृश्राद्धं तदुच्यते ।
मन्त्राणामूहमिच्छन्ति केचिन्मातरमित्यपि ॥
मातुः पितुर्वा सापिंड्ये पित्रादीनेव भोजयेत् ।
नार्हौ (?) 'पिंडार्घ्यसंयोगे सुरापानसमं हि तत्' ॥ इति

इत्यत्यन्तविरुद्धम्

'प्रेतस्य वत्सरादर्वाक् यदा संस्कार उच्यते ।
न कालनियमो ज्ञेयो न मौढ्यं गुरुशुक्रयोः' ॥ इति

ऋश्यशृंगः — 'स्त्रीणामाद्यस्य वै भर्तुः यद्गोत्रं तेन निर्वपेत् ।
यदि त्वक्षतयोनिस्स्यात्तनिमन्यं समाश्रिता ।
तद्गोत्रेण तदा देयं पिंडं श्राद्धं तथोदकम्' ॥ इति

मनुः — 'पितृगोत्रं कुमारीणामूढानां भर्तृगोत्रतः' । इति

अन्यत्र — 'यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ॥
देवतायतने कृत्वा तत्र श्राद्धं प्रकल्पयेत् ।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे' ॥ इति

देवलः — 'महागुरुनिपाते तु प्रेतकार्यं यथाविधि ।
कुर्यात्संवत्सरादर्वाक् नैकोद्दिष्टं न पार्वणम्' ॥ इति

लौगाक्षिः — ' .... .... महागुरुनिपातने ।
कुर्यात्संवत्सरादर्वाक् श्राद्धमेकन्तु वर्जयेत् ॥

इदं अकृतसपिंडीकरणविषयम्

'पत्नी चैव सुतो भ्राता स्नुषा .... घते ।
तत्र श्राद्धानि कुर्वीत स पित्रोर्मृतयोरपि' ॥ इति

हारीतः — 'दंपत्योस्सह मृत्यौ तु सह दाहादिकाः क्रियाः ।
प्राक् दाहादन्यनाशे च तदूर्ध्वन्तु पृथक् क्रियाः ॥

दंपत्योस्सह संस्कारे मृतावनुमृतावपि ।
उदकादि सपिंडान्तं प्रेतकार्याणि यान्यपि ॥

कुर्यात्समानतन्त्रेण सांवत्सरिकमेव च ।
प्रदक्षिणमुपस्थानं चरुकार्यं चितिस्तथा ॥

सञ्चयस्तर्पणं गर्तं सपिंडीकरणं तथा ।
पित्रा सदैव माता च सपिंडेन मृतेन तु' ॥ इति

आब्दिकविषये —

'ऋतुमत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्यात् हेम्नाऽवाऽऽमेन वा कचित् ॥

पित्रोः क्षयदिने यस्य यदि भार्या रजस्वला ।
अग्निं संधाय विधिवत् श्राद्धं कृत्वा विसर्जयेत्' ॥ इति

स्मृत्यन्तरे — 'मासिकान्याब्दिकं पित्रोः अशुद्धोऽप्यौरसस्सुतः ।
कुर्यादेव तिथिप्राप्तमिति शातातपोऽब्रवीत्' ॥ इति

यज्ञेश्वरः — 'आपाद्य सहपिंडत्वमौरसो विधिवत्सुतः ।
कुर्वीत दर्शवत् श्राद्धं मातापित्रोः क्षयेऽहनि ॥

वर्षश्राद्धे तु संप्राप्ते पित्रोराशौचसंभवे ।
तदानीमशुचिर्न स्यात् कुर्याच्छ्राद्धं मृतेऽहनि ॥

एकोद्दिष्टं तथा भोक्तुरभोज्यं शिष्टमोदनम् ।
चन्द्रसूर्योपरागे च शिष्टमन्नं च वर्जयेत् ॥ इति

अथाऽहिताग्नेः – अथो वै विगतानिलचेष्टं – पूर्ववत् पूजनं – तिलतंडुलदधिमधुक्षीराणां – अनाहिताग्नेः सोपवीती – स्नात्वा गुरवे – गो ह वा – अथापद्दाह्याः – अथाष्टाहितकं – अथादह्यान् – अथाकृति-दहनं – अथैकोद्दिष्टं – अथ मासि मासि – पूर्ववद्यथोक्तस्थाने पञ्चदश ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चमप्रश्ने पञ्चदशः खण्डः ।

वाजपेये पञ्चमः प्रश्नः । अथ प्रथमः पटलः (अथ प्रथमः खण्डः) दहनविधिर्व्याख्यास्यते । यथोक्तैरित्यादि — कालज्ञानादिज्योतिश्शास्त्रोक्तैः । आयुः — जीवितमल्पमिति परीक्ष्य - छायापुरुषादिकं निरीक्ष्य, अल्पं निश्चित्य आसन्ने काले निश्चितात् पूर्वस्मिन् तृतीये पञ्चमे नवमे चाह्नि । चशब्दो विकल्पार्थः । मुमूर्षुः — मृत्युं दुरतिक्रमं ज्ञात्वा 'कृतकृत्याः प्रतीक्षन्ते' इति न्यायेन मृत्युं प्रतीक्षमाणः, पञ्चप्रकारान् बान्धवान् — स्ववंश्यान् पुत्रादीन् मातामहवंश्यान् श्वशुरसंबन्धिनः कन्याग्राहककन्यादातृवंश्यान् बान्धवानाहूय, प्रथमं कुशलप्रश्नादिकं कृत्वा, पश्चात् स्वशरीरस्थितिञ्च उक्त्वा तेषां सन्निधौ ऐहलौकिकंपुत्रादीनां संभोगाय अशनवसनाद्यर्थं क्लृप्तं, तथा पारलौकिकं—स्वर्गादिसिद्ध्यर्थमात्मनः श्राद्धार्थमुद्दिष्टं च, आत्मनः — स्वस्य सञ्चितं धनं विभजेत् — धनं तेषु तेषु यथाशास्त्रं विभज्य दद्यात् । उपस्थित इत्यादि । मरणदिने संप्राप्ते काले उप्तश्मश्रुकेशः स्नात्वा, वेदशास्त्रविदः प्रायश्चित्तविदः श्रोत्रियान् ब्राह्मणान उक्तबान्धवांश्चाहूय तैरनुज्ञातः सर्वप्रायश्चित्तं यथाशक्ति चरित्वा । शुचौ देश इत्यादि—दर्भान् प्रागग्रान् । तत्र यदि शक्तः असीत, अशक्तः शयीत । अथाध्वर्युरित्यादि—अध्वर्युः पुत्रः श्राद्धकर्ता वा । दक्षिणायनकाले शान्तिजपः । शक्तः स्वयं शान्तिं जपेत् । धर्माधर्मावित्यादि—ऊर्ध्वभावः स्वर्गः अधोभावो नरकः तावूर्ध्वाधोभावौ, ज्ञानाज्ञाने, सुखदुःखे च । ईशते लोकानितीश्वरो विष्णुः, तद्वशात्तदनुग्रहनिग्रहवशात् तेन सह अनुगच्छेताम् । (इति प्रथमः खण्डः)

(अथ द्वितीयः खण्डः) अथो वै इत्यादि । विगता त्यक्ता अनिलानां प्राणवायूनां चेष्टा यस्मात्तं विगतानिलचेष्टं देहम् । ग्राम्यालंकरणं – स्वजनेषु पारंपर्यप्राप्तं मंडनादि कृत्वा । अहतेन नूतनवाससा – वस्त्रेण । दशान्तं – दशावस्त्राञ्चलं तस्यान्तमवसानं यथा स्यात्तथा अच्छादयति । तथैवेत्यादि । शयनं – औदुंबरीमासन्दीमहतेन वाससाऽऽच्छादयति । तूष्णीं शयनमभ्युक्ष्य । एतत्–

शयनं मृतकं वा । अन्ये – वाहकेभ्यो ज्ञातिभ्यश्च परे । अनाहिताग्न्यादीना-मित्यादि । आदिशब्देन स्त्रीब्रह्मचार्यनारोपिकार्यविधुरविधवा गृह्यन्ते । सर्वौ-षधयः – व्रीह्यादयः ताभ्यः पृक्तो युक्तस्तेनोदकुंभेन । अन्यदाहिताग्निवत् । उखास्वित्यादि । उखाः – मृद्भांडानि । आदाय – आधानक्रमेण संगृह्य प्रेतस्यै-शान्यां पश्चिमे गार्हपत्यं प्राच्यामाहवनीयं दक्षिणेऽन्वाहार्यम् पञ्चाग्निश्चेत् – आहवनीयस्य पुरस्तात्सभ्यावसथ्यौ । अर्धाधानी चेत् पूर्वस्यामौपासनाग्निं क्रमेण सन्न्यस्य । यज्ञभांडानि – अवस्कराणि स्रुवादीनि यावन्ति ऐष्टिकानि पाशुकानि आग्निहोत्रिकाणि तानि । नवानि घटशरावादीनि – आदिशब्देन कुंभचरुस्था-लीतिलोदकुंभादीनि गृह्यन्ते । आज्यादीनीति–आदिशब्देन पालाशी शामी वा शाखा दर्भरज्जुमूर्तिपिंडत्रयपाषाणगोसुवर्णदक्षिणादीनि गृह्यन्ते । तान् संभारान् शवस्योत्तरतः अग्नेः पूर्वस्याञ्च निक्षिपति । स्नात्वाऽध्वर्युरित्यादि । यद्यध्वर्युः पुत्रः तदा स लुप्तश्मश्रुकेशः स्नात्वा प्राचीनावीती 'इमं मे पितरं प्रेतं पितृमेध-विधिना संस्करिष्यामी' ति संकल्पयेत्। अकृताग्निश्चेत् श्रौतोक्तप्रायाश्चित्तविधिना अग्निहोत्रविधानेन जुहुयात् । यथा – 'अग्निहोत्रं होष्यामी' ति संकल्प्य दर्भेण शवमन्वारभ्य स्वायतने निधाय प्राचीनावीती अग्निहोत्रीं दोग्धि । दक्षि-णार्धे गार्हपत्ये शीते भस्मन्यधिश्रित्य दक्षिणत उद्वास्य सकृदेव सर्वं तूष्णीमुत्पूय अधस्तात् समिधं धारयति । उपरि हि देवेभ्यो धारयति । विहारस्य दक्षिणत – स्तूष्णीं प्राङुद्रवति । स उपसाद्य समिधमादाय सर्वं तूष्णीं जुहुयात् । अपि वा सोमाय पितृमते स्वाहा इति पूर्वामाहुतिं जुहुयात् । अग्नये कव्यवाहनाय स्विष्टकृते स्वाहा इत्युत्तराम् । प्राशनोत्सेचनपरिषेचनानि न विद्यन्ते । अपि प्रेरमय इत्यग्निहोत्रस्थाल्या बर्हिरक्त्वा आहवनीये अनुप्रहरति । यथाऽऽधानं तथैवमग्निहोत्रं जुहुयात् । औपासनाग्नाविव परिषेचनवर्जं जुहुयात् । यथा स्वमित्यादि । स्वकीये । कृतचौलको ब्रह्मचारी समावृत्तः गृहस्थोऽनाहिताग्निः वानप्रस्थो वा यो वा मृतस्तस्य तस्याग्नौ नित्यहोमं तत्तदुक्तप्रकारेण हुनेत् । वैश्वदेवञ्च संकल्प्य दक्षिणाभिमुखः परिस्तीर्य सतिलेनाक्षतेन–तिलमिश्रैस्तंडुलैः पूर्ववद्वैश्वदेवं हुत्वा बलिञ्च दद्यात् । रात्रौ मृतश्चेत् सायमग्निहोत्रं हुत्वा दिवा-

मरणफलसिद्ध्यर्थं प्रातरग्निहोत्रादींश्च कुर्यात् । तथा कृष्णपक्षे मृतश्चेत् शुक्ल-पक्षफलसिद्ध्यर्थं कृष्णपक्षावशिष्टदिनान्यपकृष्य सायंप्रातराहुतीर्हुनेत् । दर्शेष्टिश्च पूर्णाहुत्या कर्तव्या । तथा वक्ष्यते श्रौतप्रायश्चित्ते । 'यदि पूर्वपक्षे पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत दक्षिणतो भस्मन्युत्तरामाहुतिं निनयेत् । परेद्युर्वा-समिति प्रथमामाहुतिं जुहुयात् । यद्यपरपक्षे शेषाण्यहानि यावत्पूर्वपक्षं संख्याय तावन्ति पयसाऽग्निहोत्रं जुहुयुः । अमावास्या (या) मप्यपकृष्य पूर्णाहुत्या यजेयुः । यदि पूर्वपक्षे नक्तं प्रतिकृष्य प्रातरग्निहोत्रं जुहुयुः परिस्तरणानि च प्रहरेयुः' इति । यद्यन्वारब्धायामिष्ट्यां यजमानो म्रियेत सेष्टिः पूर्णाहुत्या कर्तव्या । मध्ये मृतश्चेत्तत्तद्धविरादाय स्वाहाकारेण हुत्वा समापयेत् । तथा वक्ष्यते प्रायश्चित्ते । 'यद्युपसधे पौर्णमास्याः पैतृमेधिकमेव कर्मैवमपराह्णे अधिवृक्षसूर्ये यद्युपसथे अमावास्यायाः पूर्णाहुत्यैनं याजयेयुः । यदिमध्ये विसंस्थितायामिष्ट्यां यजमानो म्रियेत सर्वेभ्यो हविर्भ्यस्समवदाय सर्वा देवता अनुद्रुत्य स्वाहाकारेणेष्ट्वा अग्नये विष्णवे अग्नीषोमाभ्यां स्वाहेति जुहुयात् । तथा चातुर्मास्यपशुबन्धसौत्रा-मणिषु' इति । यदि विच्छिन्नाग्निर्मृतः तदा यजमानायतने प्रेतं निधाय गार्हपत्यायतने अग्निं मथित्वा 'यस्याग्नयो जुह्वतो मा' मिति जप्त्वा गार्हपत्ये निधाय तूष्णीं विहृत्याज्यं स्रुवेण स्रुचि द्वादशकृत्वो गृहीत्वा तूष्णीं सर्वाग्निषु हुत्वा प्रेताधानोक्तवत् 'जुष्टोदमूना' इति अग्निमुपसमिन्ध्य स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा सप्तव्याहृतीर्हुत्वा प्रत्येकं चतुर्गृहीतं गृहीत्वा 'पूर्वे देवाः'–'प्राणापानौ' तथा हुत्वा वृक्षद्वयं, तथा 'अग्नेऽभ्यावर्तिन् – अग्ने अंगिरः – पुनरूर्जा – सह रय्ये' ति तथा महाव्याहृतीः तथा व्याहृतीश्च हुत्वा अग्निहोत्रादिकं जुहुयात् । अरण्यारोपिताग्निर्मृतश्चेत् तूष्णीं मथित्वा गार्हपत्यादिषु विहृत्य विधिवद्धुत्वा तैर्दाहयेत् । आत्मारोपिताग्निश्चेत् लौकिकाग्निं गार्हपत्ये निधाय प्रेतस्य हस्ते समिधं दत्वा मन्त्रेणावरोप्य तां समिधं गार्हपत्ये निधाय तूष्णीं विहृत्य पूर्व-वद्धुत्वा तैर्दाहयेत् । अरण्यारोपितोऽपि निष्टश्चेत् तद्विधिना नवारणिं संगृह्य मथित्वा गार्हपत्ये निधाय प्रेताधानाहुतीर्हुत्वा तूष्णीं विहृत्याग्निहोत्रं हुत्वा तैर्दाहयेत् । देशान्तरमृतश्चेत् तस्य शरीरं तैलपक्वं कृत्वा शकटादिना स्वग्रामं नीत्वा

स्वाग्निभिर्दाहयेत् । नेतुमशक्तश्चेन् निर्मन्थ्येन श्रोत्रियागाराग्निना वा प्रेतममन्त्रकं समन्त्रकं वा दग्ध्वा कृष्णाजिनेनास्थीन्युपसंगृह्य वाससा वैणवाग्रे बद्ध्वा अनश्नो निदधानः स्वग्रामं नीत्वा ग्रामसीम्नि निधाय अग्न्यादिसंभारानादाय तदस्थिभिराकृतिं कृत्वा तदग्निभिर्विधिना दाहयेत् । देशान्तरगते द्वादशवर्षेऽतीते वा तन्मध्ये मृतिवार्ताश्रवणे वा सोऽपि यां दिशं प्रति गतः तस्यां दिश्यवस्थितं कक्षं तदग्निभिस्तूष्णीं दग्ध्वा विधिवत्तिलोदकादीन् कुर्यात । अपि वा पलाशपर्णाकृतिं कृत्वा अग्निभिर्दाहयेत् । अजस्रे अग्नौ शरीरे नष्टे पर्णाकृतिं कृत्वा अग्निभिर्दाहयेत् । स्थिते शरीरे अग्निनाशे पुनराधानं कृत्वा तैर्दाहयेत् । शरीरास्थ्यग्नीनामभावे केवलं तिलोदकादीन् कुर्यात् । पर्णाकृतिं प्रेताधानञ्च कृत्वा दहेदिति केचित् । तथा वक्ष्यति श्रौतप्रायाश्चित्ते—'यद्याहिताग्निः प्रोषितो म्रियेत यां दिशमभिप्रस्थितस्स्यात् तां दिशं गत्वाऽस्याग्निभितूष्णीं कक्षं दहेयुः । अपि वा आकृतिदहनं कुर्युः तद्व्याख्यातम् । देशान्तरगतस्य मरणात्प्रत्यासन्नस्य पाथिकृतेष्टिः कार्या । देशान्तरमृतस्य शरीरं तैलद्रोण्यामवधाय शकटेनाहरेयुः । निर्मन्थेन दग्ध्वा कृष्णाजिनेन अस्थीन्युपनह्य अहतेन वाससा आवेष्ट्य दीर्घवंशे प्रबद्ध्य अनश्नो निदधानाः प्रयता मृण्मयपात्रभोजिनस्तमाहरेयुः । ग्राममर्यादायां निधाय अग्नीनाहृत्य पात्राणि तैस्सह श्मशानं नीत्वा दहेयुः । प्रमीत इति स्वजनः श्रुत्वा आकृतिदहनादिपरिधानीयान्तं कर्म कुर्युः । यद्यागतः ततो जातकर्मादिस्नानान्न कर्म कृत्वा पूर्वमेवोपयच्छेत । अग्नीनाधाय पुनस्सोमेन यजेत । व्रात्येन पशुनेति विज्ञायते' इति । 'तूष्णीमन्वाहार्यपचने चरुं श्रपयित्वा गार्हपत्ये मैत्रावरुणीमामिक्षां कुर्यात् । अन्वाहार्यपचने तूष्णीमुपचरितं चरुं श्रपयति । गार्हपत्ये मैत्रावरुणीमामिक्षा'मिति भारद्वाजः । इत्यलम् । शवस्य भारका इत्यादि । भारका—वाहकाः । पञ्चसंबन्धिवर्गा अन्ये ब्राह्मणा वा । दर्भांबराः—दर्भैः कीलितान्यंबराणि वस्त्राणि येषां ते । पुत्राः यथासंभवं त्रियष्टिकायोगेन—शिक्येन प्रत्येकं गार्हपत्यादीनग्नीन् असंकुलं यथा तथा गृह्णीयुः । उत्तारेणेत्यादि । उत्तार — आसन्दी । यथाप्रवेशमिति—यथा प्रतिनिवर्तने गृहं प्रविशेत्तथा तेनैव पथा गृहान्निर्गमय्य हरेयुः । अपक्रमं

मध्ये पूर्वापरं दक्षिणान्तं (?) यथा स्यात् तथा उद्धरणमुत्तारः, अवतरणवतारः । एतेन–मेरोरंह ' इति मन्त्रेण । तथैव – पूर्ववत् . अवाची – दक्षिणा दिक् । हव्येन यथा ब्रह्मविष्णू तथा तिलाक्षतोदकैः दक्षिणाभिमुखो भूत्वा अपसव्येन कव्येन पैतृकेणान्नेन रुद्रं तमोगुणेश्वरमर्चयति । आधानक्रमेणेत्यादि । ब्रह्मचार्यादीनां स्वेऽग्नौ होमः ! धात्रादिहोमेषु रुद्रेभ्यः इत्यादीन् प्राचीनावीती कुर्यात् । एताः आहुतीः प्रत्येकं स्रुवेणाज्येन व्याहृत्यन्तं सर्वेष्वग्निषु क्रमेण जुहुयात् (इति द्वितीयः खण्डः) इति प्रथमः पटलः ॥

अथ द्वितीयः पटलः (अथ तृतीयः खण्डः) पूर्ववदित्यादि । आवाहनं विना मृत्पिंडानामर्चनं कृत्वा चरुस्थालीं भिद्यात् । चेलोपमार्जनैः । धृतवस्त्रस्याञ्चलेन वीजनमुपमार्जनम् । सिस्वातं – वीजनपवनम् । कनिष्ठप्रमुखैः सस्त्रीकैः ज्ञातिभिस्सह कर्ता वातास्ते वान्त्विति त्रिः प्रदक्षिणं सव्यापसव्यं कृत्वा । यथापूर्वं तथा शवभारकाः श्मशानाभिमुखं यथा स्यात्तथा शवमुत्तारेण सहोद्धृत्य पश्चात् यज्ञभांडान् नयति । अग्रे च पूर्ववदेवाग्निं नयन्ति । तेषां मृत्पिंडानां मध्ये वैष्णवं मृत्पिंडमप्सु क्षिपति । ब्राह्मपिंडं तत्रैव पिदधाति – निखनेत् । प्रत्यक् दक्षिणतश्च प्रवणम् – नैर्ऋत्यां प्रवणं गृह्णाति । पश्चिमतो दक्षिणतो परिपाट्या निम्नं स्थलं गृह्णाति । चितेश्चितप्रदेशान्विशिनष्टि भिन्नेत्यादिना – भिन्नं -- स्वतो रेखाकाररन्ध्रान्वितं, छिन्नं – भंगुरं, सुषिरं -- स्वभावतः श्वभ्रयुतं, मलम्–अमेध्यं वल्मीकयुतं केशरोमादियुतं भिन्नमृत्पात्रशकलादियुतं मनुष्यमृगाद्यस्थिगर्भं धान्यत्वगन्वितं पुरातनोल्मुकान्वितं इरिणमूषरविशेषमथवा अप्ररूढतृणं, वृक्षाधस्स्थलं अन्यदहनोद्देशं प्रदेशं इत्येतान् वर्जयेत् । तत्र – शुद्धप्रदेशे । प्रमार्ज्य त्रिवीथीस्त्रिरपक्रमं दक्षिणान्तं सम्मार्जनं कृत्वा, दक्षिणस्यां शाखाविसर्जनं तिलाक्षतैः स्थलस्य प्रोक्षणञ्च कुर्यात् । कर्षूः – अवटानि । भागावगाढं – चतुरंगुलनिम्नं विस्तारञ्च खनति । शंकुमिति – खादिरादि दृढवृक्षजातं शंकुं । शंकूनि चत्वारि मूलं तीक्ष्णीकृत्य अष्टौ वा चितायामविस्तरोच्छ्रयाणि कृत्वा दिक्षु चितादार्ढ्यार्थं खनति । तत्र दक्षिणाग्राण्येधांसि असंकुलानि चिनोति । आहिताग्निर्यदि मृतः कृष्णाजिनास्तरणं क्रियेत । चितापूर्वमित्यादि । पूर्वं – प्राग्भागे । अग्नीनन्यांश्च

संभारान् पूर्ववन्निधाय अध्वर्युः दक्षिणामुखः प्राचीनावीती परिस्तीर्य यथा-स्वमग्नौ – यथाधिकारं स्वे स्वेऽग्नौ उक्तहोमान् जुहुयात् । प्रत्येकं स्वाहान्तैः अग्नये इत्यादिभिर्मन्त्रैः स्रुवेणाज्यं गृहीत्वा व्याहृत्यन्तं सर्वाग्निषु जुहुयात् । ततः प्रोक्षणपूर्वकं तिलानवकीर्य शवस्य चितायामवतारणं कुर्यात् । अवतरणे दक्षिणशीर्षं शाययेयुः । सप्तस्वित्यादि । सप्तसु वक्त्रनेत्रघ्राणश्रोत्रेषु अवाचीन-पाणिः दक्षिणावननपाणिः सप्तहिरण्यशकलानि मधुप्लुतानि मंत्रेण निक्षिपति । आज्याक्तानि शकलानीत्येके । हिरण्यशकलाभावे तत्प्रतिनिधिराज्यबिन्दवः । (इति तृतीयः खण्डः)

(अथ चतुर्थः खण्डः) आस्ये क्षिपेत्—आ ओ वहेति मन्त्रेणेति । चतुर्होत्रमिति पृथिवीहोतासीदित्यादि चतुर्णां मन्त्राणां संज्ञा । तथा दशहोत्रं षड्ढोत्रं पञ्चहोत्रं सप्तहोत्रञ्च निरुच्यते । तेषां चतुर्होत्रादिमन्त्राणां विनियोग-विशेषस्तत्तदंगस्पर्शने विधीयते । जघने इत्यादिना शवशरीरे यज्ञपात्रप्रक्षेप उच्यते । उत्तरेणेत्यादि । संस्कृत्य – पवित्रेणोत्पूय । मृतं – प्रेतं, पात्रं – दारु-दारवाणि यज्ञपात्राणि, चिताञ्च प्रोक्ष्य पात्राण्याहवनीये प्रतप्य । अथ – अनन्तरं । दर्शपूर्णमासवत् – यथा दर्शपूर्णमासयोस्तथा – तद्वत् पर्णासकाशे तूष्णीं गार्हपत्ये आज्यं विलाप्योत्पूय आज्यानि स्रुवेण चतुर्गृहीतानि गृह्णाति । जुह्वा घृत चतुर्गृहीतं तथा उपभृति दधि, ध्रुवायां मधु, अग्निहोत्रहवण्यां क्षीरञ्च प्रत्येकं चतुर्गृहीतं गृहीत्वा अथवा सर्वास्वाज्यमेव वा । दक्षिणाग्रेषु दर्भेषु अपरेणोत्करमासादयति । यानीत्यादि । आसेचनवन्ति – जलवन्ति । तानि पात्राणि पृषदाज्येन चतुष्कृत्वः संपूरयति । इतराणि बिलरहितान्यन्यानि पात्राणि प्रोक्ष्य, अवचिनोति – अवाञ्चयासादयति । तथेत्यादि । यथा आज्यानि गृह्णाति तथा मन्त्रेण, घृतदानमाज्यार्पणम् । सर्वत्र मन्त्रावृत्त्या नेत्रयोरेव घृतादीनां दानम् । तानीत्यादि । तानि वक्त्रादौ निक्षिप्तानि तिला-क्षतादीनि यथा – पूर्वं मन्त्रेण विनिक्षिप्तानि तथा अपसव्येन पाणिना अपोह्य दर्शपूर्णमासावसरे उपयुक्तानि बिलवन्ति पात्राणि पृषदाज्येनापूरितानि प्रेता-योपाहरति । यदीच्छेत् सोमयाजिनस्तन्त्रं भारद्वाजोक्तवत् तदा अग्निहोत्र-

हवर्णां कृष्णाजिनं शम्यां दृषदुपले च विहाय अन्यानि पात्राणि तत्तत्स्थाने निक्षिपेत् 'अग्ने मूल' इतीत्यादि। स्फ्यं मन्त्रावृत्त्या करांगुलिसमं निदध्यात्। तथा सव्यकरांगुलिसममुपभृतम्। तत्रैव – उरसि। मन्त्रावृत्त्या अरणिमुत्तरामधारां मन्थञ्च। अरणिमग्राग्रम् – शरीराग्रे अरण्योरग्रे यस्मिंस्तदग्राग्रम्। अग्निहोत्रहवणीञ्चाग्राग्रं क्षिपेत्। आस्यतामिति मन्त्रावृत्त्या आज्यस्रुवौ नासिकापुटयोः दक्षिणाग्रं क्षिपेत्। कर इतीति। प्राशित्रपात्रमेकञ्चेत् भित्वा द्विधा कृत्वा मन्त्रावृत्त्या कर्णयोर्निदध्यात्। हन्वोः – सकपोलयोरुपरिभागयोः। मन्त्रावृत्त्या। ग्रावाणकौ यदि – स्याताञ्चेत् मन्त्रावृत्त्या दत्सु ऊर्ध्वाधरेषु दन्तेषु निदध्यात्। कपालानि – पुरोडाशकपालानि। शिरःस्थाने ललाटोपरितले देशे। तेनैव – षट्चम इति मन्त्रेणैव वैश्वदेविककपालञ्च निदध्यात्। विष्णोरराटमित्यादि। उदरे – कुक्षौ। परशुं शूर्पञ्चैकं चेत् द्विधा कृत्वा मन्त्रावृत्त्या पार्श्वयोर्निदध्यात्। अस्येत्यादि। यदि सन्नयेत् – यजमानो यदि सान्नाय्यं कुर्यात् सान्नाय्यकुंभं वंक्षणे – ऊरुसंधौ निदध्यात्। मन्त्रावृत्त्या दृषदुपले च अंडयोः क्षिपेत्। इन्द्रस्त इत्यादि। उपावहरणीं – उन्नयनकालकूर्चं छित्वा मन्त्रावृत्त्या पादयोः क्षिपेत्। वेदं – कूर्चम् – चूलिकायां – शिखायाम्। तत्रैवेति। उपसादनी – तन्नामा कूर्चविशेषः, तं पूर्वोक्तमन्त्रेण शिरस्स्थान एव निदध्यात्। एवमित्यादि। उक्तैर्मन्त्रैः उक्तानि पात्राणि उक्तस्थानेषु अग्राग्रं निक्षिप्य शिष्टानि शम्यादीनि चमसादीनि तथा लौकिकसंभारभाण्डानि प्रणयनपात्रादीनि मन्त्रावृत्त्या, अन्तरा सक्थिनी – ऊर्वोर्मध्ये निक्षिपेत्। स्फ्यादीनीति। स्पष्टम्। इति द्वितीयः पटलः (इति चतुर्थः खण्डः)

अथ तृतीयः पटलः (अथ पञ्चमः खण्डः) अनाहिताग्नेरित्यादि। गृहस्थस्य वनस्थस्य वेति योज्यम्। आदधीत – मन्त्रावृत्त्या यथास्थानमित्यर्थः। इममग्न इत्यादि। आहिताग्निविषया प्रक्रिया। स्फ्यादीनि यज्ञपात्राणि पूर्वोक्तानि इममग्ने चमसमिति मन्त्रेण यथास्थानं निक्षिपेत्। प्रतिपात्रं मन्त्रावृत्तिं केचिदिच्छन्ति। युगपदसंभवात्। पृष्ठतः इत्यादि। परशुना घटं किञ्चित भिनत्ति – पृष्ठतो जलनिर्गमनार्थं किञ्चित् अल्परंध्रं यथोत्पद्येत तथा भिनत्ति।

तां धारामिति । अनुमन्त्रयते कर्ता । द्वितीयमिति । अपसव्यं पर्येति । तृतीयं — प्रसव्यं पर्येति । ता इत्यादि । अपो नयति । मन्त्रक्रमेण नयनम् । अथेत्यादि । नियुञ्जीत । 'अग्निदानं कुर्वि'ति कर्तारमादिशेत् गुरुः । स्वर्येनेति । संभागः, पत्न्य इति च उक्तमन्त्राणां पारिभाषिकं नाम । वाचस्पत इत्यादि । 'अ-ाः' 'ऋतुमुख्य' इति च पूर्वमन्त्रनाम । सभ्यावसथ्यौ दग्ध्वा । यद्यौपासनाग्नि तमप्याहवनीयवद्धुत्वा । हृदयं — हृदयसंज्ञकमनुवाकं जपति । ऐशान्यामित्यादि । उपतिष्ठेत — आहिताग्नेः प्रेतस्योपस्थानं कुर्युत । अनाहिताग्नेः गृहस्थस्य 'अग्निर्यजुर्भिः, सेनेन्द्रस्ये'ति द्वाभ्यामौपासनाग्निमाग्नेय्यां दिश्युरसि निक्षिप्य 'सुवर्णं घर्म' इत्युपस्थानं कुर्यात् । अन्यदाहिताग्निवत् । तस्य तस्य पत्न्याः तैस्तैर्मन्त्रैः तद्वदेव दहनं कुर्यात् । इतरेषाम् — ब्रह्मचारिविधुरविधवानाम् । एकर्चया— अस्मात्त्वमधीत्येतया ऋचा दहनं करोति । अन्यत्सर्वमाहिताग्निवदित्येके । (इति पञ्चमः खण्डः)

(अथ षष्ठः खण्डः) स उपवीतीत्यादि । अतः — श्मशानात । अनीक्षमाणाः — प्रेतमिति योज्यम् । तथैवेत्यादि । पूर्वोक्तां शाखां — संभारहरणकालोक्तामौदुंबरी शाखाम् । प्रतिमन्त्रेणेत्यादि । न पुनरवतरिष्याम इति मन्त्रेणेत्यर्थः । सनाभयः -- सपिंडाः — कर्त्रादयः, प्रकीर्णकेशाः दक्षिणामुखाः जलाशयं विशेयुः । सनाभयः कनिष्ठप्रथमाः जलपार्श्वे तालायामविस्तारमवटं खनित्वोपलिप्य तस्मिन् दर्भौदुंबरपर्णादिकं पाषाणं निधाय प्रेतमावाह्याभ्यर्च्य तेषु दक्षिणाग्रेषु दर्भौदुंबरपर्णेषु तिलाक्षतेषु त्रिःकृत्वः सतिलमुदकाञ्जलिं अवटे जलांजलिं विसृजेत् । असावित्यादि । पितः काश्यप शर्मन् प्रेत दहनजनिततापोपशमनार्थमेतत्ते उदकं ददामीति जलं प्रत्येकं ददते । सर्वेचेत्यादि । आप्ताः -- सपिंडाः पञ्चसंबन्धिवर्गाश्च, मितांबराः एकवस्त्रधराः—स्ववाससा जलमादाय कनिष्ठपूर्वाः यावन्तः गृहमायान्ति बन्धुपरिपालनाय तावन्तः वृद्धाः, कुलयोषितो यदाहुः तत्कुर्वन्ति । गोमयेनेत्यादि । प्राणोत्क्रान्तिस्तत्र चेति । चकारादन्यत्र गृहान्तरालेषु च विकिरणमुच्यते । द्वारदक्षिणनिर्गमनभागे तीर्थावटं तालायामविस्तारनिम्नं खनित्वा गोमयेनोपलिप्य तत्र पुष्पतिलाक्षतान्यवकीर्य सकूर्चौदुंबरपत्रं पाषाणं

दक्षिणाग्रं अवटे निधाय तत्र बहिः लौकिकमग्निं हिरण्यमंगुलीयादि गोमयमुदुंबरपत्राणि तिलांश्चाक्षतांश्च प्रत्येकं निधाय – द्वारपार्श्वे निक्षिप्य धूपदीपश्वेतरक्तपीतकृष्णश्यामवर्णात्रिकबलबलिलाजाक्षतपाद्याचमनैः शोभनद्रव्यैरन्यैश्च गृहद्वारमुपागतांस्तान् श्मशानात्प्रतिनिवृत्तान् कर्त्रादीन् वृद्धाः स्त्रियः प्रतिगृह्णीयुः – आद्रियेयुः । तदश्मेत्यादि । अवटस्थं सोदुंबरपर्णं पाषाणं पूर्वं गृहीतवस्त्रतोयेन पितः काश्यपगोत्र केशवशर्मन् प्रेत दहनजनित तापोपशमनार्थमेतत्ते वासोदकं ददामीत्युक्त्वा परिप्लाव्य तद्वस्त्रं विसृज्यान्यत्परिधाय आचम्य धान्यमक्षतांश्च तिलैस्सहालभ्य अनन्तरं वह्निं सुवर्णं गोमयञ्च स्पृष्ट्वा । अनासन्नान्–असपिंडान् विसृज्य–स्वगृहान् गच्छत्वमिति संप्रार्थ्य विहाय । वृद्धाग्रं – वृद्धपुरस्सरम् । तदेवमित्यादि । प्रातः – प्रभाते । क्षीराज्यान्नादिकं गृहीत्वा निवेद्य प्रेताय श्मशानदेवताभ्यश्च निवेदनं विहितम् । एतेन विधिना – पूर्वोक्तैरेव दहनमन्त्रैः आकृतिं दहेत । दहनं अस्मात्त्वमधीत्येकर्चयैव । अपि वा अत्र तूष्णीमित्युत्तरेण संबद्ध्य सर्वममन्त्रकमेवाकृतिदहनं श्मशानाग्निना दहेत् । तदग्निरनुगतश्चेत् वक्ष्यमाणवत् 'अयं ते योनि' रिति तद्भस्मनि समिधमारोप्य तां समिधमुद्बुद्ध्यस्वेति लौकिकाग्नौ निधाय प्रज्वाल्य परिषिच्य मनोज्योतिरयाश्चाग्ने इति मिन्दाहुती व्याहृतीश्चाज्येन हुत्वा ततस्तिलैर्वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं हुत्वा तदग्निना दहेत् । यदि मृतक आहिताग्निः सोमयाज्यग्निचिद्वा स्यात् तदग्निमस्थिसंचयनदिनान्तं सुरक्षितं रक्षेदिति केचित् । यस्मादित्यादि । और्ध्वदैहिकसंस्कारकरणेन ऐहिलौकिकपारलौकिकफलमुक्तं भवति । तदहनीत्यादि । द्वितीयदिने नग्नप्रच्छादनं करिष्ये इति संकल्प्य गोत्रनामाद्युच्चारणपूर्वकं तं प्रेतं ध्यात्वा श्रोत्रियं ब्राह्मणमामन्त्र्य सतंडुलं वस्त्रं – अन्तर्बहिः प्रावरणीयं नूतनं वस्त्रं, कांस्यं – कांस्यभोजनपात्रं पानीयं – पानार्हं कांस्यं पानपात्रञ्च दद्यात् । एवमामद्विगुणदानमादशाहात्कर्तव्यम् । एकोत्तरवृद्ध्या आमदानानि कुर्यादिति केचित् । स एष इत्यादि । नग्नप्रतिच्छन्दः – नग्नदशाया रक्षणम् । वस्त्रं प्रत्यक्षेण नग्नरक्षणायालमिति प्रत्यक्षं लोके । तद्वत् तंडुलादि प्रभवतीति ज्ञेयम् । इति तृतीयः पटलः (इति षष्ठः खण्डः) ।

अथ चतुर्थः पटलः (अथ सप्तमः खण्डः) स्नात्वेत्यादि । अनेन नग्नप्रच्छादनादितत्तच्छ्राद्धान्ते स्नानं विहितमित्युक्तं भवति । सायंप्रातस्तिरुदकाञ्जलिं — एतत् गृहद्वारावटविषयम् । कर्तृव्यतिरिक्तविषयं वा । तद्दिनादारभ्यादशाहादेकोत्तरवृद्ध्या जलपार्श्वावटे कर्ता तिलोदकं दद्यात् । एकोत्तरवृद्ध्या दद्यादिति भारद्वाजः । अन्ये कनिष्ठपूर्वाः त्रिस्त्रिरुदकाञ्जलिं दद्युः । कर्ता गृहद्वारावटे नित्यं त्रिस्त्रिरुदकाञ्जलिं दद्यात् । ततः पूर्ववद्वासोदकदानादिकञ्च कुर्यात् । प्रायश्चित्तोक्तवत् अवटयोः अश्मना सह दक्षिणाग्रं कूर्चं निधाय गोत्रं शर्माणं प्रेतमावाहयामीत्यावाह्य चतुर्थ्यन्तेन तन्नाम्ना गृहद्वारावटे अश्मानं तैलाभ्यञ्जनस्नानवस्त्राचमनगन्धपुष्पदीपादिभिरभ्यर्च्य बलिं ददाति । बलिरिति पिंडस्याप्युपलक्षणम् । गोत्राय शर्मणे प्रेताय दहनजनितक्षुदुपशमनार्थमेतत्पिंडं ददामीति पिंडं दत्वा बलिं ददामीति बलिं दद्यात् । जलान्तमित्यादि । जलान्तं — पानीयान्तम् । मातापित्रोरित्यादि । ब्रह्मचारिव्रतम् — स्नग्गन्धमाल्यमधुमांसभक्षणतांबूलचर्वणस्त्रीगमनोपानच्छत्रधारणादीन् वर्जयेत् । क्षौरतैलाभ्यञ्जनतांबूलचर्वणयोषितो वर्जयेदिति केचित् । पितृसमानानां ज्येष्ठानां मृते षण्मासव्रतम् । यस्मादित्यादि । चरितव्रतः कुलं वर्धयेत् । प्रथमतृतीयपञ्चमसप्तमनवमैकादशदिनेषु नवश्राद्धानि कुर्यात् । आहिताग्नेः चतुर्थेऽहन्येव सर्वं कुर्यादिति केचित् । चतुर्थेऽहनीत्यादि । पुनर्दहनोक्तवत् संभारान् गृहीत्वा श्मशानं गत्वाऽऽभ्यर्च्य अस्थिसञ्चयनं कुर्यात् । उक्तं च भारद्वाजेन । 'अवसृजेति प्रतिमन्त्रमयुग्भिरुदकैस्त्ववोक्षितमवेक्ष्य अयुजस्त्रियस्सञ्चिन्वन्ति । यस्याः पुनर्विजननं न स्यात् सा सव्ये हस्ते नीललोहितवर्णाभ्यां सूत्राभ्यां बृहती फलमाबद्ध्य सव्येन पदाऽश्मानमास्थाय सव्येन पाणिना प्रथमाऽनन्वीक्षमाणा अस्थीनादत्ते उत्तिष्ठात इति । दद्भ्यश्शिरसो वा । तद्वाससि कुंभे वा निदधदाति इदन्त एकमिति । द्वितीया अंसाभ्यां बाहुभ्यां वा । परिहूत एकमिति तृतीया । पार्श्वाभ्यां श्रोणिभ्यां वा । तृतीयेन ज्योतिषेति चतुर्थी ऊरुभ्यां जंघाभ्यां वा । संवेशन इति पञ्चमी पद्भ्याम् । एवमेवायुजाकारं सुसञ्चितं सञ्चिन्वन्ति । भस्माभिसमूह्य संहृत्य शरीराकृतिं कृत्वा शरीराण्यादायोत्तिष्ठति उत्तिष्ठप्रेहीति । शम्यां पालाशमूले

वा कुंभे निदधाति' इति । मन्त्रसंहितापाठे नास्यायमर्थः । प्राचीनावीनी कर्ता अमुष्य प्रेतस्य शर्मणः संबन्धिनः अस्थिसञ्चयनं करिष्ये इति संकल्प्य क्षीरमिश्रेणोदकेन 'यं ते अग्निममन्थाम – यं त्वमग्ने समदहः, शीतिके शीतिकावति, शंते धन्वन्या – शंते स्रवन्ती स्तनुवः' इति पञ्चभिर्मन्त्रैः औदुंबर्या शाखयान्यवोक्ष्य विगतरजसः पञ्चस्त्रिय आहूय नीललोहितवर्णाभ्यां सूत्राभ्यां बृहतीफलमाबद्ध्य वामेन पादेन पाषाणमास्थाय उत्तिष्ठात इति मन्त्रेण वामेन पाणिना दन्तेभ्यः शिरसो वा अस्थीन्यनिरीक्षमाणा अपरभागेन वा गृहीत्वा वाससि कुंभे वा असिञ्चन् निदधाति । अतः द्वितीयाऽपि योषित् तथैव इदन्त एकमिति मन्त्रेण स्कन्धाभ्यां बाहुभ्यां वा अस्थीन्यादाय तथा निदधाति । तथा तृतीया परऊत इति पार्श्वाभ्यां कटिभ्यां वा । चतुर्थी ऊरुभ्यां जंघाभ्यां वा । पञ्चमा संवेशनस्तनुव इति पादाभ्यामस्थीन्यादाय कुंभे निदधाति । एवं त्रिःकृत्वः पञ्चकृत्वो वा कुर्युः । भस्मापि समूह्य तस्याकृतिं कृत्वा शरीरास्थीन्यादाय कुंभे निधाय उत्तिष्ठप्रेहीति मन्त्रेणैका अस्थिकुम्भमादाय पलाशवृक्षमूले वा शमीवृक्षमूले वा निदध्यात् । अयं क्रमोऽनाहिताग्न्यादेरेव । अथ हविर्याजिनः प्रेतस्य तस्मिन्नहनि श्वो भूते वा समे देशे उद्धत्यावोक्ष्य परिश्रित्य सिकताभिश्चात्र दक्षिणाग्रेषु दर्भेषु सहितान्यस्थीनि पृथिव्यास्त्वक्षित्यापामोषधीनां रसेन स्वर्गे लोके निवसामि यज्ञशर्मन्निति प्रेतनाम निर्दिश्यास्थीनि निर्वपेत् । सोमयाजिनस्तु दहनाग्नेरंगारान् दक्षिणतो निर्वर्त्य तिस्रो रात्रीरध्वर्युः चतुर्थेऽह्नि तमग्निमुपसमाधाय परिस्तीर्य अग्नेः पश्चिमस्यां दक्षिणाग्रान् दर्भान् तेषु संस्तीर्य तेषु दक्षिणाग्रां शम्यां निधाय कृष्णाजिनञ्च दक्षिणाग्रीवमास्तीर्य तदूर्ध्वे दृषदमवधाय सञ्चितान्यस्थीति तत्र निक्षिप्य उपलासु संपेषयित्वा आज्यस्थाल्यां तच्चूर्णं निक्षिप्य अग्निहोत्रहवण्या सास्थिचूर्णेनाज्येन 'अस्मात्त्वमधिजात' इति हुत्वा तस्मिन्नेवाग्नौ अग्निहोत्रहवणीं कृष्णाजिनं शम्यां दृषदुपले चानुप्रहरेत् । यद्यग्निचित् सोमयाजी तस्याग्निचितोऽस्थीन्येवं पेषयित्वा हुत्वा तस्योपरि शर्कराभिर्लोष्टैर्वा अग्निचयनं कुर्यात् । तथाच भारद्वाजः । 'अथातो हविर्याजीयं निवपनम्' । यं कामयेतानन्तलोकः स्यादिति समस्या उत्थितोऽवोक्षिते सिकतो पोषे परिश्रितो वाग्यतो दहेत् । 'अस्थीनि कुंभान्तर्निधानमनाहिताग्नेः

स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः 'दहनान्तं सोम्याजिनश्चयनान्तमग्निचित' इति । 'नामन्त्रयतानामिक्षामुत्सर्गो राजगत्या पशुबन्धयाजिनः स्त्रियाश्च दहनकल्पेन विकल्पयन्ति' च इति । एवमस्थिसञ्चयनं कृत्वा अनाहिता-न्यस्थीनि वक्ष्यमाणविधिना पुण्यनद्यां समुद्रे वा प्रक्षिपेत् । दशमेऽहनीत्यादि । तीर्थस्य विसर्जनं — तीर्थपार्श्वावटस्थपाषाणावाहितप्रेतविसर्जनम् । उत्सृज्य तत्पाषाणमत्रैव तीर्थस्थाने व्रीहिभिस्सह पिदधाति । बलिस्थाने — गृहद्वारावटे । सप्तमेऽहनिवत् प्रेताकारं पैष्टिकेन कृत्वाऽभ्यर्च्य पूर्ववत्तिलोदकादीन् दत्वा सायं-बलिं विना अपकृष्य वा प्रातर्बलिं दद्यात् । पायसमुक्तं मृत्पात्रैः गृहीत्वा प्रेतमुद्वास्य तेनाश्मना सह संपुटीकृत्य तस्मिन्नवटस्थान एव पिदध्यात् । पिधाय मृदाऽऽपूर्य समीकृत्य व्रीहीन् विकिरेत् । एतत्तीर्थविसर्जनम् । सायेह्नीत्यादि । तदानीं वा उच्छिष्टपात्राणि बलिपात्रपर्णादीनि दग्ध्वा पैष्टिकमाकारं गृहीत्वा तीर्थं नद्यादिकं गत्वा तत्र पैष्टिकमाकारं तीर्थे विसृज्य स्नात्वा वापयित्वा सर्वे प्रेताय धर्मोदकमिति स्मृतिसिद्धं दद्युः । तस्मिन्नेवाहन्येकोद्दिष्टं केचिद्वदन्ति । एके, एकादशेऽहनीति । वानप्रस्थस्येति । वानप्रस्थो यद्याहिताग्निस्तद्वदित्या-शयः । (इति सप्तमः खण्डः)

(अथ अष्टमः खण्डः) यो ह वा इत्यादि । यो ब्रह्मचारी गृही वानप्रस्थो वा । आत्मानि पश्यन् — परमपुरुषं श्रीमन्नारायणमात्मनि पश्यन् । वेदाग्निः — ब्रह्ममेधः । तथेत्यादि । योगी — अष्टांगायोगसंपन्नः । देवसायुज्यकः — परमपदे श्रीविष्णुसेवाभाग्याभिलाषी । परकायप्रवेशी — योगबलेन स्वेच्छया परशरीरेषु प्रवेष्टुं शक्तः । एते त्रयोऽनग्नयः । अदाह्याः । शरीरमेतेषामित्यादि । काष्ठैरन्तरीकृत्येत्यादि । ततः ऋचा प्रत्यवारोहेति शिक्ये निधाय रज्जुभिर्बद्ध्वा । नीत्वा — ब्राह्मणैः । नदीमित्यादि । नद्या अभावे यदि वा दूरस्थत्वे । पुण्यक्षेत्रे गोष्ठे देवालयसमीपे पुण्यारण्ये अश्वत्थादिपुण्यवृक्षमूले गिरिसमीपे वा नयनम् । श्वभ्रं — उद्बाहुपुरुषमानं तद्दंडप्रमाणं वा निम्नं खनति । तत्र व्याहृत्या अवोक्ष्य शमीपत्राणि दर्भांश्च प्रणवेन दक्षिणाग्रमास्तीर्य तदवटपार्श्वे योगासनेन तमासयित्वा आपोहिष्ठादिभिर्गायत्र्या पुरुषसूक्तेन वा अभिषिच्य 'विष्णो हव्यं

रक्ष ' स्वेति श्वभ्रे आसयित्वा शाययित्वा वा इदं विष्णुरिति सर्वतो मा पाहीति लिंदंड तस्य दक्षिणहस्ते निधाय स्योना पृथिवीति पवमान इत्यृचा च अप्पवित्रमास्ये निधाय प्रत्वा मुञ्चामीति मन्त्रेण वामहस्ते शिक्यं निधाय कदित्थात्वसीत्यृचा भिक्षापात्रं कटिस्थले निधाय प्रजापते नत्वत (देतान्) इत्यृचा सव्ये हस्ते कमंडलुं निबध्यात् । परमहंसादीनां तद्वन्मन्त्रं जपेत् । हंसश्शुचिषदिति तस्य हृदये जप्त्वा ब्रह्मजज्ञानमिति तस्य मूर्धानं स्पृशन् जप्त्वा भूमिर्भूमिमगादिति मूलाधारे जप्त्वा इदं विष्णुः त्रीणि पदेति द्वाभ्यां मूर्ध्नि वाग्यतो भिद्येत । परो मात्रयेति लवणैरापूर्य वालुकैस्सिकताभिरेव पिदध्यात् । यथा सृगालपक्षिशुनकाद्या न स्पृशेयुः तथा पिधाय दृढीकुर्यात् । ततः पुरुषसूक्तेन वाऽभिमन्त्र्य अतो देवेति विष्णुं स्मरन् प्रणम्य अग्निनाग्ने इति होतारमामन्त्रयेत् । अथवा प्रणवेनैव सर्वकर्म समाचरेत् । तत्र देवताप्रतिष्ठामश्वत्थस्थापनं वा कुर्यात् । तदारभ्य द्वादशेऽह्नि वक्ष्यमाणवत् नारायणबलिं कुर्यात् । अत्रेति । गाथाः – स्तुतयः । तेषामेवेत्यादि । धर्मतः – धर्मशास्त्रात् । इति चतुर्थः पटलः (इति अष्टमः खण्डः)

अथ पञ्चमः पटलः (अथ नवमः खण्डः) अथेत्यादि । आपद्वाह्याः–विपदि-दग्धुमर्हाः । स्नातक इत्यादि । विधुरः – मृतभार्यः । दन्तजातः – जातदन्तः । वीरविधवा – अनशनादिव्रतचर्यानियता विधवा । असूतविधवा – अजात-सन्ततिर्विधवा । मूढगर्भिणी – व्यर्थगर्भा । पतिघ्नी – पतिहन्त्री । निन्दिता – चारित्रदूषिता । घोरा – क्रूरा । यशोघ्नी – कीर्तिनाशिनी । पुत्रघ्नी – मृतपुत्रा । दीक्षिता – घोरव्रता । उज्झिता – स्वीयैः त्यक्ता । त्यक्तभर्तृका – भर्तारं त्यक्त्वा स्वेच्छाचारिणी । अनार्तवा – स्त्रीधर्महीना । पाषण्डेत्यादि वेदबाह्यमतानुगा वाग्विकला कर्णविकला श्रीमदष्टाक्षरादिमन्त्रजपहीना कलुषमतिः शीलहीना स्त्री । चकारात् पुरुषश्च तुल्यलक्षणः यथोक्तमन्त्रसंस्कारानर्हः । तेषां आपद्विधिर्वक्ष्यते । यो वेत्यादि । तद्ब्रह्म–तत्तपःफलम् । विशेषार्थी–मृतस्य पुण्यलोकप्राप्तिमिच्छन्–स्वजनः कर्ता । इमं विलक्षणं विवाहसंस्कारं निर्वर्त्य पश्चात् पूर्वोक्तविधिना गृहस्थस्योक्तवत् दहनं कुर्यात् । दन्तजातस्येत्यादि । तत्राग्नौ । जातदन्तस्य कृतचौलकस्य

जातकाग्नौ स्नातकस्य समावर्तनाग्नौ विधुरस्य कपालसन्तपनाग्नौ व्याहृतीर्हुत्वा सावित्र्या दहनं कुर्यात्। अन्यत्सर्वं पूर्ववत्। सूतिकामित्यादि। अन्येषां विधवादीनां वक्ष्यमाणप्रायश्चित्तोक्तवत् दहनं भवति। इति नवमः खण्डः)

(अथ दशमः खण्डः) बालस्येत्यादि। केनापि – स्वजनेन ज्ञातिना। साधारं – पत्रादिसहकृतम्। घृतेत्यादि। आस्यं पूरयित्वा – आ ओ वहेति मन्त्रेण। ततः सुरक्षितं दृढीकुर्यादवटम्। (इति दशमः खण्डः)

(अथ एकादशः खण्डः) न दाह्य इत्यादि। अतुल्यः - असमानाचारजातिः। तुल्योऽपीत्यादि। पापरोगान्वितः – पुराकृतपापदोषात् कुष्ठापस्मारादिरोगैरन्वितः। रज्जुः – पाशः, शस्त्रमायुधं, विषं – वत्सनाभ्यादि। विभ्रमो भ्रान्तिः, प्रतिषिद्धं गर्हितं तैर्हतो मृतः सोऽपि न दाह्यः। ब्राह्मणादिशूद्रान्तैर्हतः हीनैः अनुलोमप्रतिलोमादिभिश्चंडालाद्यैर्हतश्च न दाह्यः। अग्निदग्धः – दावाग्निना गृहदाहाग्निना वैद्युताग्निना वा दग्धः। जले मृतः, व्यालैः हतः, स्वकिल्बिषैः अशनिपातेन भूतैः – ब्रह्मराक्षसाद्यैः, संपातेन भृगुपतनेन महाप्रवाहप्रवेशनेन महाध्वगमनेन देशान्तरगमनेन दुर्गमप्रदेशगमनेन, व्याध्युद्भवे चिकित्सायामव्यापृतत्वेन, व्यर्थप्रायोपवेशनेषु च संदर्भेषु मृतो न दाह्यः। आदन्तजननादित्यादि। पूर्ववदवटे खननमात्रमेव। आपञ्चमादित्यादि। नाग्निः – आपद्दाह्योक्तवद्दहनं कुर्यात्। तूष्णीं भूमावित्यादि। शिशूनां दाह्यानामदाह्यानाञ्च सर्वत्राशौचान्ते द्वादशेऽह्नि वा नारायणबलिं कुर्यात्। (इति एकादशः खण्डः)

(अथ द्वादशः खण्डः) अथाकृतिदहनम्। पूर्वोक्तानामापद्दाह्यानामदाह्यानां विषयमिदम्। तेषां शरीराणि लब्धानि चेत् तानि शूद्रैर्वाहयित्वा तत्तद्दोषानुरूपप्रायश्चित्तपूर्वं दावाग्निना दाहयित्वा तदस्थिभिरसंवद्धं पालाशपर्णैराकृतिं कृत्वा तस्य दहनं कार्यमित्याकृतिदहनम्। अन्यथेत्यादि। आकृतिदहने अकृते। अस्य मृतस्य इष्टं – यागादिः। पूर्तं – अन्नप्रदानवापीकूपतटाकनिर्माणादिः। तं देवाः पितरश्च नाश्नन्ति। यस्मादियं प्रक्रिया मृतस्यानृण्यसंपादनाय

मन्वादिभिः विधीयते तस्मात् धर्मभीरुभिरिदमनुष्ठेयम् । तस्मादित्यादि । काले – शुभे । तत्रास्थीनीत्यादि । पालाशशाखानामस्थ्यादिसाम्यकथनमुखेन आकृतेः शरीरतादात्म्यं रूपयति तत्रास्थीनीत्यादिना । तदेवमित्यादि । आकृतिं कृत्वा पूर्ववत्पात्रचयनान्तं सर्वं तन्त्रं कृत्वा । तस्य तस्य 'ब्रह्मचारी गृहस्थो वानप्रस्थ आहिताग्नि'रिति यावन्तोऽग्न्यधिकारिणः पूर्वं प्रस्तुतेन तेषां तेषामुचितेनाग्निना प्रायश्चित्तपुरस्सरं दहनं करोति । इति पञ्चमः पटलः (इति द्वादशः खण्डः)

अथ षष्ठः पटलः (अथ त्रयोदशः खण्डः) अथैकोद्दिष्टमित्यादि । एकोद्दिष्टं – एकं पुरुषं स्त्रियं वा उद्दिश्य क्रियमाणं श्राद्धमेकोद्दिष्टम् । दशमे चाह्नीत्यादि । दहनादारभ्य आहिताग्नेः मरणादिनादारभ्येतरेषां अनशनं विहितम् चकारात् प्रथमेऽहन्यप्यनशनं विधीयते । दशमेऽहनि रात्रौ कर्ता प्राचीनावीती प्रेततृप्त्यर्थं श्वः एकोद्दिष्टश्राद्धं करिष्य इति संकल्प्य ब्राह्मणानामन्त्रयेत् । त्रिशुक्ला इत्यादि । श्राद्धे निमन्त्रणार्हान् ब्राह्मणान् लक्षयति । त्रिशुक्लाः – येषां त्रीण्यवदातानीत्युक्तवत् जन्मविद्याचरितैः शुद्धाः । कृशवृत्तयः – अनाढ्याः । घृणावन्तः – भूतदयापराः, सकलेन्द्रियाः – अविकलांगाः । मुक्तयोनिदोषाः – वंशद्वयपूताः । ब्राह्मणाः – श्रोत्रियाः । पात्रं – श्राद्धे निमन्त्रणायार्हाः भवन्ति । एक इत्यादि । एकादि एकादशसंख्यापर्यन्तं यथाशक्ति ब्राह्मणा निमन्त्रयितव्याः श्राद्धे भोक्तुम् । निमन्त्रिताः फलतांबूलादिदानेन वृताः भवन्ति । तथा वृतान् स्वगृह एव वासयेत् । एकादशदिन इत्यादि । मृतो मृता वा निमित्तमस्येति नैमित्तिकमिदं श्राद्धं – एकोद्दिष्टश्राद्धं, अमन्त्रकं – होमादिभिर्मन्त्रसंस्कारैः वर्जितं भोजनमात्रनिर्वर्त्यत्वादमन्त्रकमिति केचिदाहुः । तस्मादित्यादि । तन्न युक्तमिति समाधत्ते । दहनादिसंस्कारान् मन्त्रैः निर्वर्त्य तदनुषंगिसंस्कारान्तराममन्त्रकं कर्तुं न न्याय्यम् । तस्मात् सपिंडीकरणवत् पितॄणामावाहन जुष्टाकार स्वाहाकारवर्जं वैश्वदेववर्जं पैतृकाघारं कृत्वा एकोद्दिष्टश्राद्धं कुर्यात् । गृहस्येति । पूर्ववत् । वास्तुहोमं हुत्वा गृहशुद्धिं कृत्वा क्रमप्राप्तं नवश्राद्धमामेन कृत्वा स्नात्वा मध्याह्ने प्राप्ते श्राद्धं संकल्प्य आघारं

हुत्वा सतिलान् तंडुलान् स्थाल्यां निर्वाप्य कव्यं पाचयेत् । पादप्रक्षालनार्थं त्रिकोणमरत्निमवटं खानयेत् । ततस्त्रातानित्यादि । स्नातान् पूर्वं वृतान् ब्राह्मणानानीय अवटे पादौ प्रक्षाल्य यथार्हं स्रगन्धवसोऽलंकारादिभिरभ्यर्च्य सतिलदर्भेष्वासनेष्वग्नेर्दक्षिणतः आसयित्वा प्रत्येकं तत्तदभिमुखे अर्घ्यार्थं पात्रमेकं संसाद्य सतिलमेकैकं दर्भं तत्रपिधाय शन्नोदेवीरित्यद्भिरापूर्य प्रेताय स्वधेति प्रत्येकं हस्ते तिलोदकं दद्यात् । ततः अग्नौ होमं करिष्यामीति संकल्प्य पित्रे गोत्राय शर्मण इति गोत्रनामाद्युच्चार्य स्वाहान्तमाज्यतिलौदनाभ्यां जुहुयात् । ततः दक्षिणतः पिंडस्थानं सिकताभिरुक्तलक्षणं कल्पयेत् । निधायेत्यादि । पूर्ववत् – अष्टकोक्तवत् । तत्र सतिलाक्षतमित्यादि । सतिलदर्भं प्रेतायत्वेत्यद्भिरापूर्य प्रेतो मे प्रसीदत्विति प्रणम्य आम अगच्छत्वित्येकवचनान्तत्वेन मन्त्रमूहित्वा गोत्रनामादिना द्वितीयान्तेनावाहनं षष्ठ्यन्तेनासनं चतुर्थ्यन्तेन स्नानादीनित्येवं प्रेतस्यार्चनं प्रत्येकं कुर्यात् । अभिघार्येत्यादि । कव्यस्थालीमभिघार्य आमावाजस्येति पात्रं प्रक्षाल्य अग्निरिन्द्रेति पात्रे तिलौदनं प्रक्षिप्य अभिघार्य । तिलौदनेन – तेन तिलौदनेन । अथवा स्थाल्यां स्थितेनान्नेन पात्रान्तरनिक्षेपं विना सूक्ष्मं पिंडं कृत्वा वामपादांगुष्ठजानुनी भूमौ निधाय भूमिं पीडयन् गोत्रनामपूर्वकं चतुर्थ्यन्तेन एष पिंड उपतिष्ठत्विति निर्वपति । वस्त्रोत्तरीयादीत्यादि । अर्पयेत् – गोत्रनामादिना । पिंडशेषादीत्यादि । पाचितेषु संभृतेषु च पदार्थेषु पिंडार्पणादनन्तरं शिष्टं यत् तत् सर्वम्, पात्रेषु तेषाम् – निमन्त्रितानां ब्राह्मणानां भोजनपात्रेषु । अर्पयित्वा – सकृत्सकृद्दत्वा अप्रदक्षिणमभ्यर्च्य परिषिच्य पृथिवी ते पात्रमिति तत्पात्रं गृहीत्वा इदं विष्णुरिति मन्त्रान्ते प्रत्येकं ब्राह्मणस्य दक्षिणपाणेरंगुष्ठमूलं दक्षिणेन स्वेन पाणिना गृहीत्वा तदन्नं कव्यमिति स्पर्शयित्वा गोत्रनामपूर्वकं इदमन्नं सपरिकरं सतिलापिधानं सोदकुंभं सदक्षिणाकमुपतिष्ठत्वित्युक्त्वा यथेष्टं भोजयेत् । पूर्ववदित्यादि । तज्जलं – तदुदकुंभोदकम् । वायसेभ्यः इत्यादि । बलिदानं – पिंडदानम् । स्नात्वेत्यादि । कर्ता स्नात्वा प्रेतमुक्तमित्यादिना अन्तहोमं हुत्वा अग्निं विसृज्य स्वस्तिवाचनादि कुर्यात् । चकारात् ज्ञातिभिस्सह भोजनमुच्यते । पूर्ववदौपासनवैश्वदेवाचरणम् । (इति त्रयोदशः खण्डः)

(अथ चतुर्दशः खण्डः) अथेत्यादि। मासि मासि। मासे मासे। मृतदिने तथा ऊनमासिके त्रैपक्षिके ऊनषाण्मासिके ऊनाब्दिके च आसंवत्सरात् पिंडनिर्वापः। मासे तैलसंपर्कः। तैलाभ्यंगः सम्मतः। त्रिमासे वा – यदि उद्देशः। मंगल्ययोगो भवति। मासात् त्रिमासाद्वा वक्ष्यमाणप्रेताप्यायनकालमंगलयोगो भवति। तदेव विक्रियते यस्मादित्यादिना। तस्मात् – प्रेताप्यायनकालस्मरणात् उक्तेषु एकोद्दिष्टात्तृतीये षष्ठे संवत्सरे वा सपिंडीकरणं कुर्यात्। वाशब्देन द्वादशाहसपिंडीकरणमुक्तं भवति। प्रेतपिंडस्य पूर्वमृतानां पिंडैः त्रिभिस्सह संयोजनमारोपणं सपिंडीकरणमिति शब्दार्थः। प्रेतस्य गोत्रस्य शर्मणः तत्पितृपितामहप्रपितामहैः सह समानोदकसापिंड्यसिद्ध्यर्थं प्रेतत्वविमुक्तिद्वारा वस्वादिपितृलोकावाप्त्यर्थश्च प्रेतस्य गोत्रस्य शर्मणः एकोद्दिष्टविधानेन तत्पितृपितामहप्रपितामहानां गोत्राणां शर्मणां वसुरुद्रादित्यरूपाणां पार्वणविधानेनैवमुभयात्मकं विश्वदेवपूर्वकं विष्ण्वन्तं सपिंडीकरणश्राद्धं श्वः करिष्य इति संकल्प्य पूर्वेद्युः द्वौ विश्वेदेवार्थं, त्रीन् पित्रर्थमेकं प्रेतार्थमेकं विष्ण्वर्थमामन्त्र्य स्वगृहे वासयित्वा, अपरेद्युरपराह्णे संकल्प्य, अग्निं संसाद्य निमन्त्रितानाहूय पाद्यमंडलानि खात्वोपलिप्य चतुरश्रगर्तमंडले विश्वेदेवौ विष्णुं, वृत्ते गर्तमंडले पितॄन् त्रिकोणगर्तमंडले प्रेतञ्च। पाद्यं दत्वा पादौ प्रक्षाल्याचमनं दत्वा अग्नेः पश्चिमतः प्राङ्मुखौ विश्वेदेवौ दक्षिणत उदङ्मुखान् पितॄन् दक्षिणाभिमुखं प्रेतमुत्तराभिमुखं विष्णुञ्च साक्षततिलदर्भेष्वासनेषु आसयित्वा विश्वेदेवानुदगन्तं पुष्पाद्यैः पितॄन् प्रागन्तं गन्धाद्यैः एकोद्दिष्टवत्प्रेतं विश्वेदेवं विष्णुवच्चाभ्यर्च्य अभिमुखे प्रत्येकमर्घ्यपात्रं न्यस्य शन्नो देवीरित्यद्भिरापूर्य यवोऽसि धान्यराजो वा इत्यक्षतान् विश्वेदवपात्रयोः, तिलोऽसि सोमदेवत्य इति तिलान् पितृपात्रेषु निक्षिप्य, विश्वेदेववत् विष्णुपात्रे कृत्वा मन्त्रान्ते विश्वेभ्यो देवेभ्यस्स्वाहेति तयोः करे यवोदकं पितृभ्यस्स्वधेति पितॄणां करे तिलोदकं प्रेताय च तथा विष्णोश्च यवोदकमर्घ्यं सर्वेषाञ्च दद्यात्। वक्ष्यति प्रायश्चित्तसूत्रे। 'पूर्वेद्युः द्वौ विश्वेदेवार्थे त्रीन् पित्रर्थमेकं प्रेतार्थे सपिंडीकरणश्राद्धे भोक्ष्यतामिति वरयित्वा स्वाहास्वधेति तेषां करे तिलोदकं दत्वे'ति। एवमभ्यर्च्य होमं

करिष्यामीति संकल्प्य । वैश्वदेवाघारमित्यादि । मातापित्रोरौपासनाग्नौ अन्येषां लौकिकाग्नौ वैश्वदेवाघारं हुत्वा तस्मिन्नेवाग्नौ विश्वेभ्यो देवेभ्यः पितृभ्यश्च प्रत्येकं द्वयोः स्थाल्योः तंडुलैस्तिलतंडुलैश्च ओदनं पचेत् । वैश्वदेवमित्यादि । यथाभागं चरुमवदाय वैश्वदेवं हुनेत् । अष्टकावत् । अपि वा विश्वेदेवस्य — विश्वे अद्येति मन्त्राभ्यामाज्यचरुभ्यां वैश्वदेवं हुत्वा । प्राचीनावीनीत्यादि । परिषिच्य प्राचीनावीनी पैतृकाहुती होष्ये इति संकल्प्य वीतिहोत्रमित्यौदुंबरीं समिधमग्नेर्नैर्ऋत्यां कव्ये स्पर्शयित्वा दग्ध्वा पृथिवीगता-नित्यादिना पितॄन् पैतृकेन तीर्थेन दक्षिणप्रणिधावावाह्य. अन्यस्मिन् जलपात्रे गोत्रपूर्वं प्रेतमावाह्य ततः क्रमेण पितृभ्यः पात्रान्तरे प्रेताय चाज्यं निरुप्य तृष्याधिद्वयेन अग्नेरुत्तरदक्षिणयोः प्रत्येकमाज्यमधिश्रित्य उद्वास्य अग्निर्ज्योतिर्द्वयेन समिदुल्केनाज्यं दग्ध्वा समिदसीति तां दग्ध्वा उत्तानादीनि कृत्वा पैतृकमा-ज्यमप्रदक्षिणं स्रुवेणाज्यमुत्तानं स्वस्योत्तरस्यां दक्षिणास्यां प्रणीतायाश्च सन्धाय चित्पतिस्त्वादिभिः त्रिभिरग्नौ संवपति । एवं जुष्टाकारादिसंवपनान्तं कर्म कुर्यात् । अक्षतादिनेत्यादि । आदिशब्देन तिलाक्षताज्यचरवो गृह्यन्ते । अर्चयित्वा — प्रत्येकमप्रदक्षिणमग्रमध्यमूलानि स्पर्शं स्पर्शमधोभागे नीत्वा मध्ये च सन्दधाति । एवं औदुंबरीस्तिस्रः समिधः अर्चिता अग्नये कव्यवाहनायेत्यादि-मन्त्रैः प्रत्येकं यथोक्तं जुहुयात् । एताः आहुतयस्तिस्रः चक्षुषी आस्यञ्चाग्ने-र्भवन्ति । मध्ये होमान्तरे एते य पितरः इत्यादिभिस्त्रिभिर्मन्त्रैः यथोक्तं गोत्रना-मभिः चतुर्थ्यन्तैः पैतृकेनाज्येन हुत्वा कव्यस्थालीमभिघार्य दर्व्या तिलौदनं गृहीत्वाऽवदायाभिघार्य प्रत्येकं पूर्ववद्गोत्रनामपूर्वकं सोमाय पितृमते इत्यादि-भिर्मन्त्रैर्हुत्वा । तथा प्रेतोद्दिष्टाज्यचरुभ्यां गोत्राय शर्मणे प्रेतायेति नामोच्चारणपूर्वं स्वधानमस्स्वाहेति जुहुयात् । (इति चतुर्दशः खण्डः)

(अथ पञ्चदशः खण्डः) पूर्ववत्—अष्टकावत् । अग्नेः नैर्ऋत्यां यथोक्तस्थाने—सिकताभिरुदक्प्रागपरमरत्निमात्रं वितस्त्यायतं दक्षिणतो भागोन्नतं स्थानं कल्पयेदित्ये-कोद्दिष्टोक्तपिंडस्थाने । उदुंबरपत्रदर्भान् अयुग्मान् दक्षिणाग्रानास्तीर्य सपवित्रतिल-मावाहनपात्रं प्रत्येकं निधाय पोषायत्त्वेत्यद्भिरापूर्य पितरो मे प्रसीदन्त्विति प्रणम्य

आम आगच्छन्तु पितरः इत्येवं पितामहाः प्रपितामहा इति नामभिर्विना मन्त्रं सन्नम्य तत्तत्पात्रेष्वावाह्य गन्धाद्यैः पितॄन् अर्चयित्वा तत्स्थानात् पुरतः प्रेतस्थानं एकोद्दिष्टवत् कृत्वा तत्रौदुंबरीं शाखां दक्षिणाग्रां निधाय पूर्ववत् दर्भेण सापसव्यं खननं तिलदर्भौदुंबरपत्रास्तरणञ्च कृत्वा सतिलाक्षतं पुष्पमेकं निधाय सतिलाक्षतपवित्रमावाहनपात्रं निधाय पोषायत्वेत्यद्भिरापूर्य 'प्रेतो मे प्रसीद' त्विति प्रणम्य 'आम अगच्छतु प्रेतो देवयाना' नित्युच्चरन् गोत्रनामोच्चारणपूर्वकं प्रेतमावाह्य. तथैव गन्धाद्यैरर्चयति। आमावाजस्येत्या॰ पात्रं—पिंडपात्रम्। अयमोदन इत्यादि। अष्टकावत् प्रत्येकं पिंड गृहीत्वा नामग्रहणं विना गोत्रेभ्यो रूपेभ्यः पितृभ्यः इमं पिंड ददामीति। क्रमेण आद्यान्—प्रधानान् त्रीन् पिंडात् निर्वपति। तस्मात्तेषामित्यादि। चतुर्णां—उक्तपितृपितामह प्रपितामह ज्ञातिवर्गाणां पिंडनिर्वापः क्रमेण अष्टकादिषु। नात्र सपिंडीकरणे। तस्य चेत्यादि। प्रेतस्य च स्थाने च अयमोदन इत्युक्त्वा गोत्रनामपूर्वकं एष पिंड उपतिष्ठत्विति चतुर्थ्यन्तेन पिंडमेकं निरुप्य। पूर्ववदञ्जनादीनुभयत्र दद्यात्। तथा पूर्ववदुदकुंभं निधाय पानीयमाचमनं दत्वा ऊर्जं वहन्तीरिति पिंडपात्रोदकं परितः संस्राव्योदकं दत्वा प्रत्येकं शूर्पेणाच्छाद्योपरि पुष्पतिलाक्षतदर्भान् निधाय अमूर्तानामिति पितॄणामवटे तत्पात्रोदकं निनीय नमो वः पितर इति प्रणमेत्। ततः उक्तेषु ब्राह्मणभोजनपात्रेषु यथाभागं पिंडशेषमन्नापूपादिकं सर्वं निक्षिप्याभिघार्य परिषिच्य पृथिवी ते पात्रमिति पात्रं स्पृशन् भोक्तुः दक्षिणपाणेरंगुष्ठमूले गृहीत्वा कर्ता इदं विष्णुरिति मन्त्रान्ते विष्णो हव्यं रक्षस्वेति पात्रस्थमन्नं स्पर्शयित्वा विश्वेभ्यो देवेभ्य इदमन्नं सपरिकरं सतिलापिधानोदकुंभं सदक्षिणाकमुपतिष्ठत्विति वदेत्। ततः प्राचीनावीती अप्रदक्षिणं परिषिच्य पात्रं पूर्ववत् स्पृष्ट्वा अपसव्येन विष्णो कव्यं रक्षस्वेति तदन्नं स्पर्शयित्वा पितृ पितामह प्रपितामहेभ्यः प्रेताय च दद्यात्। प्रेताय ददामीति वा दद्यात्। तथा हव्यमिति पूर्ववत् विष्णवे चान्नदानं दत्वा यथेष्टं भोजयेत्। तत्र वाग्यतान् भुञ्जानान् पैतृकाः ऋचः आश्रावयेत्। तेषु तृप्तेषु पितरः तृप्ता भवन्ति। तथा वक्ष्यति सूत्रकारः। अनुत्थितेभ्यः सकाशादुच्छिष्टापनोदनात्पूर्वमथवा आचान्तेभ्यः

सन्निधौ उच्छिष्टापनोदनात्पूर्वमेव पिंडसंयोजनं कुर्यात् । पितृस्थानगतायेत्यादि । पिंडस्थानं गत्वा संकल्प्य शूर्पविपोह्य । तत्पिंडं - प्रेतपिंडं त्रिधा कृत्वा - दर्भेण समप्रमाणं त्रेधा विभज्य पितृस्थानगताय इत्येकं भागमादाय गोत्र शर्मन् प्रेत त्वत्पिंडं त्वत्पितृपिंडेन सह संयोजयिष्ये इत्युच्चरन् निमित्तब्राह्मणेनाज्ञातः पिंडे - पितृपिंडोपरि निधाय । तथा, द्वितीयभागं द्वितीयपिंडोपरि तृतीयभागं तृतीयपिंडोपरि पितामहस्थानगताय - प्रपितामहस्थानगतायेति -- त्वत्पिंडं त्वत्पितामहपिंडेन, त्वत्पिंडं त्वत्प्रपितामहपिंडेन सह संयोजयिष्ये इत्युहित्वा तत्तत्पिंडं निक्षिप्य 'संगच्छध्व' मिति मन्त्रेण प्रेतपिंडस्य त्रीन् भागान् क्रमेण त्रिभिः पिंडैः सुदृढं योजयति । तथा पितृस्थानगतायेति प्रेतावाहनपात्रोदकं गृहीत्वा प्रेत त्वदावाहनपात्रोदकं त्वत्पितृ पितामह प्रपितामहानामावाहनपात्रोदकेन सह संयोजयिष्ये इत्युक्त्वा प्रेतावाहनपात्रस्योदकमुद्धरिण्या गृहीत्वा क्रमेण किञ्चित्किञ्चित तत्पित्रादिपात्रेषु समानीय आकूतिरिति मन्त्रेण आलाल्य संयोजयेत । तथा पितृस्थानगतायेत्युच्चरन् प्रेतपिंडस्थानं पितृपिंडस्थानेन संयोजयेत् । वक्ष्यति च प्रायश्चित्ते तथा सूत्रकारः । अपुत्रायाः पत्न्याः पिंडं भर्तृपिंडेन पुत्रवत्याः पिंडं पितामह्यादीनां पिंडैः सह संयोजयेदिति केचित् । यस्मादित्यादि । प्रेतस्य पितृत्वप्राप्तिलाभसंपादनमावश्यकमिति हेतोः पैतृकं परिवत्सरात्पूर्वं यथाविधि कार्यमिति फलति । प्राप्तवान् - प्राप्स्यति । तत्सर्वमित्यादि । जलपिंडदानादीत्यादिशब्देन आवाहनार्चनादानादिकं समस्तं कर्म अस्य प्रेतस्य पित्रादेर्नामोच्चारणं विना-विहाय पितृभ्यः पितामहेभ्यो गोत्रेभ्यो रूपेभ्य इत्येव आवहनादिपिंडसंयोजनान्तं कर्म कुर्यात्सपिंडीकरणे । अवाच्यामित्यादि । पिंडस्थानस्य दक्षिणस्यां दिशि-अवटं-श्वभ्रं । स्थलवत्-भूतलमिव समवृत्तमायतमवनतं - विस्तृतं निम्नं षडंगुलमात्रं खनित्वा तस्मिन्नवटे पूर्ववत् पानीयार्थं निक्षिप्तेनोदकुंभजलेन ऊर्जं वहन्तीरिति तर्पयित्वा अवटमापूर्य एकोद्दिष्टवत् मुखवासादि दक्षिणां दत्वा। पिंडदेवताभ्यो निवेद्य, अन्यत्र निधाय प्रोक्ष्य शूर्पमादाय तेनाच्छादयित्वा - पिंडान् पिधाय उपरि पुष्पतिलदर्भाक्षतान् विन्यस्य 'नमो वः पितर' इति प्रणम्याचम्य उच्छिष्टमपनीय बहिर्दक्षिणस्यामवटे निक्षिप्य

पिदध्यात् । उत्थितेभ्यो ब्राह्मणेभ्यः करशुद्ध्यै जलं दत्वा ततः तांबूलादि दत्वा 'अस्तु तृप्तिरामावाजस्ये'ति विश्वेभ्यो देवेभ्यः स्वाहा पितृभ्यस्स्वधा इत्युक्त्वा प्रणम्य उत्तिष्ठत इत्युत्थाप्य परेत पितरः इति पितृन् प्रवासयेत् । पितृभुक्तमित्यादि । अग्निर्जीर्णमित्यादिस्थाने ऊह्यौ मन्त्रौ । अन्तहोमः । तदग्नि मरण्यादावारोप्य । पिंडानुद्वास्य सर्वमादाय नद्यादिजले प्रक्षिप्य स्नात्वा । ब्राह्मणानामित्यादि–श्रोत्रियाणां, विशिष्य बहून् भोजयेत् । पूर्ववत् स्वस्तिवाचनं पुण्याहं कृत्वा इष्टैस्सह भुञ्जीत । यथैवैतदित्यादि । गोवत्सदृष्टान्तेन विधिवद्दत्त-जलपिंडादीनां पितृदेवतातर्पकत्वमनेन सुष्ठूपपादितं भवति । इह लोके यं कञ्चिदुद्दिश्य कृतमन्नादिदानं लोकान्तरे रूपान्तरे वर्तमानं वसुरुद्रादित्यप्रति-निधिभिः रक्ष्यमाणं तमेव चेतनं प्राप्य तं प्रीणयति । तस्माच्छास्त्रे प्रामाण्यबुद्ध्या पैतृकं कर्मावश्यं कार्यम् । तस्मादित्यादि । तस्मात्सपिंडीकरणदिनात् । इति षष्ठः पटलः (इति पञ्चदशः खण्डः)

## अथ षष्ठः प्रश्नः

### अथ प्रथमः खण्डः

**अथ निषेकादिसंस्काराणां प्रायश्चित्तं व्याख्यास्यामः ॥ १ ॥**

**अथ** — अपरसंस्कारानन्तरम् । **प्रायश्चित्तम्** — 'प्रायो दोष इति प्रोक्तश्चित्तं तस्य निवारणम्' इति प्रोक्तम् ।

**स्नात्वा संकल्प्य पुण्याहे विधिवत्संस्कारान् कुर्यात् ॥ २ ॥**

**स्नात्वेत्यादि । पुण्याहे ।** 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणी'ति श्रुतिसिद्ध पुण्याहे **संस्कारान् संकल्प्य कुर्यात्** ।

**चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तम् ॥ ३ ॥**

**गोचर्ममात्रोपलिप्ते पूर्ववदग्निं निधाय अभिमुखमासीनमग्निं ध्यात्वा आघारं जुहुयात् ॥ ४ ॥**

**गोचर्मेत्यादि । गोचर्ममात्रोपलिप्ते ।** 'चतुर्दिशं चतुर्हस्तं गोचर्म'-त्युक्त प्रदेशे ।

**सर्वस्यादावाघारे क्रियालोपे विपर्यासे च व्याहृतीः महाव्याहृतीः गायत्रीं सावित्रीं मिन्द्राहुती वैष्णवञ्च द्विरावर्त्य हुत्वा पुनराघारं जुहोति ॥ ५ ॥**

**सर्वस्येत्यादि ।** 'शिरो वा एतद्यज्ञ'स्येत्युत्तमांगत्वकथनादाघारस्य सर्वकर्मणामादित्वम् । **क्रियालोपे** — ज्ञानतोऽज्ञानतो वा भ्रम विप्रलंभ प्रमादाशक्तिभिः क्रियाया अकरणं क्रियालोपः । **विपर्यासे** — यथायोग्यं क्रमेणाकरणं विपर्यासः । **चकारो** न्यूनातिरेकादिद्योतकः । एतदाघाराहुतिमात्रपरम् । आवाहन जुष्टाकांरस्वाहाकारादिषु लोपादौ महाव्याहृत्यादिः । प्रधानकर्मत्वात् ।

'प्रधानस्याक्रियायान्तु सांगं तत्क्रियते पुनः ।
तदंगस्थाक्रियायान्तु नावृत्तिर्न च तत्क्रिया' ॥

इति वचनात् ।

**स्थंडिले परिस्तरणादिसंभारे च प्रमाणवर्जिते हीने मिंदाहुती सावित्रीं व्याहृतीश्च जुहुयात् ॥ ६ ॥**

**ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं कूर्चं निधाय ब्रह्मसोमौ संकल्पयति ॥ ७ ॥**

ऋत्विजोरित्यादि । ऋत्विजोः ब्रह्मसोमयोः । कूर्चयोः तयोः आवाहनम् ।

**सर्वं युग्मं प्राच्यामुदीच्यां वा अग्रमन्तश्च दैविके करोति । ८ ॥**

सर्वमित्यादि । युग्मं – समम् । सकलमपि प्रागग्रमुदगग्रं परिस्तरणादिकम् – अन्तश्च परिषेचनादिकम् ।

**सर्वमयुग्मं दक्षिणस्यां पश्चिमस्यां वा अग्रमन्तश्च पैतृके करोति ॥**

**होमे न्यूने अतिरिक्ते च पूर्णाहुती मिन्दाहुती जुहोति ॥ १० ॥**

**विशेषे अनुक्ते स्रुवेण होतव्यम् । आज्यं हविः, व्याहृतीर्मन्त्रम् । प्रायश्चित्ते अनुक्ते वैष्णवं प्रायश्चित्तम् ॥ ११ ॥**

विशेष इत्यादि । विशेषे–पात्रविशेषे अनुक्ते, स्रुवेण होतव्यम् । होमद्रव्यविशेषे अनुक्ते आज्यं हविः तथा व्याहृतीर्मन्त्रः ।

**अग्नावाज्ये चरौ वा होमे मक्षिका क्रिमि रोम पिपीलिकादिपतने तदपोह्य बर्हिषोद्दीप्य प्राजापत्यमाग्नेयम् ॥ १२ ॥**

अग्नावित्यादि ।

स्मृत्यन्तरे— 'मक्षिका कीट मार्जार पतंग क्रिमि दर्दराः ।
मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत' ॥ इति

किञ्च । 'बालैर्नकुलमार्जारैरन्नमुच्छिष्यते यदि ।
तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः' ॥ इति

अग्न्यायतने गोनरादाश्वमर्पमण्डूकमार्जारगर्धेर्गमने तन्पदानि 'इदं विष्णु'रिति प्रोक्ष्य वैष्णवं रौद्रञ्च ॥ १३ ॥

अग्न्यायतने इत्यादि । प्रोक्ष्य – होमभस्मादाय प्रोक्ष्य । तथा श्रौते । 'गार्हपत्याद्भस्मादाय । इदं विष्णुर्विचक्रमे' इति वैष्णवर्चा आहवनीयाद्भस्मयन्नु व्रतेत्' इति ।

परिस्तरणादि संभागणांदाहे भेदे छेदे नाशे च तन् स्थाने संयोज्य मिदाहुती द्विरावर्त्य जुहुयात् ॥ १४ ॥

आधारे कृते तस्मिन्नग्नौ समुत्पन्ने अग्निं ध्यात्वा तद्भस्म 'अयं ते योनि'रिति समिधमारोप्य 'उद्बुद्ध्यस्व' इति लौकिकाग्नौ समिधं निधायोज्ज्वाल्य परिषिच्य मनो ज्योतिः – 'अयाश्चाग्ने' मिन्दाहुती – व्याहृतीश्च जुहुयात् ॥ १५ ॥

सर्वहोमानामन्ते स्विष्टकृत्प्रभृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्याश्राविता‍दीन् जुहोति ॥ १६ ॥

अत्र विशेषः ' आधारे कृते अन्तहोमे अकृते सति वर्षाद्युपप्लवे सति अन्यत्र चलितव्ये स्थण्डिले उल्लेखनप्रोक्षणान्ते अग्निं निधाय परिस्तरणादींश्च निधाय वैष्णवं व्याहृतीश्च जुहुयात् । अनुक्तत्वादिदमेव प्रायश्चित्तम् । किञ्च । 'अनाज्ञातं' 'पुरुषसम्मितो' 'यत्पाकत्रे'ति श्रौते उक्तम् । प्रधानहोमात्प्राग्वापि विघ्निते अन्यतमेऽहनि (?) वा

'विष्णुसूक्तं वैष्णवञ्च ब्राह्मं रौद्रं तथैव च ।
पूर्णाहुती च मिंदाज्ये हुत्वा तत्कर्म पूर्ववत्' ॥ इति ।

तथा – यदि प्रणीता स्कन्देत्, 'यत्पाकत्रा मनसे'ति जुहुयात् यद्यग्नावुपघाते 'पुनस्त्वादित्ये'ति समिधं निदद्ध्यात् । ऋत्विजां मौढ्ये 'यद्विद्वाँस' इति जुहुयात् इति । एवं अन्नविषये —

स्मृत्यन्तरे — 'कृतं द्रोणाधिकस्यान्नं काकश्वानोपघातितम् ।
केनेदं शुद्ध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत् ॥

द्वात्रिंशत्प्रसृतिः प्रस्थं ततो द्विप्रस्थमाढकम् ।
ततो द्रोणाधिकस्यान्नं शुद्धमेवेत्युदाहृतम् ॥

काकश्वानोपविद्धन्तु गवाघ्रातं खरेण च ।
स्वल्पमन्नं त्यजेद्विद्वान् शुद्धं द्रोणाधिकन्तु तत् ॥

ग्रासमुद्धृत्य तद्भोज्यं यच्च लालाहतं भवेत् ।
सुवर्णोदकमभ्युक्ष्य वह्निना चोपतापितम् ॥

हुताशनोपसंस्पृष्टं सुवर्णं सलिलेन वा ।
विप्राणां ब्रह्मघोषेण शुद्धिमाप्नोति तत् क्षणात्' ॥

इत्यादि वचनान्यत्यन्तापद्विषयाणि

कात्यायनः 'प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथञ्चन ।
यतस्तदन्यथा भूतं तत एव समापयेत् ॥

समाप्तं यदि जानीयान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिस्सर्वकर्मणाम् ॥

यस्मिन् कर्मण्यपि कृते मनसस्स्यादलाघवम् ।
तावदेव पुनः कुर्याद्यावत्तुष्टिकरं भवेत्' ॥ इति

स्मृत्यन्तरे 'अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया ।
कालातीतन्तु यः कुर्यादकृतं तद्विनिर्दिशेत्' ॥ इति

कात्यायनः — 'मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत्' ॥ इति

अन्यत्र 'रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत् ।
ब्रह्मयज्ञञ्च सौरञ्च वर्जयित्वा विशेषतः' ॥ इति

स्मृत्यर्थसारे — 'उपात्ते तु प्रतिनिधौ मुख्यार्थो यदि लभ्यते ।
तत्र मुख्यमनादृत्य गौणेनैव समापयेत् ॥

मुख्याभावे यदा गौणमुपादत्ते मतिर्भवति ।
तत्र मुख्योपमं गौणं ग्राह्यं गौणोपमं न तु ॥

मुख्यद्रव्याभिचारे तु प्रतिनिध्यभिगामिना ।
प्रयुंजानस्य मुख्यादलाभे ग्राह्यस्स एव हि ॥

यस्मिन् कस्मिन्नुपात्ते तु मुख्यौपचरिते यदि ।
अन्यद्द्रव्यं विजातीयं सजातीयमथापि वा ॥

उपधाय प्रयुंजानः पूर्वं कृत्स्नमवाप्नुयात् ।
संस्काराणमयोग्योऽपि मुख्य एव हि गृह्यते ॥

न तु संस्कारयोग्योऽपि गृह्यते प्रतिरूपकः ।
कार्यैरूपैस्तथा वर्णैः क्षीरैः पुष्पैः फलैरपि ।
गन्धैः रसैः सदृक् ग्राह्यं पूर्वाभावे परं परम्' ॥ इति

भारद्वाजः — 'अज्ञाता यदि वा मन्त्रास्स्वस्वगृह्येषु चोदिताः ।
उपवातप्रमुख्यानां तेषां वै धारणे द्विजाः ॥

केवलं प्रणवो वापि व्याहृतित्रितयन्तु वा ।
स्यातां विप्रादिवर्णेषु द्वावेतौ सर्वशाखिनाम् ॥ इति

स्मृतिरत्नावल्याम्—'मुख्यकालं समाश्रित्य गौणमप्यस्तु साधनम् ।
मुख्यद्रव्यस्य लोपेन गौणकालप्रतीक्षणम्' इति

'कालातीतानि कर्माणि प्राप्नुवन्त्युत्तराणि तु ।
कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥

अकृत्वातीतकर्माणि यः कुर्यादुत्तराणि तु ।
न च देवान् न च पितॄन् न तु गच्छति मानुषान्' ॥ इति

इति श्रीमत्कौशिकवंशजेन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने प्रथमः खण्डः ।

अथ : खण्डः

ऋतौ संगमनं निषेकमित्याहुः ॥ १ ॥

ऋतावित्यादि । केचिदिदमेव गर्भाधानमिति वदन्ति । तन्न । इदमेव गर्भाधानञ्चेत् अधृतगर्भायाः प्रतिमासमार्तवसंभवात् 'मातुर्गर्भविपत्स्वघ' मित्यादिकं संभवति (?) ।

स्वभार्यायामृतुस्नातायां षोडशाहे संगमने हीने अग्निमाधाय आघारं हुत्वा वैष्णवं ब्राह्मं रौद्रमैन्द्रमाग्नेयं 'दद्भ्यस्स्वाहा' इत्यंगहोमं जयानभ्यातानान् राष्ट्रभृतो हुत्वा अन्नहोमं जुहोति ॥ २ ॥

स्नातामलंकृतां भार्यां पूर्ववद्गच्छेत् ॥ ३ ॥

स्नातामित्यादि । पूर्ववत् । विष्णुर्योनिमिति मन्त्रेणेत्यर्थः ।

ऋतौ प्रथमे होमं जुहुयात् ॥ ४ ॥

ऋतावृतौ संगमनं करोति ॥ ५ ॥

ततस्मा गर्भमाधाय पुत्रं जनयति ॥ ६ ॥

पुत्रेण पितरः प्रीता भवन्ति ॥ ७ ॥

तेनैव स्वर्गं गच्छन्ति ॥ ८ ॥

अत्र स्मृतिकाराः 'ऋतुस्नातां तु यो भार्यां स्वस्थस्सन्नाधिगच्छति ।
घोरायां ब्रह्महत्यायां तमः प्राप्नोत्यसंशयम्' ॥ इति

तथा: – 'अग्निहोत्रफला वेदाः दत्तभुक्तफलं धनम् ।
रतिपुत्रफलादाराः शीलवृत्तफलं श्रुतम्' ॥ इति

प्रथमर्तावेव होमः । आगर्भाधानात् प्रतिषिद्धवर्जदिनेषु संगमनं करोति । 'यानुत्पादयते यानध्यापयते यानुपनयते यान् याजयते' इति बोधायनवचनात् । इदं कर्मयोगनिष्ठादिव्यतिरिक्तविषयम् ।

तस्यां पुत्रहीनायां पुत्रार्थमन्यां विवाहं कुर्यात् ॥ ९ ॥

तस्यामित्यादि ।

अत्र मनुः — [1]'वन्ध्याष्टमे भवेदब्दे दशमे तु मृतप्रजाः ।
एकादशे स्त्रीजननी सद्यस्त्व प्रियवादिनी' ति ॥

एवं विहितत्वात् पुत्रार्थमन्यां कुर्यात् ।

यस्य भार्या पतिव्रता पुत्रवती साध्वी स सर्वां सिद्धिमवाप्नोति ॥ १० ॥

तस्मात् दुष्टामसाध्वीं बान्धवसन्निधौ त्यक्त्वा अन्यामुपयच्छेत् ॥ ११ ॥

तस्मादित्यादि । दुष्टां — व्यभिचारादिभिः — यद्वा वाक्पारुष्यनिष्ठुरादिभिः । असाध्वीं — पापसमाचारां । 'नारीं त्यजेत् पुत्रदशप्रसूतिका' मित्याद्युक्तरीत्या बान्धवसन्निधौ त्यक्त्वा अन्यामुपयच्छेत् ।

गर्भादानादिसंस्कारेषु नान्दीमुखे अभ्युदयश्राद्धे हीने दैविके न सह एकाहे पैतृकवत्कृते च तत्कार्यमशुभं भवति ॥ १२ ॥

गर्भाधानादीत्यादि । यद्यपि नान्दीमुखाभ्युदयश्राद्धशब्दौ पर्यायवाचकौ तथापि अत्र नान्दीमुखशब्दो होमाद्यारभ्य अभिषेचनपर्यन्तपरः अभ्युदयश्राद्धशब्दश्च ब्राह्मणभोजनपरः । तथा च अयं विवेकः—नान्दीमुखे अभ्युदयश्राद्धे वा हीने इति । तथा एकाहे समानतन्त्रेण कृते तथा पैतृकवत् अयुग्मग्रहण प्राचीनावीत दक्षिणामुखादिके पैतृकोक्तवत् कृते च तत्कार्यमशुभं भवति ।

तस्मात् पूर्वेद्युः दैविकवत् कुर्यात् ॥ १३ ॥

द्वौ विश्वेदेवौ चतुरः पितॄन् ब्राह्मणान् वरयित्वा 'नान्दीमुखाः पितरः प्रियन्ता' मिति हस्ते यवोदकं दत्वा आघारान्ते पूर्ववद्धोमं हुत्वा अन्ते ब्राह्मणान् भोजयेत् ॥ १४ ॥

1. वन्ध्या अष्टमे अब्दे त्याज्येत्यर्थः । एवमुत्तरत्रापि ।

द्वौ विश्वेदेवावित्यादि । द्वौ विश्वेदेवौ । चतुरः पितॄन् – मात्रर्थं द्वौ पित्रर्थं द्वौ – एवं चतुरः ।

शातातपः 'मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानान्तु वृद्धिश्राद्धेषु दातृभिः' ॥ इति

मातामहार्थं द्वौ (?)

'नैमित्तिके मृताहे च वृद्धिश्राद्धे तथैव च ।
मात्रादीनां पृथक् श्राद्धमन्यत्र पितृभिस्सह' ॥ इति

अष्टकोक्तवत् नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः प्रियन्तामिति दद्यात् । नान्दीमुखाः पितरः प्रियन्तामित्यत्र प्रपितामहपूर्वकमावाहनादिकं स्यात् । एवं मातृविषये प्रपितामहीपूर्वकम् । पित्रादीनामर्चनादिकमुपवीत्येव कुर्यात् ।

**उद्यतं वा ददाति (दद्यादिति) केचित् ॥ १५ ॥**

उद्यतमित्यादि । उद्यतं – होमभोजनाद्यर्थं संपादितम् । वा – अशक्तावापदि वा ब्राह्मणेभ्यो दद्यात् ।

**अन्यथा नान्दीमुखे हीने वैष्णवं ब्राह्मं रौद्रं 'एते य इह पितरः'– 'उशन्तस्त्वा' – 'सा नो ददातु' – 'पृथिवीगतेभ्यः' इत्यादि पितृदेवत्या हुत्वा तथा नान्दीमुखं कृत्वा पुनः शुभकर्म कुर्यात् ॥ १६ ॥**

अन्यथेत्यादि । नान्दीमुखे हीने – नान्दीमुखाकरणे, नान्दीमुखं कृत्वा – प्रधानकर्माकरणे वा प्राजापत्यत्रयं गां दक्षिणाञ्च दत्वा ब्राह्मणैरनुज्ञातः

.... .... .... ....

आश्राविताादि हुत्वा तु .... .... ।
.... .... कृत्वा चाभ्युदयं पुनः ॥

बद्ध्वा प्रतिसरञ्चापि परेद्युश्शुभकर्म च ।

कृत्वा स्वस्त्ययनान्ते च कुर्याद्ब्राह्मणभोजनम्' ॥ इति

जातकर्मोत्थानयोः नान्दीमुखं वर्जयेदित्येके ॥ १७ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः

गर्भाधानकालातीते क्रियाहीने विपर्यासे च पूर्ववदाघारान्ते सुवर्णेन गर्भवत्कृत्वा तस्याः कुक्षौ सन्न्यस्य दर्भेण बन्धयेत् ॥ १ ॥

गर्भाधानेत्यादि । तृतीयमासपर्यन्तो गर्भाधानसंस्कारकालः । मासद्वयात्परं गर्भाधानक्रियायाः अकरणे ।

परिषिच्य वैष्णवं ब्राह्मं रौद्रमैन्द्रमाग्नेयं बार्हस्पत्यमंगहोमञ्च हुत्वा पूर्ववद्गर्भाधानं कुर्यात् ॥ २ ॥

विष्णुसूक्तेनोदरमभिमृशति ॥ ३ ॥

सुवर्णगर्भमादाय ब्राह्मणेभ्यो दत्वा तान् भोजयति ॥ ४ ॥

पुंसवनसीमन्तयोश्च गर्भाधानवत् प्रायश्चित्तं हुत्वा तौ करोति ॥ ५

अन्नः पुंवद्रूपयुतं सुवर्णगर्भं पुरुषसूक्तेनोदरमभिमृशतीति विशेषः ॥ ६ ॥

विष्णुबली हीने वैष्णवं विष्णुसूक्तं चतुरावर्त्य हुत्वा विष्णुबलिः कर्तव्यः ॥ ७ ॥

लौकिकाग्नौ गर्भसंस्कारान् करोति ॥ ८ ॥

पितुरौपासनाग्नावित्येके ॥ ९ ॥

भर्तुर्मरणे तत्पिता भ्राता सपिण्डो योनिबन्धुर्वा कुर्यात् ॥ १० ॥

भर्तुरित्यादि । अकृते गर्भसंस्कारे आधातरि मृते सति पुत्रो भ्राता पिता वा तद्गर्भं संस्कर्तुमर्हति ।

सत्यव्रतः— 'स्त्री यदाऽऽकृतसीमन्ता प्रसूयेत कथञ्चन ।
गृहीतपुत्रा विधिवद्गर्भं संस्कर्तुमर्हति' ॥ इति ॥

गर्भिण्याः प्रथमे गर्भे कृता गर्भसंस्काराः तस्याः सर्वगर्भाणां संस्कारा भवन्तीत्येके ॥ ११ ॥

गर्भिण्या इत्यादि ।

हारीतः — 'सकृत्संस्कृतसंस्कारास्सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वस्संस्कृतो भवे' दिति ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

**कुमारस्य कुमार्याश्च जनने सपिण्डानां दशाहमाशौचं विधीयते ॥१**

**पुरुषस्य सपिण्डता षष्ठपुरुषावधिः कन्यायाः त्रिपुरुषावधिर्भवति ॥ २ ॥**

पुरुषस्येत्यादि ।

'सपिंडता तु सर्वेषां गोत्रत्वं सप्तपूरुषे ।
समनोदकभावश्च जन्मनाम्नोरवेदने' ॥

'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः ।
सप्तमः पिंडदस्तेषां सापिंड्यं सप्तपूरुषम्' ॥ इति

कूटस्थेन सह सप्तमपर्यन्तमित्यर्थः । जनन इत्युक्तात् न मरणेऽयं नियमः

'मृतजाते पितर्युग्रं यस्या तत्कर्मणापरम् (?) ।
ज्ञातीनां सूतकं पूर्वमिति हारीतशासनम् ॥

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः' ॥

'कन्यकाजनने भ्रातृपितृतद्भ्रातृतत्सुताः ।
पितामहश्च तद्भ्राता शुद्धयन्ति दशरात्रतः' ॥

मनुः 'शुद्धयेद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्धयति' ॥

हारीतः — 'दशाह एव विप्रस्य सपिंडमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ व्यामोहकिल्विषी' ॥

अन्यत्र- 'मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी भवेत् ।
परमेकाहमावर्षादूर्ध्वं स्नानेन शुद्ध्यति' ॥

दक्षः- 'व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥

व्यसनाधीनचित्तस्य पराधीनस्य नित्यशः ।
श्राद्धकर्मविहीनस्य भस्मान्तं सूतकं भवेत्' ॥

'जातदन्तस्य दहने त्रियहं खनने त्वहः ।
दाहे तु कृतनाम्नोऽहस्त्यागे सद्यश्शुचिर्भवेत्' ॥

'सूतकान्त्यदिने पुत्रमृतौ तु दिवसं तयोः ।
प्रभाते त्रियहाच्छुद्धिरत ऊर्ध्वं दशाहतः' ॥

व्याघ्रः- 'बाले मृते सपिंडानां सद्यः शौचं विधीयते ।
दशाहेनैव दंपत्योः सोदराणां तथैव च' ॥

'आमौञ्जीबन्धनाद्विप्रः क्षत्रियस्त्वायुधग्रहात् ।
आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥

अनुपेतोऽपि विप्रस्तु राजा चैवायुधग्रहः ।
अगृहीतप्रतोदस्तु वैश्यः शूद्रो द्विवस्त्रयुक् ॥

म्रियन्ते यत्र यत्र स्यादाशौचं त्र्यहमेव तु ।
एवं विकल्पतः शौचव्यवस्था देशसम्मतः' ॥

पैठीनसिः — उपनीते मृते विप्रे दशाहन्त्वघमुच्यते ।
गृहीतधनुषि प्रेते राजन्ये षोडशाहतः ॥

धृतप्रतोदे वैश्ये तु प्रेते विंशतिरात्रयः ।
धृतवस्त्रद्वये शूद्रे प्रेते त्रिशन्निशाश्च तत्' ॥

अत्रं|डावर्शे — 'तृणकाष्ठादिघातेन कुड्येनाऽन्तरिते तथा ।
गोवालव्यजनेनापि स्नानं तत्र न विद्यते' ॥

'छायामन्तः श्वपाकादेः स्पृष्ट्वा स्नानं समाचरेत् ।
चत्वारिंशत्पदादूर्ध्वं छाया दोषो न विद्यते' ॥

स्मृत्यन्तरे — अतीते पक्षिणीकाले दशाहाभ्यन्तरे श्रुतौ ।
दिवा वा यदि वा रात्रावेककालेन शुद्ध्यति ॥

पूर्वस्यान्त्यदिने तच्चेत् द्व्यहं पूर्वाघतः परम् ।
त्र्यहं पूर्वान्त्ययामे च तत्प्रभातेऽथ वा यदि ॥

मातृतः पितृतो येषु विहिता पुंसु पक्षिणी ।
न तत्पक्षमृतौ (?) सा स्यात् स्नानमात्रं विधीयते'

बोधायनः — 'क्षत्रविट्शूद्रजातीया येस्युर्विप्रस्य बान्धवाः ।
राजन्यवैश्ययोश्चैव हीनजातिषु बन्धुषु ।
स्वं स्वमाशौचमेव स्यात् प्रसूतेषु मृतेषु च' ॥

बृहस्पतिः — 'शुद्ध्येद्विप्रो दशाहेन जन्महान्योः स्वयोनिषु ।
सप्तपञ्चनिशाभिस्तु क्षत्रविट्शूद्रयोनिषु ॥

सर्वेषामेव वर्णानामाशौचं कुर्युराहृताः ।
तद्वर्णविधिदृष्टेन स्वमाशौचं स्वयोनिषु' ॥

ब्राह्मे — 'शावाशौचं प्रकुर्वन्ति शूद्रवद्वर्णसंकराः' ।

याज्ञवल्क्यः — 'उदक्याशौचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत्' ॥

'चंडालसूतिकाशावैः संस्पृष्टस्संस्पृशेद्यदि ।
प्रमादात्तत आचम्य जप्यं कुर्यात्समाहितः' ॥

देवलः — 'संस्पृश्याशुचिसंस्पृष्टं द्वितीयं वापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्या चम्यशुद्ध्यति' ॥

वृद्धशातातपः — 'अशुचिं संस्पृशेदन्यमेक एव स दुष्यति ।
तत्स्पृष्टोऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः' ॥

आशौचे सूतके प्रेतके च सन्ध्योपासनादि नित्यकर्माणि दैविकपैतृकाणि स्वाध्यायदानप्रतिग्रहाणि च वर्जयति ॥ ३ ॥

आशौचेत्यादि ।

'पिंडोदकक्रियावन्तो होमदानप्रतिग्रहम् ।
न कुर्याद्यावदाशौचं स्वाध्यायञ्च सुरार्चनम्' ॥ इति

सुमन्तुः — 'दशरात्रेण शुद्ध्येत वैश्वदेवविवर्जितः ।
होमस्तत्र तु कर्तव्यः शुष्कान्नेन फलेन वा ।
पञ्चयज्ञविधानन्तु न कुर्यान्मृतिजन्मनोः' ॥ इति

जाबालिः — 'सन्ध्यां पञ्चमहायज्ञान् न त्यजेत्स्मार्तकर्म च ।
तन्मध्ये हापयेदेषां दशाहान्ते पुनः क्रिया ॥

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कर्म स्नानतश्शुद्धिमाप्नुयात् ॥

होममात्रन्तु कुर्वीत शुष्कान्नेन फलेन वा ।
पञ्चयज्ञविधानन्तु न कुर्यान्मृतिजन्मनोः' ॥ इति

संवर्तः — 'पित्रोर्दशाहमासीत वैश्वदेवविवर्जितः' ॥ इति

बृहस्पतिः — 'सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादि निमित्ते च .... ....' ॥

मनुपराशरौ — 'मृतबन्धोर्दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमस्स्वाध्यायश्च निवर्तते' ॥ इति

संवर्तः — 'विप्रो दशाहमासीत दानाध्ययनवर्जितः ।
अकालमृत्योः शान्त्यर्थं महादाने च रोगिणाम् ॥

स्वस्थकाले त्विदं सर्वं सूतकं समुदाहृतम् ।
आपद्गतस्य विप्रस्य सूतकेऽपि न सूतकम्' ॥

अंगिराः — 'आमं पूयति संस्कारैः सम्यक् तेभ्यः प्रदित्सितम् ।
तस्मादामं गृहीतव्यं नान्नं सूतमृतान्तरे ॥

पक्वान्नवर्जं विप्रेभ्यो गोधनं क्षत्रियादिभिः ।
वैश्यात्तु सर्वधान्यानि शूद्रात्तु न कथञ्चन ॥

अनूदकन्तु तत्सर्वं गन्धमाल्यविवर्जितम् ।
यथा वर्णेषु यत् दृष्टं प्रतिगृह्णीत वै द्विजः ॥

नाद्याच्छूद्राच्च पक्वान्नं विद्वानाशौचिनोऽपि च ।
आददीताऽऽममेवास्मात् अवृत्तावेकरात्रकम्' ॥ इति

मनुः — 'तथैव सप्तमे भक्ते भुक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणाम्' ॥ इति

अंगिराः 'यत्तु क्षेत्रगतं धान्यं कूपवापीषु यज्जलम् ।
अभोज्यादपि तद्भोज्यं यच्च गोषु गतं पयः ॥

आमं मांसं मधु घृतं दधि क्षीरमथौषधयः (?) ।
गुडं तक्रं तथोदश्वित् (?) भोज्यान्येतानि नित्यशः' ॥ इति

कुमारे जाते जातकाग्नौ प्रातर्होमे हीने व्याहृतीश्चतुरावर्त्य हुत्वा सायं द्विगुणं सायं हीने प्रातर्द्विगुणं पूर्ववदादशाहात् जुहोति ॥ ४

अतीतेऽप्येवं जातकर्म कुर्यात् ॥ ५ ॥

जातकाग्नौ समुत्सन्ने तद्भस्मनि पूर्ववत्समिधमारोप्य लौकिकाग्नौ निधाय प्रायश्चित्तं हुत्वा तथैव जुहुयात् ॥ ६ ॥

दशमेऽहनि जातकाग्निमरण्यामिध्मे वा समारोप्य तमेवाग्निं मथित्वा आधाय वास्तुहोमोत्थानहोमौ हुत्वा अग्निं समारोप्य अप्रमादं निदधाति ॥ ७ ॥

उत्थानस्य कालेऽतीते वैष्णवं ब्राह्मं रौद्रं प्रायश्चित्तं हुत्वा पूर्ववदुत्थानं कुर्यात् ॥ ८ ॥

नामकरणस्य वैष्णवं मूलहोमं यद्देवादि दिग्देवत्यश्च हुत्वा नामकरणं करोति ॥ ९ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने चतुर्थः खण्डः ।

## अथ पञ्चमः खण्डः

नक्षत्रहोमे हीने स्कन्ददैवत्यं नवग्रहदैवत्यं वैष्णवं प्रायश्चित्तम् ॥ १ ॥

अन्नप्राशने कालेऽतीते बालेनैवान्ने भुक्ते च जातकाग्नौ वैष्णवं ब्राह्ममाग्नेयमैन्द्रं सौम्यं बार्हस्पत्यञ्च हुत्वा अष्टमे दशमे द्वादशे वा मासे अन्नप्राशनं ब्राह्मणभोजनञ्च कुर्यात् ॥ २ ॥

तत्तत्काले प्रवासागमनपिण्डवर्धनयोर्हीने मूलहोमं जुहोति ॥ ३ ॥

चौलके कालेऽतीते मन्त्रवर्जं कृते च जातकाग्नौ वैष्णवं मूलहोमं ब्राह्मं वारुणमाग्नेयं रौद्रञ्च हुत्वा यथाशक्ति सुवर्णपशुदानब्राह्मणभोजनानि कृत्वा चौलकं कुर्यात् ॥ ४ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने पञ्चमः खण्डः ॥*

*अत्र खण्डे व्याख्याने ग्रन्थपातो दृश्यते ।

## अथ षष्ठः खण्डः

अथ निषेकादीनां सामान्यप्रायश्चित्तम् ॥ १ ॥

अथेत्यादि । एकस्य वा द्वयोर्वा सर्वेषाञ्च वा प्रतिसंस्कारं सामान्यं प्रायश्चित्तम् ।

विष्णोर्नुकादि मिन्दाहुत्याश्राविताादीन् द्विरावर्त्य हुत्वा तत्तत्कर्म कुर्यादिति केचित् ॥ २ ॥

अथवाप्युपनयनं यावत् तावत्कालं गर्भाधानादि चौलकान्तेषु हीनेषु तन्त्रयित्वा एकहोमे कुर्याच्चेत् पिता चान्द्रायणं पुत्रः प्राजापत्यं चरित्वा ब्राह्मणभोजनसुवर्णपशुदानानि कृत्वा विष्णोर्नुकादि मिन्दाहुत्याश्राविताादीन् रौद्रं मूलहोमं वैष्णवञ्च द्विरावर्त्य प्रत्येकं हुत्वा तन्त्रयित्वा एकहोमे गर्भाधानादीन् कुर्यात् ॥ ३ ॥

आघाराऽन्तहोमश्चैन्द्रो भवति ॥ ४ ॥

आदावन्ते च प्रत्येकं परिषेकं करोतीति विशेषः ॥ ५ ॥

आवादन्त इत्यादि । प्रत्येकं – प्रतिसंस्कारमित्यर्थः ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः

ब्राह्मण्यां ब्राह्मणात् जातमात्रे ब्राह्मणस्य प्रथमं जन्म स्यात् ॥ १

उपनयनसंस्कारे द्वितीयं भवति ॥ २ ॥

द्वितीये जन्मन्याचार्यः पिता सावित्री माता । द्वाभ्यां जन्मभ्यां द्विजो भवति ॥ ३ ॥

'अष्टवर्षं ब्राह्मणमुपनयीत' इति श्रुतिः ॥ ४ ॥

तस्माद्गर्भाधानाद्यष्टमे वर्षे ब्राह्मणस्योपनयनं श्रेष्ठम् । तदसंभवे नवमे दशमे वाप्याषोडशात् कुर्यात् ॥ ५ ॥

षोडशे वर्षेऽतीते पूर्वोक्तमुद्दालकप्रायश्चित्तं गर्भाधानादिसंस्कारश्च कृत्वा शुद्धे ब्राह्मणभोजनसुवर्णपशुदानानि कुर्यात् ॥ ६ ॥

पिता चान्द्रायणं चरित्वा तस्य जातकाग्निमाधाय आघारं हुत्वा मिन्द्राहुती पूर्णाहुती ब्राह्मं वैष्णवश्चाष्टशतमावर्त्य हुत्वा पूर्ववदुपनयनं कुर्यात् ॥ ७ ॥

पित्रेत्यादि । अष्टशतं – अष्टोत्तरशतमित्यर्थः । आवर्त्य हुत्वा । इदमेव भूत्यस्तोमोपलक्षणम् ।

पितृभ्रातृ ज्ञाति सगोत्र मातुलादिषु यः शुचिर्विद्वानुपनयनं करोति ॥ ८ ॥

अन्यथा मलान्धकारी तेन योजयति ॥ ९ ॥

अन्यथेत्यादि । अन्यथा – उक्तप्रकारसंस्कारविशेषाभावे । मलान्धकारी तेन कुमारेण योजयति ।

पित्रादि बान्धवाभावे अन्यं ब्राह्मणमुपनयनार्थं भजेत ॥ १० ॥

पित्रादीति । संस्कर्तुरभावे अन्यं ब्राह्मणं वा भजेत ।

व्याधिदुर्भिक्षाद्यैरन्त्यजातौ न्यूने समाश्रिते सुवर्णपशुभूम्या-
दीन् दत्वा अग्निमाधाय वैष्णवं गर्भाधानादीन् ब्राह्ममैन्द्रं वारुणं मूलहोम
व्याहृत्यन्तं हुत्वा उपनयनं कुर्यात् ॥ ११ ॥

व्याधीत्यादि । अन्त्यजात्याद्युक्तिरुपलक्षणम् । अन्यगोत्रेण स्वसूत्रेणो-
पनीतमप्येवमेव प्रायश्चित्तं हुत्वा गर्भाधानाद्युपनयनान्तैः स्वसूत्रोक्तैः संस्कारैः
संस्कृत्य पुनस्संस्कारं कुर्यात् ।

प्रसंगात् पुत्रपरिग्रहविधिरुच्यते ।

गृह्ये:—　'त्यागविक्रयदानेषु युक्तौ स्वपितरौ स्मृतौ ।
एकं न दद्यान्नो गृह्णान्न स्त्री भर्त्रननुज्ञया ॥

कुंडले वस्त्रयुग्मञ्च अंगुलीयञ्च संभरेत् ।
गुरुं वृत्वाऽथ राजानं निवेद्याहूय बान्धवान् ॥

तत्सन्निधौ सभामध्ये पुण्याहं द्विजभोजनम् ।
संभारांश्चापि संभृत्य आघारं विनिवर्त्य च ॥

निधाय युग्मं प्रणिधिं दातारमुपगम्य च ।
पुत्रं मे देहीति वदेत् ददामीत्याह चेतरः' ॥

'धर्माय त्वा तु गृह्णामि' 'सन्तत्यै त्वा तदा' पुनः ।
प्रतिगृह्णामीति तदा वस्त्रकुंडलभूषणैः ॥

अलंकृत्याघारशेषं कृत्वा पाकं चरोरपि ।
'यस्त्वा हृदा'न्ते प्रणवमथ 'यस्मै त्व'मित्यृचा ॥

चरुं हुत्वा व्याहृतीश्च मूलहोमान्तहोमकौ ।
कुमारं वस्त्रांगुलीयकुंडले गुरवे ददेत् ।
ततो यद्यौरसो जातः तत्तुरीयांशकं भजेत्' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वसा विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने सप्तमः खण्डः ॥

## अथ अष्टमः खण्डः

उपनयनप्रभृति ब्रह्मचारी पूर्ववत्स्नात्वा सन्ध्यामादित्यञ्चोप- स्थाय तर्पणं ब्रह्मयज्ञञ्च कृत्वा सायंप्रातः आसमावर्तनात् नित्यमग्निं समिद्भिर्जुहुयात् ॥ १ ॥

नित्यस्नानहीने पूर्ववत्स्नात्वा 'जुंबकाय स्वाहा' इति निमज्ज्य नारायणं ध्यायन् सजुंबकेन अघमर्षणसूक्तेनाघमर्षणं कृत्वा वैष्णव- मन्त्रान् जपति ॥ २ ॥

सन्ध्योपासनहीने स्नात्वा दशप्राणायामान् कृत्वा अष्टशतं सावित्रीमधीत्य सन्ध्यामुपास्य वैष्णवान् सौरमन्त्रांश्च जपति ॥ ३ ॥

पुनस्सन्ध्यागमादनशनं कृत्वा सन्ध्यामुपासीतेत्येके ॥ ४ ॥

पुनरित्यादि ।

'दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम्' ॥ इति

एवमेव रात्रौ क्रियमाणानि कर्माणि प्रातः ।

तर्पणे हीने द्विगुणं तर्पयति ॥ ५ ॥

तर्पण इत्यादि । प्रातस्तर्पयति ।

'ब्रह्मयज्ञञ्च सौरञ्च वर्जयेन्निशि सर्वदा' इति ।

ब्रह्मयज्ञविहीने गुरुसूक्तपूर्वं यजुस्संहितां स्वाध्यायं करोति ॥ ६

प्रातस्समिद्धोमे हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणम् ॥ ७

दिनत्रयं स्नानादौ हीने पूर्ववत्स्नानजपौ कृत्वा सौरमाग्नेयञ्च हुत्वा समिद्भिर्जुहुयात् ॥ ८ ॥

दिनत्रये इत्यादि । इदं समिदाधानाकरणे प्रायश्चित्तम् ।

सप्तरात्रं हीने नित्यकर्मण्यवकीर्णी भवति ॥ ९ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने अष्टमः खण्डः ॥

## अथ नवमः खण्डः

अथ अवकीर्णप्रायश्चित्तम् ॥ १ ॥

सप्तरात्रं स्नानसन्ध्योपासन स्वाध्याय समिद्धोम भैक्षाचर्यादिहीने मेखलोपवीताजिन दण्डधारणादि ब्रह्मचर्यविवर्जिते च पादकृच्छ्रमुपवासं वा कृत्वा अग्निमाधाय परिस्तीर्य परिषिच्य आज्येन 'पाहि नो अग्न एनसे' – 'पाहि नो विश्ववेदसे' – 'यज्ञं पाहि' – 'सर्वं पाहि' इति पाहिचतसृभिः 'कामावकीर्णः' – 'कामाभिदुग्धः' – 'सम्मा सिञ्चन्तु' – 'समुद्रादूर्मिः' इति चतुर्गृहीतैभिः 'पुनरूर्जा' – 'सहरय्या' – 'अतो देवाः' – 'इदं विष्णुः' इति जुहुयात् ॥ २ ॥

सप्तरात्रमित्यादि । श्रुतिरपि । 'त्रिधाऽवकीर्णी प्रविशति चतुर्धेत्याहुर्ब्रह्मवादिनः मरुतः प्राणैरिन्द्रं बलेन बृहस्पतिं ब्रह्मवर्चसेन अग्निमेवेतरेण सर्वेण तस्यैतां प्रायश्चित्तं विदार' इत्यारभ्य 'वरो दक्षिणा वरेणैव वरं स्पृणात्यात्मा हि वर' इत्यारभ्य 'वरो दक्षिणा वरेणैव वरं स्पृणात्यात्मा हि वर' इत्यन्तम् ।

मनुः — 'अवकीर्णी तु कालेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं दिशि ॥

हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा ।
वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाऽऽहुतीः ॥

कामतो रेतसस्सेकं व्रतस्थस्य द्विजन्मनः ।
प्रतिक्रमं व्रतस्याहुः धर्मज्ञा ब्रह्मवादिनः ॥

मारुतं पुरुहूतञ्च गुरुं पावकमेव च ।
चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः ।'

एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।
सप्तागारांश्चरेद्भैक्षं स्वकर्म परिकीर्तयन् ॥

तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालकम् ।
उपस्पृशंस्त्रिषवणं त्वब्देन स विशुद्ध्यति' ॥ इति

इदमत्यन्तोपघातप्रायश्चित्तम् । तथा ।

'स्वप्ने सिक्त्वा ब्रह्मचारी द्विजश्शुक्रमकामतः ।
स्नात्वा तमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्' ॥ इति

**पितृज्येष्ठयोरन्येषामुच्छिष्टभोजने मधुमत्स्यमांसप्लूतकप्रेतश्राद्धभोज्यभोजने च पुनरुपनयनं करोति ॥ ३ ॥**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने नवमः खण्डः ।

## अथ दशमः खण्डः

अथातः पुनरुपनयनम् ॥ १ ॥

पादकृच्छ्रमुपवासं वा कृत्वा अग्निमाधाय आघारान्ते व्याहृत्या पालाशसमिधो हुत्वा आज्येन विष्णुसूक्तमिन्द्राहुत्याऽश्राविताादीन् पूर्णाहुती व्याहृतीश्च हुत्वा पूर्ववदुपनयनं करोति ॥ २ ॥

पादेत्यादि । पालाशसमिधः – चतस्रः

वपनमेखलाजिनदंडधारणव्रतभैक्षाचरणानि पुनस्संस्कारे वर्ज्यन्ते ॥ ३ ॥

वपनेत्यादि । पुनस्संस्कारे वर्ज्यान्युच्यन्ते ।

अथवा सावित्रीमष्टशतमावर्त्य अभिमृश्य तयैव घृतं प्राश्नीयात् ॥ ४ ॥

गुरोरुच्छिष्टं वा भुञ्जीत ॥ ५ ॥

ततः पूतो भवति ॥ ६ ॥

तत इति । इदमज्ञानविषयम् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने दशमः खण्डः ।

## अथ एकादशः खण्डः

पारायणव्रतबन्धविसर्गे च कालेऽतीते हीनेऽपि उपनयनाग्निमाधाय आघारान्ते तत्तद्व्रतसूक्तं वैष्णवं चतुरावर्त्य हुत्वा वेदव्रतानां बन्धं विसर्गञ्च कुर्यात् ॥ १ ॥

उपाकर्मणि चतुर्वेदादिमन्त्रान् आग्नमार्षं चतुरावर्त्य हुत्वा उपाकर्म कुर्वीत ॥ २ ॥

उपाकर्मणीत्यादि । उपाकर्मणि – प्रथमोपाकर्मणि क्रियाहीने उपाकर्मणि लोपे च ।

श्रावणहोमं हुत्वा अन्ते सावित्र्या सहस्रसमिधो जुहोति ॥ ३ ॥

श्रावणे चोपाकर्मवत् प्रायश्चित्तं विधीयते ॥ ४ ॥

श्रावणे चेत्यादि । श्रावणहोमान्ते परेद्युः स्नात्वा स्थंडिले लौकिकाग्निं परिस्तीर्य परिषिच्य गायत्र्या सहस्रसमिधो जुहोति ।

गृह्यः — 'वैष्णवं विष्णुसूक्तञ्च पूर्णा मिन्दाहुती तथा ।
प्रायश्चित्तं श्रावणोक्तं बहुवर्षकृते हुनेत् ।
औत्सर्जनिकहीनेऽपि उपाकर्मवदुच्यते' ॥ इति

प्राजापत्यादिवेदव्रतान्याचरन् वेदानधीयीत ॥ ५ ॥

अनधीयानस्सर्वकर्मबहिष्कार्यो भवति ॥ ६ ॥

अनधीयान इत्यादि ।

'यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानः त्रयस्ते नामधारकाः' ॥ इति

अशक्तोऽपि यत्किञ्चिच्छाखामधीयीत ॥ ७ ॥

समावर्तनं कृत्वा स्नातको व्याहृत्या अग्नावाज्यमापाणिग्रहणा-त्रित्यं जुहोति ॥ ८ ॥

समावर्तनमित्यादि । व्याहृत्या एव होमः ।

समावर्तनक्रियाहीने पाणिग्रहणे कृते चान्द्रायणं चरित्वा अग्निमाधाय सावित्रीं वैष्णवं ब्राह्ममार्षमाग्नेयं शतमावर्त्य हुत्वा समावर्तनं कृत्वा पुनर्विवाहं करोति ॥ ९ ॥

पुनर्विवाहे पूर्ववत्सर्वं कुर्यात् ॥ १० ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण

श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने

तात्पर्यचिन्तामणौ षष्ठप्रश्ने एकादशः खण्डः ।

## अथ द्वादशः

ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेत् ॥ १ ॥

अष्टवर्षाद्दशमान्नग्निका रजस्यप्राप्ते दशवर्षाद्द्वादशाद्गौरी-त्यामनन्ति ॥ २ ॥

अष्टवर्षादित्यादि ।

'पुनर्विवाहे दाने च कालापेक्षा न विद्यते'

प्राप्ते रजसि —

मनुः — 'प्राप्ते द्वादशवर्षे यः कन्यां नैव प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्' ॥ इति

अतः स्वकाले विवाहं कुर्यात् ।

समावर्तनं कृत्वा विवाहकालेऽतीते क्रियाहीनेऽप्युपनयनाग्न्याघारं हुत्वा ब्राह्मं वैष्णवमाग्नेयं शतमावर्त्य हुत्वा अग्न्यर्थं पुत्रार्थञ्च ब्राह्मादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यात् ॥ ३ ॥

समावर्तनमित्यादि । विवाहकालेऽतीते — नग्निका गौरीत्याद्युक्त-कालेऽतीते, 'त्रिंशद्वर्षो दशाब्दा' मित्यादिकालेऽतीते च ।

आसुरादिष्वसत्पुत्रा जायन्ते ॥ ४ ॥

तस्मादासुरेण गान्धर्वेण विवाहे कृते चान्द्रायणं चरित्वा अग्निमाधाय ब्राह्मं त्रयस्त्रिंशद्वैष्णवं सावित्रीमाग्नेयं शतमावर्त्य हुत्वा ब्राह्मादिष्वेकेन पुनर्विवाहं कुर्यात् ॥ ५ ॥

तस्मादित्यादि ।

स्मृतिः — 'सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य वा ।
चौर्यादन्यैः कुमार्गैर्वा सा विवाह्या रहःस्थिता ।
पूर्वं परिश्रयस्तेषां पश्चाद्धर्मो विधीयते' ॥ इति वचनात् ।

आसुरात् द्विगुणं गान्धर्वे, गान्धर्वात् द्विगुणं राक्षसे, राक्षसात् द्विगुणं पैशाचे प्रायश्चित्तं करोति ॥ ६ ॥

आसुराद्यैः शस्तैः क्षत्रियवैश्यौ विवाहं कुर्याताम् ॥ ७ ॥

पूर्वेषामलाभे परेण ॥ ८ ॥

पूर्वेषामित्यादि । 'आसुरादिष्वसत्पुत्रा जायन्ते' इत्युक्तत्वात् प्रायश्चित्तं करोति । आसुरेण गान्धर्वेण वा विवाहे कृते चान्द्रायणं चरित्वा अग्निमाधाय आज्यं त्रयस्त्रिंशद्वैष्णवं सावित्रीमाग्नेयं शतमावर्त्य हुत्वा । 'त्रयस्त्रिंशत्तन्तव' इति ।

ब्राह्मणेनासुरगान्धर्वौ च विधिना कर्तव्यावित्येके ॥ ९ ॥

होमं हुत्वा राक्षसपैशाचौ चेत्यपरे ॥ १० ॥'

अन्यथा कन्यागमनप्रायश्चित्तं करोति ॥ ११ ॥

अन्यथेत्यादि — कन्यागमनप्रायश्चित्तं वक्ष्यमाणवत् कुर्यात् ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

—xox—

रजःप्राप्तौ कन्यां विवाहे कृते कृच्छ्रं चरित्वा अग्निमाधाय वैष्णवं सावित्रीं शतमावर्त्य हुत्वा तां पुनर्विवाहं कुरुते ॥ १ ॥

रजःप्राप्तावित्यादि। विवाहे कृते—विवाहात्पूर्वमुद्भूतरजसः कन्यायाः विवाहे कृते, ज्ञानात्कृते कृच्छ्रं प्राजापत्यञ्च कृत्वा वैष्णवहोमादिप्रायश्चित्तं कृत्वा विवाहः। अथवा कन्यापिता दोषभयात् स्वयमेव विवाहात्पूर्वं कृच्छ्रं चरित्वा प्रायश्चित्तं कृत्वा विवाहं कुरुते। इदं दशवर्षादूर्ध्वमिति केचित्। 'दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला' इति वचनात्। अर्वाग्रजोदर्शनेऽपि न दोषः। 'द्वादशवर्षात्पर' मिति

> 'प्राप्ते द्वादशवर्षे यः कन्यां वै न प्रयच्छति।
> मासि मासि रजस्तस्याः पिता पिबति शोणितमिति' ॥

अत ऊर्ध्वम्

> 'यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
> असंभाष्यो ह्यपांक्तेयः स विप्रो वृषलीपतिः' ॥ इति

इत्यादिवचनैर्ज्ञायते।

> त्रीणि वर्षाण्युपासीत कुमार्यृतुमती सती।
> ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
>
> अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम्।
> नैनः किञ्चिदवाप्नोति न च यं साऽधिगच्छति ॥

इति मनुस्मरणात्, 'ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवर' मित्युक्तत्वाच्च, रजोदर्शनात् प्रागदाने पित्रादेर्दोषः। तद्दोषशमनार्थं प्राजापत्यं चरित्वा वैष्णवं शतमावर्त्येत्यादि कुर्यात्। विवाहात्परं विज्ञातश्चेत् दोषभीरुणा वरेण वा कर्तव्यम्।

विवाहे होमकाले कन्यान्या रजस्युत्पन्ने तां स्नापयित्वा अन्यद्वस्त्रं परिधाप्य पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य मिन्दाहुत्याश्चावितादीन् व्याहृतीश्च हुत्वा कर्म प्रवर्तेत ॥ २ ॥

तत्क्रियापरिसमाप्तौ सा वधूरशुचिर्भवति ॥ ३ ॥

तत्क्रियेत्यादि । क्रियापरिसमाप्तिः स्तोमारोपणान्त इति केचित्, ध्रुवदर्शनानन्तरमिति अपरे । अत्र श्रौते – "यस्य व्रत्येहन् पत्न्यनालंभुका स्यात् तामपरुद्ध्य यजेत अपरेण वेदिमुदगग्रं योक्त्रं निदधाति । तन्मन्त्रं यजमानस्तत्पुत्रो वा अभिवदेत् । अतीते त्र्यहे 'अमोहमस्मी'त्येनामुपह्वयते । एवं प्रक्रान्तेषु हविर्यज्ञेषु यज्ञेष्टिप्रारंभे प्रथमे यस्य पत्न्यनालंभुका स्यात् (तामपरुद्ध्य यजेत) तस्मादेतामिष्टिं निर्वपेत् । आग्नेयमष्टाकपालमैन्द्रमेकादश-कपालं सौम्यं 'चरु'मित्युक्तम् । 'सम्प्रत्नवत्निकाव्या' – 'इन्द्रं वो विश्वतस्परि' – 'इन्द्रं नरः' – 'त्वं नस्सोम' – 'याते धामानि' इति याज्यानुवाक्याः । दुष्ट-हविषेष्ट्या विभ्रष्टेष्टिः । अग्न्याधेये यद्यनालंभुका प्राग्दीक्षणीयास्तथा नादधीत । कालान्तरे पश्चाच्चेदपरुद्ध्य यजेत । प्रारब्धायामन्वारंभणीयायां सा पौर्णमा-स्यन्ता भवति (अहुते) अग्निहोत्रे प्रारब्धेऽप्यपरुद्ध्य होतव्यम् । सोमाधाने सोमसंकल्पे च अनालंभुका हविर्नापेक्षेत । अतीते त्र्यहे स्नातां पूर्ववदुपह्वयते । दग्धे व्रते तदहस्समाप्येत । अन्यद्दिनातीते त्र्यहे व्याख्यातम् । तथा प्रवर्ग्ये तथोपवसथे यावत्सौत्यमहस्समाप्येत । तस्मिन्नहनि मार्जालीये परिश्रिते वसेत् । हविष्यव्रता स्यात् । यदि सूतिका अतीते दशाहे स्नात्वा तामुपह्वयते । अनालंभुकया अग्नयः स्पृष्टा नश्येयुः । पुनरादधीत । यद्येकं स्पृष्टं मथित्वा आयतने निधाय पवमानहवींषि निर्वपेत्" । इति ।

स्मृत्यन्तरे: — 'आधाने दीक्षणायाःप्राक् पत्नी यद्यार्तवान्विता ।
ततः कालान्तरे कुर्याद्विसृज्य सकलं बुधः ॥

ऊर्ध्वंश्चेद्दीक्षणीयायामपरुद्ध्य समापयेत् ।
प्राग्वा आरंभणीयाया यदि भार्या रजस्वला ॥

प्राक्तनं दशहेतुर्या (?) अग्निहोत्रं समापयेत् ।
प्रक्रान्तमग्निहोत्रादि यत्कर्म श्रुतिचोदितम् ॥

आर्तवाभिप्लुताऽऽगारं हित्वा तत्र द्विजोत्तमः (?) ।
सोमिके तु प्रवर्ग्यात्प्राक् यदि पत्नी रजस्वला ॥

समाप्य तदहः कर्म शेषन्तु विसृजेत्पुनः ।
सुत्येऽह्न्युपवसथ्येऽह्नि पत्नी यदि रजस्वला ॥

अर्वागवभृथात्कर्म कर्तव्यं तदशेषतः ।
सुत्येऽहनि निवास्या सा भवेन्मार्जारदेशके ॥

शय्यायामितरेषु स्याद्भविष्यं व्रतमुच्यते ।
स्नानं तदपि निर्दिष्टं गोमूत्रेणोष्णवारिणा ॥

विमुच्य दीक्षारूपाणि शुद्धिं कृत्वाऽथ शास्त्रतः ।
पुनर्नियुज्य विधिवत् पुण्याहं वापि वाचयेत् ॥

सुत्येऽहनि प्रसूता चेत् पत्नी तत्रापरुद्ध्य ताम् ।
कुर्यात्तत्कर्म पुत्रो वा ब्रह्मचार्यथवा तथा ॥

तन्मन्त्रं यजमानस्तु जपेत्तत्र समाहितः ।
शिष्टं कर्मात्र कुर्वीत तस्यास्स्नानादनन्तरम् ॥

ऐष्टिके पशुकार्यन्तु कर्मण्यवभृथे सदा ।
प्रक्रान्ते सार्तवार्ता चेत्तत्र सर्वं समापयेत् ॥

होमे त्वाधानतः पश्चात् अपरोध्यान्यथा त्यजेत् ।
प्रारब्धत्वादनुक्रान्तत्र्यहात्तत्र हि सा भवेत् ॥

सुत्यकालानुरोधेन सर्वत्रोपरमो भवेत् ।
बोधायनोक्तमुत्कर्षं नानुजानाति भाष्यकृत् ।
पञ्चमेऽह्नीति निर्बन्धो नात्र श्रौतबलाद्भवेत्' ॥

कुंडिनः— 'स्पृष्टा तु वैदिकं वाग्निं प्रमादाच्चेत रजस्वला ।
नष्टं तमाहुर्विद्वांसो अग्न्याधेयं भवेत्पुनः ॥

रजस्वला सूतिका वा श्रौताग्निं स्पृशते यदि ।
इष्टिमष्टाकपालेन कुर्यात्तु शुचयेऽग्नये' ॥

इतीदं गार्हपत्यव्यतिरिक्तविषयम् ॥

**ज्येष्ठे तिष्ठत्यनुजेन विवाहे कृते परिवेत्ता अनुजः चान्द्रायणं चरित्वा परिवित्तिं ज्येष्ठं विवाहं कारयित्वा पूर्ववत्प्रायश्चित्तं हुत्वा पुनर्विवाहं कुर्यात् ॥ ४ ॥**

ज्येष्ठ इत्यादि । 'प्रायश्चित्तेऽनुक्ते वैष्णवं प्रायश्चित्त' मिति पूर्वमुक्तत्वात् । अत्र च 'प्रायश्चित्तं हुत्वा पुनर्विवाहं कुर्या' दित्युक्तत्वाच्च वैष्णवं शतमावर्त्य हुत्वा पुनर्विवाहं कुर्यात् । अन्यथा

'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

परिवित्तिः परिवेत्ता तथैव परिविन्दकः ।
त्रयस्ते नरकं यान्ति दातृयाजकपञ्चमाः' ॥ इति

यमः— 'क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिविन्दने' ॥ इति

शातातपः 'पितृव्यपुत्रास्सापत्ना: परपुत्रास्तथैव(?) च ।
दाराग्निहोत्रधर्मेषु न दोषः परिवेदने' ॥ इति

कात्यायनः 'देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥

जडमूकान्धबधिरकुब्जवामनखोडकान् ।
अतिवृद्धानभार्यांश्च कृषि .... .... ॥

मत्तोन्मत्तजडक्लीबपतितानां द्विजन्मनाम् ।
नोद्वाहो न च संस्कारो नाशौचं नोदकक्रिया ॥

धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुंभकोन्मत्तचोरांश्च परिविन्दन् न दुष्यति' ॥ इति

**खोडो** भग्नपादः । **अभार्याः** भर्तुमसमर्थाः ।

मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तव्यमभिचेतेषु (?) संस्कार्यत्वं यथोचितम् ॥

कुब्जवामनखञ्जेषु गद्गदेषु खलेषु च ।
योगशास्त्राभिसक्तेषु न दोषः परिवेदने ॥

षंडान्धपतितस्तब्धजडगद्गदपंगुषु ।
यतिनैष्ठिककुब्जेषु न दोषः परिवेदने ॥

रंभाविवाहः कर्तव्यस्तदभावेऽर्कशाखया ।
विवाहं मनुजाः कुर्युरित्येवं मनुरब्रवीत्' ॥ इति

**वृद्धवसिष्ठः** — 'अग्रजस्तु यदाऽनग्निरादध्यादनुजः कथम् ।
अग्रजानुमतेः कुर्यादग्निहोत्रं यथाविधि' ॥ इति

**पराशरः** — 'द्वादशानि तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः' ॥ इति

**स्मृत्यन्तरे** — 'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च ।
राजयक्ष्माऽमयावी च न न्याय्यस्स्यात्प्रतीक्षितुम् ॥

धनवार्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ।
प्रोषिते यद्यशृण्वानस्त्वब्दादेतत्समाचरेत्' ॥ इति

**गौतमः** — 'षड्वार्षिकं पक्षं श्रूयमाणाभिगमन' इति ॥

इदं प्रोषिते वृद्धे अविद्यार्थप्रोषिते च वेदितव्यम् ।

वसिष्ठः— 'अष्टौ द्वादशवर्षाणि ज्येष्ठभ्रातरमनिर्दिष्टमप्रेक्षमाणः प्रायश्चित्ती-भवति' इति ।

देवलः— 'ज्येष्ठायामसमूढायां कन्यायामुह्यतेऽनुजा ।
सैवाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुर्मता ॥

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं भवेद्दातुः होतुश्चान्द्रायणं भवेत्' ॥ इति

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

—xox—

**परदेशगते ज्येष्ठे द्वादशवर्षेऽतीते मृतस्येव आकृतिदहनादि कर्म कृत्वा प्रायश्चित्तं हुत्वा विवाहं कुरुते ॥ १ ॥**

परदेशगते इत्यादि । आकृतिदहनादि कर्म कृत्वा—आकृति-दहनादिकर्म अकृतं चेत् 'घृतकुंभे निक्षिप्ये'त्यादिकं पूर्वमेवोक्तम् । आकृति-दहनादिकं द्वादशवर्षात्परं कर्तव्यम् ।

स्मृतिः— 'यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादौर्ध्वदैहिकम् ॥

पितुः पञ्चदशाद्वर्षात् दग्ध्वा तत्प्रतिरूपकम् ।
तदादीन्येव सर्वाणि शेषकर्माणि कारयेत्' ॥ इति

याज्ञवल्क्यः— 'यन्मासि यदहर्यानं तन्मासि तदहः क्रियाः ।
दिनाज्ञाने कुहूस्तस्य आषाढस्यान्यथा कुहूः ।
माघमासस्य वा कुर्यादेकादश्यां सितेतरे' ॥ इति

**तस्मिन् पुनरागते अनुजः पूर्ववत्प्रायश्चित्तं हुत्वा विवाहं करोति ॥ २ ॥**

तस्मिन्नित्यादि । इदं धर्मार्थयोः कृते गतस्य विषयम् ।

**ब्रह्महत्याद्यैः पतिते ज्येष्ठे बान्धवसन्निधौ वारिपूर्णघटत्यागेनैव तं त्यक्त्वा चान्द्रायणं चरित्वा विवाहं कुरुते ॥ ३ ॥**

ब्रह्महत्याद्यैरित्यादि । एवं निन्दितस्य सायाह्ने ग्रामाद्बहिः प्राचीनावीती अप्रदक्षिणं परीत्य पूर्णं घटं त्याजयित्वा तं त्यक्त्वा सर्वकर्मसु बहिष्कृत्य 'चान्द्रायणं चरित्वा विवाहं कुरुते ।

मनुः— 'पतितस्योदकं कार्यं सपिंडैर्बान्धवैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥

दासी घटमपां पूर्णं प्रत्यस्येत्प्रेतवत्पदा ।
अहोरात्रमुपासीरन्नाशौचं बान्धवैस्सह' इति ॥

याज्ञवल्क्यः — 'दासी कुंभं बहिर्ग्रामान्निनयेरन् सबान्धवाः ।
पतितस्य बहिः कुर्युः सर्वकार्येषु चैव तम्' इति ॥

गौतमः — 'गुरून् योनिबन्धूंश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्म च कुर्युः । पात्रश्चास्य विपर्यस्येयुः दासः कर्म करो वा अवकरादमेध्यपात्र-मानीय दासी घटं पूरयित्वा दक्षिणामुखा पदा विपर्यस्य 'इममनुदकं करोमि' इति नामग्राहं (करोति) तत्सर्वे अन्वालभेरन् । प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसंबन्धाश्च विक्षिपेरन् । अप उपस्पृश्य ग्रामं प्रविशेयुः' इति ।

स तदा कृतपश्चात्तापश्चेत् तं कृतप्रायश्चित्तं नद्यादौ स्नापयित्वा पूर्णकुंभेन सहानीय तं विवाहयेत् । जातकर्मादिसंस्कारैस्संस्कृत्य समावर्तनं कृत्वा वैष्णवं शतमावर्त्य विवाहयित्वा अनुजश्चान्द्रायणं कृत्वा विवाहयेत् ।

याज्ञवल्क्यः — 'चरितव्रत आयाते निनयेरन् नवं घटम् ।
जुगुप्सेरन्नचाप्येनं संवसेयुश्च सर्वशः' ॥ इति

मनुः — 'प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवम् ।
तेनैव सार्धं प्रास्येयुस्स्नात्वा पुण्ये जलाशये' ॥ इति

स्त्रीणामप्येवमेव ।

याज्ञवल्क्यः — 'पतितानामेष एव विधिः स्त्रीणा प्रकीर्तितः ।
वासो गृहान्तिके देयमन्नं वासस्सरक्षणम् ॥
नीचातिगमनं भर्तृहिंसनं गर्भपातनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम्' ॥ इति

'यानि पुंपतनीयानि स्त्रीणां तान्येव चैव हि' इति गौतमः ।

अत्र ब्रह्महत्यादीनां प्रायश्चित्तमुच्यते, यथा —

मनुः — 'ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत् ।
भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषां चेच्छयाऽऽत्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्छिराः ॥

यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुतापि वा ॥

जपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेत् ।
ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ॥

सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥

हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतस्सरस्वतीम् ।
जपेद्वा नियताहारः त्रिर्वै वेदस्य संहिताम् ॥

कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥

ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत् ।
मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च ॥

त्र्यवरं प्रतिरोद्धा वा सर्वस्वमवजित्य वा ।
विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते ॥

एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः ।
समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ।
स्वमेनोऽवभृथस्नाने हयमेधे विमुच्यते ॥

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते ।
तस्मात्समागमे तेषामेनो विख्याप्य शुद्ध्यति ॥

ब्राह्मणस्संभवेनैव देवानामपि दैवतम् ।
प्रमाणञ्चैव लोकस्य ब्रह्मात्रैव हि कारणम् ॥

तेषां वेदविदो ब्रूयुः त्रयोऽप्येनस्सुनिष्कृतिम् ।
सा तेषां पावनाय स्यात्पवित्रा विदुषां हि वाक् ॥

अतोऽन्यतममास्थाय विधिं विप्रस्समाहितः ।
ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ॥

हत्वा गर्भमविज्ञातमेतदेव व्रत चरेत् ।
राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥

उक्त्वा चैवानृतं साक्ष्ये प्रतिरुद्धय गुरुं तथा ।
अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तया सकाये निर्दग्धे मुच्यते किल्बिषात्ततः ॥

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ।
पयो घृतं वाऽऽमरणाद्गोशकृद्रसमेव वा ॥

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।
सुरापानापनुत्त्यर्थं बालवासा जटी ध्वजी ॥

सुरां वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासमम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥

अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् ।
अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः ॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् ।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति ॥

एषा विचित्राऽभिहिता सुरापानस्य निष्कृतिः' ।
'अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ।
स्वकर्म ख्यापयन् ब्रूयात् 'मां भवाननुशास्त्विति ॥

गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुद्ध्यति स्तेनो ब्राह्मणस्तपसैव तु ॥

तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ।
चीरवासा द्विजोऽरण्ये चरेत्तु ब्रह्महा व्रतम् ॥

एतैर्व्रतैर्व्यपोहेत पापं स्तेयकृतं द्विजः ।
गुरुस्त्रीगमनीयन्तु व्रतैरेभिरपानुदेत् ॥

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये ।
सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुद्ध्यति ॥

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥

खट्वांगी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः ॥

चान्द्रायणं वा त्रीन् मासानभ्यस्येन्नियतेन्द्रियः ।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम् ।
उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः' ॥ इति

पराशरः — 'दारुकाष्ठकपाषाणैः शस्त्रेणैवोद्धता बलात् ।
व्यापादयति यो गां तु तस्य कृच्छ्रं प्रदापयेत् ॥

चरेत्सान्तपनं काष्ठे प्राजापत्यन्तु लौष्टके ।
तप्तकृच्छ्रन्तु पाषाणे शस्त्रपातेऽतिकृच्छ्रकम् ॥

पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।
तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश' ॥ इति

मनुः — 'जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥

संकरापात्रकृत्यासु मासं शोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तस्याद्यावकस्त्र्यहम् ॥

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडशः ॥

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः ॥

त्र्यब्दं चरेद्वा नियतो जटी ब्रह्मणो व्रतम् ।
वसन् दूरतरे ग्रामात् वृक्षमूलनिकेतनः ॥

एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यं वृत्तस्थं दद्याच्चैकशतं गवाम् ॥

एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ।
वृषभैकादशा वापि दद्याद्विप्राय गास्सिताः ॥

चान्द्रायणं चरेत्सर्वानपकृष्टान्निहत्य तु ।
शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यति ॥

मार्जारं नकुलं हत्वा चाषं मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥

पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत् ।
उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत् ॥

अभ्रिं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ।
पलालभारकं षण्डे सैसकञ्चैकमाषकम् ॥

घृतकुंभं वराहे तु तिलद्रोणन्तु तित्तिरौ ।
शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥

हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च ।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥

वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।
अजमेषावनड्वाहं खरं हत्वैकहायनम् ॥

क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम् ।
अक्रव्यादान् वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥

जीनकार्मुकबस्तादीन् पृथक् दद्याद्विशुद्धये ।
चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ॥

दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।
एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥

अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्यनस्थ्नान्तु शूद्रहत्याव्रतं चरेत् ॥

किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे ।
अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुद्ध्यति ॥

फलदानान्तु वृक्षाणां छेदने जप्यमृक्छतम् ।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम् ॥

अन्नाद्यजानां सत्त्वानां रसजानाञ्च सर्वशः ।
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम् ॥

कृष्टजानामोषधीनां जातानाञ्च स्वयं वने ।
वृथाऽऽलंभेऽनुगच्छेद्गां दिनमेकं पयोव्रतः ॥

एतैर्व्रतैर्व्यपोह्यं स्यात् एनो हिंसासमुद्भवम् ।
ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे ॥

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति ।
मतिपूर्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः ॥

अपस्सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीश्रितं पयः ॥

स्पृष्ट्वा दत्वा च मदिरां विधिवत्प्रतिगृह्य च ।
शूद्रोच्छिष्टाश्च पीत्वाऽपः कुशवारि पिबेत्त्र्यहम् ॥

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः ।
प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुद्ध्यति ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनस्संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

वपनं मेखला दण्डो भैक्षाचर्यं व्रतानि च ।
निर्वर्तन्ते द्विजातीनां पुनस्संस्कारकर्मणि' ॥

'स्तेयदोषापहर्तॄणां व्रतानां श्रूयतां विधिः ।
धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः ॥

स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ।
मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च ॥

कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ।
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः ॥

चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ।
भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ॥

पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ।
तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च ॥

चेलचर्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ।
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥

अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ।
कार्पासकीटजोर्णानां द्विशफैकशफस्य च ॥

पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ।
एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ॥

अगम्यागमनीयन्तु व्रतैरेतैरपानुदेत् ।
गुरुतल्पव्रतं कुर्याद्रेतस्सिक्त्वा स्वयोनिषु ॥

सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च ।
पैतृष्वसेयीं भगिनीं स्वस्त्रीयां मातुरेव तु ॥

मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् ।
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ॥

ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ।
अमानुषीषु पुरुष उदक्यायामयोनिषु ॥

रेतस्सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत ।
(राज्ञीं प्रव्रजितां धात्रीं साध्वीं वर्णोत्तमामपि ॥

कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामधिगम्य च ।
चंडालभेदश्वपचकपालव्रतधारिणाम् ॥

अकामा याः स्त्रियो गत्वा पराकं व्रतमाचरेत् ) ।
मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्' ॥ इति

स्मृत्यन्तरे 'अष्टम्याञ्च चतुर्दश्यां दिवा पर्वणि मैथुनम् ।
कृत्वा सचेलं स्नात्वा तु वारुणीञ्च जपेद्बुधः ॥

सपत्नीश्च स्नुषाश्चैव भ्रातृजायां तथैव च ।
मातुलानीं सगोत्राश्च प्राजापत्यत्रयं चरेत् ।
गोद्वयं दक्षिणां दद्यात् शुद्ध्यते नात्र संशयः ॥

विप्राणां दक्षिणां दद्यात्पञ्चगोमिथुनानि तु ।
गोगामी च त्रिरात्रन्तु दद्याद्गां ब्राह्मणस्य तु ॥

पशुवेश्याभिगमने महिष्युष्ट्रीं कपिं तथा ।
खरीश्च सूकरीं गत्वा प्राजापत्यं समाचरेत् ' ॥

पराशरः 'चण्डालीश्च श्वपाकीश्च अनुगच्छति यो द्विजः ।
त्रिरात्रमुपवासित्वा विप्राणामनुशासनात् ॥

सशिखं वपनं कृत्वा प्राजापत्यत्रयं चरेत् ।
गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥

'क्षत्रियो वाथ वैश्यो वा चंडालीं यदि गच्छति ।
प्राजापत्यद्वयं कुर्याद्दद्याद्गोमिथुनद्वयम् ' ॥

मनुः — 'चडालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥

विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि ।
यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥

सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता ।
कृच्छ्रं चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् ॥ ' इति

संवर्तः — 'शूद्रान्तु ब्राह्मणो गत्वा मासं मासार्धमेव वा ।
गोमूत्रयावकाहारस्तिष्ठेत्तत्पापमोक्षकः ' ॥

षट्त्रिंशन्मते — 'ब्राह्मणो बन्धकीं गत्वा किञ्चिद्दद्याद्द्विजातये ।
राजन्याश्चेद्धनुर्दद्याद्वैश्यां गत्वा तु चैलकम् ॥

शूद्रां गत्वा तु वै विप्रः उदकुंभं द्विजातये ।
दिवसोपोषितो वा स्याद्द्याद्विप्राय भोजनम् ॥

अगम्यागमने यत्स्यात् गमनें द्विगुणं चरेत् ।
रजकश्चर्मकारश्च नटो बुरुड एव च ॥

कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ।
एतासां गमनं कृत्वा चरेच्चान्द्रायणद्वयम्' ॥

मनुः— 'अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च ।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत् ॥

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः ।
तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः ॥

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च ।
अज्ञातञ्चैव सूनास्थमेतदेव व्रतं चरेत् ॥

क्रव्यादसूकरोष्ट्राणां कुक्कुटानाञ्च भक्षणे ।
नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम् ॥

मासिकान्नन्तु योऽश्नीयादसमावर्तको द्विजः ।
स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत् ॥

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं कथञ्चन ।
स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥

बिडालकाकाख्वूच्छिष्टं जग्ध्वा श्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्रह्म सुवर्चलाम् ॥

अभोज्यमन्नं नात्तव्यमात्मनश्शुद्धिमिच्छता ।
अज्ञानभुक्तं तूत्तार्यं शोध्यं वाऽप्याशु शोधनैः' ॥

पराशरः — 'अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ॥

गायत्र्यष्टसहस्रेण शुद्धिस्स्याच्छूद्रसूतके ।
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रिये ॥

ब्राह्मणस्य यदा भुंक्ते द्वे सहस्रे तु जापयेत् ।
अथवा वामदेव्येन साम्ना चैकेन शुद्ध्यति ॥

शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम् ।
पक्कं विप्रगृहेऽपक्कं भोज्यं तन्मनुरब्रवीत ॥

आपत्कालेषु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुद्ध्येत द्रुपदां वा जपेच्छतम् ॥

दासनापितगोपालकुलमित्रार्थशीलिनः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः ॥

क्षत्रियाच्छूद्रकन्यायां सुतो जायेत नामतः ।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः' ॥

'अमेध्यरेतोगोमांसचण्डालान्नमथापि वा ।
यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत् ॥

शूद्रोऽप्येवं तथा भुंक्ते प्राजापत्यं समाचरेत् ।
पञ्चगव्यं चरेच्छूद्रो ब्रह्मकूर्चं पिबेद्द्विजः ॥

एकद्वित्रिचतुर्गावो दद्याद्विप्राद्यनुक्रमात् ।
शूद्रान्नं सूतकान्नञ्च अभोज्यस्यान्नमेव च ॥

शंकितप्रतिषिद्धान्नं शूद्रोच्छिष्टं तथैव च ।
यदि भुक्तं तु विप्रेण अज्ञानादापदोऽपि वा ॥

ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चेन पावनम् ।
बालैर्नकुलमार्जारैरन्नमुच्छेषितं यदा ।
तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः' ॥

'पीयूषं श्वेतलशुनं वृन्ताकं फलगृञ्जनम् ।
पलांडुं वृक्षनिर्यासं देवस्वकवकानि च ॥

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुद्ध्येत द्रुपदां वा जपेच्छतम्' ॥

यमः — 'ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जीवश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुस्सुवर्णकारान्नं यशश्चर्मावकृन्तिनः ॥

गणान्नं गणिकान्नञ्च लोकेभ्यः परिकीर्तितम् ।
पूयं चिकित्सकस्यान्नं शुक्रञ्च वृषलीपतेः ॥

विष्ठा वार्धुषिकस्यान्नं तस्मात्तं परिवर्जयेत् ।
तेषां त्वगस्थिरोमाणि भुंक्ते योऽन्नन्तु भक्षयेत् ॥

अमत्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् ।
मत्या कृत्वा सकृद्वापि प्राजापत्यं चरेद्द्विजः' ॥ इति

एवं ब्रह्महत्यादि प्रायश्चित्तं पुनर्विवाहश्चोक्तः ।

**विवाहान्ते वधूगृहात् विवाहाग्निमौपासनं वधूञ्च स्वगृहमानीयोत्तरस्यां यथोक्ते अग्निकुंडे पूर्ववत् बर्हिषा खनित्वा प्रादेशमात्राः प्रागन्ताश्चोत्तरान्ताः तिस्रस्तिस्रो लेखाः षड्लिखित्वा प्रोक्ष्य हिरण्यशकलं व्रीहीन्वा निधाय अग्निं निदधाति ॥ ४ ॥**

**सोऽग्निर्नित्यो धार्यः । चतुर्थेऽहन्याग्नेयस्थालीपाकं वैश्वदेवञ्च कुर्यादित्येके ॥ ५ ॥**

**विवाहान्त** इत्यादि । **चतुर्थेऽहनि** । ध्रुवदर्शनात्परं कर्तुमशक्तस्य चतुर्थेऽहन्याग्नेयस्थालीपाकं वैश्वदेवञ्च कुर्यादिति केषाञ्चिन्मतम् । चतुर्थेऽहनि पर्वसंभवात् मुख्यार्थे वा ।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

पाणिग्रहणप्रभृति गृहस्थोऽपि नित्यं स्नानं सन्ध्योपासनं ब्रह्म-यज्ञञ्च कृत्वा नित्यमग्न्याधानाद्विवाहाग्नावौपासने परिस्तीर्य परिषिच्य सायं प्रातर्व्रीहिभिरग्निहोत्रहविषा वा होमं जुहुयात् ॥ १ ॥

पाणिग्रहणेत्यादि । अग्न्याधानात्—यावदग्न्याधानं जुहोति । करणे अभ्युदयः अकरणे न दोषः । आवश्यकत्वेन पूर्वमनुक्तत्वात् । अग्नि-होत्रहविषा वा—पयसा तण्डुलैः यवैर्द्रव्यैः होमो भवति ॥

सायं होमे हीने प्रातः 'अग्नये स्वाहा'—'वैश्वानराय स्वाहा' इति, प्रातर्होमे हीने सायं 'अग्नये स्वाहा'—'पथिकृते स्वाहा' इति प्राय-श्चित्ताहुती हुत्वा पूर्वं दाऽऽयहाज्जुहोति ॥ २ ॥

सायं हीने इत्यादि । प्रायश्चित्ताहुती:—अनुक्तत्वादाज्येन प्राय-श्चित्ताहुती इति केचित् । अग्निहोत्रहविषा केचित्कुर्वन्ति । 'अग्नये पथिकृते स्वाहा' इत्येकाहुतिरिति भास्करेणोक्तम् । 'अग्नये स्वाहा'—'पथिकृते स्वाहा'—'अग्नये स्वाहा'—'वैश्वानराय स्वाहा' इति केचित् कुर्वन्ति ।

औपासने अजस्रे वर्तमाने त्र्यहे होमे विच्छिन्ने पतिरेकोप वासं कृत्वा तत्पुनराधानं करोति ॥ ३ ॥

सद्योऽनुगते क्षिप्रं त्र्यहाभ्यन्तरे अग्निं ध्यात्वा तद्भस्म 'अयन्ते योनि'रिति समिधमारोप्य 'उद्बुध्यस्व' इति लौकिकाग्नौ समिधं निधाय पूर्ववत्प्रायश्चित्तं कृत्वा नित्यं जुहुयात् ॥ ४ ॥

अनुगते त्र्यहेऽतीते अन्याग्निनापि संसर्गे च पत्नी प्राजापत्य पादकृच्छ्रं वा पतिरेकोपवासं कृत्वा पुनराधानं कुर्यात् ॥ ५ ॥

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने पञ्चदशः खण्डः ।

## अथ षोडशः खण्डः

अथातः पुनराधानम् ॥ १ ॥

अथात इत्यादि । अतः – 'अग्न्यावस्थ्यन्तरसंसर्गादिदोषैर्विच्छिन्ने सति । अतः – 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति श्रुतिः ।

पूर्ववदरण्यां मथितं व्याहृत्या श्रोत्रियागारादाहृतं वा अग्निमाधाय पूर्ववदाघारं जुहुयात् ॥ २ ॥

अग्निं परिषिच्य उत्पूतमाज्यं स्रुवेणादाय स्रुचि चतुर्गृहीत गृहीत्वा पूर्णाहुती जुहोति ॥ ३ ॥

अग्निमित्यादि । आघारान्ते अग्निं परिषिच्य उत्पूतमाज्यमिति । 'अद्भिरेव तद्यदनुत्पूत'मिति श्रुतेः । स्रुवेणादाय स्रुचि – जुह्वां चतुर्गृहीतं गृहीत्वा पूर्णाहुती जुहोति । आहुतिद्वयं पूर्णाहुतिः ।

तथा चतुर्गृहीतं गृहीत्वा 'तन्तुं तन्वन्' – 'उद्बुध्यस्वाग्ने' 'त्रयस्त्रिंशत्तन्तवः' इति तन्तुमतीस्तिस्रः, 'अग्नेऽभ्यावर्तिन्' – 'अग्ने अंगिरः' – 'पुनरूर्जा' – 'सहरय्या' इत्यभ्यावर्तनीश्चतस्रः, 'मनो ज्योति'रिति मनस्वतीं, 'प्रजापते न त्वत्' – 'प्रजापतिर्जयान्' इति प्राजापत्ये, 'अन्वग्निरुषसां' इत्यनुख्यां, 'अयाश्चाग्नेः' इति प्रायश्चित्तीयां 'उद्वयं तमस' इति ज्योतिष्मतीं, 'आयुर्दा अग्न' इत्यायुर्दां, मिन्दाहुती व्याहृतीश्च प्रत्येकं चतुर्गृहीतं गृहीत्वा पुनराधानं हुत्वा पूर्ववदौपासनं जुहोति ॥ ४ ॥

तथेत्यादि । औपासनं जुहोति

> 'यदा सन्धीयते वह्निः प्रायश्चित्तपुरस्सरम् ।
> सायमारभ्य जुहुयादाहुतीनां चतुष्टयम्' ॥

इति वचनात् सायमारभ्य आहुतिचतुष्टयं जुहुयात् ।

**औपासनं धार्यं कर्तुमशक्तोऽध्वानं गमिष्यन्वापि 'अयन्ते योनि' रित्यरण्यां समारोप्य पुनः 'जातवेद' इत्यहरहर्मथित्वा जुहुयात् ॥५॥**

**अथवा 'याते अग्ने' इत्यात्मनि 'उपावरोह' इति समिधि वा समारोप्य तेनैव लौकिकाग्नावववरोप्य जुहुयात् ॥ ६ ॥**

**समारोपणे कृते होमे विच्छिन्ने पूर्ववत् प्रायश्चित्तमाद्वादशाहा-ज्जुहोति ॥ ७ ॥**

समारोपण इत्यादि । **होमे विच्छिन्ने** – सायं होमे प्रातः 'अग्नये वैश्वानराय स्वाहा' इति, प्रातर्हीनि सायं 'अग्नये पथिकृते स्वाहा' इति यावत्सु दिनेष्वकृतं तावद्वारं सकृद्वा जुहोति । इदमावश्यकम् । सकृदाज्येन हुत्वा सकृद्वा जुहोति (?) । एवं द्वादशाहपर्यन्तं जुहोति । सकृत्पक्षे ब्राह्मणाय द्रव्यदानम् ।

**द्वादशाहे विच्छिन्ने पुनराधानं करोति ॥ ८ ॥**

**मासे विच्छिन्ने प्राजापत्यं, षाण्मासे चान्द्रायणं, संवत्सरे प्राजापत्यं, तप्तकृच्छ्रं चान्द्रायणं चरित्वा तद्द्रव्यं ब्राह्मणेभ्यो दत्वा पुनराधानं कुर्यात् ॥ ९ ॥**

**अग्नौ त्यक्ते भ्रूणहा भवति ॥ १० ॥**

अग्नावित्यादि । द्वादशाहपर्यन्तप्रायश्चित्तं प्रवासादिनिमित्तपरम्, आपत्कालपरं वा ।

स्मृतिः — 'प्रवासी चाग्निहोत्रञ्च द्विपञ्चाहञ्च सप्त वा ।
दातव्या होम एकाहे सायं प्रातः पृथक् पृथक्' ॥ इति

मरीचिः — 'शरीरापद्रवेद्यत्र भवेद्वाऽऽर्तिः प्रजायते ।
तथाऽन्यास्वपि वाऽऽपत्सु पक्षहोमो विधीयते' ॥ इति

भरद्वाजः —'याऽपरपक्षे सायं प्रातराहुतिभिरेनं पूर्वपक्षं नयेयुः दर्शञ्च कुर्यादिष्वपि भवेत् (?) प्रधानदेवताः । चतुर्गृहीतान्येकैकस्यै देवतायै पुरोनुवा-

क्यामनूच्य याज्यया जुहुयात्, एवं सर्वाग्न्यपस्तु न यज्ञे लोपो भवति' इति। **संग्रहे**—'प्रवत्स्यन्नापदि वा अग्निं परिषिच्य यावत्पक्षान्तं तानन्ति दिनानि गणयन् तावद्वारं सायं प्रातराहुतीर्जुहुयात्। उत्तरं परिषिच्य 'अग्नये सोमायेत्याज्येन स्थालीपाकार्थं जुहुयात्। ततस्समारोपयेत्' इति।

**पर्वणि पर्वणि स्थालीपाकः प्रसिद्धः। एवमौपासनं हुत्वा पञ्चमहायज्ञान् करोति॥ ११॥**

**पर्वणि पर्वणीत्यादि।** **प्रसिद्धः**—'यस्याग्निहोत्र'मित्यादिश्रुतिषु प्रसिद्धः। **औपासनं हुत्वा**—अनेनौपासनानन्तरं ब्रह्मयज्ञादिकमवगम्यते। 'उदित आदित्य' इत्यादिश्रुतिः।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ पञ्चप्रश्ने षोडशः खण्डः।

## अथ सप्तदशः खण्डः

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति पञ्च-महायज्ञाः ॥ १ ॥

सावित्रीपूर्वं नित्यं 'इषे त्वोर्जेत्वा' इति यथाकामं नैमित्तिके सावित्रीपूर्वैः द्वादशसूक्तैः 'अग्निमीळे पुरोहितं – 'इषे त्वोर्जेत्वा – 'अग्न आयाहि' – शन्नो देवी' रिति चतुर्वेदादिमन्त्रैर्वा स्वाध्यायो ब्रह्मयज्ञः ॥ २ ॥

पक्केनान्नेन वैश्वदेवेन देवेभ्यो होमो देवयज्ञः ॥ ३ ॥

पितृभ्यो बलिहरणं पितृयज्ञः ॥ ४ ॥

भूतेभ्यो बलिदानं भूतयज्ञः ॥ ५ ॥

अतिथिभ्योऽभ्यागतेभ्योऽन्नप्रदानं मनुष्ययज्ञः ॥ ६ ॥

गृहस्थो यत्पक्कं भुञ्जीत पक्केन तेन भोक्ष्यन् अभोक्ष्यन्वापि स्वगृहे तस्मिन्नौपासनाग्नौ लौकिकाग्नौ वा सायं प्रातर्वैश्वदेवं जुहुयात् ॥ ७

रात्रावमन्त्रकं बलिहरणं पत्नी वा करोति ॥ ८ ॥

एकाहे वैश्वदेवहोमे हीने 'मनो ज्योति' रिति प्रायश्चित्तं हुत्वा वैश्वदेवं जुहुयात् ॥ ९ ॥

* इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने सप्तदशः खण्डः ॥

*अस्य खण्डस्य व्याख्यानं नोपलभ्यते ।

## अथ अष्टादश: खण्ड:

त्र्यहे होमे हीने (विच्छिन्न) 'तन्तुं तन्वन्' इत्यादितन्तुमती-वैष्णवं जुहुयात् ॥ १ ॥

द्वादशाहे अग्नावौपासने स्थालीपाकं कृत्वा पूर्ववदवकीर्ण-प्रायश्चित्तं जुहोति ॥ २ ॥

द्वादशाह इत्यादि ।

गृह्यः— 'औपासनस्य द्विगुणं वैश्वदेवे चरेद्बुधः' । इति

'होमद्रव्यं ब्राह्मणेभ्यो दत्वा वा यदि होमयेत् ।
षष्टिप्रस्थमितं धान्यं त्रिप्रस्थप्रमितं घृतम् ॥

होमद्रव्यं वत्सरस्य मासादावेव होमयेत् ।
मासे मासे तु कृच्छ्रं स्यात षण्मासे द्विगुणं भवेत् ॥

त्रिगुणं नवमादूर्ध्वमब्दादूर्ध्वं चतुर्गुणम् ।
मासार्धे कृच्छ्रयुग्मन्तु पञ्च कृच्छ्राणि वत्सरे ॥

एवं द्वितीयवर्षान्तं दशकृच्छ्राणि योजयेत् ।
ततस्तृतीयवर्षान्ते त्रिंशत्कृच्छ्रमुदीरितम् ॥

ततः परेषामब्दानां प्रत्येकं दश उच्यते ।
ज्ञानतो द्विगुणं कल्प्यं नास्तिक्यात्त्रिगुणं भवेत् ।
प्रमादाद्द्विगुणं वार्धं पादं वा गुणवर्तने' ॥

इतीदं प्रायश्चित्तमौपासनस्य, द्विगुणं वैश्वदेवे ।

प्रवासेऽध्वनि परस्य गेहे च भोक्ष्यन् लौकिकाग्नाविन्धनाभावे भस्मापोह्य अंगारे, अंगाराभावे जले वा जुहोति ।' ३ ॥

प्रवास इत्यादि । लौकिकाग्नौ जुहुयात ।

**अन्नाभावे जलेनैव वैश्वदेवं कुर्यात् ॥ ४ ॥**

**अन्नाभाव** इत्यादि ।

स्मृतिः — 'पक्वाभावे प्रवासे वा तण्डुलानौषधींस्तु वा ।
पयो दधि घृतं वापि कन्दमूलफलानि वा ।
यो यजेद्देवयज्ञादौ जलं वाऽऽपस्तु वा जपेत्' ॥ इति

मनुः — 'वैदिके लौकिके वापि भुक्तोच्छिष्टे जले स्थिते ।
वैश्वदेवं द्विजैः कार्यं पञ्चसूनापनुत्तये' ॥ इति

**वैश्वदेवान्ते यत्नेनातिथिमभ्यागतञ्च भोजयति ॥ ५ ॥**

**वैश्वदेवान्त** इत्यादि । अतिथ्यभ्यागतलक्षणं पूर्वमेवोक्तम् ।

**तयोरागतयोर्भोजने हीने वैश्वदेववत्प्रायश्चित्तं करोति ॥ ६ ॥**

**तयोरित्यादि** । वैश्वदेववत्प्रायश्चित्तं – अतिथ्यभ्यागतयोर्भोजने हीने 'मनो ज्योति'रिति प्रायश्चित्तं जुहोति । त्र्यहे हीने तन्तुमतीः वैष्णवञ्च जुहुयात । अशक्तोऽप्यग्रं भिक्षां वा दत्वा भोजयेत् ।

**पाणिग्रहणप्रभृति गृहस्थधर्माण्यनुतिष्ठेत ॥ ७ ॥**

**चतुर्थीव्रतक्रियाहीने संगमने कृते चान्द्रायणं चरित्वा अग्निमौपासनमाधाय वैष्णवं ब्राह्ममार्षमाग्नेयं बार्हस्पत्यञ्च हुत्वा पुनश्चतुर्थीहोमं कुर्यात् ॥ ८ ॥**

**औपासने स्थालीपाकादीन् पाकयज्ञसंस्थान् जुहोति ॥ ९ ॥**

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने अष्टादशः खण्डः ।

## अथ एकोनत्रिंशः खण्डः

अथातः पाकयज्ञसंस्थानां प्रायश्चित्तम् ॥ १ ॥

द्वाविंशद्यज्ञेषु पञ्चमहायज्ञानुष्ठानं प्रथमो यज्ञः ॥ २ ॥

तस्य प्रायश्चित्तं पूर्वमेवोक्तम् ॥ ३ ॥

**पर्वणि स्थालीपाकहोमे हीने पादकृच्छ्रमुपवासं वा कृत्वा अग्निं प्रणम्य प्राणायामं कृत्वा अग्निदैवत्यं पथिकृद्दैवत्यञ्च स्थाल्यां द्वौ चरू पक्त्वा अग्निं परिस्तीर्य परिषिच्य आज्येन आग्नेयं सौम्यं स्विष्टाकार-मिन्द्राहुती वैष्णवं व्याहृत्यन्तं हुत्वा पूर्ववत् स्थालीपाकं द्विगुणं जुहुयात् ॥ ४ ॥**

**पर्वणीत्यादि । द्वौ चरू** – 'अग्नये जुष्टमग्नये पथिकृते जुष्ट'मिति । जुहुयात् – 'अग्नये स्वाहा' – 'अग्नये पथिकृते स्वाहा' इति च जुहुयात् ।

गृह्यः – 'स्थालीपाकविहीनन्तु बहूनामप्यतिक्रमे ।
चान्द्रायणं चरित्वैव प्रायश्चित्तं विधीयते ।
सूत्रोक्तषड्गुणं वापि कृत्वाऽभ्यासविधौ भवेत्' ॥

सर्वाधानी अनग्निश्चेत् लौकिके कुर्यात् । दक्षिणाग्नावित्येके ।

'औपासनोक्तकर्माणि लौकिकाग्नौ चरेद्बुधः' ।

इति वचनात् । पूर्ववदित्यादि – स्थालीपाकप्रधानाहुतिं द्विगुणं जुहुयात् ।

**आग्रयणहोमे हीने नवान्ने भुक्ते पादकृच्छ्रमुपवासं वा कृत्वा स्थाल्यामैन्द्राग्निं चरुं श्रपयित्वा पक्केनाऽऽज्यमिश्रेण आग्नेयमैन्द्रं वैश्वदेवं स्विष्टाकारं पूर्णाहुतीं वैष्णवञ्च हुत्वा पूर्ववदाग्रयणं कृत्वा ब्राह्मणान् भोजयित्वा नवान्नं भुञ्जीत ॥ ५ ॥**

**आग्रयणेत्यादि । स्थाल्यामैन्द्राग्निं चरुं श्रपयित्वा** – अन्यस्था-ल्यामाग्रयणदेवताभ्यश्चरुं पक्त्वा होमकाले आज्यमिश्रेण पक्केन शिष्टचरुणा

आग्नेयाद्युक्तहोमान् कुर्वीत । स्थाल्यन्तरस्थमाग्रयणदेवताभ्यो जुहुयात्, पूर्ववदाग्रयणमित्युक्तत्वात्

'इत्युक्ताग्रयणाशक्तौ वैश्वदेवावशेषितम् ।
ब्राह्मणेभ्योऽथ वा दत्वा नवान्नं भोजयेत्सदा ॥
नवैरम्न्याद्यष्टहोमो नित्यहोममथापि वा ।
अतिपत्तौ बहूनान्तु प्रायश्चित्तन्तु षड्गुणम्' ॥ इति

**यथोक्तकाले अष्टकाहोमं हुत्वा पितृभ्यः पिंडं निरुप्य ब्राह्मणान् भोजयेत् ॥ ६ ॥**

**अथवा अष्टकेति ब्राह्मणान् भोजयेत् ॥ ७ ॥**

**उद्यतं वा ददाति ॥ ८ ॥**

**उद्यतं** वेत्यादि । सव्यंजनमामं वा दद्यात् ।

'देवतातिथिवह्नीनां शिशुदारोपकारकम् ।
स्वोद्दिष्टस्य च यत्तस्मात् पक्वादामं विशिष्यते' ॥

इति स्तुतिपरम् ।

**अष्टकाहीने वैश्वदेवपैतृकौ द्वौ चरू पक्त्वा आज्यपक्वाभ्यां वैश्वदेवं वैष्णवं रौद्रं याम्यं पैतृकहोमश्च त्रिरावर्त्य हुत्वा अष्टकां कुर्यात् ॥ ९ ॥**

अष्टकेत्यादि । होमं हुत्वा पिंड निरुप्य ब्राह्मणान् भोजयेत्, इदमुत्तमम् । केवलं ब्राह्मणान् भोजयेत्, इदं मध्यमम् । उद्यतं दद्यात्, इदमधमम् । होमादिकं प्राचीनावीतिना कार्यम् । बह्वतिक्रमे षड्गुणम् *।

इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण
श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने
तात्पर्यचिन्तामणौ षष्ठप्रश्ने एकोनविंशः खण्डः ।

---

* अत्र ग्रन्थपातो दृश्यते ।

## अथ त्रिंशः खण्डः

पिंडपितृयज्ञे मासिश्राद्धे च हीने अष्टकावत् प्रायश्चित्तं जुहोति ॥ १ ॥

चैत्रीयज्ञविहीने चरुं पक्त्वा आज्येन चरुणा सौम्यं श्रीदेवत्यं विष्णुसूक्तं मिन्दाहुत्याश्राविताादीन् हुत्वा पूर्ववच्चैत्र्या यजेत ॥ २ ॥

आश्वयुजीयज्ञविहीने चरुं पक्त्वा आज्यचरुभ्यां रुद्रसूक्तं मिन्दाहुत्याश्राविताादीन् हुत्वा पूर्ववदाश्वयुज्या यजेत ॥ ३ ॥

प्रातर्होमान्ते विष्णोर्नित्यार्चने हीने सायं द्विगुणं, सायं हीने प्रातर्द्विगुणमर्चनं हविर्निवेदनञ्च कुर्यात् ॥ ४ ॥

आद्वादशाहात् ॥ ५ ॥

द्वादशाहेऽतीते पुरुषसूक्तविष्णुसूक्ताभ्यां हुत्वा पूर्ववदभ्यर्च्य हविर्निवेदयतीति विज्ञायते ॥ ६ ॥

पूर्ववदित्यादि ।

'एककालं द्विकालं वा यथेष्टं स्यात् गृहार्चन' मित्यत्रिः । अशक्तावेककालपूजने कृतेऽप्यदोष इत्यर्थः ।

गृह्यः— 'सायं प्रातश्च द्विगुणं द्विगुणं स्यात्प्रयोगतः ।
अर्वाक् च द्वादशाहात्तु अर्चाहीने अयं विधिः ॥
अतीते द्वादशाहे तु प्रायश्चित्तविधिस्त्वयम् ।
हुत्वा पुरुषसूक्तेन वैष्णवं जुहुयात्क्रमात् ॥
विष्णुसूक्तेनार्चयित्वा पूर्ववद्धि निवेदयेत् ।
कुर्यादाब्दादेवमेव पुनः संस्थापनं ततः ॥
पुनः प्रतिष्ठा तत्र स्यात् अन्यत्र स्नपनं भवेत् ।
वैष्णवं पौरुषं सूक्तं श्रीसूक्तं भूमिसूक्तकम् ॥

हुत्वा हविश्च बहुलं नैवेद्यञ्च समर्पयेत् ।
अधिवासाक्षिमोक्षौ च रत्नन्यासविधिं विना ।
अन्यत्सर्वं पूर्ववत्स्यात् पुनःस्थापनकर्मणि' ॥ इति

कात्यायनः— 'पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्' ॥ इति

प्रजापतिः— 'दर्शञ्च पूर्णमासञ्च लुप्त्वा चोभयमेव च ।
एकस्मिन् कृच्छ्रपादेन द्वयोरर्धेन शोधनम् ॥

हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः ।
प्राजापत्येन शुद्ध्येत पाकसंस्थासु चैव हि ॥

सन्ध्योपासनहानौ तु नित्यस्नानं विलोप्य च ।
होमञ्च नैत्यकं शुद्ध्येत् गायत्र्यष्टसहस्रतः' ॥ इति

**अथ निषेकादि, ऋतौ संगमनं, गर्भाधानकालेऽतीते, कुमारस्य कुमार्याश्च, नक्षत्रहोमे हीने, अथ निषेकादीनां, ब्राह्मण्यां ब्राह्मणात्, उपनयनप्रभृति, अथावकीर्णप्रायश्चित्तं, अथातः पुनरुपनयनं, पारायणव्रतबन्धविसर्गे, ब्राह्मणो ब्राह्मणीं, रजःप्राप्तौ, परदेशं गते, पाणिग्रहणप्रभृति, अथातः पुनराधानं, ब्रह्मयज्ञो देवयज्ञः, त्र्यहे होमे विच्छिन्ने, अथातः पाकयज्ञसंस्थानां, पिंडपितृयज्ञे मासि श्राद्धे चेति विंशतिः ॥**

*इति श्रीमत्कौशिकवंश्येन गोविन्दाचार्यसूनुना वेदान्ताचार्यवर्येण श्रीनिवासाख्ययज्वना विरचिते श्रीवैखानससूत्रव्याख्याने तात्पर्यचिन्तामणौ षष्ठप्रश्ने विंशः खण्डः ॥

**॥ इति षष्ठः प्रश्नः समाप्तः ॥**

*इतःपरं दीक्षितीयतात्पर्यचिन्तामणिव्याख्यानं न लभ्यते ।

अथ प्रथमः पटलः (अथ प्रथमः खण्डः) । प्रायश्चित्तं व्याख्यास्यामः । प्रायस्य चित्तं विनष्टकर्मणः सन्धानम् । विनाशशब्दपर्यायः प्रायशब्दोऽकारान्तः प्रसिद्धः । चित्तशब्दः सन्धानार्थकः, सुडागमः । अभिमुखमासीनः – होमकाले कर्ता यस्यां दिश्यासीनः कर्म करोति तद्दिङ्मुखमासीनः । सर्वेस्यादावाघारे – आघारे अकृते । क्रियालोपे – आघारांगिकायाः कस्याश्चित्क्रियाया लोपे । विपर्यासे – विपरीताचरणे । प्रमाणवर्जिते - हीने – तत्तदुक्तप्रमाणरहिते । सर्वेषां संभाराणामभावे एकैकस्य वा संभारस्याप्यभावे वैपरीत्ये च । ऋत्विजोरभावे । एकस्याभावे विद्यमानं ब्रह्माणं वृत्वा सोमस्थाने कूर्चं निदध्यात् । कूर्चावृत्विजौ संकल्प्य स्वयमेव तत्तन्मन्त्रोच्चारणादिकं कृत्वा तत्तत्कर्म कुर्यात् । सर्वं युग्ममित्यादि । 'मयि देवादिभिश्चतुर्भिर्दर्भानुक्षयेत्' इत्यादौ सर्वं बर्हिः, प्रत्येकं युग्मं – युगलं द्वौ द्वौ चतुरश्चतुरो वा । परिस्तरणबर्हिषः परिधींश्च, सर्वं परिमार्जनं परिषेचनं कुंडस्य स्थंडिलस्य प्राच्यामुदीच्याञ्च । वाशब्दश्चार्थे । अग्रम् – परिस्तरणादीनां बर्हिषां परिधीनाञ्चाग्राणि । अन्तान् – अदितेऽनुमन्यस्वेत्यादि मार्जनं, उद्धन्यमानमित्याद्युल्लेखनञ्च । दैविके यत्तत्पैतृके वैपरीत्येनेत्युक्तं भवति । ब्रह्मसोमकूर्चौ उत्पवनपवित्रे प्रणिधिपवित्रे च, बर्हिषसमिधापूर्वसमिधौ आघाराहुती युक्तोवहाद्याहुतयश्च यथोक्तं दैविकपैतृकयोः समानाग्रान्तवन्तः, न वैपरीत्यम् । तेषां सर्वदा दैविकत्वेनैव निर्वाहात् । होमे न्यूनातिरिक्ते चेति । हीने – संख्याहीने तत्तदाहुतिप्रमाणादिहीने, संख्याधिके आहुतिप्रमाणाधिक्ये च । विशेषे अनुक्ते – अनेन जुहुयादिति पात्रविशेषेऽनुक्ते तत्र स्रुवेण होमः कर्तव्यः । हविष्यन्नादिद्रव्यविशेषेऽनुक्ते आज्यमेव होमद्रव्यम् । आज्यञ्च गव्यमाजमाविकं माहिषं वा घृतं, यथालाभम् । एतेषाञ्चालाभे शुद्धेन तैलेनाज्यमिश्रेण अन्नेन यवाग्वा पैष्टिकेन क्षीरेण दध्ना तंडुलैः अन्येन वा अग्निहोत्रहविषा श्रौतोक्तेन द्रव्येण । मन्त्रानुक्तौ व्याहृतिर्मन्त्रः । पिपीलिकादीति । आदिशब्देन सर्वे स्वेदजाः शलभादयश्च गृह्यन्ते । मार्जारादिगमने

तत्पदानि – पादनिक्षेपणस्थानानि । परिस्तरणादिदाहे – कात्स्र्येन दाहे, यत्र कुत्रचिद्दाहे वा । भेदे – इतस्ततो व्यत्ययेन चालिते । छेदे – कृत्ते । नाशे – सर्वनाशे, अलब्धे वा । तत्तत्स्थाने संयोज्य । सर्वनाशे पुनरन्यद्गृहीत्वा उक्तस्थाने निदध्यात् । भेदादौ तदेव यथापूर्वं निदध्यात् । सर्वेषां होमानां न्यूनातिरेकक्रियालोपविपर्यासादौ अन्तहोमप्रायश्चित्तोक्ताहुतीः विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीन् हुत्वा व्याहृतीर्महाव्याहृतीः गायत्रीं सावित्रीं मिन्दाहुती वैष्णवश्च चतुरावर्त्य दोषगौरवे जुहुयात् । लाघवे सकृज्जुहुयात । अथवा वैष्णवमिदंविष्णुरित्येकामृचं व्याहृतीश्च जुहुयात (इति प्रथमः खण्डः) ।

(अथ द्वितीयः खण्डः) आहुः – केचिद्वदन्ति । सूत्रकारमतमन्यदिति पूर्वमेवोक्तम् । स्वभार्यायामित्यादि । चतुर्थेऽहनि उक्तहोमं कृत्वा गच्छेत् । चतुर्थेऽह्न्यसंभवे षोडशसु रात्रिषु एकस्यामृतुसंगमनं विधीयते । तत्राकरणे प्रायश्चित्तम् । पुत्रहीनायां – वन्ध्यायां, मृतप्रजायां वा । नान्यथा । पतिव्रता – पत्युः शुश्रूषा व्रतं यस्यास्सा । साध्वी – साधुगुणा । सर्वां सिद्धिं – स्वर्गापवर्गौ तस्मात् पुरुषार्थसाधनोद्दिष्टाम् । दुष्टां – अननुकूलाम् । दैविकेन सहैकाहे पैतृकवत्कृते च – दैविकेन कर्मणा सह एकाहे संस्काराचरणदिन एव कृते । साधारणश्राद्धबुद्ध्या पैतृकवत्कृते च । पूर्वेद्युः – संस्करणदिनात्पूर्वस्मिन् दिने । यद्यपररात्रौ वा संस्कारकरणं, तदह्नि पूर्वाह्णे वा यथासमुदाचारं दैविकवत्कुर्यात् । उद्यतं वा ददाति – ब्राह्मणभोजनं कर्तुमशक्तः होमं हुत्वा, आमं दद्यात् । तत्राप्यशक्तौ होमं कृत्वा यस्मै कस्मैचिद्ब्राह्मणाय हिरण्यं शरावपूर्णमोदनं वा दद्यात् । पूर्वेद्युरेवं कर्तुमशक्तः त्वरान्वितः शक्तो वा सद्यः पृथगेव होमं हुत्वा ब्राह्मणभोजनार्थमामं हिरण्यं वा दद्यात् । एवं नान्दीमुखं कृत्वा तदानीमेव 'या सुगन्धा' दिना कुंभाद्भिरभिषेचनं प्रोक्षणं वा कृत्वा तत्तत्कर्मणि प्रवर्तेत । तथा श्रौते सूत्रकारः । 'दूर्वाक्षतयुक्तोदकुंभं निधाय पूर्ववद्दैविकं पैतृकञ्च हुत्वा तदानीमुदकुंभाद्भिः' 'या सुगन्धा रसा' इति यजमानमभिषिच्य पुण्याहं वाचयति' इति । (इति द्वितीयः खण्डः) इति प्रथमः पटलः ।

अथ द्वितीयः पटलः (अथ तृतीयः खण्डः) गर्भवत्कृत्वा — गर्भाकारं सुवर्णेन कारयित्वा कार्यान्ते सौवर्णं वस्तु ब्राह्मणेभ्यो दद्यात्। विष्णुबलिः कर्तव्यः। सकाले कालेऽतीते वा अवश्यं प्रत्येकं कर्तव्यः। विधिप्रत्ययबला-दत्यन्तावश्यकत्वं ज्ञायते। 'गर्भे मासेऽष्टमे विष्णुबलिं कुर्याद्यथाविधि। नारायणः स्वयं गर्भे मुद्रां धारयते निजा'मित्यादि भगवच्छास्त्रवचनानि द्रष्टव्यानि। 'यस्य मे श्रिय'मित्यादि श्रुतयश्च तेरूपात्ता गाथाः। पूर्वपूर्वस्य गर्भाधानादेः कालातिपन्नस्य उत्तरोत्तरेण पुंसवनादिना सहाचरणं युक्तम्। तदसंभवे प्रसवकालात्पूर्वं वा कर्तव्यम्। तत्राप्यसंभवे जातकर्मादिभिस्सह गर्भ-संस्काराः कर्तव्याः, 'गर्भाधानादि चौलकान्तेषु हीनेषु तन्त्रयित्वा एकहोमे कुर्याच्चे'दित्युत्तरत्र वक्ष्यमाणत्वात्। पितुरौपासनाग्नौ—पितुरिति गर्भस्थशिशुबुद्धि-स्योच्यते। तत्पिता — शिशोः पितामहः। योनिबन्धुः — शिशोः मातुः पित्रादिः। अन्येषु संस्कर्तृषु 'यजमानस्य पत्नीं अनेन कर्मणा संस्करिष्या'-मीति संकल्पः। एकस्मिन् प्रथमे गर्भे कृताः अकृताश्च संस्काराः प्रतिगर्भं कर्तव्या इति केचिद्वदन्ति। नैतत्साधु। (इति तृतीयः खण्डः)

(अथ चतुर्थः खण्डः) आशौचं विधीयते। श्रोत्रियस्याहिताग्नेरेकाह-माशौचमनाहिताग्नेरश्रोत्रियस्य त्रिरात्रमन्येषां दशरात्रमिति केचिद्वदन्ति। चतुर्थे दशरात्रन्तु पञ्चमे षड्रात्रं सप्तमे पुंसूतकं नास्तीति पराशरः (?)। सन्ध्यौ-पासनादीति। आदिशब्देन जपतर्पण ब्रह्मयज्ञ नित्यौपासन वैश्वदेवा गृह्यन्ते। स्वाध्यायो वेदाध्ययनमध्यापनं, दानमन्नदानादिकं तस्य प्रतिग्रहश्च वर्जयति। यावदाशौचं तावत् परित्यजेत्। ग्रहणे संप्राप्ते दानं कर्तव्यमिति केचित्। स्नानममन्त्रकं सर्वदा कर्तव्यमेव। अग्निहोत्रादिनित्यहोमकार्यमन्येन असपिण्डेन ब्रह्मचारिणा वा कारयेत्। (इति चतुर्थः खण्डः) इति द्वितीयः पटलः।

अथ तृतीयः पटलः (अथ पञ्चमः खण्डः) नक्षत्रहोमे हीने इत्यादि। हीने कर्मणि प्रथमं प्रायश्चित्तहोमं हुत्वा अतिक्रान्तहोममुत्तरेणसह जुहुयात्। दशमे द्वादशे वा मासे। पूर्वस्य उक्तस्यासंभवे अन्यस्मिन् शुभे मासे कुर्यादिति वाशब्दार्थः। (इति पञ्चमः खण्डः)

(अथ षष्ठः खण्डः) सामान्यप्रायश्चित्तम् । मुख्यतया कर्तव्यविधानं प्रायश्चित्तस्य पूर्वमुक्तमित्युक्तं भवति । सर्वेषां कालातीतसंस्काराणां इदं प्रायश्चित्तं समानमित्यर्थः । विष्णोर्नुकादीन् द्विरावर्त्य प्रत्येकं हुत्वा पूर्ववत्तत्कर्म कुर्यादिति केचित् । अथ वा इत्यादि । तत्र विकल्पोऽप्यस्तीति वदति । उपनयनं यावता कालेन क्रियते तावता गर्भाधानादि चौलकान्तेष्वेकादशसु संस्कारेषु हीनेषु–अकृतेषु सत्सु तन्त्रयित्वा–उपनयनेन सह समुच्चित्य एकस्मिन्नेव उपनयनविहितप्रधानहोमे कालातीतानपि कर्तुं शक्यत इति । चान्द्रायणम् । तच्च द्विविधं यवमध्यचान्द्रायणं, पिप्पलिमध्यचान्द्रायणमिति । तत्र प्रथमे यथा शुक्लप्रतिपदमारभ्य शिख्यण्डपरिमितैरेकैकग्रासवृद्ध्या पौर्णमास्यन्तमाहारं भुञ्जन् पुनः कृष्णपक्षप्रतिपदमारभ्य तद्वदेकैकग्रासह्रासेन चरन् अमावास्यायामनश्नन् वर्ततेति । तथा द्वितीये प्रतिदिनं मध्याह्ने अष्टकबलान्, अथ वा नक्तं दिवा च चतुरश्चतुरः, अथवा एकस्मिन् दिवसे चतुरः परस्मिन् द्वादशकबलानश्नन् व्रतं चरेदित्युक्तरीतिः । प्रत्यहं मध्यंदिने हविष्यानष्टौ पिंडान् भुक्त्वा यद्व्रतमाचरेत्तद्यतिचान्द्रायणं, प्रतिदिनं प्रातश्चतुरः पिंडान् अस्तमिते आदित्ये चतुरः पिंडान् भुक्त्वा यच्चरति तच्छिशुचान्द्रायणं, प्रतिदिनं दिवैव त्रीन् पिंडान् प्राश्य नियतात्मा यच्चरति तदृषिचान्द्रायणमिति । एतेषां मध्ये यत्किमपि व्रतं पिता चरति । प्राजापत्यम्–कृच्छ्रविशेषः । तथा पञ्चग्रासैरेकभुक्तं द्वादशग्रासैर्नक्तं चतुर्विंशतिग्रासैरयाचितं एकाहमुपवास इति पराशरोक्तप्रकारेण वा अन्येन वा एकभक्तायाचितोपवासरूपेण चतुरहस्साध्यः पादकृच्छ्रः । एवं त्रिगुणं प्राजापत्यं त्रिदिनमेकभक्तं त्रिदिनं नक्तं त्रिदिनमयाचितं त्रिदिनमुपवास इत्येतत् प्राजापत्यमित्यापस्तंबः । मनुश्च तथा वदति । एतत्प्रजापत्यं कृच्छ्रं पुत्रश्चरेत् । अशक्तो धेनुमाचार्याय दद्यात् । द्वादशसंख्याब्राह्मणभोजनमेकमन्त्रकृच्छ्रम् । त्रिगुञ्जाभिस्तुलितं सुवर्णमिति तद्दानं सुवर्णकृच्छ्रम् । पशुः–सवत्सा गौः । एतानि दानानि यथाशक्ति दद्यात् । गर्भाधानादीन्–आदिशब्देन तत्तत्कर्मनाम्ना संकल्प्य आदिपरिषेकं, परिसमाप्तौ अन्तपरिषेकं च कुर्यात् । आघारोऽन्तहोमश्चैको भवति । इति तृतीयः पटलः (इति षष्ठः खण्डः) ।

(अथ सप्तमः खण्डः) अथ चतुर्थः पटलः। मातुलादिषु – आदिशब्देन पितामहादयः स्वजनो गृह्यते। यश्शुचिः – पापरोगादिरहितः अपतितः शुद्धात्मा विद्वान् विधिज्ञश्चोच्यते। तेन योजयति – उपनीतं वटुं नाशयतीति तात्पर्यम्। अन्यं ब्राह्मणम् – आचार्यलक्षणसंपन्नं भजेत। व्याधीत्यादि – व्याधिरपस्मारादिः, दुर्भिक्षं क्षामः। आदिशब्देन राजविड्वरादयः। अन्त्यजातौ–चंडालादौ, न्यूने शूद्रे तथा अनुलोमप्रतिलोमादौ वा। समाश्रिते – तदन्नपानादिसंकरे सति, ब्राह्मणाननुज्ञाप्य तैरुक्तं तदनुरूपकृच्छ्रादिप्रायश्चित्तं चरित्वा, पशुभूम्यादीन् दत्वा – आदिशब्देन पापापनोदनोदितानि तिलपात्रादीनि गृह्यन्ते। दानानि ब्राह्मणेभ्यः। (इति सप्तमः खण्डः)

(अथ अष्टमः खण्डः) अग्नौ समिद्भिः जुहुयात्। उपनयनाग्नौ लौकिकाग्नौ वा पालाशीभिः याभिः काभिर्वा समिद्भिर्होमः इष्टः। नित्यस्नानविहीने – निमज्ज्य, शरीरार्धं निमज्ज्य नारायणं ध्यायन् केशवाद्यैर्नामभिः विष्णुस्मरणं कुर्वन् 'जुंबकाय स्वाहे' ति मन्त्रसमुच्चितेन 'ऋतञ्च सत्यञ्चे' त्यघमर्षणसूक्तेन पापापनोदनं कृत्वा वासः परिधाय आचम्य 'अतो देवा' दिमन्त्रान् जपति। पुनस्सान्ध्यागमात्। एक इति मतान्तरम्। प्रातस्सन्ध्याहीने आमध्याह्नात्, माध्याह्निकहीने आसन्ध्यागमात् सायंसन्ध्याहीने परेद्युराप्रातस्सन्ध्यागमात् अनशनमभोजनं स्थित्वा पूर्ववत्स्नात्वा अतीतां सन्ध्यामुपास्य तात्कालिकीं सन्ध्यामुपासीतेति। सन्ध्याकालेऽतीते पूर्ववत्सन्ध्यामुपास्य कालातिक्रमप्रायश्चित्तार्थं चतुर्थमर्घ्यं सप्तव्याहृतिभिरभिमन्त्र्य निक्षिपेदित्येके। तर्पणहीने इति। काले काले वा परेद्युर्वा द्विगुणतर्पणम्। प्रातस्समिद्धोमे इति। यथाहृतदिति सर्वं तन्त्रं सकृदेव कृत्वा मन्त्रावृत्त्या समिद्धोमं षोडशसमिद्भिः कुर्यात्। दिनद्वये स्नानादाविति। आदिशब्देन स्नानसन्ध्योपासनतर्पणब्रह्मयज्ञसमिद्धोमेष्वन्यतमस्य सर्वस्य वा हीने चतुर्थेऽहनि पूर्ववत् स्नानजपादिकं कृत्वा तदग्नावुक्तप्रायश्चित्तं जुहुयात्। (इति अष्टमः खण्डः)

(अथ नवमः खण्डः) पादकृच्छ्रम्। एकभक्तनक्तायाचितानशनव्रतेन चतुर्दिनसाध्यं प्रायश्चित्तं प्राजापत्यकृच्छ्रं, तस्य चतुर्थो भागः पादकृच्छ्रं तदशक्तौ

एकदिनमनशनं वा । 'पाहिनो अग्न' इत्यादिहोमः प्रायश्चित्तार्थम् । एवं पञ्चदशरात्रं स्नानादौ हीने द्विगुणं मासहीने चतुर्गुणं प्रतिमासं प्राजापत्यकृच्छ्रं चतुर्गुणादिवृद्ध्या अवकीर्णप्रायश्चित्तञ्च कुर्यात् । (इति नवमः खण्डः) इति चतुर्थः पटलः ।

अथ पञ्चमः पटलः (अथ दशमः खण्डः) पुनरुपनयनप्रयोगो वक्ष्यते । वपनमेखलेत्यादि । अश्माधिरोहण वस्त्रोत्तरीय यज्ञोपवीतधारण उपनयनाचार-शिक्षण सावित्र्युपदेशाश्च वर्ज्यन्ते (?) । मतान्तरमाह अथवेति । अथवा अशक्तौ । घृतं पात्रे संगृह्य उत्पूय पर्यग्निं कृत्वा सावित्रीमष्टोत्तरशतमावर्त्य जप्त्वा घृतं भक्षयेत् । तत्राप्यशक्तौ गुरोरुच्छिष्टं वा भुञ्जीत । ततः शुद्धो भवति । उपनयनसंस्कारवान् भवति । (इति दशमः खण्डः)

(अथ एकादशः खण्डः) पारायणव्रतेत्यादि । व्रतानां बन्धो विसर्गश्चैकः संस्कारः । चतुरावर्त्य हुत्वा – एवं प्रायश्चित्तं हुत्वा कालातीतानामकृतानाञ्च वेदव्रतानां बन्धं विसर्गं व्रतकांडाध्ययनञ्च कुर्यात् । श्रावणहोममित्यादि । एवं प्रतिसंवत्सरमासमावर्तनात्कर्तव्यम् । त्रैवार्षिकमित्येके । ततः पश्चात् सहस्र-सावित्रीजपः कार्यः (इति एकादशः खण्डः) ।

(अथ द्वादशः खण्डः) तस्मादासुरेणेत्यादि । ब्राह्मणस्य आसुराद्या आपत्कल्पा भवन्ति । ततः प्रायश्चित्तस्मृतिः, ब्राह्मादिष्वेकेन विधिना पुनर्विवाह-स्मृतिश्च । अन्यथेति । कन्यागमनप्रायश्चित्तं मन्वादिभिरुक्तं सान्तपनकृच्छ्रं चरित्वा गोभूहिरण्यादिदानानि दत्वा पूर्वोक्तब्राह्मं त्रयस्त्रिंशदित्यादिप्रायश्चित्तं हुत्वा विधिवद्विवाहं करोति । (इति द्वादशः खण्डः) इति पञ्चमः पटलः ।

अथ षष्ठः पटलः (अथ त्रयोदशः खण्डः) रजःप्राप्तौ – प्राप्तिशंकाया-मथवा साक्षात् प्राप्तौ प्रलोभ्य तामाच्छाद्य अज्ञात्वा वा विवाहे निवृत्ते, पश्चात् ततो ज्ञाने कृच्छ्राचरणपूर्वकं प्रायश्चित्तं पुनर्विवाहश्च । तत्क्रियापरिसमाप्तौ सा वधूरशुचिर्भवतीति । तदन्त्यान्ते तां वधूं बहिर्विवहास्य चतुर्थेऽनि ऋतुस्नातया सह आग्नेयस्थालीपाक नित्यहोम वैश्वदेवान् यथाक्रमं कुर्यात् । ज्येष्ठे तिष्ठती-त्यादि । ज्येष्ठे अकृतविवाहे पराशरमतेन अपरिगृहीताग्निहोत्रे अकृतसोमे वा

स्थिते तं ज्येष्ठं परित्यज्य अनुजेन विवाहादौ कृते अनुजः परिवेत्ता जेष्ठः परिवित्तिरिति उभौ निन्दितौ भवतः। तद्दोषशमनार्थे अनुजः चान्द्रायणं चरेत्। अथवा पराशरमतेन परिवेत्ता द्वौ कृच्छ्रौ तत्पत्नी कृच्छ्रं कन्याप्रदाता अतिकृच्छ्रं याजकश्चान्द्रायणञ्च चरित्वा ज्येष्ठस्य विवाहं कारयेत्। प्रायश्चित्तं पूर्वमुक्तम्। (इति त्रयोदशः खण्डः)

(अथ चतुर्दशः खण्डः) परदेशगते इत्यादि। ज्येष्ठे अनूढे – अग्रजे धर्मार्थयोः कृते देशान्तरं गते पुनःपुनः श्रूयमाणे द्वादशवर्षेऽतीते। अत्र व्यवस्थामाहुर्वसिष्ठादयः 'अतीते – बहुशः श्रूयमाणे द्वादशवर्षाः, कचित् श्रूयमाणे दशवर्षाः सर्वशः अश्रूयमाणे अष्टौ वर्षाः प्रोषितेऽग्रजे वृद्धे षड्वर्षाः त्रिवर्षाश्च प्रतीक्षाकालः' इति। अतीते उक्तकाले अनुजस्य विवाहे निश्चिते तन्मासात्प्रागेकस्मिन् काले ब्राह्मणाननुमान्य पूर्ववदाकृतिदहनं सपिंडीकरणान्तकर्मजातञ्च निर्वर्त्य प्रायश्चित्तमुपनयनाग्नौ ब्राह्मं वैष्णवमाग्नेयं शतमावर्त्य हुत्वा समावर्तनं कृत्वा विवाहं कुरुते। तस्मिन् पुनरागते इति। ज्येष्ठस्योक्तप्रायश्चित्तं विवाहञ्च कारयित्वा अनुजश्च प्रायश्चित्तपूर्वकं पुनर्विवाहं कुरुते। ब्रह्महत्याद्यैरिति। आदिशब्देन महापातकानि कुष्ठादिमहारोगापस्मारोन्मादांगवैकल्यवेश्यातिसंगादिदोषा उपलक्ष्यन्ते। अनुजः बान्धवसन्निधौ ज्येष्ठनिष्ठदोषान् निवेद्य तैरनुज्ञातः स्वयं वारिपूर्णं घटमादाय स्वस्य ज्येष्ठस्य चान्तरे भूम्यामुत्क्षिप्य ज्येष्ठं त्यक्त्वा स्वयं विवाहं कुरुते। यदि ज्येष्ठः कालान्तरे शुद्धो भवेत् तदा पूर्ववद्द्वयोः प्रायश्चित्तपूर्वं पुनस्संस्काराः कार्याः। विवाहान्ते इत्यादि। औपासनाग्निमरण्यां समिध्यात्मनि वा आरोप्य तमग्निं वधूञ्च होमकालात् प्रागेव स्वगृहमानीय। उत्तरस्यां – इदमुपलक्षणम्। पूर्वस्यां वायव्यामन्यत्र वा उचिते देशे अग्निशालां कल्पयित्वा यथोक्ते कुंडे आनीतमग्निं यथोचितं मथित्वा लौकिकाग्नौ वा आरोप्य निदधाति। सोऽयमग्निः नित्यो धार्यः, यावज्जीवं धारयितुं संरक्षितुं योग्यः। चतुर्थेऽहनि। विवाहदिनादारभ्य निषेकसंस्कारात्प्रागेव आग्नेयस्थालीपाकं वैश्वदेवं चकारादौपासनञ्च कुर्यादित्येके वदन्ति। (इति चतुर्दशः खण्डः)

(अथ पञ्चदशः खण्डः) व्रीहिभिरग्निहोत्रहविषा वा । श्रौते अग्निहोत्र-हविर्द्रव्याण्युक्तानि । 'क्षीरमाज्यं दधि यवागूः अन्नं तंडुलाः पिष्टं सोमरस' इति । ऐतेष्वन्यतमेन होम इष्टः । सायं होमे हीने इत्यादि । साय होमे हीने तद्द्रव्येण प्रातर्होमकाले अग्नये स्वाहा वैश्वानराय स्वाहा इति प्रायश्चित्ताहुती हुत्वा पूर्ववत् सायमाहुती जुहुयात् । प्रातर्होमे हीने सायं होमकाले अग्नये स्वाहा पथिकृते स्वाहा इति प्रायश्चित्ताहुती हुत्वा प्रातराहुती जुहुयात् । इति षष्ठः पटलः (इति पञ्चदशः खण्डः)

अथ सप्तमः पटलः (अथ षोडशः खण्डः) पूर्ववत् । जातवेदो भुवनस्येति मन्त्रो ज्ञाप्यते । यद्यरण्यामारोपितोऽस्त्यग्निः तं, अथ लौकिकारण्यां वा मथित्वा यद्वा व्याहृत्या श्रोत्रियागारात् स्वगृहाद्वा आनीय पत्न्या सह प्राणानायम्य पुनराधानं करिष्य इतिं संकल्प्य आघारं जुहुयात् । पूर्णाहुतीत्यादि । मन्त्रपरि-भाषापूर्वमुक्ता । व्याहृतीश्च चतुष्कृत्वः । आज्यग्रहणं कृत्वैव होतव्यम् । प्रत्येक-मित्युक्तेः । एता एव पुनराधानाहुतयः पूर्णाहुत्याद्याः । पूर्ववदौपासनं – सायं-होमपूर्वं हुत्वाऽन्तहोमं जुहोति । औपासनं धार्यमित्यादि । यजमानः नित्य-होमान्ते पाणिभ्यामरणी आदाय अग्नेरुपरि धारयन् अयन्ते योनिरिति प्रति-तप्याग्निं तत्राहरेत् । होमकाले प्राप्ते पुनस्तामरणिं प्राक्शीर्षं निधाय मथित्वा तमग्निं प्राप्ते निधाय होमं जुहुयात् । अथवा – अरण्यारोपणाकरणे अशक्तस्तु 'याते अग्ने' इति स्वपाणी प्रतप्य तमूष्माणमाघ्राय आत्मनि स्वहृदये समारोप्य होमकाले तमग्निमुपावरोहेति लौकिकाग्नाववरोप्य जुहुयात् । आत्मारोपिताग्निः यजमानः, नाप्सु निमज्जेत् । स्त्रीशूद्रादिसंभाषणपरिवेषणादीन् वर्जयेत् । अत एवं कर्तुमशक्तः आश्वत्थखादिरपालाशानामन्यतमेष्वेकां साग्रां समिध-मादाय उपावरोहेति यावदीषत्कृष्णवर्णा स्यात् तावत्सन्तप्याग्निं तत आरोपयेत् । लौकिकाग्नौ पूर्ववत् होमकाले समवरोप्य जुहुयात् । सूतकप्रेतकयोः ब्रह्मचारिणा स्वेन असपिंडेनान्येन वा नित्यहोमः कार्यः । तदसंभवे आशौचान्ते मथितमग्निं समिधं वा लौकिकाग्नावविरोप्य पूर्ववत्प्रायश्चित्तं द्वादशाहात्कृत्वा जुहोति । यद्यात्मन्यारोपितोऽग्निः, आशौचान्ते पुनराधानमेव । मासे विच्छिन्ने

इति । प्राजापत्यमिति । अशक्तौ धेनुं तन्मूल्यं निष्कं निष्कार्धं पादं वा सुवर्णदानम् । तप्तकृच्छ्रम् — त्र्यहमुष्णोदकं त्र्यहमुष्णपयः त्र्यहमुष्णघृतं पीत्वा त्र्यहमुपवासं चरेदिति लक्षणमुक्तम् । अशक्तः प्राजापत्यमेव चरेत् । तद्द्रव्यं — होमस्य द्रव्यं व्रीह्यादिधान्यमाज्यञ्च । तत्र प्रस्थमितं धान्यं तदर्धमितं घृतञ्च । एवं प्रतिसंवत्सरं प्रायश्चित्तमामरणान्तं कर्तव्यमेव । मरणादूर्ध्वमपि एवमेव प्रेतसंस्कारकालप्रायश्चित्तं दानादि च कृत्वा प्रेताधानं कुर्यात् । भ्रूणहा — सोमयाजिहननपापी । इति सप्तमः पटलः (इति षोडशः खण्डः)

अथ अष्टमः पटलः (अथ सप्तदशः खण्डः) सावित्रीपूर्वैरित्यादि । सावित्रीपूर्वैः द्वादशसूक्तैः स्वाध्यायो ब्रह्मयज्ञः नैमित्तिकः । सावित्रीपूर्वैः चतुर्वेदादिमन्त्रैः स्वाध्यायोऽन्यः — नित्यः । पक्वेनैवान्नेन पितृभ्यो बलिदानं पितृयज्ञः । तथैव भूतयज्ञः । अतिथिभ्य इत्यादि । वैश्वदेवकाले उपस्थितेभ्यः अतिथिभ्योऽभ्यागतेभ्यः यथाशक्ति अन्नदानं तदलाभे भिक्षामात्रमन्नं दीयते इति मनुष्ययज्ञः । रात्रावमन्त्रकमिति । समन्त्रकं होमं हुत्वा तूष्णीं बलिहरणम् । ब्रह्मणे नमः इत्यादिना बलिदानम् । पत्नी वा कुर्यात । प्रातर्मात्रं वैश्वदेवमिति केचित् । (इति सप्तदशः खण्डः)

(अथ अष्टादशः खण्डः) मासे वैश्वदेवे हीने प्राजापत्यं चरित्वा होमद्रव्यं ब्राह्मणेभ्यो दत्वा पूर्ववत् स्थालीपाकमवकीर्णप्रायश्चित्तञ्च कृत्वा वैश्वदेवं जुहोति । एवं षण्मासम् । षण्मासेऽतीते चान्द्रायणचरणपूर्वं पूर्वमुक्तं प्रायश्चित्तं चरेत् । एवमासंवत्सरम् । संवत्सरे हीने पूर्ववत्प्राजापत्य चान्द्रायण तप्तकृच्छ्राचरणं सर्वं कृत्वा वैश्वदेवं पूर्वोक्तवत् कुर्यात् । सलिलेनाक्षतैर्वैश्वदेवं कुर्यात् परिधानीयवत् । प्रवासे इत्यादि — प्रवासादौ ब्रह्मचारी गृहस्थो वानप्रस्थो वा आहिताग्निरनाहिताग्निर्विधुरो वा तत्तदग्नौ लौकिकाग्नौ वा वैश्वदेवं जुहुयात् । जले वा जुहोतीति । अन्नेनैव । अग्नेः जलयोनित्वात् अन्नस्याभावे जले जलेन वैश्वदेवं कुर्यात् । वैश्वदेवान्ते यत्नेनेति — नियमेन अतिथिपूजनाशक्तौ प्रायश्चित्तं कुर्यात् । चतुर्थीव्रतक्रिया — निषेकसंस्कारः । पुनश्चतुर्थीहोमं निषेककर्म च कुर्यात । (इति अष्टादशः खण्डः)

(अथ एकोनविंशः खण्डः) पर्वणि स्थालीपके हीने इत्यादि । मासे हीने प्राजापत्यं षण्मासे चान्द्रायणं संवत्सरे तप्तकृच्छ्रं चरित्वा पूर्ववत्प्रायश्चित्तं कुर्यात् । ब्राह्मणान् – चतुरः । उद्धृतं – शरावपूर्णमन्नम् । आज्यपक्वाभ्यां – प्रथममाज्येन प्रायश्चित्तं हुत्वा पश्चात्तेन पक्केन च प्रायश्चित्तमेव जुहुयात् । एवमाज्यचरुभ्यां आज्यमिश्रेण पक्केन वा वैश्वदेवादिहोमांश्च यथोक्तं कुर्यात । संवत्सरे हीनं आग्रयणाष्टकयोः प्राजापत्यचरणं चरुपाकं प्रायश्चित्तहोमांश्च हुत्वा पुनः करणं विहितम् । एवं प्रतिसंवत्सरं द्विगुणवृद्ध्या कर्तव्यमेव । (इत्येकोनविंशः खण्डः)

(अथ विंशः खण्डः) पिंडपितृयज्ञे इत्यादि । षण्मासे हीने प्राजापत्यं संवत्सरे हीने प्राजापत्यद्वयमेवं द्विगुणवृद्ध्या प्रायश्चित्तं कृत्वा पूर्ववत् पिंडपितृयज्ञं मासिश्राद्धञ्च कुर्यात । चैत्रीयज्ञविहीने इत्यादि । संवत्सरेऽतीते प्रत्यब्दं द्विगुणवृद्धिस्सर्वत्रोह्यः । एवं नित्यानां पाकयज्ञानामकृतानां प्रत्येकं प्रायश्चित्तं हुत्वा यावज्जीवं यजेत । द्वादशाहेऽतीते इति । एवं मासान्तं कर्तव्यम् । एवं द्विगुणादिवृद्ध्या संवत्सरान्तं, प्रत्यब्दञ्च प्रायश्चित्तं हुत्वा पूर्ववदभ्यर्च्य निवेदयेत् । इत्यष्टमः पटलः (इति विंशः खण्डः)

* अथ सप्तमः प्रश्नः

## अथ प्रथमः खण्डः

अथ मृतसंस्कारप्रायश्चित्तम् ॥ १ ॥

जातकसंस्कारो मृतसंस्कारश्चेति द्वौ संस्कारौ भवतः ॥ २ ॥

अथ प्रथमः पटलः । जातकसंस्कारो निषेकादिः, मृतसंस्कारो दहनादिः ।

पूर्वेणेमं लोकमपरेण परलोकं जयति ॥ ३ ॥

मृतसंस्कारः शरीरस्य दहनमित्याहुः ॥ ४ ॥

निर्दोषशरीराहुतिरग्नेः प्रियतमा भवति ॥ ५ ॥

तया आहुत्या स मृतको देवलोकं गच्छति ॥ ६ ॥

मातापित्रोः पुत्रोऽन्यो भ्राता सपिंडः सगोत्रः पितुर्मातुश्च योनिबन्धुः गुरुशिष्यर्त्विजो वा पत्न्याः पतिस्सुतः पत्युर्भ्राता सपिंडः सगोत्रः पितुर्मातुश्च योनिबन्धुर्वा पुत्रस्य पित्रादयो मृतस्य शरीरं दाहयन्ति ॥ ७ ॥

पुत्र औरसः अन्यो दत्तकादिः भ्रातृपुत्रा वा । भ्राता अनुजो ज्येष्ठो वा । सपिण्डो – ज्ञातिः । सगोत्रः – एकगोत्रः । पितुर्मातुश्च योनिबन्धुः – पितुर्मातुर्वा योनिबन्धुः । गुरुः – निषेकादिकृत् । शिष्योऽन्तेवासी । ऋत्विक् – यज्ञे आर्त्विज्यं कुर्वाणः मातापितरौ दाहयति । वा शब्दो विकल्पार्थः । पत्न्याः – मृतस्य भार्यायाः । पतिरित्यादि – पूर्ववत् । स्त्रियं मृतां दाहयति । पुत्रस्य मृतस्य पित्रादयः दाहयन्ति ।

असगोत्रस्सगोत्रो वा यो दाहकर्ता स एव दशाहान्तं कर्म कुर्यात् । सपिंडीकरणादीनि श्राद्धानि श्राद्धकर्तैव कुर्यादिति केचित् ।

मृतस्य संस्कारे कृते संस्कर्तुः सर्वसम्पत्समृद्धिस्स्यात् ॥ ८ ॥

अन्यथा भ्रूणहत्यामवाप्नोति ॥ ९ ॥

---

* इत आरभ्य श्रीवाजपेयि भाष्य संग्रहो मुद्राप्यते ।

तस्मात् ब्रह्ममेधेन पितृमेधेन वा विधानेन पूर्ववत् 'अग्निर्यजुर्भिः' 'सेनेन्द्रस्य' 'वाचस्पते विधे नामन्' 'वाचस्पते वाचो वीर्येण' 'सोमस्सोमस्य' 'वाचस्पतेऽच्छिद्रया' 'वाग्घोता' इति सप्तभिर्मन्त्रैः आहिताग्नेः शरीरं पञ्चाग्निभिस्त्रेताग्निभिर्वा दाहयति ॥ १० ॥

तस्मादित्यादि । ब्रह्ममेधेन — 'इमं प्रेतं ब्रह्ममेधेन विधिना संस्करिष्यामि' इति संकल्प्य 'ब्रह्मविदाप्नोति परम्' 'भृगुर्वै वारुणिः' इति दक्षिणादिकर्णयोः जप्त्वा । पूर्ववत् स्नानादिसर्वं कृत्वा । सर्वत्र होमकाले चित्तिस्रुगादिभिस्समग्रैः दशहोत्रादिभिः जुहुयात् । 'मेरोरंह' इत्युद्धरणकाले 'भर्ता सन् ध्रियमाण' इत्यनुवाकं जपेत् । अनुमरणे भारद्वाजमतेन 'इयं नारी' 'सेनेन्द्रस्ये'ति पत्नीश्चोपनिवासयेत् । अस्मिन्नेव मते प्रेतस्य हस्तयोः सुवर्णं निक्षिप्य 'सुवर्णं हस्ता'दिति 'देवस्य त्वा सवितु'रिति च समासेन हृदयसम्मार्जनं कृत्वा प्रतिग्रहदोषनिरसनं करोति । हिरण्यशकलप्रदानकाले 'सुवर्णं घर्म'मित्यास्ये 'ब्रह्मेन्द्र'मिति मन्त्रावृत्त्या नेत्रयोः 'शतं नियुत'मिति मन्त्रावृत्त्या कर्णयोः 'सुवर्णं कोश'मिति दक्षिणे नासापुटे 'इन्द्रो रा'जेति वामे च सुवर्णशकलानि निक्षिपेत् । पात्रचयनकाले 'अग्निर्यजुर्भिः' इत्यनुवाकेन प्रत्येकमेकेन वाक्येन वा पात्राणि निक्षिप्य अवशिष्टानां पात्राणां चयनं पुनर्मन्त्रावृत्त्या करोति । दहनकाले 'ज्योतिष्मती'मित्यनुवाकेन दहेत् । उपस्थानकाले 'सहस्रशीर्षा पुरुषः' 'अद्भ्यः सम्भूत' इत्यनुवाकाभ्यामुपतिष्ठेत । 'ब्राह्मण एकहोता' इति हृदयं जपेत् । केषांचित्पक्षे 'चित्तं सन्ताने'ने'ति हविरादीन् जुहुयात् । 'प्रयासाय स्वाहा' इत्यनुवाकेन स्रुवाहुतीर्जुहुयात् । 'हरिं हरन्त'मिति मृत्युसूक्तेनानुशंसनं कुर्यात् । 'आप्यायस्व मदिन्तम' इति संगाहनं कुर्यात । 'तरणिर्विश्वदर्शित' इत्यादित्यमुपतिष्ठेत । 'ईयुष्टेत' इति स्नानं कुर्यात । अन्यत्सर्वं पितृमेधवत् । पूर्वं पैतृमेधिकं समन्त्रकं सर्वं कृत्वा पश्चादनेनोक्तप्रकारेण ब्रह्ममेधविधानेन ब्रह्मनिष्ठमाहिताग्निमनाहिताग्निं ब्रह्मचारिणं दहेत् । नान्येषां ब्रह्ममेधसंस्कारः । तथा भारद्वाजः — "अथात ऊर्ध्वं पितृमेधं व्याख्यास्यामः यं ब्रह्ममेध' इत्याचक्षते । अथाप्युदाहरन्ति ....

'द्विजातीनामपवर्गोऽर्थमन्तस्थदर्शिभिः ।
ऋषिभिस्तपसो योगाद्दृष्टिं तु पुरुषोत्तमम् ॥
होतॄंश्च पितृमेधञ्च संमृज्य विधिरुत्तरः ।
विहितश्च समासेन क्रतूनामुत्तमः क्रतुः' ॥ इति

प्रकृतिविकृती यथा पुरस्तात् तस्य सग्रहैः होतृभिर्होमः । मन्त्रसूक्तेन पर्णाभिरुपवेशनम् । दक्षिणा मतिग्रहैः निर्मार्गः (?) । हृदये हिरण्यशकलान् संभारयजुर्भिः पात्रचयनं ज्योतिष्मतीभिरुपोषणं नारायणाभ्यामुपस्थानम् । 'ब्राह्मण एकहोते' ति चानुमन्त्रणम् । 'चित्तं सन्ताने' नेति हविराहुतिः 'प्रयासाय स्वा' हेति स्रुवाहुतिः मृत्युसूक्तेनानुशंसनं साम्या संगाहनं सौर्येणादित्योपस्थानं 'ईयुष्ट' इति प्रत्यवगाहनमत ऊर्ध्वं पैतृमेधिकम् । आयवोदनप्राशनान्तात् परं ब्रह्मेत्याचक्षते । तां न साधारणे प्रयुञ्जीत । नाऽनाचारद्विजातीनामेवं सन्निप्रते ब्रह्ममेधः" इति । अनेकेन विधानेन सर्वं कृत्वा ।

**अग्निर्यजुर्भिः 'सेनेन्द्रस्ये' ति द्वाभ्यामौपासनाग्निना गृहस्थमनाहिताग्निं, तदुपनयनाग्निना ब्रह्मचारिणञ्च दाहयेत् ॥ ११ ॥**

अग्निर्यजुर्भिरित्यादि । अग्निर्यजुर्भिः — सेनेन्द्रस्य — वाचस्पते विधे नामन् — वाचस्पते वाचो वीर्येण — सोमस्सोमस्य — वाचस्पतेऽच्छिद्रया वाचा — वाग्घोता' इति सप्तभिर्मन्त्रैः आहिताग्निं यथाऽऽधानक्रमं पञ्चाग्निभिस्त्रेताग्निभिर्वा दाहयति । अग्निर्यजुर्भिः—सेनेन्द्रस्येति द्वाभ्यामनुवाकाभ्यामौपासनाग्निना गृहस्थमनाहिताग्निञ्च दाहयति । तदुपनयनाग्निना ब्रह्मचारिणं दाहयति । चकारात् निर्मन्थ्येन कपालसन्तपनाग्निना वा विधुरं विधवाञ्च सावित्र्या वा दाहयति ।

**'अस्मात्त्वमधि' — 'भूः पृथिवीं गच्छतु' — 'भुवोऽन्तरिक्षं गच्छतु' — 'सुवर्दिवं गच्छतु' इति चतुर्भिर्मन्त्रैरित्येके ॥ १२ ॥**

अस्मादित्यादि । चतुर्भिर्मन्त्रैः दाहयेदित्यर्थः ।

इति वाजपेयीये सप्तमप्रश्ने (प्रथमः खण्डः) ।

## अथ द्वितीयः खण्डः

**आहिताग्निरनाहिताग्निश्च पूर्वं पत्न्या मरणं स्वकीयाग्नेरर्धमादाय तदग्निना तैर्मन्त्रैस्तां दाहयित्वा अन्यामुपयम्य पुनरग्निमादधीत ॥ १ ॥**

**आहिताग्निरि**त्यादि । गृहस्थो वानप्रस्थो वा **स्वकीयाग्नेरर्धमादाय** । अग्निं पूर्ववत् हुत्वा द्वेधा विभज्य स्वस्यार्धमरण्यादौ समारोप्य पत्न्या अर्धमादाय । **तैर्मन्त्रैः** – यद्याहिताग्निः, तस्योक्तैः तैर्मन्त्रैस्सप्तभिः तां दाहयेत् । यद्यनाहिताग्निः तस्योक्तमन्त्राभ्यां द्वाभ्यां दाहयेत । अत्र केचित् । आहिताग्निः पूर्वमृतां पत्नीं श्रौताग्निना दाहयेत पश्चान्मृतमाहिताग्निं श्रौतौपासनवह्निभिर्दहेदिति । आहिताग्निः पूर्वमृतां पतिव्रतां पत्नीं वैतानिकाग्निभिर्दहेत् पश्चादूढां सतीं स्मार्ताग्निना दहेत् । यज्ञमुखे तन्मध्येऽपि निर्मन्थ्येनाग्निना दहेत् । पत्नीबाहुल्ये पूर्वमृतां कनीयसीं निर्मन्थ्येन दहेत् । भर्तुः पूर्वं मृतां ज्येष्ठामग्निहोत्रेण दहेत् पश्चान्मृतामौपासनाग्निना दहेत् । एवमनाहिताग्नेः पूर्वमृतामौपासनाग्निना पश्चान्मृतां निर्मन्थ्येन लौकिकेन वा अग्निना दहेत् । एवं तां दाहयित्वा सपिण्डीकरणान्तं कर्म कृत्वा **अन्यां** कन्यामुपयम्य **पुनरग्निमादधीत** – पुनराधानं कुर्यात् । अशक्तश्चेद्वोढुं सन्न्यसेत् । 'अनाश्रमी न तिष्ठेत' इति वचनात् । अथवा स्वकीयमर्धमग्निमनुत्सृजन् नित्यमौपासनवैश्वदेवादिकमेव तस्मिन् कुर्यात् । अन्ते च तेनाग्निना तं दहेत् इति केचित् ।

**सहमरणे सहैकचितायां दम्पती दाहयति ॥ २ ॥**

**सहे**त्यादि । **सहमरणे** – एकस्मिन्नेव काले युगपन्मरणे । पूर्वापरकालमरणे विधिवत्कृतदाहादिकयोः पुनर्दहनकर्मणि वा । **सह** – तन्त्रेण दहनादि कुर्यात् । अपि वा **सहमरणे** – अनुमरणे । **सह** – तन्त्रेण । सर्वं कृत्वा । दाहकाले हिरण्यशकलास्यतण्डुलवह्निदानादीन् । तिलोदकबलिपिंडदान नग्नप्रच्छादन नवश्राद्ध ब्राह्मणामन्त्रणादिकं पृथक् पृथगेव कुर्यात् । एकाभावे-

वोभयोः श्राद्धं सपिंडीकरणहोमं प्रत्येकमावाहनादिकं कृत्वा पितामहादीनां पितामह्यादीनाञ्च पूर्ववत्पिण्डदानादिकं कृत्वा पृथगेव ब्राह्मणभोजनं कारयित्वा पितृपिण्डं त्रिधा विभज्य तत्पित्रादीनां पिण्डैः सह संयोज्य मातृपिण्डं पितृपिण्डेन सहैव संयोजयेत् ।

**कृतचौलमनुपनीतं जातकाग्निना लौकिकाग्निना वा 'अस्मात्त्वमधी'त्येकर्चया दाहयेत् ॥ ३ ॥**

कृतेत्यादि । पितृमेधवत्तन्त्रं सर्वं कृत्वा एकर्चयोक्तया दाहयेत ।

**जातदन्तस्य पितृमेधवत् तूष्णीं दहनं कुर्यात् ॥ ४ ॥**

**जातदन्तस्येत्यादि । पितृमेधवत् ।** जातकाग्निना लौकिकाग्निना वा तन्त्रं कृत्वा तूष्णीममन्त्रकं दहनं कुर्यात् ।

**अजातदन्तं भूम्यामवटे पिदधाति ॥ ५ ॥**

**अजातेत्यादि ।** अजातदन्तं कुमारं कुमारीञ्च पूर्ववत् भूम्यामवटे पिदधाति ।

**अथ वा कृतचौलां कन्याकुमारीं जातदन्तं कुमारं मृतदारं विधवामितरांश्च तूष्णीं मृतकं स्नापयित्वा शाखया श्मशानं पूर्ववत् 'अपेत वीते'ति संमृज्य चितायां प्रेतमारोप्य हिरण्यशकलतिलतण्डुलान् 'आ ओम'इत्यास्ये निदधाति ॥ ६ ॥**

अथवेत्यादि । अन्यान् — अनार्तववन्ध्यादीनापद्धाद्यान् । शाखया — पालाश्या शम्या वा शाखया । संमृज्य शाखां विसृज्य प्रोक्ष्य तत्र तिलान् विकीर्य तत्र काष्ठानि चालयित्वा । तस्यां **चितायां प्रेतमित्यादि ।**

**आज्यं 'अस्मात्त्वमधि' इति व्याहृतीश्च हुत्वा 'वातास्ते वान्त्वि'ति सिग्वातं कृत्वा 'इमा आपो मधुमत्यः' इत्यादिभिरुदकुंभं परीत्य उत्क्षिप्य कपालशेषोदकं 'भूः पृथिवी'मित्यास्ये दत्त्वा**

कपालसन्तपनाग्निना 'अस्मात्त्वमधि' इत्येकर्चया सावित्र्या वा दाहयति॥ ७॥

अज्यमित्यादि। अयमापद्दाह्यसंस्कारविधिः। एवं दहनं कृत्वा जातदन्तकृतचौलकानुपनीतानां कुमाराणां कुमारीणाञ्च पूर्ववत् तिलोदकादीन् दत्वा द्वादशाहे सपिंडीकरणस्थाने नारायणबलिं कुर्यात्। मृतदारस्य विधवायाश्चानिन्दितायाः इतरेषां कृतविवाहानामनिन्दितानाञ्च सपिंडीकरणान्तं कुर्यात। निन्दितानामापद्दाह्यानाञ्च प्रायश्चितान्ते नारायणबलिं कृत्वा श्राद्धं कुर्यात् इति प्रथमः पटलः।

इति वाजपेयियें सप्तमप्रश्ने (द्वितीयः खण्डः) प्रथमः पटलः।

## अथ तृतीयः खण्डः

शवे अन्याशौचयुक्ते श्वकुक्कुटसूतिकारजस्वलाद्यस्पृश्यस्पर्शने च मृतकं पञ्चगव्यैः कुशतोयैश्च स्नापयित्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं करोति ॥ १ ॥

अथ द्वितीयः पटलः। शव इत्यादि। अन्याशौचं सूतकादि। प्रोक्षणैः — आपोहिष्ठाद्यैर्मन्त्रैः प्रोक्ष्य कृच्छ्रत्रयमेकं प्राजापत्यं वा चरित्वा।

देशान्तरे मृते दहनविहीने श्वकाकाद्यैः शवे जीर्णे तदस्थीन्यादाय काषायतोयैः पञ्चगव्यैः कुशतोयैश्च प्रक्षाल्य आकृतिं कृत्वा तस्याग्नौ वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं हुत्वा विधिवद्दहनं कुर्यात् ॥ २ ॥

देशान्तर इत्यादि। अस्थीन्यादाय कृष्णाजिनेनावबद्ध्य वेण्वग्रे बद्ध्वा अनधो निदधानः स्वग्रामं नीत्वा ग्राममर्यादायां निधाय। काषायतोयैः — अश्वत्थोदुंबरप्लक्षवटाम्रजंबूनां त्वचो गृहीत्वा तोये प्रक्षिप्य भावितेन तत्तोयेन। प्रक्षाल्य तदस्थिभिस्तस्याकृतिं कृत्वा।

अमन्त्रकं शवे दग्धे तदस्थीन्यादाय पयसा आज्येन प्रक्षाल्य आकृतिं कृत्वा पूर्ववत् प्रायश्चित्तं हुत्वा समन्त्रकं दाहयति ॥ ३ ॥

अमन्त्रकमित्यादि। पूर्ववत् प्रायश्चित्तम् — तस्याग्नावित्युक्तम्।

तदस्थ्नामप्यलाभे दशाहादूर्ध्वं पालाशपर्णैः विधानेन आकृतिं कृत्वा प्रायश्चित्तान्ते तदग्निना दाहयेत् ॥ ४ ॥

कर्तुरेवाशौचं भवति ॥ ५ ॥

कर्तुरिति। न सपिण्डानाम्।

**त्र्यहं बलिनिर्वापणमाशौचञ्चेति केचित ॥ ६ ॥**

त्र्यहमित्यादि । चकारात् तिलोदकादयः । दशाहादूर्ध्वं कृतास्थ्याकृतिदहनानां पलाशपर्णाकृतिदहनानाञ्च विषये पुत्राणां इदं बलिनिर्वापणादिकं भवतीति केचित् । दत्तपुत्रविषयमिति केचित् । वयमिदं मातापित्रन्यविषयं ब्रूमः । तथा प्रथमेऽह्नि द्वादश द्वितीये त्रिंशत् तृतीये त्रयस्त्रिंशत्तिलोदकानि भवन्ति । तथा त्रयश्चत्वारस्त्रयः पिण्डा बलयश्च स्युः । द्वितीयेऽहन्यस्थिसञ्चयनं चितापिधानम् । प्रथमेऽह्नि नग्नप्रच्छादनं पञ्च नवश्राद्धानि चतुर्थेऽहन्येवमेव षण्णवश्राद्धानि स्युः । तृतीयेऽहनि तीर्थविसर्जनं चतुर्थेऽहन्येकोद्दिष्टं पञ्चमेऽह्नि वा यथाकालं सपिंडीकरणं भवेत् । एवं त्रिरात्राशौचपक्षे कर्तव्यम्, अन्यत् पूर्ववत् । इदमनाहिताग्नेः । आहिताग्नेः सर्वत्र पुनस्संस्कारेऽपि दशरात्रमेव ।

**सूतिकां मृतामुदक्याञ्च दावाग्निना मन्त्रहीनं दाहयित्वा दशाहेऽतीते तदस्थिभिः पालाशपर्णैर्वा आकृतिं कृत्वा दहनं करोति ॥ ७**

सूतिकामित्यादि । दावाग्निर्वेनवह्निः । तदस्थिभिः–काषायतोयपञ्चगव्यकुशतोयैः प्रोक्ष्यानीतैः । अपि वा पालाशपर्णैर्वा आकृतिं कृत्वा पूर्ववद्दहेत् ।

**अथ वा तदहन्येव काषायतोयैः पञ्चगव्यैः कुशतोयैश्च स्नापयित्वा पुण्याहं कृत्वा प्रोक्षणैः प्रोक्ष्य विधिवद्दहनं कुर्यादित्येके ॥ ८ ॥**

अथवेत्यादि । तदहन्येव – मरणदिन एव । **काषायतोयैरित्यादि** । **स्नापयित्वा** – प्रत्येकमभिषिच्य प्राजापत्यं चरित्वा विधिवद्दहनम् ।

इति वाजपेयीये सप्तमप्रश्ने (तृतीयः खण्डः) ।

## अथ चतुर्थः खण्डः

सगर्भाया मरणे स्पन्दमानेनोदरेण जीवन्तं गर्भमालक्ष्य भर्ता पुत्रोऽन्यो बन्धुर्वा वैद्यकुशलाभ्यां नाभ्युपस्थयोरन्तरे गर्भं परिहरन् 'हिरण्यगर्भ' इति शस्त्रेणोत्पाटयति ॥ १ ॥

सगर्भा०१ इत्यादि । वैद्यशल्याभ्यामिति पाठः । गर्भं परिहरन्—यथा शस्त्रं गर्भं न स्पृशति तथा ।

शस्त्रस्पर्शनात् गर्भस्य मरणे पतितो भवति ॥ २ ॥

जीवन्तमपत्यमुन्मुच्य स्नापयित्वा आदाय धात्रीं लोकमातरमभ्यर्च्य तस्य अन्यां मातरं कल्पयति ॥ ३ ॥

जीवन्तमित्यादि । उन्मुच्य—गर्भादुद्धृत्य । धात्रीं—भूदेवीम् । सा हि लोकमाता । तां पुष्पाद्यैरभ्यर्च्य । तस्य कुमारस्य अन्यां मातरं धात्रीनाम्नीं रक्षणार्थं कल्पयति ।

प्रेतायाः कुक्षावाज्येन 'प्राणाय स्वाहा'—'अपानाय स्वाहा' इति हुत्वा निर्व्रणं कृत्वा तां स्नापयित्वा विधिवद्दहनं करोति ॥ ४ ॥

प्रेताया इत्यादि । प्राणाय स्वाहेत्यादिभिः पञ्चभिर्होमः । निर्व्रणं—अक्षतं यथा स्यात्तथा कृत्वा (सूच्यादिना) स्नापयित्वा । पूर्ववत् ।

कुमारस्य जातकाग्नौ पूर्ववत् जातकं कुर्यात् ॥ ५ ॥

सूतकप्रेतकयोरेकाहसन्निपाते तन्त्रयित्वा वास्तुहोमं हुत्वा पृथगेवोत्थानहोमं पिण्डनिर्वापञ्च करोति ॥ ६ ॥

सूतकेत्यादि । एकाहसन्निपाते—एकस्मिन् दिने प्राप्ते । तन्त्रयित्वा—सूतकप्रेतकाशौचनिवृत्त्यर्थं वास्तुहोमं करिष्यामि इति संकल्प्य एकमेव वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां गृहादिकं शोधयेत् । पृथगेव कुमारस्योत्थानहोमं प्रेतायाः एकोद्दिष्टश्राद्धादिकं पिण्डनिर्वापञ्च करोति ।

**ब्राह्मणाद्यैश्चण्डालान्तैः अद्भिः सर्पेण दंष्ट्रिणा अशनिपातेन-अग्निना पशुना वा पापमरणे तस्याशौचवाक्कोदकम्पनाश्रुशवभरणा-ऽनुगमनदहनोदक बलिपिण्डदानादि कस्यचिन्नैव कुर्यात् ॥ ७ ॥**

ब्राह्मणाद्यैरित्यादि । **वाक्कोदः** – वाग्व्यथा । **कम्पनं** – दुःखाद्वेपनम् । **अश्रु** – रोदनम् । **भरणं** – वहनम् । **पिण्डः** – सपिण्डीकरणान्तांगपिण्ड-निक्षेपः ।

**एतानि कर्तुः चान्द्रायणं तप्तकृच्छ्रं प्रायश्चित्तं भवति ॥ ८ ॥**

एतानीत्यादि । पूर्वोक्तान्याशौचादीनि भयादज्ञानान्मोहाद्वा यः करोति तस्य प्रायश्चित्तमुक्तं भवति । अतः कस्यचित् पापमृतस्य तानि निषिद्धानि ।

**पापमृतस्य शरीरं दावाग्निना शूद्रैः दाहयित्वा दशाहेऽतीते नारायणबलिं कुर्यात ॥ ९ ॥**

**पापमृतस्येत्यादि** । **शूद्रैर्दाहयित्वा** – स्वयमस्पृशन्नेव । दशाहे-ऽतीते उक्तं प्रायश्चित्तं चरित्वा अन्ते सर्वप्रायश्चित्तार्थं नारायणबलिं करोति ।

**अथवा पालाशपर्णैरेव आकृतिदहनं करोति ॥ १० ॥**

पक्षान्तरमाह – अथवेत्यादि । आकृतिदहनं कृत्वा पूर्ववत् सपिण्डी-करणान्तं कुर्यादिति केचित् ।

> 'शस्त्रादुत्पाटनं कृत्वा आत्मानं यस्तु घातयेत् ।
> तस्य पापविशुद्ध्यर्थं प्राजापत्यशतत्रयम् ॥
>
> विषोद्बन्धनशस्त्राद्यैरात्मानं घातयेद्द्विजः ।
> जीवेत्कृच्छ्रेण शुद्ध्येत्तु दत्वा गोमिथुनं द्विजः ॥
>
> उदक्या शवविष्ठाद्यैः व्याघ्रसिंहहयादिभिः ।
> रजकव्याधशैलूषपशुदंष्ट्रिमृगैस्तथा ॥

चण्डालश्वपचक्षत्तृवेणुचर्मोपजीविभिः ।
सूतिकाश्ववराहाद्यैः व्याघ्रसिंहहयादिभिः ।
स्पृष्टे च चर्विते प्रोक्तं पृथक् कृच्छ्रत्रयं त्रयम् ' ॥

इत्यादि वचनैरुक्तं प्रायश्चित्तं तत्पुत्रादिभिश्चरित्वा दाहः कार्यः ।

**शवस्य दहनकालेऽतीते क्रियाहीने विपर्यासे च प्रेतकर्मणि सर्वत्र तिलैरेव वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तं जुहोति ॥ ११**

**शवस्य दहनार्थं होमे हुते तदग्नावुन्मन्ने पूर्ववत् भस्म समिधमारोप्य लौकिकाग्नौ निधाय प्रायश्चित्तं हुत्वा तेनाग्निना दहनं कुर्यात् ॥ १२ ॥**

**शवस्येत्यादि ।** मनोज्योतिरयाश्चाग्ने मिन्दाहुती व्याहृतीश्च आज्येन हुत्वा तिलैः वैश्वदेवादिकञ्च हुत्वा तेनाग्निना दहनं कुर्यात् ।

इति वाजपेयीये सप्तमप्रश्ने (चतुर्थः खण्डः) इति द्वितीयः पटलः ।

## अथ पञ्चमः खण्डः

**उपनयनादूर्ध्वं ब्राह्मणस्य मरणे सपिण्डानां दशाहमाशौचं विधीयते ॥ १ ॥**

अथ तृतीयः पटलः। उपनयनादित्यादि । क्षत्रियस्य द्वादशाहं वैश्यस्य पञ्चदशाहम् । उपनीतस्य वा गर्भाष्टमस्य वा मरणे प्रत्यासन्नसपिण्डानां दशरात्रं, पञ्चमानां षड्रात्र, षष्ठानां चतूरात्रं, सप्तमानां त्रिरात्रमिति केचित् ।

**दन्तजननादूर्ध्वं त्र्यहं नामकरणादूर्ध्वमेकाहं जननादूर्ध्वं सद्यश्शौचम् ॥ २ ॥**

दन्तजननादूर्ध्वं चौलात्प्राक् दाहत्यागयोः त्रिरात्रं, निखननेत्वेकरात्रमाशौचं सपिण्डानां विधीयते । जननादूर्ध्वं नाम्नः प्राक् स्नानान्तमाशौचं, जननादूर्ध्वमुत्थानात् प्राक् सद्यश्शौचम् ।

**स्त्रियाश्च मरणे विवाहादूर्ध्वं दशाहमष्टवर्षादूर्ध्वं त्र्यहं चौलकादूर्ध्वमेकाहं पूर्वं सद्यश्शौचम् ॥ ३ ॥**

स्त्रिया इत्यादि । स्त्रियाः — दुहितुः विवाहादूर्ध्वं मरणे भर्तृसपिण्डादीनां दशाहमाशौचम् । वाग्दत्तानामनूढानां मरणे स्वसपिण्डानां परसपिंडानामपि त्रिरात्रम्, वाग्दत्तानामष्टवर्षादूर्ध्वं भर्तृसपिंडानां त्रिरात्रमाशौचं विधीयते । चौलकादूर्ध्वं वाग्दत्तानां मरणे सपिंडानामेकाहमाशौचम् । चौलकात्पूर्वं स्त्रिया मरणे सपिंडानां सद्यश्शौचम् । पूर्ववदिति पाठः ।

**मातापित्रोर्भ्रातृणाञ्च सर्वत्र दशाहमेव । गर्भे मृते गर्भिण्यास्तन्मासतुल्यैरहोभिराशौचम् ॥ ४ ॥**

मातापित्रोरित्यादि । मृतस्य मातापित्रोः सोदराणां च सर्वत्र दशरात्रमाशौचमिति केचित् । क्रीताद्यनौरसपुत्राणां जनने मरणे च त्रिरात्रमाशौचम् ।

प्रथमादिषु त्रिषु मासेषु जनन्या त्र्यहं चतुर्थे चतुरहं पञ्चमे पञ्चाहं षष्ठे षडहं एवं मासतुल्यैरहोभिराशौचम् । सप्तममासादिषु तस्याः सूतिकाशौचं विधीयते । अत्र सर्वत्र पितुः स्नानान्तमाशौचम् । पञ्चममासप्रभृति सपिण्डानामपि स्नानान्तमाशौचम् । जातस्य मरणे मातापित्रोर्दशाहमाशौचम् । प्रसूतायां दुहितरि मृतायाञ्च पितृगृहे मातापित्रोः त्रिरात्रम् । इतरेषां तद्गृहवासिनां सद्येकरात्रमाशौचम् ।

**सूतके चान्यसूतके प्राप्ते प्रेतके चान्यप्रेतके प्राप्ते पूर्वाशौचेन शुद्धिस्स्यात् ॥ ५ ॥**

**सूतके** इत्यादि । सूतके वर्तमाने तत्यनिमित्ते तुल्यसंख्याके असमानदिवसप्रसक्ते अन्यसूतके प्राप्ते सति पूर्वाशौचेन इतरस्यागन्तुकस्य अशौचस्य शुद्धिः स्यात् । सूतिकायाः द्वितीयशावाशौचस्य तत्संसर्गिणो भर्तुरपि न पूर्वतः शुद्धिः । न कुत्रापि सूतकवशात् शावाशौचनिवृत्तिः । शाववशात् सूतकनिवृत्तिर्भवति । एतत्सर्वं तुल्यसंख्याविषयम् । विषमसंख्याविषये दीर्घकालिकापेक्षया स्वल्पस्य निवृत्तिः । न स्वल्पापेक्षया दीर्घकालिकस्य निवृत्तिः । यदि स्वल्पेऽपि पश्चाद्भाविदीर्घो नाधिकः स्यात् । तदा स्वल्पवशात् दीर्घस्यापि निवृत्तिः । पञ्चदिनाधिकादल्पादपि दशरात्रादेश्चोत्तरतोऽधिकाशौचान्त्यदिवसे पूर्णाशौचे प्राप्ते सति पूर्वस्मादुपरि त्र्यहाच्छुद्धिर्भवति । पूर्णाशौचस्योत्तरतोऽधिकाशौचान्त्यदिवसे तत्प्रभाते वा प्राप्ते पूर्वाशौचेन शुद्धिस्स्यादित्यर्थः ।

**इतरस्य प्राप्ते अपरस्यैवाहोभिः शुद्धिर्भवति ॥ ६ ॥**

**इतरस्येत्यादि** । सूतके वर्तमाने **इतरस्य** -- शावाशौचस्य प्राप्तौ । **अपरस्यैव** -- शावस्यैवाहोभिः शुद्धिर्भवति ।

**असपिण्डशवस्य स्नानालङ्करणे कृते त्र्यहं दिवसं वा, वहने कृते स्नात्वा दशप्राणायामान् कृत्वा नक्षत्रदर्शनात्पूर्वं ग्रामाद्बहिरासीत ॥ ७ ॥**

**तावदेवाशौचम् ॥ ८ ॥**

**असपिण्डशवस्येत्यादि।** असपिण्डस्य सजातीयस्य विजातीयस्य वा ब्राह्मणस्य असगोत्रस्य प्रेतस्य स्नेहादिना **स्नानालंकरणे कृते** सति आशौचं भवति इति शेषः **नक्षत्रदर्शनात्पूर्वं** – यावन्नक्षत्रदर्शनम् नक्षत्र दृष्ट्वा ग्राम विशेत्।

**रात्रौ सूर्योदयात्पूर्वमासीत ॥ ९ ॥**

**रात्रावित्यादि।** रात्रौ चेद्दहनवहनादिकरणं सूर्यं दृष्ट्वा ग्रामं प्रविशेदित्युक्तं ज्ञेयम्। पश्चात् पञ्चगव्यप्राशनमनुष्ठानादिकञ्च कुर्यात। भृतिमादाय दहनवहनादिकर्तुः सचेलं स्नानमलं भवति।

**अन्यथा तद्ग्रामे प्रविष्टे शवभर्तुरेकाहं, तद्गृहे प्रविष्टे त्र्यहं, तत्र भोजने कृते दशाहं भवति ॥ १० ॥**

**अन्यथेत्यादि।** अन्यथा – एवमकृत्वा। **शवभर्तुः** – वाहकस्य। **तद्गृहे** – प्रेतगृहे। **तत्र** – आशौचवद्गृहे। अत्र विकल्पं केचिद्वदन्ति। अगत्या तद्गृहे भुक्तवतः एकरात्रं अज्ञानाद्भुक्तवतः तदन्नशुद्ध्यवधिकमाशौचमिति। आशौचिभिस्सह शयनादिभिस्सह वसतां तावन्ति दिनान्यौशोचं भवति। अस्थिसञ्चयनादर्वाक् ब्राह्मणस्य रुदित्वा स्नायात्। अन्तर्दशाहे त्वाचमनं कुर्यात्। क्षत्रियवैश्ययोरस्थिसञ्चयनादर्वाक् ब्राह्मणो रौति चेदेकरात्राशौचं पश्चात् सचेलस्नानम्। शूद्रविषये अस्थिसञ्चयनादर्वाक् शवस्य स्पर्शे सति त्रिरात्रमाशौचं, तद्रहिते द्विरात्रं पश्चादेकरात्रमाशौचं भवति। हीनवर्णविषये रोदने यदाशौचमुक्तं तदेव भवति।

इति वाजपेयीये सप्तमप्रश्ने (पञ्चमः खण्डः)।

अथ षष्ठः खण्डः

प्रेतं ज्ञातिमज्ञातिं वा अनुगम्य स्नात्वा अग्निं स्पृष्ट्वा घृतं प्राश्नीयात् ॥ १ ॥

प्रेतमित्यादि । स्नात्वा – सचेलम् । अग्निं स्पृष्ट्वा – पाणिभ्याम् । प्राश्नीयात् – हृदयंगममात्रम् । पुनः स्नात्वा शुद्धो भवति ।

आत्मनः पितुर्मातुश्च योनिबन्धूनाश्च मरणे विज्ञाते सचेलस्नानं करोति ॥ २ ॥

आत्मन इत्यादि । विज्ञाते – यत्रकुत्र वाऽन्यत्र स्थितः पुत्रः श्रुत्वा मरणम् । स्नानं करोति – स्नानं कृत्वा तदादि दशाहमाशौचमनुतिष्ठति । योनिबन्धुष्वियं व्यवस्था ज्ञेया । मातृभ्रातुः मातृष्वसुश्च मरणे श्रुते त्रिरात्रम् । श्वशुरयोर्मरणे तथा । ऋत्विजः आचार्यस्याचार्यपत्न्या आचार्यसुतस्य शिष्यस्य गृहप्राप्तश्रोत्रियस्य च तथा त्रिरात्रमाशौचम् । मातृष्वस्रादीनां प्राप्तरजसामेव त्रिरात्रमित्यन्ये । उभयत्र सद्यश्शौचमेवेति केचित् । स्त्रियाः, मातामहस्य मातामह्याः पितामहस्य पितामह्याः मातुर्मातुलस्य तत्पुत्रदुहित्रोः मातृष्वसुः तत्पुत्रदुहित्रोः पितुः पितृव्यस्य तत्पुत्रदुहित्रोः भ्रातुस्तत्पुत्रदुहित्रोः स्वस्रुस्तत्पुत्रदुहित्रोः दुहितुस्तत्पुत्रदुहित्रोः स्वपुत्रदुहितुश्च मरणे पक्षिण्याशौचम् । पुरुषविषया पक्षिणी स्त्रियाः प्राप्तरजसश्च । उभयत्रापि अतोऽर्वाक् सद्यश्शौचमेव । स्त्रियाः, मातृसपत्न्या ऊढाया-स्सपत्नीसुतायाश्च मरणे चैकरात्रम् । एकग्रामवासिनः श्रोत्रियादेः सुहृदः मण्डलाधिपतेश्च मरणे एकरात्रमाशौचं भवति । अन्येषां योनिबन्धूनां मरणे सचेलस्नानमलं भवति ।

द्वितीयेऽहनि पुनर्दहनप्रभृति तदश्मन्युदकं दत्वा दक्षिणाग्रं कूर्चं निधाय तन्नाम्ना प्रेतमावाह्य तैलमञ्जनं स्नानं वासोदकं दत्वा पाद्याचमनगन्धपुष्पधूपदीपाक्षताचमनैरभ्यर्च्य सायंप्रातर्बलिं दत्वोदकं ददाति ॥ ३ ॥

**द्वितीयेऽहनी**त्यादि । आहिताग्नेरनाहिताग्न्यादेश्च । **द्वितीयेऽहनि** – दहनदिनाद्द्वितीयेऽहनि । **आवाह्य** – द्वितीयान्तेन नाम्ना । **अभ्यर्च्य** – चतुर्थ्यन्तेन नाम्ना ।

**प्रातर्बलौ हीने सायं द्विगुणं सायं हीने प्रातर्द्विगुणमेवमादशाहात्करोति ॥ ४ ॥**

**श्वकुक्कुटसूतकोदक्यान्त्यजैरश्मनि स्पृष्टे पञ्चगव्यैः प्रक्षाल्य बलिं दद्यात् ॥ ५ ॥**

**श्वकुक्कुटे**त्यादि । अश्मनि नष्टे पुनरन्यमश्मानं निधायार्चनादीनि करोति । (श्वकुक्कुटसूतिकाद्यैः पिण्डभाण्डे स्पृष्टे वा पुनर्नवेन भाण्डेन चरुश्रपणादिकं कुर्यात्)

**सप्तमेऽहनि नवे मृत्पात्रे चितास्थीन्यादाय पुण्यनद्यां समुद्रे वा प्रक्षिपति ॥ ६ ॥**

**सप्तमेऽहनी**त्यादि । **चितास्थीन्यादाय** – पूर्वं सञ्चितानि अवशिष्टानि च संगृह्य वंशयष्ट्यां बद्ध्वा अनधो निदधानो नीत्वा । **प्रक्षिपति** – पूर्ववत् संस्कृत्य अघमर्षणसूक्तं जपन् क्षिपति । पर्वणि समुद्रं गत्वा 'रत्नाकर नमस्तुभ्य'मिति प्रणम्य 'पिप्पलादसमुत्पन्न' इति मन्त्रावृत्त्या सप्तपाषाणान् समुद्रमध्ये प्रक्षिप्य 'सर्वरत्नमय श्रीमन्' इत्यर्घ्यं दत्वा अवगाह्य 'विश्वाची घृताची'चेति स्नात्वा पिप्पलादं तर्पयेत् । एवं कल्पान्तरोक्तवद्वा स्नात्वा क्षिपति ।

**अन्तर्दशाहे अमावास्या यदि भवेत् तस्यामेव शेषान् बलीन् दत्वा बलिकर्म समापयति ॥ ७ ॥**

**अन्त**रित्यादि । दशाहमध्ये । **शेषान्** – अवशिष्टान् ।

**द्विचन्द्रदर्शने महान् दोषो भवेत् ॥ ८ ॥**

द्विचन्द्रेत्यादि । द्वयोर्मासयोश्चन्द्रस्य दर्शनं द्विचन्द्रदर्शनम् । अयं मातापित्रोरन्यत्र विषयः । अपि वा त्रिदिनादूर्ध्वं विषयः । त्रिदिनादर्वागमावास्या चेत्तामतिक्रम्य कुर्यात् ।

दशमेऽहन्येकदा बलिं दत्वाऽश्मानं विसृजेत् ॥ ९ ॥

दशम इत्यादि । एकदा – प्रातर्बलिम् ।

इति वाजपेयीये सप्तमप्रश्ने (इति तृतीयः पटलः) षष्ठः खण्डः ।

## अथ सप्तमः खण्डः

—xox—

**जातदन्तस्य चौलकात्पूर्वं मरणे त्र्यहं भूमौ तूष्णीं बलिनिर्वापणमित्येके ॥ १ ॥**

(अथ चतुर्थः पटलः)। जातदन्तस्येत्यादि। त्र्यहं—मरणादि त्र्यहं तीन् जलाञ्जलीन् दत्वा तूष्णीं भूमौ बलिनिर्वापणं कृत्वा नारायणबलिं कुर्यादित्येके।

**दहनप्रभृत्याहिताग्नेः मरणप्रभृत्यनाहिताग्नेः एकादशेऽहन्येकोद्दिष्टं कुर्यात् ॥ २ ॥**

दहनेत्यादि। आहिताग्नेः तत्पत्न्याः, अनाहिताग्नेः तत्पत्न्याश्च।

**एकोद्दिष्टनिमित्तश्राद्धे तन्नाम्ना 'प्रेतनिमित्तं भुंक्ष्वे'ति ब्राह्मणं वरयित्वा 'प्रेताय स्वधा' इति पाणौ तिलोदकं दत्वा होमं पिण्डदानञ्च कृत्वा अन्नादि सकृत्सकृद्दत्वा भोजयेत् ॥ ३ ॥**

एकोद्दिष्टेत्यादि। एकमुद्दिश्य क्रियते इत्येकोद्दिष्टम्। एकोद्दिष्टकारणं श्राद्धमेकोद्दिष्टनिमित्तश्राद्धम्। तस्मिन्। प्रेतनिमित्तं प्रेततृप्त्यर्थं भुंक्ष्वेति। ब्राह्मणं वरयित्वा आसयित्वाऽभ्यर्च्य प्रत्येकमर्घ्यपात्रं संसाद्य तिलोकादि दद्यात्।

**उद्यन्तं वा ददातीति केचित् ॥ ४ ॥**

उद्यन्तमित्यादि। अशक्तः अन्नाभावे भोक्तृभावे वा उद्यन्तमामं ददाति। भोजनार्थं द्विप्रस्थतंडुलैः पूर्ववत्तिलोदनं सापूपव्यञ्जनं पक्त्वा पात्रे प्रक्षिप्य प्रभूतेन सर्पिषोपसिच्य द्वात्रिंशत्कबलानि कृत्वा अग्निमभ्यर्च्य तस्मिन्नग्नौ पुरुषसूक्तेन 'उशन्तस्त्वा हवामहे' इति पितृसूक्तेन वा 'यत्ते कृष्णश्शकुन आतुतोद' इति मन्त्रावृत्त्या वा जुहुयादित्येके।

**निमित्तश्राद्धे मासेऽतीते हीने च प्राजापत्यं चरित्वा प्रायश्चित्तं हुत्वा पूर्ववदेकोद्दिष्टं कुर्यात् ॥ ५ ॥**

निमित्त इत्यादि। प्रायश्चित्तं—प्रेतकर्मणि सर्वत्र तिलैरेव वैश्वदेवं याम्यं पैतृकं व्याहृतीश्च प्रायश्चित्तम्। एवं प्रतिमासं द्विगुणादिवृद्ध्या प्रायश्चित्तं कृत्वा संवत्सरान्तमेवं कुर्यात्। संवत्सरेऽतीते दहनादि सर्वं पूर्ववत्कुर्यात्।

**सपिंडीकरणात्पूर्वं मासिमासि तन्मरणदिने पिण्डं निरुप्यैकं भोजयति ॥ ६ ॥**

**द्वादशे षष्ठे तृतीये वा मासि शुभकार्ये प्राप्ते द्वादशाहे वा सपिण्डीकरणं कुर्यात् ॥ ७ ॥**

द्वादश इत्यादि। द्वादशाहसपिण्डीकरणपक्षे एकादशेऽहन्येव एकोद्दिष्टं कृत्वा स्नात्वा देशकालशक्त्यपेक्षया श्वः सपिंडीकरणं कुर्यात्। तदा तत्तत्कालविहितानि षष्ट्यधिशतत्रयमेकोद्दिष्टश्राद्धानि सोदकुंभानि प्रेततृप्त्यर्थमपकृष्य कुर्यात्। ब्राह्मणेभ्यस्तावत्संख्याकान्यामदानानि दत्वा पुनः तत्तत्कालविहितानि षोडशैकोद्दिष्टश्राद्धान्यपकृष्य एकोद्दिष्टवद्ब्राह्मणवरणादि पिण्डदानान्तं भोजनान्तञ्च कर्माचरेत्। ततः द्वादशाहे सपिण्डीकरणम्। पुनर्मासिमासि तद्दिने त्रिपुरुषोद्देशेन श्राद्धं कुर्यात्।

इति वाजपेयीये सप्तमप्रश्ने सप्तमः खण्डः।

## अथ अष्टमः खण्डः

पूर्वेद्युः द्वौ विश्वेदेवार्थे त्रीन् पित्रर्थमेकं प्रेतार्थं 'सपिण्डीकरणश्राद्धे भोक्ष्यता'मिति वरयित्वा 'स्वाहा' – 'स्वाधा' इति तेषां करे तिलोदकं दत्वा 'पितृभ्यस्स्वाधा' इति पात्रं तिलोदकैः पूरयित्वा पितृनावाह्य तन्नाम्ना 'प्रेताय स्वधा' इत्यन्यत्पात्रं पूरयित्वा प्रेतमावाह्य तथा होमं हुत्वा पिण्डं निरुप्य विश्वेदेवाभ्यां द्विर्द्विर्दत्वा पितृभ्यः प्रेताय सकृत्सकृद्दत्वा तान् भोजयति ॥ १ ॥

पूर्वेद्युरित्यादि। पूर्वेद्युः रात्रौ। त्रीन् पित्रर्थे – पितामह प्रपितामह वृद्धप्रपितामहास्त्रय उद्दिष्टाः पितरः। विष्ण्वर्थमन्यमपि वरयेत्। वरयित्वा – फलादिभिर्वरणम्। इदं पूर्वरात्रकृत्यम्। परेद्युः श्राद्धदिवसे पूर्ववत् सुप्रक्षालितपाणिपादान् आसयित्वा ब्राह्मणान् अभ्यर्च्य अर्घ्यपात्रमासाद्य 'विश्वेभ्यो देवेभ्यस्स्वाहा' इति तयोः करे यवोदकं, तथा 'पितामहेभ्यः प्रपितामहेभ्यो वृद्धप्रपितामहेभ्यः स्वधा' इति तेषां करे तिलोदकं' 'प्रेताय स्वधा' इति तत्करे अन्यस्मात्पात्रात्तिलोदकं दत्वा अन्यस्मात्पात्रात् 'विष्णवे स्वाहा' इति तत्करे यवोदकञ्च दद्यात्। पितृभ्यस्स्वधा इत्यादि। पूर्वं प्रयोग उक्तः। पिण्डं निरुप्य – पितॄणां प्रेतस्य च प्रत्येकं पिण्डनिर्वापः। होमशिष्टादिकं विश्वेदेवभोजनपात्रे द्विर्द्विः अन्येषां सकृद्ददाति। ततो भोजनम्।

पितृपिण्डैः प्रेतपिण्डं समारोप्य पितृपात्रोदकैः प्रेतपात्रोदकं संयोजयति ॥ २ ॥

पितृपिण्डैरित्यादि। प्रेतपिण्डं त्रिधा कृत्वा पितृपिण्डैस्त्रिभिः क्रमेण समारोप्य – एकीकृत्य प्रेतपात्रस्योदकं पितृपात्रोदकैः संयोजयति।

सपिण्डीकरणे हीने कृतं शुभकार्यं विनश्यति ॥ ३ ॥

सपिडीकरण इत्यादि। हीने – अकृते सति।

तस्मात्प्रायश्चित्तं हुत्वा सपिण्डीकरणं कृत्वा भिन्नेऽहनि विष्णु-सूक्तं मिन्द्राहुत्याश्चान्वितादीन् हुत्वा पुनः शुभकर्म कुर्यात् ॥ ४ ॥

तस्मादित्यादि । प्रायश्चित्तमुक्तम् । सपिण्डीकरणं पूर्ववत् पिण्डसंयोज-नान्तं कृत्वा । पुनः — कृतमपि शुभकर्म पुनः कुर्यात् ।

अष्टकाहीने तद्वंशविनाशो भवेत् ॥ ५ ॥

यत्नेनाष्टकां करोति ॥ ६ ॥

यत्नेनेत्यादि । तस्मात् पूर्ववत् प्रायश्चित्तं कृत्वा । यत्नेन — नियमेन ।

यथोक्तजलदान पिण्डनिर्वाप ब्राह्मणभोजनेषु श्रद्धया कृतेषु सर्वसम्पत्समृद्धिः वंशविवर्धनश्च भवेदिति विज्ञायते ॥ ७ ॥

इति वाजपेयीये सप्तमप्रश्ने अष्टमः खण्डः ।

## अथ नवमः खण्डः

—※※※—

**गृहस्थस्यौपासने विच्छिन्ने यदि प्राणोत्क्रान्तिः वृद्धानुज्ञातस्तत्पुत्रः श्रोत्रियागारादग्निमाहृत्य संस्कृतायां भुवि व्याहृतीभिः संस्थाप्योपतिष्ठते॥**

**गृहस्थस्येत्यादि** । प्रेताधानप्रकार उच्यते । आहिताग्नेरनाहिताग्नेः गृहस्थस्य वनस्थस्य वा अग्निहोत्रादिके होमे **विच्छिन्ने**—नष्टे । **यदि** मरणं भवेत् । वृद्धैरनुज्ञातः—वृद्धाः प्रायश्चित्तनिर्देशकुशलाः तैरनुज्ञातः । पुत्रादिः पुनराधानोक्तं प्रायश्चित्तं कृत्वा अरण्याद्यारोपितं विधिना मथित्वा अथवा श्रोत्रियागाराद्वा अग्निमाहृत्य । **संस्कृतायां** भूमौ आधारं विना व्याहृतीभिरग्निं संस्थाप्य उपतिष्ठेत ।

**'जुष्टोदमूना' मित्यथैनं परिसमूह्य परिस्तीर्य पर्युस्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्तव्याहृतीर्हुत्वा पुनरपि पूर्ववत् गृहीत्वा 'पूर्वं देवाः' 'प्राणापानौ' इति द्वाभ्यां 'मात्रा वृक्षौ संबाधिष्टां' 'मात्वा वृक्षौ संबाधेथां' इति द्वाभ्यां 'अग्नेऽभ्यावर्तिन्'–'अग्ने अंगिरः' इति द्वाभ्यां 'पुनरूर्जा' 'सह रय्या' इति द्वाभ्यां 'अयाश्चाग्ने 'ब्राह्मण एकहोता' इति द्वाभ्यां क्रमेण चतुर्गृहीतानि हुत्वा पुनश्चतुर्गृहीतं गृहीत्वा महाव्याहृतिभिश्च जुहुयात् ॥ २ ॥**

जुष्टोदमूनामित्यादि । परितस्समूहनं शोधनं—परिसमूहनम् । परिस्तीर्य—दर्भैः दक्षिणाग्रैः पश्चिमाग्रैश्च । पर्युक्षणं—परिषेचनम् । सप्तकृत्वस्सप्तव्याहृतिभिर्होमः । एकेन चतुर्गृहीतगृहीतेन सर्वत्र सप्तधा द्विधा च यथोक्तहोमः कार्यः । महाव्याहृतिहोमानन्तरं सायं पूर्वमग्निहोत्रहोमादिकं जुहुयात् ।

**एवमग्निमुत्पाद्य पूर्वोक्तेन विधिना दहनं कुर्यादित्याह भगवान् विखनाः ॥ ३ ॥**

इति वाजपेयीये सप्तमप्रश्ने (चतुर्थः पटलः) नवमः खण्डः ।

**॥ इति सप्तमः प्रश्नः ॥**

## अथ अष्टमः प्रश्नः

(धर्मसूत्रे प्रथमः प्रश्नः)

### अथ प्रथमः खण्डः

—✲✲✲—

**अथ वर्णाश्रमधर्मम् ॥ १ ॥**

(अथ प्रथमः पटलः)। अथेत्यादि। वर्णाः – ब्राह्मणादयः। आश्रमाः – ब्रह्मचारिप्रभृतयः। धर्मशब्दोऽत्र षड्विधस्मार्तधर्मविषयः। तद्यथा – वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मस्साधारणधर्मश्चेति। तत्र वर्णधर्मो ब्राह्मणो नित्यं मद्यं वर्जयेदित्यादिः। आश्रमधर्मोऽग्नीन्धनभैक्षाचर्यादिः। वर्णाश्रमधर्मः 'पालाशो दण्डो ब्राह्मणस्ये'त्येवमादिः। गुणधर्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य परिपालनादिः। निमित्तधर्मो विहिताकरण निषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणधर्मोऽहिंसादिः। तं धर्मं वक्ष्याम इति शेषः।

**ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णाः। यस्मात् 'ब्राह्मणोऽस्य मुखमासी'दित्यादि श्रुतिः ॥ २ ॥**

ब्राह्मणेत्यादि। श्रुत्यर्थं व्याख्याति ब्राह्मणक्षत्रियवैश्यशूद्रा इति। अस्य ब्रह्मणः परमात्मनो विष्णोः मुखे जाताः ब्राह्मणाः। बाह्वोर्जाताः क्षत्रियाः ऊर्वोर्जाता वैश्याः पादयोर्जाताः शूद्रा इति चतुर्वर्णा भवन्ति।

**पूर्वेषां त्रयाणां निषेकाद्यास्संस्कारा विधीयन्ते ॥ ३ ॥**

**तेषां द्विजन्मनां वेदाधिकारः ॥ ४ ॥**

तेषामित्यादि। वेदाधिकारः – वेदोक्तकर्मस्वधिकारः।

**तस्मात् ब्राह्मणस्य अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाः षट् कर्माणि भवन्ति ॥ ५ ॥**

**क्षत्रियवैश्ययोः यजनाध्ययनदानानि ॥ ६ ॥**

क्षत्रियेत्यादि । उक्तानि त्रीण्येव । नान्यानि त्रीणि ब्राह्मणमात्र-साधारणानि ।

**क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धानि ॥ ७ ॥**

क्षत्रियस्येत्यादि । क्षत्रियस्योक्तानि त्रयो गुणधर्माः विलक्षणाः प्रजा-पालनादयः ।

**वैश्यस्य पाशुपाल्यकुसीदवाणिज्यानि ॥ ८ ॥**

वैश्यस्येत्यादि । पाशुपाल्यं – पशुपालनं, कुसीदं – वृद्धिजीवनम् वाणिज्यं – क्रयविक्रयव्यवहारः, एतानि त्रीणि विलक्षणानि कर्माणि ।

**शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव ॥ ९ ॥**

**ब्राह्मणस्याश्रमाश्चत्वारः ॥ १० ॥**

**क्षत्रियस्याद्यास्त्रयः ॥ ११ ॥**

**वैश्यस्य द्वावेव ॥ १२ ॥**

**तदाश्रमिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति ॥ १३**

इति वाजपेयीये अष्टमः प्रश्ने प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः

उपनीतो ब्रह्मचारी मेखलोपवीताजिनदण्डधारी स्नात्वा तर्पणं ब्रह्मयज्ञं सायं प्रातस्सन्ध्योपासनसमिद्धोमौ च कुर्वन् गुरोः पादावुपसंगृह्य नित्याभिवन्दी व्रतेनाध्ययनं करोति ॥ १ ॥

उपनीत इत्यादि । व्रतेन – नियमेन ।

स्थिते गुरौ स्थेयात् ॥ २ ॥

उत्थिते पूर्वमुत्थाय व्रजन्तमनुगच्छेत् ॥ ३ ॥

आसीने शयाने च नियुक्तो नीचैरन्वासनशयने कुर्यात् ॥ ४ ॥

अनुक्तो यत्किञ्चित्कर्म नाचरेत् ॥ ५ ॥

अनुक्तोऽपि स्वाध्यायनित्यकर्माण्याचरेत ॥ ६ ॥

उष्णांबुस्नानदन्तधावनाञ्जनानुलेपनगन्धपुष्पोपानच्छत्र दिवास्वापरेतस्स्कन्द स्त्रीदर्शनस्पर्शनमैथुन कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि वर्जयित्वा सदा शुश्रूषुर्गुरोः प्रियहितकर्माणि कुर्वीत ॥ ७ ॥

उष्णांबुस्नानेत्यादि । ब्रह्मचारिणो वर्ज्यानि कर्माण्युच्यन्ते । उष्णांबुना यदि स्नायात् पुनः शीतांबुना स्नाने कृते शुद्ध्यति । दन्तधावनं – काष्ठादिना दन्तशोधनम् तथा दन्तधावनादौ कृते स्नानेन शुद्धिः ज्ञेया । उपानच्छत्रधारणं केचिदनुमन्यन्ते वृद्धाः । दिवा स्वापस्य पर्वणि विशिष्य वर्ज्यत्वं केचिदाहुः । प्रमादतः करणे स्नात्वा अष्टशतगायत्रीं जपेत् शुद्ध्यति । कामतोऽकामतो वा रेतस्स्कन्दनं वर्ज्यम् । कामतश्चेदवकीर्णप्रायश्चित्तमकामतश्चेत् स्नानतः शुद्धिः । स्त्रीणां रागतो दर्शनं स्पर्शनञ्च वर्जयेत् । यदि कुर्यात् प्राजापत्यं कृच्छ्रं चरेत् । मैथुनञ्च वर्जयेत् । यदि कुर्यात् अब्दकृच्छ्रं चरेत् । कामादयोऽरयः षट् धर्मशास्त्रेषु नाशहेतुत्वेनोपदिष्टाः । हिंसा – भूतानां हननम् । आदिशब्देन स्तेयनिन्दानृतादयो लक्ष्यन्ते ।

अदूर्षी वाक्चित्तानुकूलः प्रियं सत्यं वदति ॥ ८ ॥

आर्तोऽप्यसत्यमप्रियं निन्दां नाचक्षीत ॥ ९ ॥

आर्त इत्यादि । आर्तः – क्षुत्तृष्णादिपीडितः ।

**मधुमांसमत्स्यरस शुक्ताद्यभोज्यभोजनवर्जी भैक्षाचरणं कृत्वा गुरुणा अनुज्ञातो भैक्षान्नमश्नीयत् ॥ १० ॥**

मधुमांसेत्यादि । आदिशब्देन सूतकप्रेतकाद्यन्नानि पर्युषितोच्छिष्टकेशदूषितादीनि गृह्यन्ते । यदि प्रमादात् भुञ्जीयात् प्राजापत्यं चरित्वा मौञ्जीहोमेन शुद्ध्यति । अहोरात्रमुपोष्य पञ्चगव्यं प्राश्य शुद्ध्यतीति केचित् । सूतकनवश्राद्धान्नभोजने त्रिरात्रमुपोष्य पञ्चगव्यं प्राश्य शुद्ध्यति । मौनव्रतेन अनिन्दितानां ब्राह्मणानां गृहेषु भिक्षाचरणं कृत्वा भिक्षासंपादितमन्नं गुरवे निवेद्य तेनानुज्ञातः भैक्षान्नं सायं प्रातः यथेष्टमश्नीयात् । भुक्त्वा उच्छिष्टमवटे पिदध्यादिति केचित् । भैक्षाचरणमकृत्वा यद्येकाहमश्नीयात् गायत्र्यष्टशतं जपेत् । यद्यपोशनञ्चाकृत्वाऽश्नीयात् अष्टोत्तरशतं गायत्रीं जपेत् ।

**गुरुवृद्धदीक्षितानामाख्यां न ब्रूयात् ॥ ११ ॥**

गुरुवृद्धेत्यादि । गुरवः – मातृपित्राचार्याः । वृद्धाः – ज्ञानेन वयसा कर्मणा वा अधिकाः । दीक्षिताः – यज्वानः । तेषां नाम न ब्रूयात् ।

**गुर्वभावे तत्पुत्रे च गुरुवत्कर्माचरति ॥ १२ ॥**

गुर्वभाव इत्यादि । चकारात् तस्याप्यभावे तत्सन्ततौ शिष्ये गुरुवत्कर्माचरतीति सूचितं भवति ।

इति वाजपेयीये अष्टमप्रश्ने (प्रथमः पटलः) द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः

ब्रह्मचारिणश्चतुर्विधाः ॥ १ ॥

गायत्रो ब्राह्मः प्राजापत्यो नैष्ठिक इति ॥ २ ॥

(अथ द्वितीयः पटलः) गायत्र इत्यादि । गायत्रीमात्राध्ययनपरो गायत्रः । ब्रह्म – वेदमधीन इति ब्राह्मः । प्रजापतिर्नारायणोऽस्य निष्ठति प्राजापत्यः । ब्रह्मचर्येणैव अनुतिष्ठतीति नैष्ठिकः ।

गायत्रः उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीत्य, आसावित्रव्रतसमाप्तेरत्र व्रतचारी ॥ ३ ॥

गायत्र इत्यादि । अक्षारलवणाशी – क्षारं मरीच्यादिलवणं सामुद्रादि । क्षारलवणवर्जमन्नमश्नीयात । ब्रह्मचारी – ब्रह्मचर्यव्रतविहितधर्माननुतिष्ठन् वर्तेत ।

ब्राह्मः सर्वत्र व्रतादूर्ध्वमनभिशस्तापतितानां गृहस्थानां गृहेषु भैक्षाचरणं वेदव्रतचरणञ्च कृत्वा द्वादशसमा विंशतिसमा वा गुरुकुले स्थित्वा वेदान् वेदौ वेदं वा सूत्रसहितमध्ययनं कृत्वा गार्हस्थ्यानुसरणं कुर्यात् ॥ ४ ॥

ब्राह्म इत्यादि । अनभिशस्ताः – अनारोपितपातकाः । अपतिताः – अकृतपातकाः । गृहस्थाः – कुटुंबिनः । तेषां गृहेषु सायंप्रातः भैक्षाचरणं प्राजापत्यादिवेदव्रताचरणञ्च कुर्यात् । वेदान् – त्रीन् । वेदावृग्यजुषी – वेदमृग्वेदमथ स्वसूत्रं–यद्वेदमूलं तद्वेदं वा सूत्रसहितमध्ययनं कृत्वा ततः गार्हस्थ्यानुसरणं द्वितीयाश्रमस्वीकरणं कुर्यात् ।

प्राजापत्यः स्नात्वा नित्यकर्मब्रह्मचर्यशीलो नारायणपरायणो वेदवेदांगार्थान्विचार्य दारसंग्रहणं करोति ॥ ५ ॥

प्राजापत्य इत्यादि । स्नात्वा – समावृत्तः । विचार्य – अर्थतोऽवगम्य पश्चात् दारसंग्रहणं करोति ।

**प्राजापत्ये त्रिसंवत्सरादूर्ध्वं न तिष्ठेदित्यृषयो वदन्ति ॥ ६ ॥**

प्राजापत्ये इत्यादि । समावर्तनानन्तरं दारसंग्रहणं विना त्रिसंवत्सरादूर्ध्वं न वर्तेत । अवश्यं गार्हस्थ्यानुसरणं कार्यमिति फलितम् । स्वदारनिरतः ऋतुकालाभिगामी प्राजापत्य इति केचित् ।

**नैष्ठिकः काषायं धातुवस्त्रमजिनं वल्कलं वा परिधाय जटी शिखी वा मेखली दण्डी सूत्राजिनधारी ब्रह्मचारी शुचिरक्षारलवणाशी यावदात्मनो विप्रयोगः तावद्गुरुकुले स्थित्वा निवेदितभैक्षभोजी भवति ॥ ७ ॥**

अत्र योगेश्वरः ।

'गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥

संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ।
अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥

ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।
गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥

आहूतश्चाप्यधीयीत लब्धञ्चास्मै निवेदयेत् ।
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥

कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतस्साधु शक्ताप्रज्ञानवित्तदाः (?) ॥

दण्डाजिनोपवीतानि मेखलाञ्चैव धारयेत् ।
ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
अपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
सामानि तृप्तिं कुर्याच्च पितृणां मधुसर्पिषा ॥

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥

वाकोवाक्यं पुराणञ्च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्याः शक्त्याऽधीते हि योऽन्वहम् ॥

मांसक्षीरौदनमधुतर्पणं मदिवौकसाम् ।
करोति तृप्तिं कुर्याच्च पितृणां मधुसर्पिषा ॥

ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।
यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम् ॥

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥

अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः' ॥ इत्यादि

'मधुमांसाञ्जनोच्छिष्ट शुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥

स गुरुः यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददेद्वेदमाचार्यस्स उदाहृतः ॥

एकदेशमुपाध्यायः ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥

प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥

यज्ञानां तपसाञ्चैव स देवांस्तर्पयेद्द्विजः ।
पितॄन् मधुघृताभ्याञ्च ऋचोऽधीते हि योन्वहम् ॥

यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ।
प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ।
स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ॥

इति वाजपेयीये अष्टमप्रश्ने तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

दारान् संगृह्य गृहस्थोऽपि स्नानादिनियमाचारो नित्यमौपासनं कृत्वा पाकयज्ञयाजी वैश्वदेवहोमान्ते गृहागतं गुरुं स्नातकञ्च प्रत्युत्थायाभिवन्द्य आसनपाद्याचमनानि प्रदाय मधुना तोयेन वा घृतदधिक्षीरमिश्रं मधुपर्कं दत्वा अन्नाद्यैर्यथाशक्ति भोजयति ॥ १ ॥

भिक्षून् ब्रह्मचारिणोऽतिथीन् वेदविदः श्रोत्रियान् पितृन्याचार्यर्त्विङ्मातुलश्वशुरादीनभ्यागतान् बालवृद्धाननाथार्तान्श्रान्तांश्च यथार्हं पूजयति ॥ २ ॥

अशक्तोऽप्यग्रं भिक्षां वा सोदकं दत्वा शेषं भुञ्जीत । दयामत्याशौचाचारयुतः स्वाध्यायतर्पणाभ्यामृषीन्, यज्ञबलिहोमजलपुष्पाद्यैर्देवान्, श्राद्धैः पुत्रैश्च पितृन्, बलिना भूतान्, अन्नाद्यैर्मनुष्यांश्च नित्यमर्चयेत् ॥ ३ ॥

ऋणत्रयेण मुक्तोऽनृणो भवति ॥ ४ ॥

दारान् इत्यादि । गृहस्थस्सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् । असमानप्रवरैर्विवाहः । ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः । पञ्चमात् मातृबन्धुभ्यः 'अरोगिणीं भ्रातृमती' मिति गौतमः ।

अत्र योगेश्वरः ।

'कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि श्रौतं वैवाहिकाग्निषु (?) ॥

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातस्सन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥

हुत्वाऽग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।
वेदार्थानधिगच्छेत शास्त्राणि विविधानि च ॥

उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥

बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥

देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।
अन्नं भूमौ श्वचण्डालवायसेभ्यश्च निक्षिपेत् ॥

अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायं सततं कुर्यान्न पचेदन्नमात्मने ॥

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
संभोज्यातिथिभृत्यांश्च दंपत्योः शेषभोजनम् ॥

आपोशनेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतञ्चैव कार्यमन्नं द्विजन्मना ॥

अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥

सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ।
भोजयेच्चागतान् काले सखिसंबन्धिबान्धवान् ॥

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।
सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ' ॥ इत्यादि

इति वाजपेयीये अष्टमप्रश्ने चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

गृहस्थाश्चतुर्विधाः ॥ १ ॥

वार्तावृत्तिः शालीनवृत्तिः यायावरो घोराचारिकश्चेति ॥ २ ॥

वार्तावृत्तिः कृषिगोरक्षवाणिज्योपजीवी ॥ ३ ॥

**वार्तावृत्तिरित्यादि** । कृष्या गोरक्षेण वाणिज्येन च देहयात्रां नयेदित्युक्तं भवति । अयं गृही प्रातः कर्माणि यथोक्तं निर्वर्त्य स्थिरांगं नीरुजं तृप्तं सुनर्दं षण्डवर्जितं वृषभद्वयं हले आबद्ध्य घटिकाचतुष्टयं कर्षयित्वा तावृषभावुन्मुच्य पुनरेवंभूतमनड्डुद्वयमायोज्य चतस्रो घटिकाः कर्षयित्वा तावुन्मुच्य पुनरन्यौ वाहयित्वा तथा कर्षयित्वा ततः तौ यथावकाशं विसृजेत् । अशक्तश्चेत् प्रतियामं द्वौ द्वौ वा योजयेत् । एकं क्षुधितं तृषितं हीनांगं व्याधितं क्लीबं बलीवर्दं विप्रो न योजयेत् । एवं पराशरोक्तवत् दिनार्धं कृषिं कृत्वा गृहमागत्य स्नात्वा उक्तनित्यकर्माणि समाप्य चतुरस्त्रीन् द्वौ वा ब्राह्मणान् भोजयेत् । कृषिफलं धान्यं समीकृत्य विभज्य तस्मिन् राज्ञः षड्भागं देवानाञ्चैकविंशतिकं भागं विप्राणां विंशतिकं भागं दत्वा शिष्टं सर्वं स्वयं संरक्ष्य तेन कुटुंबरक्षणं करोति । तथा गाः प्रस्थापयित्वा सायंप्रति संगमय्य सायं प्रातः ताभ्यः क्षीरं संपाद्य दध्यादिना देवादीन् यज्ञादिभिस्तर्पयन् यज्ञशिष्टं भुञ्जान आसीत । **गोरक्ष्यं** – पशुपालनम् । तथा क्रयविक्रयजीवनं वाणिज्यं, तेन जीवनं करोति । क्रयविक्रयकर्मे हातव्यवस्तूनि स्मृतिकारैरुच्यन्ते । तृणकाष्ठक्रमुककन्याहयमध्वाज्यतैलसोमगुडलवणक्षीरदध्याज्यतक्रजंबीरादिफल कस्तूरिकादिगन्ध हेमरूप्यादिलोह कार्पासतिलचित्रवस्त्रस्नेहपक्वान्नानां गवाञ्च क्रयविक्रयौ ब्राह्मणस्य निषिद्धौ । अन्येषामप्रतिषिद्धानां क्रयविक्रयौ कुटुंबपोषणार्थमेवानुमतौ । न तु अक्रमलाभोत्पादनाय ।

शालीनवृत्तिः नियमैर्युतः पाकयज्ञैरिष्ट्वा अग्नीनाधाय पक्षे पक्षे दर्शपूर्णमासयाजी चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी षट्सु षट्सु मासेषु पशुबन्धयाजी प्रतिसंवत्सरं सोमयाजी च ॥ ४ ॥

यायावरो हविर्यज्ञैः सोमयज्ञैश्च यजते याजयत्यधीतेऽध्यापयति ददाति प्रतिगृह्णाति षट्कर्मनिरतो नित्यमग्निपरिचरणमतिथिभ्योऽभ्यागतेभ्योऽन्नाद्यञ्च कुरुते ॥ ५ ॥

घोराचारिको नियमैर्युक्तो यजते न याजयत्यधीते नाध्यापयति ददाति न प्रतिगृह्णाति । उञ्छवृत्तिमुपजीवति । नारायणपरायणस्सायंप्रातरग्निहोत्रं हुत्वा मार्गशीर्षज्येष्ठमासयोरसिधाराव्रतं वनौषधीभिरग्निपरिचरणं करोति ॥ ६ ॥

शालीनेत्यादि । क्रमात् त्रिभिस्सूत्रैः पूर्वोक्तचतुर्विधगृहस्थेषु शालीनवृत्त्यादित्रयाणां लक्षणमुच्यते । सर्वत्र कृषिगोरक्षवाणिज्योपजीवित्वं यथासंभवमनुवर्तते । अत्र शालीनवृत्तेः नियमयमादियुक्तनित्यकर्मानुष्ठानमात्रमुपदिश्यते । यायावरस्य षट्कर्मानुष्ठानम् । घोराचारिकस्य याजनाध्यापनप्रतिग्रहाः निषिद्ध्यन्ते इति विशेषः ।

इति वाजपेयीये अष्टमप्रश्ने पञ्चमः खण्डः ।

## अथ षष्ठः खण्डः

**गृहस्थः सपत्नीकः पञ्चाग्निभिस्त्रेताग्निभिर्वा गृहाद्वनाश्रमं यास्यन् आहिताग्निरनाहिताग्निश्च औपासनमरण्यामारोप्य गृहे मथित्वा श्रामणकीयविधानेनाधाय आघारं हुत्वा श्रामणकाग्निमादाय तृतीयमाश्रमं गच्छेत् ॥**

गृहस्थ इत्यादि । **गृहात्** – गृहस्थाश्रमात् । **आहिताग्निरित्यादि** । आहिताग्निरर्धाधानी चेत् तदा औपासनाग्निमरण्यामारोप्य मथित्वा श्रामणकं संसाध्य तेन सह गच्छेत् । सर्वाधानी चेत् निर्मन्थ्येन श्रामणकाग्निना च सह तृतीयाश्रमं गच्छेत् । श्रामणकाग्निकुण्डलक्षणमाधानविधिश्च वक्ष्यते ।

**पूर्ववदग्न्यालयं प्रोक्षणोल्लेखनादि कर्म कुर्यात् ॥ २ ॥**

**पूर्ववदित्यादि** । वनं गत्वा तत्र वने आहिताग्निश्चेत् तद्विधानेन पञ्चाग्नीन् त्रेताग्नीन्वा परिकल्प्य पूर्ववदग्निं मथित्वा आधाय नित्यमग्निहोत्रादिकं वक्ष्यमाणवत् श्रामणकहोमञ्च जुहुयात् । आहिताग्निरर्धाधानी चेत् तदौपासनाग्निमरण्यादावारोप्य मथित्वा श्रामणकं संसाध्य तेन सह गच्छेत् । सर्वाधानी चेत् निर्मन्थ्येन श्रामणकाग्निना च सह – तृतीयमाश्रमं गच्छेत् । गृहाद्वनं गच्छन्ननाहिताग्निश्च औपासनमग्निमरण्यादावारोप्य गृहे – सद्मनि पूर्ववन्मथित्वा वक्ष्यमाणवत् श्रामणकाग्निकुण्डं कृत्वा तत्र वक्ष्यमाणेन श्रामणकीयविधानेन अग्निमाधाय संसाध्य आघारं हुत्वा श्रामणकहोमं हुत्वा अग्निमुत्पाद्य अरण्यादावारोप्य तं श्रामणकाग्निमादाय सपत्नीकः तृतीयमाश्रमं गच्छेत् । अनाहिताग्निश्चेत् तत्र श्रामणकाग्निकुण्डं कृत्वा प्रोक्षणोल्लेखनादि कर्म कुर्यात् ।

**तृतीयामपि वेदिं परिमृज्य षडंगुलाग्रैर्दर्भैर्ग्रथितं अधस्त्रिधा कृतं रज्जुवन्मूले बद्धं षट्त्रिंशदंगुलप्रमाणं परिस्तरणकूर्चं कृत्वा मध्यवेद्यां परिस्तृणाति ॥ ३ ॥**

कूर्चमानयीत्यादि । अधःशिखाकूर्चं — अन्येभ्यस्तात् तिर्यकूर्चं रज्जुवत् स्थानादिव दक्षिणावर्तं कृत्वा ग्रन्थिमूले परिवेष्ट्य बद्धं कृतबन्धनं द्व्यंगुलग्रन्थिम् । कूर्चमिति चतुर्णामुपलक्षणम् ।

**'श्रामणकं -- श्रमणकयज्ञं -- यज्ञदैवत विश्वान् देवान्' इत्यन्तमावाह्य आज्यं निरुप्य 'श्रामणकाय स्वाहा -- श्रामणकयज्ञाय स्वाहा -- यज्ञदैवताविश्वेभ्यो देवेभ्यस्स्वाहा इत्यन्तं हुत्वा, चरुणा व्याहृतीर्जुहुयादित्याघारविशेषः ॥ ४ ॥**

श्रामणकमित्यादि ॥ आघारे श्रामणकनामग्रहणमात्रं विशेषः । अन्यत्सर्वं पूर्ववत् ।

**श्रामणकाग्नेश्चोर्ध्ववेदिः द्वात्रिंशदंगुलायता चतुरंगुलविस्तारोन्नता मध्यमा तत्परिगता पञ्चांगुलविस्तारा चतुरंगुलोत्सेधा अधस्तादूर्ध्ववेदिविस्तारोन्नता तृतीया वेदिः द्वादशांगुलं मध्ये निम्नं त्रिवेदिसहितं कुंडं कृत्वा आधाय वनस्थो नित्यमौपासनवत् सायं प्रातराहुती हुत्वा महाव्याहृतिभिः श्रामणकाग्निं जुहुयात् ।**

श्रामणकाग्नेश्चेत्यादि । औपासनवत् — औपासनाग्नाविव तद्द्रव्येण सायं प्रातराहुतीर्हुत्वा महाव्याहृतीभिः श्रामणकाग्निं जुहुयात् ।

**अपत्नीको दारैरग्निभिर्विना वनं गच्छेत् ॥ ६ ॥**

इति वाजपेयीये अष्टमप्रश्ने षष्ठः खण्डः ।

अथ सप्तमः खण्डः

वानप्रस्थाः सपत्नीका अपत्नीकाश्चेति ॥ १ ॥

सपत्नीकाश्चतुर्विधाः औदुंबरो वैरिञ्चो वालखिल्यः फेन-पश्चेति ॥ २ ॥

औदुंबरोऽकृष्टफलाप्योषधिभोजी मूलफलाशी वा लवणहिङ्गु-लशुनमधुमत्स्यमांसपूत्यन्नधान्याम्लपरस्पर्शन परपाकवर्जी देवर्षिपितृ मनुष्यपूजी वनचरो ग्रामबहिष्कृतः सायं प्रातः अग्निहोत्रं हुत्वा श्रामणकाग्निहोत्रं वैश्वदेवहोमश्च कुर्वन् तपस्समाचरति ॥ ३ ॥

औदुंबर इत्यादि । अकृष्टफलाप्योषधिभोजी — लांगलेनाकृष्टे क्षेत्रे फलितानि अनुसोद्भूतौषधीनां व्रीह्यादीनि भुञ्जानः । मूलफलाशी — मूलानि वन-मूलसूरणादिवन्यकन्दानि, फलानि वन्यानि चूतबदरादीनि अश्नातीति तथोक्तः । लवणेत्यादि । लवणं सामुद्रादि, हिंगु — रामठं, लशुनं — गृञ्जनं, मधु — क्षौद्रं, मत्स्यः — मीनः, मांसमामिषं, पूत्यन्नधान्यं — दुर्गन्धधान्यान्नं, आम्लादीनि च त्यजतीति तथोक्तः । यदि भुञ्जीयात् चान्द्रायणं चरेदिति केचित् ।

श्रामणकाग्निमेकमेवाधाय जुहोतीत्येके ॥ ४ ॥

श्रामणकाग्निमित्यादि । यद्याहिताग्निः अग्निहोत्रं विना अनाहिताग्नि-श्चेदौपासनाग्निं विना सर्वमग्निं श्रामणक एव समारोप्य तं संसाध्य महाव्याहृत्या जुहोतीत्येके ।

वैरिञ्चः प्रातर्यां दिशं प्रेक्षते तां दिशं गत्वा तत्र प्रियंगुयव-श्यामाकनीवारादिभिर्लब्धैः स्वकीयानतिथींश्च पोषयित्वा अग्निहोत्र-श्रामणकवैश्वदेवहोमी नारायणपरायणः तपश्शीलो भवति ॥ ५ ॥

वैरिञ्च इत्यादि । यां दिशं प्रथमं प्रेक्षते । नीवारादिभिः — आदि-शब्देन शास्त्रोक्ततृणधान्यादयो लक्ष्यन्ते । स्वकीयान् — दारपुत्रादीन् ।

वालखिल्यो जटाधरः चीरवल्कलवसनः अर्काग्निः कार्तिक्यां पौर्णमास्यां पुष्कलं भक्तमुत्सृज्य अन्यथा शेषान् मासानुपजीव्य तपः कुर्यात् ॥ ६ ॥

वालिखिल्य इत्यादि । पुष्कलं भक्तमुत्सृज्य । एतावता कालेन संपाद्य सञ्चितं सर्वं तस्मिन् दिने उत्सृज्य, **शेषान् मासान्** – संवत्सरे शिष्टान फाल्गुनान्तान् मासान्, **अन्यथा** – उञ्छवृत्त्या उपजीव्य तपः कुर्यात् ।

**अस्य सूर्य एवाग्निर्भवतीत्यामनन्ति ॥ ७ ॥**

**अस्येत्यादि । सूर्य एवाग्निरित्यात्यादि ।** तेषां पक्षे अग्निहोत्र-श्रामणकवैश्वदेवादीन् मानसेन सूर्ये एव कुर्यात् ॥

**फेनपः उद्दंडकः उन्मत्तको निरोधकः शीर्णपतितपत्राहारी चान्द्रायणव्रतं चरन् पृथिवीशायी नारायणं ध्यायन् मोक्षमेव प्रार्थयते ॥ ७ ॥**

**फेनप इत्यादि ।** उद्दंडक इत्यादि त्रीणि फेनपस्य विशेषणान्यन्वर्थानि । फेनपस्यापि नित्यमग्निपरिचर्या विहिता ज्ञेया । **मोक्षमेव** – न तु त्रिवर्गम् ॥

इति वाजपेयीये अष्टमप्रश्ने सप्तमः खण्डः ।

अपर्णीका बहुविधाः ॥ १ ॥

कालाशिका उद्दण्डसंवृत्ता अश्मकुट्टा उग्रफलिनो दन्तोलूखलिका उञ्छवृत्तिकाः सन्दंशनवृत्तिकाः कपोतवृत्तिका मृगचारिका हस्तादायिनः शैलफलखादिनः अर्कदग्धाशिनो बैल्वाशिनः कुसुमाशिनः पाण्डुपत्राशिनः कालान्तरभोजिनः एककालिकाश्चतुष्कालिकाः कण्टकशायिनो वीरासनशायिनः पञ्चाग्निमध्यशायिनो धूमाशिनः पाषाणशायिनोऽभ्यवकाशिनः उदकुम्भवासिनो मौनिनश्च अवाक्छिरसः सूर्यप्रतिमुखाः ऊर्ध्वबाहुकाः (अधोमुखाः) एकपादस्थिताश्चेति विविधाचारा भवन्तीति विज्ञायते ॥ १ ॥

(अथ पञ्चमः पटलः) - बहुविधाः - नानाचारा असंख्याका भवन्ति । **कालाशिकाः**--कालेन सीदन्तीति, कालेकाले सीदन्तीति भोजनार्थं गच्छन्तीति वा कालशिकाः -- **उद्दण्डसंवृत्ताः** उद्दण्डमात्मदमनमेव संवृत्तं चरितं येषां ते उद्दण्डसंवृत्ताः । अश्मनि पाषाणोपर्येव नान्यत्रोलूखलादौ कुट्टयन्ति प्रियङ्ग्वादि सर्वं अवघ्नन्तीत्यश्मकुट्टाः, अश्मानं पाषाणविशेषं भक्षणार्थं कुट्टयन्तीति वा । उदग्रमासन्नं फलमशनं येषां ते **उदग्रफलिनः**, उदग्रमुन्नतं फलं मोक्षादिकं येषामिति वा । दन्ता एवोलूखलं येषां ते । **दन्तोलूखलिकाः** । उञ्छं भूम्यां (स्वयं) पतितधान्याहरणं वृत्तिर्वर्तनं येषां ते **उञ्छवृत्तिकाः** । संदंशनं पदार्थानां खादनमेव वृत्तिर्येषां ते **संदशनवृत्तिका** । कपोतस्येव वृत्तिर्येषां ते **कपोतवृत्तिकाः** । मृगाणां चार इव संचारो येषां ते **मृगचारिकाः** । हस्तेन पाणिनैव फलं मूलं वा आदातुमाहर्तुं शीलं येषां ते **हस्तादायिनः** । **शैलेषु पर्वतेषु** विद्यमानानि फलान्येव खादितुं शीलं येषां ते **शैलफलखादिनः** । **अर्केण सूर्यकिरणैः** दग्धानि शुष्काणि पक्वानि पर्णादीन्यश्नन्तीति **अर्कदग्धाशिनः** । **बिल्वस्य** पर्णादीन्यश्नन्तीति **बैल्वाशिनः** । कुसुमानि पुष्पाण्यश्नन्तीति **कुसुमा-**

शिनः। पाण्डूनि मलिनानि शिथिलवृन्तानि पत्राण्यश्नन्तीति **पाण्डुपत्राशिनः**। कालान्तरे कदाचिदपि भोजनं येषां ते **कालान्तरभोजिनः**। एककालिकं नियमानुष्ठानादिकं येषां ते **एककालिकाः**। तथा **चतुष्कालिकाः**। कंटकाना-मुपरि शेरन्त इति **कंटकशायिनः**। वीरासनं वीरशयनञ्च येषां ते **वीरासन-शायिनः**, वीरासन एव शेरन्त इति वा। पञ्चाग्नीनां मध्ये शेरन्त इति **पञ्चाग्निमध्यशायिनः**। धूममेवाश्नन्तीति **धूमाशिनः**। पाषाणानामुपरिशेरते इति **पाषाणशायिनः**। **अभ्यवकाशिनः**—जाग्रत्स्वभावाः। उदकुंभे वारिपूर्ण-घटादौ वसन्तीति **उदकुंभवासिनः**। **मौनिनः**—अभाषमाणाः। चस्समुच्चये। **अवाक्**—अधःकृतानि शिरांसि यैः ते **अवाक्छिरसः**। सूर्यं आलोकयं स्तिष्ठन्तीति **सूर्यप्रतिमुखाः**—ऊर्ध्वमुखाः। उपरिष्टात् प्रसारितकरा **ऊर्ध्व-बाहुकाः**। एकेन पादेन स्थिताः **एकपादस्थिताः** तपश्चरन्तः, नित्यमग्निहोत्र श्रामणकवैश्वदेवानाचरन्तः सूर्याग्नयो वा मोक्षं प्रार्थयन्ति॥

इति वाजपेयीये (चतुर्थः पटलः) अष्टमः खण्डः।

## अथ नवमः खण्डः

**अथ भिक्षुका मोक्षार्थिनः, कुटीचका बहूदका हंसाः परमहंसा श्चेति चतुर्विधा भवन्ति ॥**

अथेत्यादि। कुट्यां स्वगृहसमीप एव चरन्तीति कुटीचकाः। स्नानार्थं बहून्युदकानि येषां ते बहूदकाः। निघ्नन्ति पापानि हिंसन्तीति हंसा, हंसन्ति योगं चरन्तीति वा; हंसवत् त्रिषवणमुदकस्पर्शिनो वा। परममुत्कृष्टं पदं गच्छन्तीति परमहंसाः, परमात्मानं नारायणं हंसन्ति गच्छन्तीति वा। चस्समुच्चये।

**तत्र कुटीचकाः गौतम--भारद्वाज--याज्ञवल्क्य--हारीत--प्रभृतीनामाश्रमेष्वष्टौ ग्रासांश्चरन्तो योगमार्गतत्त्वज्ञा मोक्षमेव प्रार्थयन्ते ॥ २ ॥**

तत्रेत्यादि। प्रभृतिशब्देन विश्वामित्रादयो गृह्यन्ते। आश्रमेष्विति साधुवृत्तेषु ब्राह्मणगृहेषु वा अनुमन्यते। अष्टसु गृहेषु वक्ष्यमाणवत् भैक्षं लब्ध्वा ततः अष्टौ ग्रासान् कबलांश्चरन्तो भुञ्जानाः, योगो -- जीवपरमात्मनोरैक्यं तत्र मार्गो विमर्शनं, तत्तत्त्वं यथावत् जानन्तीति योगमार्गतत्त्वज्ञास्सन्तो मोक्षमेव प्रार्थयन्ते ॥

**बहूदकाः त्रिदण्डकमण्डलुकाषायधातुवस्त्रग्रहणधारिणो ब्रह्मर्षिगृहेषु चान्येषु साधुवृत्तेषु मांसलवणपर्युषितान्नं वर्जयित्वा सप्तागारेषु भैक्षं कृत्वा मोक्षमेव प्रार्थयन्ते।**

बहूदका इत्यादि। वैणवान् दण्डान् यथोक्तप्रमाणेन कृत्वा गोवालरज्जुना बद्ध्वा धरन्तीति त्रिदण्डधारिणः। कमण्डलुं--दारुणा--अलाबुना नारिकेलेन वा कृतं जलानयनाय पात्रं, धातुना गैरिकादिना रक्तं काषायधातुवस्त्रं तेषां ग्रहणेन धारणेन योऽपूर्वो वेषः तं वहन्तः। ब्रह्मर्षीणां वसिष्ठादीनां गृहेषु

भैक्षं कृत्वा अन्यत्र पूर्ववत् । अथ त्रिदण्डिनः करकिनः शिक्यिनः पात्रिणो यज्ञोपवीतिनः शिखिनः जलपवित्रिणो भिक्षान्नभोजिनो बहूदका इति केचित् ।

**हंसा नाम ग्रामे चैकरात्रं नगरे पञ्चरात्रं वसन्तस्तदुपरि न वसन्तो गोमूत्रगोमयाहारिणो वा मासोपवासिनो वा नित्यचान्द्रायण-व्रतिनो नित्यमुत्थानमेव प्रार्थयन्ते ॥ ४ ॥**

**हंसा** इत्यादि । **तदुपरि**—उक्तदिनेभ्यः ऊर्ध्वं, चातुर्मास्यादन्यत्र एकत्र न वसन्तः तीर्थयात्रां कुर्वन्तः । गोमूत्रं गोमयं वा आहारत्वेन पिबन्तः । **उत्थानम्**—अन्यत्र गमनमेव प्रार्थयन्ते । कृच्छ्रादियुक्ताः करकिनो दण्डिनो मुण्डिनः उपवीतिनः जलपवित्रिणश्शिक्यिनो हंसा भवन्तीति केचित् ।

**परमहंसा नाम वृक्षैकमूले शून्यागारे श्मशाने वा वासिनः साम्बरा दिगम्बरा वा ॥ ५ ॥**

**परमहंसा** इत्यादि । **वृक्षैकमूले**—वृक्षाधःप्रदेशे **शून्यागारे** पूजारहित-देवगृहे **श्मशाने** वा वसन्तः । **साम्बराः** वस्त्रधराः । **दिगम्बराः**—विवस्त्राः ।

**न तेषां धर्माधर्मौ सत्यानृते शुध्यशुध्यादिद्वैतम् ॥ ६ ॥**

**नतेषामित्यादि** । शुद्ध्यशुद्ध्यादीति । आदिपदेन सुखदुःखे उपादेयानुपादेये स्पृश्यास्पृश्ये वन्द्यावन्द्ये इत्यादि गृह्यते ।

**सर्वसमास्सर्वात्मानः समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भिक्षा-चरणं कुर्वन्ति ॥ ७ ॥**

**सर्वे**त्यादि । सर्वं मेध्यामेध्यादि वस्तुजातं ब्राह्मणादि चण्डलान्तसर्व-प्राणिजातञ्च, सुखदुःखे शत्रुत्वमित्रत्वाद्यन्यत्समस्तञ्च समं येषां ते **सर्वसमाः** । सर्वसमात्माधिष्ठितज्ञानं येषां ते **सर्वात्मानः** भिन्नलोष्टकाञ्चनयोस्तुल्यदर्शनं येषां ते **समलोष्टाश्मकाञ्चनाः** । मोक्षप्रार्थनं तुल्यम् । मुण्डिनः कौपीनवाससः दण्डिनः त्यक्तोपवीताः ब्रह्मणि स्थिताः परमहंसा इति केचित् ।

परमहंसाः द्विविधा गण्यन्ते विवृतवेषाचराः गूढवेषाचाराश्चेति । तत्र विवृतवेषाचाराः शिखायज्ञोपवीतत्यागिनः काषायवाससः ब्रह्मात्मैक्यवादिनः वेदान्तवाक्यार्थश्रवणमनननिदिध्यासनरताः योग्येभ्यो ब्राह्मणेभ्यो भिक्षां चरन्तः अमानित्वाद्यात्मगुणान् यत्नेनानुतिष्ठन्तः ब्रह्मात्मैक्यज्ञानयोग्यान् शिष्यान् बोधयन्तो मोक्षमेव प्रार्थयन्ते । गूढवेषाचारास्तु त्यक्तवैदिकलौकिकाचारपरिग्रहाः दृष्टादृष्ट-सर्वारम्भवर्जिताः स्वभावभूतामानित्वादिगुणाः जातरूपधराः यदृच्छाप्राप्ताशन-वसनशयनादिभिस्सन्तुष्टाः जडोन्मत्ताकृतयः प्राकृतजनैरलक्ष्यवेषाचाराः मोक्ष-कांक्षिणः । अयं विभागः श्रुत्यादिषु चोपलभ्यते ।

**ब्राह्मणानां चातुराश्रम्यं क्षत्रियाणां त्र्याश्रम्यं वैश्यानां द्व्याश्रम्यं विहितम् ॥ ८ ॥**

स्पष्टम् ॥

**तत्फलं सकामं निष्कामश्चेति द्विविधं भवति ॥ ९ ॥**

**सकामं नाम इह संसारे अभिवृद्धिं ज्ञात्वा पुत्रलाभाद्यभि-कांक्षणमन्यत्स्वर्गफलादिकांक्षणं वा ॥ १० ॥**

सकाममित्यादि । इह—अस्मिन् लोके, संसारे—देहयात्रायां । अभि-वृद्धिः—उत्तरोत्तरवृद्धिः, तां ज्ञात्वा अपेक्ष्य । अभिकांक्षणमभिलाषः । अन्यत्—अन्यत्र पुण्यलोकान्तरेषु स्वर्गादिफललाभाभिलाषः । उभयमपि सकामम् ।

**निष्कामं नाम किञ्चिदनभिकांक्ष्य यथाविहितानुष्ठानमिति ॥ ११**

निष्काममित्यादि । सात्त्विकत्यागोऽत्र विहितः ।

**तत्र निष्कामं द्विविधं भवति प्रवृत्तिर्निवृत्तिश्चेति ॥ १२ ॥**

**प्रवृत्तिर्नाम संसारमनादृत्य सांख्यज्ञानं समाश्रित्य प्राणाया-मासनप्रत्याहारध्यानधारणायुक्तो वायुजयं कृत्वा अणिमाद्यैश्वर्य-प्रापणम् ॥ १३ ॥**

**प्रवृत्तिरित्यादि ।** **अनादृत्य**—संसारमसारमिति ज्ञात्वा तं त्यक्त्वा । **सांख्यज्ञानं**—प्रकृतिपुरुषविवेकसाधनीभूतं तच्छास्त्रोक्तप्रक्रियामूलं ज्ञानं समाश्रित्य प्राणायामादिधारणान्तसाधनैः वायुजयं वशीकरणं कृत्वा अणिमादिप्रापणम् । एतदेव प्रवृत्तेः फलं भवति ॥

**तत्पुनरपि तपःक्षयाज्जन्मप्रापकत्वात् व्याधिबाहुल्याच्च नाद्रियन्ते परमर्षयः ॥ १४ ॥**

तदित्यादि । प्रवृत्तिसम्पादितं फलम् । **तपःक्षयात्**—तपसः फलानुभवेन ह्रासनैयत्यात् पुनः पुनर्जन्मप्रापकत्वं, जन्मप्राप्तौ व्याधीनामवश्यंभावाच्च प्रवृत्तिमार्गः महर्षिभिः नाद्रियते ।

**निवृत्तिर्नाम लोकानामनित्यत्वं ज्ञात्वा परमात्मनोऽन्यत् न किञ्चिदस्तीति संसारमनादृत्य छित्वा भार्यामयं पाशं जितेन्द्रियो भूत्वा शरीरं विहाय क्षेत्रज्ञपरमात्मनोर्योगं कृत्वा अतीन्द्रियं सर्वजगद्बीजमशेषविशेषं नित्यानन्दममृतरसपानवत् सर्वदा तृप्तिकरं परं ज्योतिःप्रवेशमिति विज्ञायते ॥ १५ ॥**

**निवृत्तिर्नामित्यादि ।** लोकानामनित्यत्वं ज्ञात्वा श्रुतिभिरनुमानाच्च ज्ञात्वा, जगच्छरीरिणः **परमात्मनः** श्रीमन्नारायणात् **अन्यत्**—तदननुप्रविष्टं चेतनमचेतनञ्च वस्तु किञ्चित् नास्तीति ज्ञात्वा, **संसारमनादृत्य**—तत्र आदरं भोग्यताबुद्धिं विहाय । **भार्यामयं** तद्रूपं पाशं बन्धरज्जुं छित्वा । भार्येति पुत्रमित्राश्रितक्षेत्रारामादयो लक्ष्यन्ते । **जितेन्द्रियः**—इन्द्रियाणि स्वायत्तीकृत्य । इन्द्रियजयोपायाः शास्त्रेषूपदिष्टाः ज्ञातव्याः । **शरीरं विहाय**—प्रकृतिसम्बन्धं विहाय । **क्षेत्रज्ञपरमात्मनोरिति**—क्षेत्रज्ञः—'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥' इत्युक्तः जीवात्मा । **परमात्मा**—'क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्युक्तः जगच्छरीरी श्रीमान् नारायणः । अत्र प्रमाणानि । 'द्वे ब्रह्मणी वेदितव्ये परा चैवापरा च' 'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्याद्याः

श्रुतयः । एवंभूतयोः शरीरशरीरिणोः जीवात्मपरमात्मनोः योगोऽनन्यभावः तं 'तत्त्वमसी'त्यादि ज्ञानेन कृत्वा इन्द्रियज्ञानमतिक्रम्य वर्तत इत्यतीन्द्रियं सर्वेषां जगतां बीजं निदानं, न शिष्यत इत्यशेषं, विशिष्यते सर्वस्मादिति विशेषं । तच्च तच्चाशेषविशेषं, नित्य आनन्दः विशेषः — सुखप्राप्तिः यत्र तन्नित्यानन्दं, अमृतमेवरसः तस्य पानमिव — अमृतरसपानवत् सर्वदा निरन्तरं तृप्तिकरं प्रीतिजनकं परमुत्कृष्टं ज्योतिर्विशेषस्य प्रवेशं प्रवेशनं निवृत्तिफलं विज्ञायते । सर्वोपनिषत्सु एककण्ठ्येन विहितं ज्ञायते ।

इति वाजपेयीये (पञ्चमः पटलः) नवमः खण्डः ।

## अथ दशमः खण्डः

निवृत्त्याचारभेदाद्धि योगिनस्त्रिविधा भवन्ति, साग्ङ्गा एकाग्र्या विमरकाश्चेति ॥ १ ॥

निवृत्तित्यादि। यथा वासिष्ठे—

'प्रवर्तकं भवेदेतत्संसारस्य प्रवर्तनात्।
तदेव ज्ञानसंयुक्तं सर्वकामविवर्जितम् ॥

निवर्तकं भवेदेतत् जन्ममृत्युनिवर्तनात्।
तथा निवृत्तिः द्विविधा बाह्याभ्यन्तरभेदतः ॥

बाह्यं बहिः क्रियोपेतं यत्सिद्धिहितसाधनैः।
आभ्यन्तरन्तु बुद्ध्यैव विध्यनुष्ठानमात्मनि ॥

वर्णाश्रमोक्तं कर्मैव कामसंकल्पपूर्वकम्।
.... .... .... .... .... .... .... ॥' इति

योगिनः—जीवात्मपरमात्मनोरैक्यं भावयन्तः। योगस्तस्योपायः। स चतुर्विधः मन्त्रयोगो हठयोगो लययोगो राजयोगश्चेति। तदुक्तं योगदीपिकायाम्

'यः प्राणापानयोर्योगः तथैव रजरेतसोः (?)।
सूर्याचन्द्रमसोर्योगो जीवात्मपरमात्मनोः ॥

मन्त्रो हठो लयो राजयोगो योगचतुष्टयम्।
एकश्चतुष्टयो योग एक एवाभिधीयते' ॥ इति।

मन्त्रयोगो यथा - भूतशुद्धिपूर्वकं केशवादिमातृकान्यासानन्तरं अष्टाक्षरादि नित्यमन्त्रजपो मन्त्रयोगः। योगशास्त्रे चोक्तम्—

'हंकारेण बहिर्याति सकारेण विशत्यधः।
हंसहंसेति मन्त्रोऽयं सर्वे मन्त्रं जपन्ति माम् ॥

गुरुवाक्यात्सुषुम्नायां विपरीतो भवेज्जयः ।
सोऽहं सोहमिति प्रोक्तो मन्त्रयोगस्स उच्यते' ॥ इति ।

**हठयोगो यथा** :— नित्यं मन्त्रजपेन किञ्चिद्विशेषज्ञानं जायते, तेन बलात् जडस्वभावं ग्रसति, अयं हठयोगः । तदुक्तम् ।

'प्रतीतिर्मन्त्रयोगश्च जायते पश्चिमे पथि ।
हठेन ग्रसते जाड्यं हठयोगस्स उच्यते' ॥ इति ।

**लययोगो यथा** :— 'जाड्ये लयं गते मन एकत्र तिष्ठति । ततो वायुर्निश्चलो भवति । अयं लययोगः । तदुक्तं हठ योग प्रदीपिकायाम् —

'जाड्ये तु ग्रासमायाते चित्तं याति विलिप्तताम् ।
पवने स्थैर्यमायाते लययोगस्स उच्यते' ॥ इति ।

**राजयोगो यथा** :— चित्ते परमात्मनि रक्ते राजवदानन्दी यत्र तिष्ठति साधकस्स-योराजगः । यथा योगशास्त्रे —

'लयात्संप्राप्यते सौख्यं स्वात्मानन्दं परंपदम् ।
अणिमादिपदं प्राप्तो राजयोगस्स उच्यते' ॥ इति ।

मन्त्रयोगोऽपि विविधः । वैदिकस्तान्त्रिकः श्रौतस्स्मार्तः नित्यो नैमित्तिकः सकामो निष्कामश्चेति । वैष्णवमन्त्रा वैदिकाः । अन्ये तान्त्रिकाः । श्रौतप्रक्रियोप-योगिमन्त्राः श्रौताः । स्मार्तकर्मोपयोगिनः स्मार्ताः । सन्ध्यावन्दनादिषु गायत्र्यादयो मन्त्राः नित्याः । मृत्युञ्जय नामत्रयादिमन्त्रा नैमित्तिकाः । श्रुतिचोदितधर्मानुष्ठान-प्रवर्तका मन्त्राः सकामाः । फलाभिसन्धिराहित्येनानुष्ठीयमानाः निष्कामाः । केचित् 'देवतागुरुमन्त्राणामैक्यता योग उच्यते' इति देवतागुरुमन्त्राणाम-पृथग्भावं योगं मन्यन्ते । तस्मात् हठयोगादयस्त्रयोऽपि मन्त्रयोग एवान्तर्भव-न्तीति तेषां वादः । अन्ये त्वन्यथा स्वस्वमतं प्रशंसन्ति । मन्त्रवादिनः मन्त्र-जपमात्रादेव पुरुषार्थः कृत्स्नः सिद्ध्यतीति । योगवादिनः प्राणायामादिना वायुजयेन सर्वार्थसिद्धिरिति ।

एवंविधा योगिनः त्रिविधा भवन्ति । त एव सारंगादिभेदेन व्यवह्रियन्ते । सारं – क्षेत्रं तं गच्छन्तीति सारंगाः । एक एव ऋषिः आश्रयो येषां ते एकार्ष्याः । विविधसरणात् – दर्शनात् विसरकाः ।

**अनिरोधका निरोधका मार्गगा विमार्गगाश्चेति चतुर्विधाः सारंगाः ॥ २ ॥**

**अनिरोधका** इत्यादि । येषां प्राणायामादिनियमो नास्ति, तेऽनिरोधकाः । वायोर्निरोधनं प्राणायामादि येषामस्ति ते निरोधकाः । मार्गे सत्पथे गच्छन्तीति मार्गगाः । तद्विरोधिनो विमार्गगाः ।

**दूरगा अदूरगा भ्रूमध्यगा असंभक्ताः संभक्ताश्चेत्येकार्ष्याः पञ्चधा भवन्ति ॥ ३ ॥**

**दूरगा** इत्यादि । दूरं पारंपर्येण वैकुण्ठं गच्छन्तीति दूरगाः । दूरगमनं येषां नास्तीत्यदूरगाः । भ्रुवोर्मध्ये अन्तरात्मानं येऽनुभवन्ति ते भ्रूमध्यगाः, न संभवन्ति संसरन्तीत्यसंभक्ताः । संभजन्ते सेवन्ते परमपुरुषमिति संभक्ताः ।

**न संख्यातन्तो विसरकाः ॥ ४ ॥**

**नेत्यादि** । विसरकानां गणनं न शक्यम् ।

**तत्र सारंगाः-सारः-क्षेत्रज्ञः-तं गच्छन्तीति सारंगाः ॥ ५ ॥**

**तत्रेत्यादि** । सारंगाः स्वात्ममात्रोपासका इति यावत् ।

**तेष्वनिरोधका अहं विष्णुरिति ध्यात्वा ये चरन्ति ॥ ६ ॥**

**तेष्वित्यादि** । उक्तेषु चतुर्विधसारंगभेदेषु अनिरोधकयोगिनामिदं लक्षणम् ।

**तेषां प्राणायामादयो न सन्ति ॥ ७ ॥**

**तेषामित्यादि** । मायावादिनां मतमालंब्य चरतामेतेषां प्राणायामादयो न सन्ति प्रयोजनाभावात्, अहं विष्णुरिति ज्ञानमात्रस्यैव मोक्षहेतुत्वात् ।

**ये तु निरोधकाः तेषां प्राणायामप्रत्याहारधारणादयः षोडश-कलास्सन्ति ॥ ८ ॥**

येत्वित्यादि। षोडशकलाः—प्राणायामादयोऽष्टौ तद्भेदाश्चाष्टौ कलाः योगशास्त्रोक्ताः। 'तदभ्यासादेव मोक्षः तेन यान्ति परां गति' मिति वसिष्ठस्मरणात्।

**ये मार्गगास्तेषां षडेव प्राणायामादयः ॥ ९ ॥**

**य इत्यादि।** 'अष्टसु साधनेषु नियमासने विहायान्ये षडुपायाः तैः गृह्यन्ते। तदनुष्ठानातिशयान्मोक्षप्राप्तिः। 'यान्ति मोक्षञ्च शाश्वत'मिति वसिष्ठः।

**ये विमार्गगाः तेषां यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयश्चेत्यष्टांगान् कल्पयन्तो ध्येयमप्यन्यथा कुर्वन्ति ॥ १० ॥**

**य इत्यादि।** यमा दश। पञ्चेत्येके। अहिंसासत्यास्तेयब्रह्मचर्यक्षमाधृतिदयार्जवमिताहारशौचानि। इति दश। नियम्यन्त इति नियमा दश। देवताप्रदक्षिणसन्ध्योपासनादयो नियमा इति केचित्। तपस्सन्तोषास्तिक्यदानेश्वरपूजन सिद्धान्तश्रवणह्रीमति जपादयो (?) दश नियमा इति विश्वामित्रवसिष्ठौ। प्राणायामाद्युपयोगार्थः पादबन्ध आसनम्। तदनेकविधम्। यावन्तो जीवराशयः तावन्त्यासनानि। तत्र चतुरशीतिः चतुष्षष्टिः द्वात्रिंशत् षोडश अष्टौ पञ्च चत्वारि द्वे वेति योगशास्त्रेषु दृष्टानि, तानि श्रेष्ठानि पूर्वस्मात्पूर्वस्मात्पराणीति योगविदो वदन्ति। स्वस्तिक गोमुख पद्मक वीरक सिंह मयूर कुक्कुट भद्र कूर्म-मुक्तासनानि शस्यन्ते। भगवन्मरीचिनोक्तानि च शस्ततराणि। एतेषु स्वस्तिक-पद्मक वीरक सिंहासनान्युत्तमानि। स्वस्तिक पद्मासने तत्रापि श्रेष्ठे। तेषामभ्यासात्सर्वव्याधिविनाशः सिद्ध्यति। यथोक्तरीत्या रेचकपूरककुंभकैः प्राण-संयमः प्राणायामः। प्राणो वायुः तस्यायामोऽवरोधनमिति शब्दार्थः। द्विविधः पुनः प्राणायामः सगर्भोऽगर्भ इति। सगर्भो जपध्यानरहितः, जपध्यानयुतोऽगर्भः। अगर्भाच्छताधिकगुणः सगर्भः। किञ्च। लघुत्वशीघ्रगामित्वोत्साहस्वरसौष्ठवसर्वरोगनाशबलतेजस्सुरूपधृतिमेधायुवत्वस्थिरत्वप्रसन्नत्वतपःपापक्षयाश्च प्राणायामेन सिद्ध्यन्ति। प्राणायामेन विण्मूत्रश्लेष्मणामल्पत्वं बहुभोजनसामर्थ्यं चिरादुच्छ्वा-

सनश्च जायते । प्रत्याह्रियते प्राणोऽनेनेति प्रत्याहारः । सोप्यान्तरादिभेदाच्चतुर्विधः । विषयगतानामिन्द्रियाणां बलादाहरणं वा प्रत्याहारः प्रथमः । यद्यत्पश्यति तत्सर्वमात्मानमिव पश्यतीति द्वितीयः । शरीरिणां यानि नित्यानि विहितानि कर्माणि आत्मन्येव तेषामनुष्ठानं न करणान्तरैरिति तृतीयः । पादांगुष्ठगुल्फजंघामध्यचितिद्वयमूलजानूरुद्वयमध्यपायुमूलदेहमेढ्रनाभिहृदयकंठकूपतालुमूलनासामूलाक्षिद्वयमण्डल भ्रूमध्यललाटमस्तकेषु मर्मस्थानेषु स्थानात् स्थानान्तरं वायोस्समाकर्षणं चतुर्थः । अनेन प्रत्याहारेण निगृहीतानि मनःपूर्वकाणीन्द्रियाणि स्वर्गप्रापकाणि, विसृष्टानि नरकप्रापकाणि । तस्मात् प्रत्याहारेणात्मानमुद्धरेत् ।

ध्यानम् । ध्येयावस्थितचित्तस्य विसदृशप्रत्ययान्तरनिर्मुक्तः प्रत्ययप्रवाहो ध्यानं, तैलधारादविच्छिन्नस्रोतस्सन्ततिरूपं वा । तच्च द्विविधम् । सगुणं निर्गुणञ्चेति । सगुणं पञ्चविधं निर्गुणमेकमेव । यथा :—

हृन्मध्येऽष्टदलोपेतकन्दमध्यात्समुत्थिते द्वादशांगुलिनाले चतुरंगुलिमुखे प्राणायामैर्विकसितकेसरान्वितकर्णिके कमले वासुदेवं जगन्नाथं नारायणमनामयं चतुर्भुजं शंखचक्रगदाधरं किरीटहारकेयूरादि भूषणान्वितं श्रीवत्सवक्षसं पूर्णचन्द्राननं पद्मपत्रनिभेक्षणं पद्मोदरदलाभोष्ठं शुद्धस्फटिकसंकाशं पीतवाससमच्युतं पद्मच्छविपाणिपादतलं परमात्मानं प्रभामयं पुरुषोत्तमं सर्वभूतहृदि स्थितं देवेशं मनसाऽवलोक्य यस्सोऽहमिति ध्यानं तत्सगुणं प्रथमम् । हृत्पद्ममध्ये प्रकृत्यात्मककर्णिके अष्टैश्वर्यदलोपेते विद्याकेसरसंयुक्ते ज्ञाननाले महत्कन्दे प्राणायामैर्विकसिते कमले विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखं वैश्वानरं जगद्योनिं शिखातन्वान (?) मीश्वरं तापयन्तं स्वकं देहमापादतलमस्तकं निवातदीपवद्दीप्यमानं दृष्ट्वा तस्य शिखामध्ये परमात्मानमव्ययं नीलांबुदमध्ये विद्युल्लेखेव भास्वन्तं नीवारशूकवद्रूपं पीताभं सर्वकारणं विज्ञाय सोऽहमिति ध्यानं द्वितीयं सगुणम् । भ्रुवोर्मध्येऽन्तरात्मानं तेजोरूपं स्थाणुवन्मूर्धपर्यन्तं मध्यदेहात्समुत्थितं मनसा आलोक्य सोऽहमित्येतत् ज्ञानं तृतीयं सगुणम् । यद्वा अष्टदलोपेते कर्णिकाकेसरान्विते उन्निद्रहृदयांभोजे सोममण्डलमध्ये स्वात्मानमर्भकाकारं भोक्तृरूपिणमव्ययं सुधारसं विमुञ्चद्भिः शशिरश्मिभिरावृतं

मनसा (?) दृष्ट्वा सोऽहमिति ध्यानमुत्तमं (सगुणम्) चतुर्थं सगुणम्। षोडशदल-संयुक्तशिर:पद्मादधोमुखान्निर्गताभि: सहस्रामृतधाराभि: समन्तात् प्लावितं पुरुषं मानसमात्मानं (तेनामृतेन संपूर्णं) अहमेव परं ब्रह्म परमात्माऽव्यय इति ध्यानं पञ्चमं सगुणम्। अथवा सूर्यमण्डले आत्मानं सर्वजगत्पतिं पुरुषं हेमरूपिणं हिरण्यश्मश्रुकेशनखं पद्मासनस्थं हरिमेवं ध्यायेत्पञ्चमं सगुणम्। ज्योतिर्मयं शुद्धं आकाशवत् सर्वगतं दृढमत्यच्छममलं नित्यमादिमध्यान्तरहितं स्थूलं सूक्ष्ममनाकारमस्पृश्यमचाक्षुषमरसमगन्धमप्रमेयमनुत्तममानन्दमजरं सदसत्सर्व-कारणममूर्तमजमव्ययं दृश्यादृश्यमन्तस्स्थं बहिष्ठं सर्वतोमुखं सर्वतोदृक् सर्वत: पादं सर्वस्पृक् ब्रह्म ब्रह्ममयोऽहमिति वेदनं यत् तत् निर्गुणध्यानम्।

धारणा:—सर्वत आहृत्य चित्तस्य स्थानबन्धो धारणा। सा पञ्चविधा। हृदये दहराकाशे बाह्याकाशधारणमाद्या। पृथिव्यप्तेजोवाय्वाकाशेषु क्रमेण लकारवकाररेफयकारहकाराणां पञ्चवर्णानां धारणं द्वितीया। पृथिव्यादिपञ्चभूतेषु अनिरुद्धाच्युतसत्यपुरुषविष्ण्वाद्यधिदेवानां धारणं तृतीया। पादादिजानुपर्यन्तं पृथिवीस्थानं, वायुं नीत्वा तत्र वर्णदेवसमन्वितं पञ्चघटिकाधारणं तत्पृथिवी जयाय। आजानो: पायुपर्यन्तमपां स्थानं, वायुं नीत्वा तत्र यथोक्तं वर्णदेवयुतं वायुं पञ्च-घटिकाधारणं सर्वरोगप्रमोक्षाय। आपायो: हृदयान्तं वह्निस्थानं, तत्र वर्णदेवसहितं वायुं धारयेत्पञ्चघटिकाकालं वह्निजयाय। आहृन्मध्यात् आभ्रुवोर्मध्यं वायुस्थानं, तत्र तद्वर्णदेवयुतं वायुं पञ्चघटिका धारयेद्वायुजयाय। आभ्रूमध्यान्तं आमूर्धान्तात् आकाशस्थानं, तत्र वर्णदेवयुतं वायुं पञ्चघटिका धारयेज्जीवन्मुक्तो भविष्यति।*

समाधि:—जीवात्मपरमात्मनो: समतावस्था समाधि:। 'यदत्तमाला-निर्भासं (?) स्तिमितोदधिवत् स्थितम्। स्वरूपशून्यवद्ध्यानं तत्समाधि' रिति केचित्। एवं अष्टांगानेव योगान् आत्मोज्जीवनाय कल्पयन्तो विमार्गगा योगिन: ध्येयं ध्यानयोगप्राप्यं परमपुरुषं अन्यथा कुर्वन्ति नास्तीति निश्चिन्वाना नश्यन्ति।

इति वाजपेयीये (पञ्चम: पटल:) दशम: खण्ड:।

* चतुर्थी पञ्चमी — चलप्येते।

## अथ एकादशः

अथैकार्ष्याः ॥ १ ॥

**एको ऋषिः येषां ते एकार्ष्याः ॥ २ ॥**

एक इत्यादि। एक एव ऋषिः मन्त्रः लक्ष्यभूतो गुरुर्वा येषां ते एकार्ष्याः।

तेषु ये दूरगास्तेषामयं मार्गः ॥ ३ ॥

तेष्वित्यादि । पञ्चधा पूर्वमुक्तेषु दूरगाणां लक्षणं वक्तुमारभते । मार्गः मोक्षमार्गः ।

**पिंगल्या नाडिकया आदित्यमण्डलमनुप्रविश्य तत्रत्येन पुरुषेण संयुज्य ततश्चन्द्रमण्डलं तत्रत्येन पुरुषेण ततो विद्युतं तत्रत्येन पुरुषेण पुनः क्रमेण वैकुण्ठसायुज्यं यन्ति इति ॥ ४ ॥**

पिंगलेत्यादि । पिंगला - नाडीविशेषः । योगानुभवेन शरीरस्वरूपं ज्ञात्वा अष्टांगयोगयुक्तो योगी पूर्ववत्प्राणायामैरुद्बोधितः पिंगलया नाड्या हृदयान्तस्स्थं सूर्यमण्डलमनुप्रविश्य तन्मण्डलस्थितेन तेजोरूपिणा पुरुषेण स्वात्मानं संयोज्य ततः चान्द्रमस्या इडया नाड्या चन्द्रमण्डलं तालुमूलान्तगतमनुप्रविश्य तत्रस्थेनामृतमयेन पुरुषेण संयोज्य ततो वैष्णव्या सुषुम्नया नाड्या भ्रूमध्यान्तगतं तडिन्मण्डलमनुप्रविश्य तत्रस्थेन पुरुषेण संयोज्य क्रमशः सच्चिदानन्दस्वरूपिणा भगवता परमपुरुषेण श्रीमन्नारायणेन संयोज्य विगतभये वैकुंठे लोके सायुज्यमनुभवन्ति ।

ये अदूरगास्तेषामयं धर्मः ॥ ५ ॥

**क्षेत्रज्ञपरमात्मनोर्योगं क्षेत्रज्ञद्वारेण कारयित्वा तत्रैव समस्तविनाशं ध्यात्वा आकाशवत् सत्तामात्रोऽहमिति ध्यायन्ति ॥ ६ ॥**

क्षेत्रज्ञपरमात्मनोरित्यादि । तत्रैव – परमात्मन्येव । समस्तविनाशमिति । भूम्यन्तरिक्षस्वर्गादयः पृथिव्यादिभूतानि षडिन्द्रियाणि षड्विषयाः षड्-

बुद्धयः सुखदुःखे धर्माधर्मादि च । तस्य विनाशः—लयः । सतो भावस्सत्ता—तन्मात्रम् ।

**भ्रूमध्यगाः क्षेत्रज्ञपरमात्मनोर्योगे सत्त्वरूपाग्निद्वारेण भ्रूमध्यं नीत्वा पञ्चभ्योऽङ्गुष्ठादिभ्यः स्थानेभ्यः आकर्षणं पुनः पिंगलाद्वारेण निष्क्रमणं प्रलयान्तं क्षेत्रज्ञयोगान्तं वा कुर्वन्ति ॥ ७ ॥**

**भ्रूमध्यगा** इत्यादि । **योग** इति—योगे जाते इत्यर्थः । सत्त्वरूपो विष्णुः स एवाग्निः तस्य द्वारः सुषुम्ना नाडी तन्मुखेन पूर्वोक्तध्यानेन आधारे विकसिते प्रबुद्धकुंडलिनीमुक्तरंध्रनिरोधेन सुषुम्नया नाडिकया क्षेत्रज्ञमूर्ध्वमुत्कृष्य । **पञ्चभ्योऽङ्गुष्ठादिभ्यः स्थानेभ्य** इति । पादांगुष्ठादिजानुपर्यन्तमाजान्वोर्गुदपर्यन्तमागुदाध्दृदयपर्यन्तमाहृदयात्तालुमूलान्तमातालुमूलाद्भ्रूमध्यपर्यन्तमेतानि पञ्च वायोः स्थानानि । 'पञ्चघटिकापर्यन्तं उक्तेषु स्थानेषु वायुं ध्यात्वा योजयेत् । स तद्भूतजयमवाप्य जीवन्मुक्तो भवे'दित्युक्तत्वात् । तेभ्यः पञ्चभ्योऽङ्गुष्ठादिस्थानेभ्यः स्थानात् स्थानान्तरं वायोराकर्षणं कृत्वा भ्रूमध्यं नीत्वा पुनः पिंगलया नाड्या आकृष्टस्य वायोः निष्कामणं कुर्यात् । एवं प्रलयान्तं शरीरस्य नाशान्तं अथ क्षेत्रक्षेत्रज्ञयोगान्तं वा कुर्वन्ति ।

**असंभक्ता नाम मनसा ध्यानं कुर्वन्ति ॥ ८ ॥**

**तत्प्रतिपादनागमं श्रोत्रेण शृण्वन्ति ॥ ९ ॥**

**चक्षुषा देवताऽऽकारं पश्यन्ति ॥ १० ॥**

**घ्राणेन गन्धमनुभवन्ति ॥ ११ ॥**

**पाणिना देवतां नमस्कुर्वन्ति ॥ १२ ॥**

**संभक्ता नाम ब्रह्मणस्सर्वव्यापकत्वात् युक्तमयुक्तं योऽसौ परमात्मा (तत्सर्वव्यापीह्या) तत्सर्वं व्याप्याऽऽकाशवत्तिष्ठति ॥ १३ ॥**

**संभक्ता** इत्यादि । युक्तं चेतनमयुक्तमचेतनम् । परमात्मनः सर्वव्यापकत्वात् आकाशवत् चेतनाचेतनं सकलं वस्तु बहिरन्तश्च व्याप्य तिष्ठति ।

तस्माद् ब्रह्मणोऽन्यं न कुत्रचिदात्मानं प्रतिपद्यतेऽसौ ॥ १४ ॥

तत्र श्रुतिप्रमाणानि द्रष्टव्यानि ।

भ्रूमध्यगतस्यापि संशयः शिष्प्रमाणमेवेत्युक्तम् ॥ १५ ॥

तस्माद् ब्रह्मव्यतिरिक्तमन्यन्नोपपद्यते ॥ १६ ॥

विविधसरणाद्विविधदर्शनात् कुपथगामित्वात् विसरगाः ॥१७॥

पुरा प्रजापतिरुपदेशगूहनार्थं विसरगपक्षं सृष्टवान् ॥ १८ ॥

तं दृष्ट्वा मुनयोऽपि मोहं जग्मुः ॥ १९ ॥

किं पुनर्मनुष्याः ॥ २० ॥

विसरकपशूनामहंकारयुक्तानां जन्मान्तरेषु मुक्तिः नास्मिन् जन्मनि ॥ २१ ॥

तस्माद्विसरकपक्षो नानुष्ठेयः ॥ २२ ॥

केचिद्विसरकास्तरन्ति कायक्लेशात्, केचिन्मन्त्रजपात्, केचिद्येन केन ध्यानेन, केचिदक्षरेण, केचिद्वायुजयात् । अन्ये परमात्मना क्षेत्रज्ञं संयोज्य ध्यायन्ति ॥ २३ ॥

एते परमात्मसंयोगमेव नेच्छन्ति ॥ २४ ॥

केचिद्धृदिस्थ एव पुरुष इति वदन्ति ॥ २५ ॥

केचिन्न किञ्चिध्यानमिति ॥ २६ ॥

यथोक्तानुष्ठानं योगमिति ज्ञात्वा मुक्तिमिच्छन्ति ॥ २७ ॥

एतेषां विसरकपशूनामहंकारयुक्तानां जन्मान्तरेषु मुक्तिर्नास्मिन् जन्मनि ॥ २८ ॥

तस्मादस्मिन्नेव जन्मनि मोक्षकांक्षिणा विसरकपक्षो नानुष्ठेयः ॥ २९ ॥

सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चात् निर्गुणं ब्रह्माऽश्रित्य मोक्षे नित्यं यत्नं कुर्यादिति विज्ञायते ॥ ३० ॥

**अथ वर्णाश्रमधर्ममुपनीतो ब्रह्मचारिणश्चतुर्विधा दारान् संगृह्य गृहस्थाश्चतुर्विधा गृहस्थस्सपत्नीकः वानप्रस्थास्सपत्निका अपत्नीका बहुविधा अथ भिक्षुका मोक्षार्थिनो निवृत्याचारभेदादथैकार्ष्या इत्येकादश ॥**

अस्मिन्नेव मोक्षसाधनप्रकारमाहात्म्योपसंहारसूत्रे सगुणे इत्यादि **सगुणे** – साकारे ब्रह्मणि प्रथमं बुद्धिं निवेश्य तस्य दिव्यमंगलविग्रहं दृष्ट्वा तद्गतमानसस्सन् एवं लक्षणं निराकारमव्यक्तं ब्रह्मेति तद्रूपं ध्यात्वा नित्यमा-मोक्षप्राप्ति यत्नमुद्योगं कुर्यात् । उपासनं कुर्वीत । तस्य योगिनः अस्मिन्नेव जन्मनि मोक्षः सिद्ध्यति । उपासनफलं किञ्चिदप्यनभिकांक्ष्य यथाविहित-वर्णाश्रमधर्मानुष्ठानपरः अष्टांगयोगरतः आत्मगुणैर्युक्तः प्रथमं प्रतिमासु शंख-चक्रगदाधरं किरीटहारकेयूरादिसर्वभूषणभूषितं कौस्तुभोद्भासितोरस्कं श्रीवत्सांकं पूर्णचन्द्रनिभाननं पद्मपत्रनिभेक्षणं पद्मोदरबिंबनिभोष्ठं शुचिस्मितं शुद्धस्फटिक-संकाशं पद्मच्छविपाणिपादतलं पीतवाससमच्युतमनामयमनुपमेयं नारायणं जगन्नाथं देवेशं विष्णुं नित्यमभ्यर्चयंस्तन्मयो भूत्वा पश्चात् तदेव दिव्यरूपं मनसा ध्यायन् पश्चात् मनोधृतं तदेव रूपं हृदयकमले ज्योतिर्मयं शुद्धं सर्वगत-माकाशवत् दृढमत्यच्छममलं नित्यमादिमध्यान्तरहितं मूलं सूक्ष्ममनाकार-मस्पृश्यमचाक्षुषमोंकारगम्यं गुणातीतमप्रमेयमनुत्तममानन्दमजरमव्यक्तमन्तर्बहिष्ठं सर्वतोमुखं सर्वदृक् सर्वतः पादमव्यक्तं सर्वस्पृगित्येवं शरीरपातान्तं परमात्म-योगान्तं वा अहं परमानन्दस्वरूपी परं ब्रह्माव्यय इति ध्यायीत । स मुच्यते संसारबन्धात् । मुक्तो भवति । अयमर्थः – परमानन्दस्वरूपिणा ब्रह्मणा सह अत्यन्तावस्थानमेव मोक्षः इति । मतान्तराणि प्रत्याख्यातव्यानि । इति शम् ।

इति वाजपेयीये (षष्ठः पटलः) एकादशः खण्डः ॥

॥ **इत्यष्टमः प्रश्नः** ॥ (धर्मे प्रथमः प्रश्नः) समाप्तः

# अथ नवमः प्रश्नः

—xox—

(धर्मसूत्रे द्वितीयः प्रश्नः।)

अथ वानप्रस्थस्य श्रामणकविधानम् ॥ १ ॥

गृहस्थः सोमयाजी पुत्रं पौत्रञ्च दृष्ट्वा तत्पुत्रादीन् गृहे संस्थाप्य मौण्ड्यं कृत्वा प्राजापत्यं कृच्छ्रं चरेत् ॥ २ ॥

गृहस्थस्सोमयाजीत्यादि ॥ मौण्ड्यं—यथोक्तं वापनं कृत्वा पुण्ये दिने सदस्याननुज्ञाप्य तैरुक्तं प्राजापत्यं कृच्छ्रं चरेत्। कृच्छ्रत्रयं केचिद्वदन्ति।

वसन्ते शुक्लपक्षे पुण्यर्क्षे पत्न्या सार्धं गृहात् वनाश्रमं याति ॥ ३ ॥

पूर्वस्मिन् दिवसे कृतस्नानः संकल्प्य कुशोदकं पीत्वोपवासं कुर्यात् ॥ ४ ॥

औपासनहोमं कृत्वाऽग्निं 'अयन्ते योनि' रित्यरण्यामारोपयेत् ॥ ५ ॥

औपासनहोममित्यादि। यद्यर्धाधानी अग्नौ पूर्ववत् हुत्वा तमग्निं 'अयन्ते योनि' रिति अरण्यां समारोपयेत्।

दर्शपूर्णमासविधानेन दर्भादीन् संगृह्य पूर्ववत् परिस्तरण कूर्चान् परिधीन् समिधो वेणुदण्डोपवीतकमण्डलु वल्कलादीन् सम्भरति ॥ ६ ॥

दर्शपूर्णमासेत्यादि। 'देवस्ये' त्यश्वपर्शुमसिदं वा आदाय 'यज्ञस्य घोषद' सीत्यभिमन्त्रयते गार्हपत्यं वोपतिष्ठेत। 'प्रत्युष्ट' मिति तस्मिन् निक्षिपति। 'प्रेयमगात्' 'उर्वन्तरिक्षं प्रे' हीति चाहवनीयमभिप्रैति। 'इह-बर्हिरासद' इति वेदिं प्रत्यवेक्षते। यत्र बर्हिर्दास्यन् भवति तां दिशमेत्य 'विष्णोः स्तूपोसि' इत्येकं स्तंबमुत्सृज्य 'देवानां परिषूतम' सीत्यन्यं। 'पशूनां त्वा भागमुत्सृजामि' इति परिषूतस्यैकं दर्भमुत्सृज्य

'इह देवाना' मिति परिपूतमभिमृशति । 'इदं पशूना' मित्युत्सृष्ट 'देवस्य' त्वेति परिपूतमभिगृह्य 'देवेस्यस्त्वे' ति ऊर्ध्वमुन्मृज्य 'देवबर्हि' रित्यसिदं निधाय 'या जाता' इत्यभिमन्त्र्य 'आच्छेत्तात' इत्याच्छिन्दन् मन्त्रवं मुष्टिं ददाति (?) इत्येवं दर्भान् संगृह्य तूर्ष्णीं त्रिधातुशुल्वं कृत्वा 'यत्कृष्णो रूप' मिति पालाशेन खादिरेण वा याज्ञिकैर्वृक्षैः एकविंशतिदारुमिध्मं संगृह्य 'कृष्णोस्याखरेष्ठ' इति संनह्य 'पूषा त' इति प्रदक्षिणं ग्रथ्नाति। एवमिध्मादीन संगृह्य पूर्ववत् कुशान् परिस्तरणकूर्चादीन् । उपवीतं – तृतीयं यज्ञोपवीतम् । कमण्डलुं – जलपात्रम् । वल्कलं – तरुत्वग्वस्त्रम् । आदिशब्देन मेखलोत्त-रीयकृष्णाजिनोपानतछत्राश्वादयो गृह्यन्ते । सम्भरति – दैविकवत् संभरति ।

**पूर्वोक्तेन विधिना अग्निकुण्डं कुर्यात् ॥ ७ ॥**

पूर्वोक्तेन विधिना श्रामणकाग्निकुण्डं कुर्यात् ।

**अपरस्मिन् दिवसे वैश्वानरसूक्तेन अग्निं मथित्वा प्रज्वाल्य 'अग्न आयाहि' 'उपावरोह' इत्यग्निं निधाय पूर्ववत् श्रामणकाग्न्या-धारं जुहोति ॥ ८ ॥**

**प्रणम्याग्निं परिषिच्य 'अग्ने प्रायश्चित्ते त्वं' इति पञ्चप्रायश्चित्तं हुत्वा 'आपो - हिरण्य - पवमानैः' आत्मानं प्रोक्ष्य ब्रह्मदैवत्यं वैष्णवं पञ्चवारुणञ्च प्रधानान् व्याहृत्यन्तं यजेत ॥ ९ ॥**

स्पष्टम् ।

इति वाजपेयीये नवमप्रश्ने प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः

--xox--

अग्नेः प्रतीच्यां द्वौ कुशौ पूर्वाग्रौ न्यस्योर्ध्वं अश्मानं निधाय 'तत्सवितुर्वरेण्यं' इति दक्षिणपादांगुष्ठाग्रेण अश्मानमधितिष्ठेत् ॥ १ ॥

'तेजो वत्सवत्सवितुः' इति वल्कलमजिनं चीरं वा परिधाय पूर्ववन्मेखलादीन् तान्युपवीतान्युत्तरीयं कृष्णाजिनञ्चाददाति ॥ २ ॥

आचम्य 'स्वस्ति देव' त्यग्निं प्रदक्षिण प्रणामञ्च कृत्वा आसीत ॥ ३ ॥

'शन्नो देवी' रिति स्वमूर्ध्नि प्रोक्ष्य जयानभ्यातानान् राष्ट्रभृतो व्याहृतीश्च हुत्वा आज्यशेषं प्राणायामेन प्राश्नीयात् ॥ ४ ॥

'योगे योगे' इति द्विराचम्य 'शतमिन्नु शरद' इति प्रणामं 'आगन्त्वा समगन्महि' इति प्रदक्षिणञ्चाऽऽदित्यस्य कुर्वीत ॥ ५ ॥

'राष्ट्रभृदसि' इत्यूर्ध्वाग्रं कूर्चं गृह्णीयात् ॥ ६ ॥

'ओं भूस्तत्सवितुः—'ओं भुवो भर्गो देवस्य—'ओं सुवर्धियो योनः' इति पच्छो व्यस्तां, 'ओं भूर्भुवस्तत्सवितुः — ओं सुवर्धियो योनः' इत्यर्धर्चशो व्यस्तां, 'ओं भूर्भुवस्सुवस्तत्सवितुः' इति समस्ताञ्च सावित्रीं जप्त्वा वनाश्रमं प्रविश्य ब्रह्मचर्यव्रतं संकल्पयेत् ॥ ७ ॥

स्पष्टम्

इति वाजपेययाजिने नवमप्रश्ने द्वितीयः खण्डः

## अथ तृतीयः खण्डः

तत्पत्नी च तथा ब्रह्मचारिणी स्यात् ॥ १ ॥

स्वयमेवाग्निं प्रदक्षिणीकृत्य आज्येन प्राजापत्यं धातादिमिन्द्राहुती विच्छिन्नमैन्द्रं वैश्वदेवं वैष्णवं ब्राह्मं विष्णोर्नुकादीन् प्राजापत्यसूक्तं तद्व्रतबन्धश्च पुनः प्रधानान् हुत्वा प्राजापत्यव्रतं बध्नाति ॥ २ ॥

स्वयमित्यादि। प्राजापत्यसूक्तं—'ऋतञ्च सत्यञ्च'—'देवकृतस्य'—'यन्मे गर्भे'—'तरत्समन्दी' इति। तद्व्रतबन्धं—'प्रजापते न त्वत्'—'रयीणां पतिं' इति। एतावत्पर्यन्तं हुत्वा प्राजापत्यव्रतबन्धं करिष्यामीति संकल्प्य पुनः प्रधानान् धात्रादिप्राजापत्यव्रतबन्धमन्त्रान् 'अग्ने व्रतपते' इति मन्त्रान् समिद्भिर्हुत्वा आज्येन व्याहृतीर्जुहुयात्।

स्थित्वा 'देवस्य त्वा'—'यो मे दण्डः' इति द्वाभ्यां पञ्च सप्तनवान्यतमैः पर्वभिर्युक्तं केशान्तायतं वाऽप्यवक्रं वैणवं द्विदण्डमाहरति ॥ ३ ॥

स्थित्वेत्यादि। पञ्चसप्तनवपर्वसु उत्तरोत्तरं वस्तु प्रशस्तम्। अलाभे केवलमवक्रं केशान्तायतं गृह्णीयात्। द्विदण्डं—द्वावुक्तलक्षणौ दण्डौ सूत्रैरेकीकृत्य बध्वा गृह्णाति।

'येन देवा' इति कमण्डलुमृद्ग्रहण्यौ पूर्ववदुपानच्छत्रे च गृह्णाति ॥ ४ ॥

अग्नीन् गार्हपत्यादींश्चोज्ज्वाल्य अग्निहोत्रं हुत्वा आहवनीये प्राजापत्यं विष्णुसूक्तश्च, सर्वत्र 'अग्नये स्वाहा'—'सोमाय स्वाहा'—'विष्णवे स्वाहा' इति हुत्वा अग्नीनरण्यामारोपयति ॥ ५ ॥

येनेत्यादि। अग्नीनित्यजस्रपक्षे गार्हपत्यादीन् पृथगरण्योरारोपयेत्। नो चेत गार्हपत्यस्यारण्यारोपणम् ॥

वनेऽद्रौ विविक्ते नदीतीरे वा वनाश्रमं प्रकल्प्य यथोक्तमग्निकुण्डानि कुर्यात् ॥ ६ ॥

वन इत्यादि । ग्रामाद्बहिरेव वनाश्रमकल्पनं विहितम् । आश्रमं–तपोनिलयम् ।

पत्न्या सह अग्नीनादाय पात्रादिसम्भारयुक्तो वनाश्रमं समाश्रयति ॥ ७ ॥

पत्न्या इत्यादि । अग्नीनरण्यारोपितान् असंकरमादाय – स्वयमेव गृहीत्वा । पात्रादिसंभाराः – स्रुक् स्रुवादयो यज्ञपात्राणि । आदिशब्देन वक्ष्यमाण सुवर्णशकलपार्थिवादयः । तान् संभारान् पत्न्या पुत्रादिना वा वाहयित्वा तैः पात्रादिसंभारयुक्तः ।

इति वाजपेयीये नवमप्रश्ने (प्रथमः पटलः) तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

अग्न्यायतने प्रोक्ष्य खनित्वा लेखाः पङ्क्लिख्य सुवर्णशकलं व्रीहींश्च निधाय श्रामणकाग्निं निदध्यात् ॥ १ ॥

अग्न्यायतन इत्यादि । अग्निं मथित्वा निदध्यात्

वन्यानेव पार्थिवान् वानस्पत्यान् कुलीरोद्धतांश्चणान पुराणान् कुशदर्भास्तूर्णकान् प्लक्षाग्रं सुगन्धितेजनं गुग्गुलुं हिरण्यशकलान् सूर्यकान्तश्च सम्भरति ॥ २ ॥

वन्यानित्यादि । वन्यान – वनभवान्, न ग्राम्यान् । पार्थिवाः - सिकतोषाखूत्थवल्मीकवपासूदवराहोत्थनाः पदार्थाः, तान् सप्तश्रौतोक्तान । तान प्रत्येकं कुडुवं यथालाभं वा संगृह्य । वानस्पत्यान् – अश्वत्थोदुंबरपलाश-शमीवैकंकतपुष्करपर्णमुञ्जकुलायानित्यष्टौ वनस्पतिभवान् प्रादेशमात्रान सप-वित्ताग्रान् कृमिलेपवर्जान् एकैकं सप्त पञ्चदश वा गृहीत्वा यथालाभं सर्वान्वा संगृह्य । कुलीरोद्धतां – कर्कटेन स्वनिलयार्थं भूखननेनोध्दृता मृत् तां मृदम् । पुराणान् – मासातीतान् । ऊर्णास्तुका – मेषस्य शृंगान्तरालस्थिता रोमसन्ततिः – ताम्, प्लक्षाग्रं – सपत्रां प्लक्षशाखाम् । सुगन्धितेजनं – कट-तृणाग्रम । सूर्यकान्तमश्मविशेषः । एषां सम्भरणम् ।

वानप्रस्थान् ऋत्विजो वृत्वा अग्निं मथित्वा गार्हपत्यादीं-स्त्रेताग्नीन पञ्चाग्नीन्वा अग्न्याधानक्रमेणाधाय आहुती द्वे द्वे हुत्वा नित्यं द्विकालं वन्यैरेव जुहोति ॥ ३ ॥

वानप्रस्थानित्यादि । ऋत्विजो वानप्रस्थानेव वृणुयात् । आहुती द्वे द्वे – आहवनीये प्रातः 'सूर्यो ज्योतिर्ज्योतिःसूर्यस्स्वाहा' इति, सायं 'अग्नि-र्ज्योतिर्ज्योतिरग्निस्स्वाहा' इति हुत्वा, पश्चात् 'भूर्भुवस्सुवस्स्वाहे' ति उभयत्र जुहुयात । एवमाहवनीये द्वे । गार्हपत्ये, 'अग्नये गृहपतये स्वाहा, 'विष्णवे

स्वाहे' ति द्वे। यदि सभ्यावसथ्यौ, सभ्ये 'भूर्भुवस्सुवस्स्वाहा' 'विष्णवे स्वाहे' ति द्वे, आवसथ्ये 'अग्नये अन्नपतये स्वाहा 'विष्णवे स्वाहे' ति द्वे। एवमाहुती द्वे द्वे तदार्नी हुत्वा। द्विकालं – सायः प्रातः। नित्यधारणपक्षे विहरणं विनान्यदग्निहोत्रं कुर्यात्। विहरणपक्षे तु प्रागस्तमयात् प्रागुदयाच्च अग्निहोत्रं होष्यामीति संकल्प्य 'सुगार्हपत्य' – 'उद्बुद्ध्यस्वे' ति 'गार्हपत्य-मुपस्थाये' त्यादिवक्ष्यमाणाग्निहोत्रप्रकारेण कृत्वा वन्यैरेव जुहोति।

**वनाश्रमी मुनिः स्नानशौचस्वाध्यायतपोदानेज्योपवासोपस्थनिग्रह-व्रतमौनानीति नियमान् दशैतान्, सत्यानृशंस्यार्जवक्षमादमप्रीति प्रसादमार्दवाहिंसामाधुर्याणीति यमान् दशामूंश्च समाचरति॥ ५॥**

वनाश्रमीत्यादि। स्नानं – पूर्वोक्तं नित्यं नैमित्तिकञ्च। शौचं – बाह्य-माभ्यन्तरञ्च, मृज्जलाभ्यां बाह्यं आत्मविद्यया आभ्यन्तरम्। स्वाध्यायः – पुरुषसूक्तादिप्रशान्तवैष्णव मन्त्राभ्यासः। तपः – चान्द्रायणाद्यनशनव्रतजनित-दुःखशमनम्, दुःखसहिष्णुत्वं वा। दानम्–अतिथिभ्योऽन्नं वा अर्थिभ्यो यथा-शक्ति धनदानं वा। इज्या, ब्रह्मयज्ञादि। उपवासः–चान्द्रायणादि व्रताचरणम्। उपस्थनिग्रहः – इन्द्रियनिरोधः, व्रतं – ब्रह्मचर्यम्। मौनं – मूत्रपुरीषोत्सर्जन-दन्तधावनस्नानाद्यनुष्ठानभोजनादिकालेषु, अन्यत्र भाषणम्। एते नियमा दश उच्यन्ते। सत्यं – भूतहितं प्रियं यथार्थवचनम्। आनृशंस्यं – अक्रूरता। आर्जवं – विदितेष्वविदितेषु वा मनोवाक्कायकर्मणां प्रवृत्तौ वाप्येकरूपत्वम्। क्षमा–प्रियाप्रियेषु सर्ववस्तुषु समता। दमः – आत्मदण्डः। प्रीतिः–यदृच्छालाभेन सन्तुष्टिः। प्रसादः–सर्वावस्थासु प्रसन्नता। मार्दवं–पेशलस्वभावः। अहिंसा – सर्वप्राणिषु अक्लेशजननम्। माधुर्यं – मधुर-वचनवक्ता। एते यमा दश। एतान् सर्वानाचरति।

**भक्त्या विष्णुं ध्यायन् अग्निहोत्रश्रामणकाग्निहोत्रौ द्विकालं नोत्सृजन् ग्राम्याशनं त्यक्त्वा वन्यौषधीभिः फलं मूलं शाकं वा नित्याशनं संकल्प्य 'तिरोधा भूः' इत्याहृत्य अपराह्णे स्वयं पत्नी वा हविष्यमस्नागन्वितं पचति॥ ५॥**

भक्त्येत्यादि । अग्निहोत्रश्रामणकाग्निहोमौ — श्रौताग्निष्वग्निहोत्रहोमं श्रामणकाग्नौ श्रामणकहोमम् । नित्याशनं संकल्प्य नित्याहारत्वेन संकल्प्य । नित्यानुष्ठानानन्तरं वन्यौषधीन् निरोधामन्त्रचतुष्टयेनादाय । हविष्यं—हविर्योग्यं क्षारलवणवर्जितम् । अस्रावितं -- अग्निना पचति ।

**वैश्वदेवहोमान्ते अतिथीनभ्यागतान् प्राशयित्वा मितं प्राश्नाति ॥ ६ ॥**

वैश्वदेवेत्यादि । प्राशयित्वा अवशिष्टमन्नं मितं—षोडशग्रासादनधिकं प्राश्नाति । पश्चात् पत्नी तदवशिष्टं प्राश्नीयात् ।

इति वाजपेयीये नवमप्रश्ने चतुर्थः खण्डः ।

## अथ पञ्चमः खण्डः

रात्रौ नाश्नीयात् ॥ १ ॥

अधस्तात् दर्भांस्तृणानि पर्णानि वा आस्तीर्य सुव्रतः सुब्रह्मां पत्नीं विना एकश्शयीत ॥ २ ॥

साऽस्य शुश्रूषां करोति ॥ ३ ॥

सेत्यादि । शुश्रूषां – शरीरसंरक्षणाद्यामग्निपरिचर्यां च करोति ।

एनां नोपगच्छेत् ॥ ४ ॥

मातृवत् निष्कामः प्रेक्षेतोर्ध्वरेता जितेन्द्रियः ॥ ५ ॥

दर्शपूर्णमासौ चातुर्मास्यं नक्षत्रेष्टिमाग्रयणेष्टिं च वनौषधीभिः पूर्ववद्यजेदनुक्रमात् ॥ ६ ॥

मूलैः फलैः पत्रैः पुष्पैर्वा तत्तत्कालेन पक्वैः स्वयमेव संशीर्णैः प्राणं प्रवर्तयन् उत्तरोत्तरेऽप्यधिकं तपस्संयोगं फलाद्विशिष्टमाचरेत् ॥ ७

अथवा आहिताग्निः सर्वानग्नीन् अरण्यामारोप्य सर्वैस्संवापमन्त्रैः पार्थिवान् वानस्पत्यांश्च सर्वान् समूह्य निर्मन्थ्य एतेन विधिना अग्न्याधेयविधानेन च मन्त्रैस्सर्वैः सभ्याग्न्यायतने श्रामणकाग्निमधायाऽऽहरेत् ॥ ८ ॥

अथवेत्यादि । एवमग्निहोत्रं श्रामणकहोमञ्च पृथक् कर्तुमशक्तश्चेत् आहिताग्निः सर्वान् गार्हपत्यादीन् पृथक् एकस्यां वा अरण्यां आरोप्य । सर्वैः संवापमन्त्रैः – 'अग्नेर्भस्मासि' – 'संज्ञानमसि' 'उदेह्यग्ने' 'यत्पृथिव्या' 'उत्समुद्रात्' 'इयत्यग्र आसीः' 'मदो देवीः' इत्येतैः श्रौतोक्तैः सप्तभिः सप्त पार्थिवान् । 'अश्वोरूपं' – 'ऊर्जः पृथिव्या' 'गायत्र्या ह्रियमाणस्य' – 'याते सृष्टस्याग्नेः – 'यत्ते सृष्टस्य' – 'यत्ते तान्तस्य' – 'यत्पर्यपश्यात्' – 'याते अग्ने

ओजस्विनी तनूः' इत्येतैस्संवापमन्त्रैः अष्टौ वानस्पत्यांश्च गृहीत्वा श्रामणकाग्नौ निधाय अरण्यारोपितमग्निं वैश्वानरसूक्तेन निर्मन्थ्य । विधिना—श्रामणकाग्निविधानेन । अग्न्याधेयविधानेन च ।

सभ्यस्य भेदः श्रामणकाग्निरित्याहुः ॥ ९ ॥

सभ्यस्येत्यादि । सभ्यस्य कुण्डस्य भेदः श्रामणकाग्निरित्याहुः । आकारो लक्षणं सर्वं सभ्यवदिति वदन्ति ।

अपत्नीकश्च भिक्षुवदग्नौ होमं हुत्वा अरण्यादिपात्राणि च प्रक्षिप्य पुत्रे भार्यां निधाय तथा अग्नीनात्मन्यारोप्य वल्कलोपवीतादीन् भिक्षापात्रञ्च संगृह्य अनग्निरदारो गत्वा वने निवसेत ॥ १० ॥

अपत्नीक इत्यादि ॥ अपत्नीकः—पत्नीं विना गन्तुमिच्छन् । भिक्षुवत्—वक्ष्यमाणसन्न्यासिवत् । अग्नौ—श्रामणकाग्निमुत्पाद्य तस्मिन् पूर्ववद्धोमं हुत्वा तस्मिन्नेवाग्नौ अरण्यादिपात्राणि—लोहाश्ममयानि विहाय (ब्राह्मणेभ्यो दत्वा) अन्यानि यज्ञपात्राणि च प्रक्षिप्य—दग्ध्वा । यथाऽऽधानं तथा अग्नीन् अकृतहोमां चेदग्निहोत्रं हुत्वा अन्ते क्रमेण आत्मनि पूर्ववदारोप्य । अन्यत् स्पष्टम् ।

तपसां श्रमणमेतन्मूलं तस्मात्तद्विधानमेनमग्निं च श्रामणकमित्या[ह विखनाः]हुः ॥ ११ ॥

स्पष्टम् ।

इति वाजपेयीये नवमप्रश्ने पञ्चमः खण्डः ॥

# अथ षष्ठः खण्डः

—xox—

अथ सन्न्यासक्रमः ॥ १ ॥

अथेति । उच्यत इति वाक्यशेषः ।

**सप्तत्यूर्ध्वं वृद्धोऽनपत्यो विधुरो वा जन्ममृत्युजरादीन् विचिन्त्य योगार्थी यदा स्यात् तदा, अथवा पुत्रे भार्यां निक्षिप्य परमात्मनि बुद्धिं निवेश्य वनात्सन्न्यासं कुर्यात् ॥ २ ॥**

**सप्तत्यूर्ध्वमित्यादि** । सप्ततिवत्सरादूर्ध्वं सन्न्यासस्य कालो विहितः । अयं नियमः कुटीचकबहूदकविषयः । हंसानां यदेच्छा जायेत तदा । 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुतेः । **वृद्ध** इति वयोविषयो ज्ञानविषयो वा । अनपत्यः—सन्तानहीनः । 'अपुत्रस्य गतिर्नास्ती' ति वचनात् । **विधुरः**—मृतभार्यः 'अनाश्रमी न तिष्ठे' दिति वचनात् । 'सर्वेषणाविनिर्मुक्तिः क्षमाधृतिशौचसत्यसन्तोषार्जवान्वितः पुत्रमित्रकलत्रादिषु स्नेहवर्जितः जितेन्द्रियः ज्ञाननिर्धूतकल्मषः पंग्वन्धबधिरमूकक्लीबजडादिवत् स्थितः वृद्धातुरकृशवत् कामभोगेषु निस्स्पृहः निर्ममो निरहंकारो निर्द्वन्द्वः गतमत्सरो रागद्वेषक्रोधलोभमोहमदमात्सर्यवर्जितः बहुश्रुतः अधीतवेदो जपकृत् कृतनित्यकर्मानुष्ठानः यथाशक्ति यज्ञकृत् सर्वभूतदयापरो नियमयमान्वितः सिद्धवैराग्यः एवंविधो ब्राह्मणः सन्न्यासी भवेत् । अन्यथा पापीयान् भवति' इति वेदानुशासनम् । **जन्मेत्यादि** । आदिशब्देन व्याधिदुःखेन्द्रियवैकल्यादयो लक्ष्यन्ते । **विचिन्त्य**-देहस्य स्वभावसिद्धानीति परामृश्य । **योगार्थी यदा स्यात्** – ब्रह्मचर्यादूर्ध्वं बाल्ये यौवने वार्धके वा, तदा सन्न्यासी स्यात् । **अथ** सपत्नीकः **पुत्रे** तदभावे पौत्रे दौहित्रे श्वशुरे वा **भार्यां निक्षिप्य** । **वनादि**ति गार्हस्थ्यादित्यस्याप्युपलक्षणम् । 'एवं सर्वलक्षणसंपन्नं भिक्षुमाचार्यमाश्रित्याश्रमस्वीकरणं कुर्यात्' इति गालवः । 'आचार्यवान् पुरुषो वेदे' ति छन्दोगाः । गुरुरपि संवत्सरं षण्मासं त्रिमासं वा शिष्यं परीक्ष्य सुगुणान्विताय अनभिशस्ताय सद्वंशजाय उचितमुपदेशं

कुर्यात् । 'नासंवत्सरवासिने ब्रूया' दिति मैत्रावरुणीयश्रुतिः आचार्योपसदनप्रकारः आचार्यानुग्रहप्रकारश्च पूर्वमेवोक्तः ॥

**मुण्डितो विधिना स्नात्वा ग्रामाद्बाह्ये प्राजापत्यं चरित्वा पूर्वाह्णे त्रिदण्डं शिक्यं काषायं कमण्डलुमप्पवित्रं मृद्ग्रहणीं भिक्षापात्रञ्च संभृत्य त्रिवृतं प्राश्य उपवासं कृत्वा दिनेऽपरे प्रातस्स्नात्वा अग्निहोत्रं वैश्वदेवञ्च हुत्वा वैश्वानरं द्वादशकपालं निर्वपेत् ॥ ३ ॥**

मुण्डित इत्यादि । 'शिखाश्रुवर्जे' मित्युक्तरीत्या वापनं कुर्यात् । **ग्रामाद्बाह्ये** – बहिःप्रदेशे देवालये नदीतीरे वा । **प्राजापत्यं चरित्वा** – अनाश्रमी चत्वारि प्राजापत्यानीति केचित् । त्रिंशत् कृच्छ्राणीत्यन्ये । अनधिकारी सर्वप्रायश्चित्तमित्यपरे । सन्न्यासदिनात्पूर्वं शुक्लाष्टमीमारभ्य पौर्णमास्यन्तं अपि वा एकदिने वा अष्टश्राद्धानि कृत्वा सन्न्यसेदिति केचित् । देवर्षिदिव्यमनुष्यभूतपितृमात्रात्मसंज्ञान्यष्टश्राद्धानि । तत्र देवश्राद्धे ब्रह्मविष्णुमहेश्वराः, ऋषिश्राद्धे देवर्षिब्रह्मर्षिराजर्षयः, दिव्यश्राद्धे वसुरुद्रादित्याः, मनुष्यश्राद्धे सनकसनन्दनसनातनाः भूतश्राद्धे पृथिव्यादि पञ्च भूतानि, चक्षुरादीन्द्रियाणि (?) ; पितृश्राद्धे पितृपितामहप्रपितामहाः, मातृश्राद्धे मातृपितामही प्रपितामह्यः, आत्मश्राद्धे आत्मान्तरात्मपरमात्मानः इत्येवं देवता भवन्ति । सर्वत्रोपवीती अक्षतैरेवार्चयेत् । न तिलैः । सर्वत्र विश्वेदेवार्थं द्वौ ब्रह्माद्यन्तानां प्रत्येकं द्वौ द्वावेव ब्राह्मणौ वरणीयौ । एवं प्रतिश्राद्धं कुर्यात् । एकस्मिन् दिने चेत् एकमेव विश्वे देवस्थाने कुर्यात् । ब्राह्मणानामन्त्र्य प्रत्येकमुदगन्तमष्टमण्डलान्युपकल्प्य पादौ प्रक्षाल्यासयित्वाऽभ्यर्च्य बहिर्गत्वा इन्द्रादिदेवताः नमोन्तेन नाम्नाऽभिवन्द्य अन्तः प्रविश्य नारायणं ध्यायन् यथेष्टं भोजयेत् । नान्दीश्राद्धे पिंडप्रदानं करिष्य इति संकल्प्य उपवीती भूम्यामुदगन्तं अष्टौ लेखा उल्लिख्य दर्भानास्तीर्य देवादिस्थलेषु तूष्णीं जलमासिच्य पित्रादिस्थले 'मार्जयन्तां मम पितरः' इति यथालिंगं मन्त्रेणाक्षतोदकं दत्वा चतुर्थ्यन्तैः तन्नामभिः प्रतिवर्गं पिंडत्रयं दत्वा पित्रादिषु स्वगृह्योक्तमासिश्राद्धविधानेन पिंडत्रयं दद्यात् । शेषञ्च यथोक्तं कुर्यात् । **त्रिदण्डं** – त्रीन् वैणवान्

दण्डानेकीकृत्य गोवालेन बध्द्वा मुद्रान्वितं कृत्वा, **शिक्यं** – भिक्षापात्रधारण-वस्त्रादिकम् । **काषायं**–वर्णविशेषरंजितवस्त्र, **कमंडलं**–जलपात्रं, अपः पवित्र-यतीत्यप्पवित्रं वस्त्रखण्डं, **मृद्ग्रहणीं** – शौचार्थं मृदानयनाय गृहीतं पात्रं, **भिक्षापात्रं** – भिक्षाग्रहणार्थं पात्रम्, चकारात् उपवीताजिनोत्तरीयादिसंभारा-लक्ष्यन्ते । **त्रिवृतं** – पयोदधिघृतं समं गृहीतं, ताम् प्राश्याचम्य । परस्मिन् दिने पौर्णमास्यामुपवासमिति केचित् । त्रिवृत्प्राशनात्पूर्वं सक्तुभक्षणमेके वदन्ति । **अग्निहोत्रमिति** । यद्याहिताग्निर्वनस्थः तत्राग्निहोत्रं वक्ष्यमाणवत् जुहुयात् । यदि गृहस्थः तत्र विहारं प्रकल्प्य अग्नीनाधाय पूर्ववत्कुंडे निधाय अपि वा स्वगृह एव अग्निहोत्रादिकं जुहुयात् । अनाहिताग्निश्चेत् पूर्ववदौ-पासनाग्नौ होमं वनस्थश्चेत् तदग्नौ श्रामणकहोमं वैश्वदेवञ्च जुहुयात् । यदा-हिताग्निः वैश्वानरं द्वादशकपालं निर्वपेत् । दर्शपूर्णमासवत् सर्वं कृत्वा वैश्वानरेष्टिं कुर्यात् । सर्वस्वदक्षिणां प्राजापत्येष्टिं कुर्यादित्येके । सायं सन्ध्यामुपास्य गार्हपत्यादिषु सन्न्यासहोममेके वदन्ति ।

**गार्हपत्याग्नावाज्यं संस्कृत्य आहवनीये पूर्णाहुती पुरुषसूक्तञ्च हुत्वा 'अग्नये–सोमाय – ध्रुवाय – ध्रुवकरणाय परमात्मने – नारा-यणाय स्वाहा' इति जुहोति ॥ ४ ॥**

**गार्हपत्याग्नावित्यादि । पुरुषसूक्तमिति** । पुरुषसूक्तं प्रत्यृचमाज्य-चरुसमिद्भिर्जुहुयादित्येके ।

इति वाजपेयीये नवमप्रश्ने षष्ठः खण्डः ।

## अथ सप्तमः खण्डः

स्रुचि स्रुवेण चतुर्गृहीतं गृहीत्वा सर्वाग्निषु 'ओं स्वाहा' इति जुहुयात् ॥ १ ॥

स्रुचीत्यादि। जुहुयात्—प्रत्येकं गृहीत्वा जुहुयात्। ततो गार्हपत्यस्य पश्चात् आसीनः भक्त्या भगवन्तं नारायणं ध्यायन् गायत्रीं जपन् जागरणं कृत्वा ब्राह्मे मुहूर्ते चोत्थाय गार्हपत्ये तत्तदग्नौ वा विरजाहोमं केचिद्वदन्ति।

अग्निहोत्रहवणीमाहवनीये, मृच्छिलामयेभ्योऽन्यानि पात्राणि गार्हपत्ये प्रक्षिपति ॥ २ ॥

अग्निहोत्रेत्यादि। प्रक्षिपति — प्रदहति।

गृहस्थोऽनाहिताग्निरौपासने, वनस्थश्च श्रामणकाग्नौ होमं हुत्वा पात्राणि प्रक्षिपेत् ॥ ३ ॥

गृहस्थ इत्यादि। विधुरश्चेत् लौकिकाग्नौ निर्मन्थ्ये वा, ब्रह्मचारी चेदुपनयनाग्नौ लौकिकाग्नौ वा। वैश्वानरेष्टिं विहाय पौर्णमास्यामष्टम्यादिषु वा श्राद्धानि कृत्वा पूर्ववत्सर्वं कुर्यात्।

पच्छोऽर्धर्चशो व्यस्तां समस्तां च सावित्रीं जप्त्वा 'भिक्षाश्रमं प्रविशामि' इति तं प्रविशति ॥ ४ ॥

अन्तर्वेद्यां स्थित्वा गार्हपत्यादीन् 'याते अग्ने यज्ञिया' इति प्रत्येकं त्रिराघ्राय 'भवतं नस्समनसौ' इत्यात्मन्यारोपयेत् ॥ ५ ॥

अन्तर्वेद्यामित्यादि। यथाहिताग्निर्भिक्षुः अन्तर्वेद्यां गार्हपत्याहवनीययोर्मध्ये स्थित्वा गार्हपत्यादीन् जाज्वल्यमानानाग्नीन् क्रमशः उक्तेन मन्त्रेण पाणी प्रताप्य प्रत्येकं त्रिःकृत्वः आघ्राय आत्मन्यारोपयेत्। एवमनाहिताग्न्यादयः तत्तदग्निम्।

भूर्भुवस्सुवस्सन्न्यस्तं मया इति त्रिरुपांशूच्चैश्च प्रेषमुक्त्वा दक्षिणहस्तेन सकृज्जलं पीत्वा आचम्य तथैवोक्त्वा त्रिर्जलाञ्जलिं विसृजेत् ॥ ६ ॥

भूरित्यादि। पश्चात् उपवीतादिसंभारान् गृहीत्वा नद्यादिजलाशयं गत्वा संभारान् तीरे विन्यस्य जलं प्रविश्य। ऊर्ध्वबाहुस्सन् प्रैषं – 'भूर्भुवो' मन्त्रं उक्त्वा। जलं गृहीत्वाऽभिमन्त्र्य पीत्वा। तथैव – प्रेषमन्त्रमुक्त्वा।

मेखलां चत्वार्युपवीतान्येकं वोपवीतं कृष्णाजिनमुत्तरीयञ्च पूर्ववद्ददाति ॥ ७ ॥

मेखलामित्यादि। पूर्ववत् – उपनयनोक्तवत्। आचार्यो वा गृहस्थो वा ददाति। सोऽपि तत्तन्मन्त्रमुक्त्वा धारयेत् ॥

इति वाजपेयीये नवमप्रश्ने सप्तमः खण्डः।

## अथ अष्टमः खण्डः

'देवस्य त्वा –'यो मे दण्डः, 'सखा मे गोपाय' इति त्रिभिस्त्रिदण्डं 'यदस्य पारे रजसः' इति शिक्यं 'येन देवाः पवित्रेण' इत्यप्पवित्रं 'येन देवा ज्योतिषा' इति कमण्डलुमृद्ग्रहण्यावाददीत ॥ १ ॥

देवस्यन्त्वेत्यादि। 'येन देवा' इति मन्त्रस्यावृत्तिः। गुरुणा गृहस्थेन वा दत्तं तत्तन्मन्त्रोच्चारणपूर्वकं स्वयमाददीत।

स्नात्वा अघमर्षणसूक्तेनाघमर्षणं कुर्यात् ॥ २ ॥

आचम्य षोडशप्राणायामान् कृत्वा सहस्रं शतं वा सावित्रीं जप्त्वा तया भिक्षापात्रमलाबु दारवं मृन्मयं वा गृह्णाति ॥ ३ ॥

स्नात्वेत्यादि। भिक्षापात्रं कांस्यवर्जं तैजसं वेति केचित्।

प्रणवाद्याभिः पृथक् पृथक् समस्तव्याहृतिभिः तर्पयामीति देवेभ्यो जलेऽद्भिस्तर्पयित्वा आद्याभिश्चतसृभिः 'स्वधा' इति पितृभ्यस्तर्पयेत् ॥ ४ ॥

प्रणवाद्याभिरित्यादि। ओं भूस्तर्पयामि इति देवतर्पणक्रमः। ओं भूः स्वधा तर्पयामीति पितृतर्पणम्।

'उद्वयं तमसः' इत्यादित्यमुपतिष्ठेत ॥ ५ ॥

जलाञ्जलिं विसृज्य अभयं सर्वभूतेभ्यो दद्यात् ॥ ६ ॥

अध्यात्मरतो यतिर्भिक्षाशी नियमयमांश्च समाचरन् संयतेन्द्रियो ध्यानयोगेन परमात्मानमीक्षेत ॥ ७ ॥

अध्यात्मरत इत्यादि। सन्न्यासिनां सर्वेषामयमेव धर्मः।

इति वाजपेयीये नवमप्रश्ने (तृतीयः पटलः) अष्टमः खण्डः।

## अथ नवमः खण्डः

—xox—

धर्म्यं सदाचारम् ॥ १ ॥

निवीती दक्षिणे कर्णे यज्ञोपवीतं कृत्वोत्कुटिकमासीनः अहन्युदङ्मुखो रात्रौ दक्षिणामुखः तृणैरन्तरिते मूत्रपुरीषौ विसृजेत् ॥ २ ॥

निवीतीत्यादि । उत्कुटिकमासीनः — ऊर्ध्वजानुरासीनः । तृणैरन्तरिते देशे न केवलं भूम्याम् ।

नद्यां गोष्ठे पथि छायायां भस्मन्यप्सु कुशे दर्भे वा नाचरेत् ॥ ३

नद्यां वेत्यादि । वा शब्दस्सर्वत्र संबद्ध्यते ।

गोविप्रोदकाग्निवाय्वर्क तारेन्दूनपश्यन् कुर्यात् ॥ ४ ॥

वामहस्तेन लिंगं संगृह्योत्थायोदकस्य पार्श्वे तथाऽऽसीनो ब्रह्मचारी गृहस्थोऽपि शिश्ने द्विः हस्तयोश्च द्विर्द्विः गुदे षट्कृत्वो मृदं दत्वोद्धृतैरेव जलैः शौचं कुर्यात् ॥ ५ ॥

वामहस्तेनेत्यादि । मृदं—मार्गदेवालयवल्मीकमूषिकोत्थवहिश्चारसमीपबिलान्तस्स्थादिमृदं वालुकाञ्च वर्जयित्वा अन्यत्र शुद्धां मृदं शौचार्थमादाय नदीतटाककूपानां पूर्वालाभे परं जलाशयमभिगम्य तदुदकसमीपे आसीनः । उद्धृतैरेव जलैः — अन्तर्जले शौचनिषेधात् ।

करं वामं दशकृत्वः करावुभौ च तथा मृदाऽद्भिः प्रक्षालयेत् ॥ ६ ॥

वनस्थस्य भिक्षोश्चैतत् द्विगुणं भवति ॥ ७ ॥

रात्रौ यथोक्तार्धं वा रेतोविसर्गे मूत्रवच्छौचं कुर्यात् ॥ ८ ॥

रेतसस्त्रिरित्येके ॥ ९ ॥

सोपवीती प्राङ्मुख उदङ्मुखो वा अन्यत्रासित्वा मृदाम्बुना पूर्ववत्पादौ प्रक्षाल्याचम्य मन्त्रेणाचामति ॥ १० ॥

सोपवीतीत्यादि । मन्त्रेण — आपः पुनन्त्वितिमन्त्रेण ।

इति वाजपेयीये नवमप्रश्ने नवमः खण्डः ।

## अथ दशमः खण्डः

ब्राह्मणो हृद्गाभिः क्षत्रियः कंठगाभिः वैश्यस्तालुगाभिरद्भिराचामेत् ॥ १ ॥

आत्मानं प्रोक्ष्य प्रत्यर्कमपो विसृज्य अर्कं पर्येति ॥ २ ॥

आत्मानमित्यादि । प्रत्यर्कमपो विसृज्य - जलमञ्जलिना गृहीत्वा गायत्र्याभिमन्त्र्य आदित्याभिमुखमपो विसृज्य त्रिः 'असावादित्यो ब्रह्मे'ति सूर्यं प्रदक्षिणं करोति ।

उदकस्याग्नेर्वामपार्श्वे प्राणानायम्य प्रत्येकमोंकारादि सप्तव्याहृतिपूर्वां गायत्रीमन्ते सशिरस्कां त्रिर्जपेत् ॥ ३ ॥

स प्राणायामः ॥ ४ ॥

त्रिरेकं वा प्राणायामं कृत्वा पूतः ॥ ५ ॥

शतं दशाष्टौ वा सावित्रीं जप्त्वा प्रातस्सन्ध्यामुपास्य नैशिकमाह्निकञ्चैनोऽपमृज्यते ॥ ६ ॥

द्विजातिस्सन्ध्योपासनहीनश्शूद्रसमो भवति ॥ ७ ॥

ब्रह्मचारी स्वनाम संकीर्त्याभिवादयेत् 'अहं भो' इति ॥ ८ ॥

श्रोत्रे संस्पृश्य गुरोः पादं दक्षिणं दक्षिणेन पाणिना वामं वामेन व्यत्यस्य जान्वोरापादमुपसंगृह्णन् आनतशीर्षोऽभिवादयति ॥ ९

'आयुष्मान् भव सौम्ये'त्येनं शंसेत् ॥ १० ॥

अनाशीर्वादी नाभिवन्द्यः ॥ ११ ॥

माता पिता गुरुर्विद्वांसश्च प्रत्यहमभिवादनीयाः ॥ १२ ॥

स्पष्टम् ।

इति वाजपेयीये (चतुर्थः पटलः) दशमः खण्डः ।

## अथ एकादशः खण्डः

—xox—

**अन्ये बान्धवा विप्रोष्य प्रत्यागत्याभिवन्द्याः ॥ १ ॥**

अन्य इत्यादि। विप्रोषणकाले प्रत्यागमनानन्तरञ्च अभिवन्दनं बान्धवविषये स्वविषये च समन्वेति।

**ज्येष्ठो भ्राता पितृव्यो मातुलः श्वशुरश्च पितृवत्पितृष्वसा मातृष्वसा ज्येष्ठभार्या भगिनी ज्येष्ठा च मातृवत् पूजितव्याः ॥ २ ॥**

ज्येष्ठ इत्यादि। पितृव्यादिषु अज्येष्ठत्वादि न वन्दने प्रतिबध्नाति। कनिष्ठोऽपि पितृव्यादिः पूज्यः। 'स्त्री पुंयोगे अभिवन्द्ये'ति गौतमः। 'पतिवयसः स्त्रियोऽभिवाद्या' इत्यापस्तंबः।

**सर्वेषां माता श्रेयसी ॥ ३ ॥**

**गुरुः पिता च श्रेयान् ॥ ४ ॥**

**परस्त्रियं युवतीमस्पृशन् भूमावाभिवादयेत् ॥ ५ ॥**

परस्त्रियमित्यादि। भूमौ पाणी निधायाभिवादयेत्। 'दशवर्षाधिकस्सखा पञ्चवर्षाधिकश्चारणः। त्रिवर्षाधिकः श्रोत्रियश्चाभिवाद्यः' इत्यापस्तंबः। 'ज्ञायमाने विशेषे वृद्धतरायाभिवाद्य'मिति। उन्नतासनस्थं गुरुं नाभिवादयेदासनमारुह्याभिवादयेत्। विषमगताय गुरवे नाभिवाद्यम्। अन्वारुह्याभिवादयीत। तत्र प्रत्युत्थायाभिवादनमित्यापस्तंबः। अशुचिं पादत्राणाधिरूढं शिरोवेष्टनयुक्तं कर्मकारञ्च नाभिवादयेत्। अप्रयतेन नाभिवाद्यं तथाऽप्रयताय चाप्रयतश्च न प्रत्यभिवदेत्।

'साष्टांगं प्रणमेद्धरिं गुरुजनानप्यंघ्रियुग्मं स्पृशेत्
तत्कल्पानभिवादयेदविदिताचारांस्त्रिवर्षाधिकान्।
मूर्खान् शीलनिराकृतानपि वयोवृद्धान् जयेत्युच्चरेत्
भीतश्चेदितरस्तु साधु कुशलं पृच्छेच्च नामोच्चरन् ॥

न्यूनं वा वयसा कनिष्ठपितरं पत्नीयुतं मातुलं
तद्वच्च श्वशुरं यतिं घटिकया ज्येष्ठं निजभ्रातरम् ।
आचार्यान्वयवेदशास्त्रनिपुणं वृद्धोऽपि नित्यं नमेत्
विप्रे प्रत्यभिवादनं प्रणमति स्वल्पेन शिष्ये सति ॥'

**वन्द्यानां वन्दनादायुर्ज्ञानबलारोग्यशुभानि भवन्ति ॥ ६ ॥**

**यज्ञोपवीतमेखलाजिनदण्डान् परेण धृतान् न धारयेत् ॥ ७ ॥**

**उपाकृत्यानालस्यश्शुचिः प्रणवाद्यं वेदमधीयानोऽमावास्यायां पौर्णमास्यां चतुर्दश्योः प्रतिपदोरष्टम्याश्च नाधीयीत ॥ ८ ॥**

उपाकृत्येत्यादि । अष्टम्योश्चेति । चकारादयनसंक्रमणमन्वादियुगादिप्रदोषकालशयनभोजनादिकालकाण्डोपकरणसमापनादयो लक्ष्यन्ते ।

**नित्यजपे होमे च अनध्यायो नास्ति ॥ ९ ॥**

**मार्जारनकुलमण्डूकश्वसर्पगर्दभवराहपश्वादिष्वन्तरागतेषु अहोरात्रं, सूतकप्रेतकयोराशौचे तावत्कालं तिस्रोऽष्टकासु गुरौ प्रेते च त्रिरात्रमनध्यायस्स्यात् ॥ १० ॥**

स्पष्टम् ।

इति वाजपेयीये नवमप्रश्ने एकादशः खण्डः ।

## अथ द्वादशः खण्डः

तद्भार्यापुत्रयोः स्वशिष्यस्य चोपरमे मनुष्ययज्ञे श्राद्धेऽग्नौ चैकाहमनध्यायस्स्यात् ॥ १ ॥

आपदार्त्योरप्रायत्ये शूद्रसोपानगमनेऽश्वारूढः प्रसारितपादो मूत्रपुरीषरेतोविसर्गे ग्रामे अन्तश्शवे सति अभक्ष्यान्नभोजने छर्दने श्मशानदेशे सन्ध्यास्तनिते भूकम्प दिग्दाहेऽग्न्युल्कानिपाते रुधिरोपलपांसुवर्षे सूर्येन्दुराहुग्रहणे च तत्तत्काले नाधीयीत ॥ २ ॥

आपदार्त्योरित्यादि । आपत् - विपत् । आर्तिः - पीडा । अभक्ष्यान्नभोजने यावदन्नं न जीर्यते तावदनध्यायः ।

> 'अनध्यायं प्रकुर्वीत भूकंपोत्पातदर्शने ।
> सोमसूर्यग्रहे चैव त्रिरात्रं वर्जयेत्तदा' ॥ इति मनुः ।

अत्र विस्तरः स्मृतिषु विस्तरेण द्रष्टव्यः ।

परत्रेह श्रेयस्करो वेदः तदध्येतव्यः ॥ ३ ॥

परत्रेत्यादि । इतरथा पापीयानल्पायुश्च भवेदिति योगीश्वरः ।

अन्ते विसृज्य प्रणवं ब्रवीति ॥ ४ ॥

अन्त इत्यादि । प्रणवं ब्रवीति — नारायणायार्पयति ।

लौकिकाग्नौ समिधो हुत्वा भिक्षान्नं मेधाप्रदं शुद्धं मौनी भुञ्जीत ॥ ५ ॥

पौषे माघे वा मासे ग्रामाद्बहिर्जलान्ते पूर्ववत् व्रतविसर्गहोमं हुत्वा स्वाध्यायमुत्सृज्य पक्षे शुक्ले वेदं कृष्णे वेदाङ्गञ्च यावदन्तं समधीत्य गुरोर्दक्षिणां दत्वा समावर्ती स्यात् ॥ ६ ॥

पौषे इत्यादि । पक्षे शुक्ल इत्यादि । अनध्यायतिथीर्विहाय ।

इति वाजपेयीये नवमप्रश्ने (पञ्चमः पटलः) द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

मध्याह्ने शुद्धे जले मृदाऽद्भिः पादौ हस्तौ च धावयित्वा आचम्यांगानि संशोध्य 'आपः पुनातु' इति जले निमज्जेत् ॥ १ ॥

मध्याह्न इत्यादि । माध्याह्निकस्नानं संकल्प्य आचम्य तिथ्यादिसंकीर्त्य पूर्वोक्तवज्जले निमज्जेत् ।

आचान्ते । वैष्णवैर्मन्त्रैः विष्णुं 'हिरण्यशृंग' मिति वरुणञ्च प्रणम्य अघमर्षणं कृत्वा 'इदमापश्शिवा' इति स्नायात् ॥ २ ॥

आश्रमिणश्चत्वारः स्नानं नित्यमेवं पूर्वोक्तविधिना काम्यं नैमित्तिकञ्च कुर्वन्ति ॥ ३ ॥

धौतवस्त्रेणाच्छाद्य पूर्ववदाचम्य प्रोक्ष्य आसीनस्तिष्ठन्वा कृतप्राणायामः सावित्रीं जप्त्वा आदित्यमुपतिष्ठेत ॥ ४ ॥

दक्षिणपाणिना तीर्थेन ब्राह्मेण भूपत्यादीन् दैवेन नारायणादीन् पैतृकेण पित्रादीन् अद्भिस्तर्पयित्वा ब्रह्मयज्ञं करिष्यन् नित्य 'मिषेत्वोर्जे'-त्यादि यथाक्रमं यजुस्संहितामाद्यां त्रीननुवाकान्वा स्वाध्यायं नैमित्तिकं 'ऋतञ्च सत्य' ञ्चेत्यादि सूक्तानि चतुर्वेदादिमन्त्रान्वाऽप्यधीयीत ॥ ५

सर्वयज्ञानामादिः ब्रह्मयज्ञः ॥ ६ ॥

तस्मादुपनयनप्रभृत्येव द्विजैः कर्तव्यः ॥ ७ ॥

नद्यां तीर्थे देवखाते सरसि तटाके सामान्ये वा स्नानं कुर्यात् ॥ ८ ॥

नद्यामित्यादि । स्नानसामान्यस्य (स्थानविचारे) उत्तरोत्तरात्पूर्वपूर्वस्य आदरणीयत्वद्योतनार्थमयं क्रमः ।

इति वाजपेयीये नवमप्रश्ने त्रयोदशः खण्डः ।

## अथ चतुर्दशः खण्डः

पारक्योदके मृत्पिण्डान् पञ्चोद्धृत्य स्नायात् ॥ १ ॥

पारक्येत्यादि । पारक्योदकं – स्नोक्योगार्थं पुरुषान्तरेण निर्मितं तटाकादि । उद्धृत्य – बहिः क्षिप्त्वा स्नायात् ।

कूपे तत्तीरे त्रिः कुंभेनाभिषिञ्चेत् ॥ २ ॥

कूप इत्यादि । कूपस्नानकाले त्रिवारं कुंभजलं कूपादुद्धृत्य बहिः विक्षिप्य पश्चात् जलमुद्धृत्य स्नायात् । कूपं घटोदकस्याप्युपलक्षणम् ।

उच्छिष्टो नग्नो वा न स्नायात् ॥ ३ ॥

उच्छिष्ट इत्यादि । उच्छिष्टः – अकृतशौचाचमनादिः ।

तथा न शयीत ॥ ४ ॥

आतुरोऽप्सु नावगाहयेत् ॥ ५ ॥

आतुरस्य स्नाने नैमित्तिके दशकृत्वो द्वादशकृत्वो वा तमनातुरो जलेऽवगाह्य आचम्य स्पृशेत् ॥ ६ ॥

ततस्स पूतो भवति ॥ ७ ॥

द्विकालं होमान्ते पादौ प्रक्षाल्याचम्य आसने प्राङ्मुखः प्रत्यङ्मुखो वा स्थित्वा चतुरश्रोपलिप्ते मण्डले शुद्धं पात्रं न्यसेत् ॥ ८ ॥

तत्रान्नं प्रक्षिप्य तत्पूजयति ॥ ९ ॥

द्वौ पादावेकं वा भूमौ निधाय प्रसन्नः 'ऋतन्त्वा सत्येन परिषिञ्चामि' इति सायं परिषिञ्चति, 'सत्यन्त्वर्तेन परिषिञ्चामि' इति प्रातः ॥ १० ॥

'अमृतोपस्तरणमसि' इत्याधावं पीत्वा विधिना प्राणाहुतीर्हुत्वा अन्नमनिन्दन्नश्नाति ॥ ११ ॥

भुक्त्वा 'अमृतापिधानमसि' इत्यपः पीत्वाऽऽचम्य आचामेत् ॥ १२ ॥

एकवासाः शयानस्तिष्ठन् अस्नानजपहोमी शुष्कपाद उदङ्मुखो वा नाश्नाति ॥ १३ ॥

भिन्नपात्रे अन्नं पर्युषितं शयनासनोत्सङ्गस्थं वा न भुञ्जीत ॥ १४

अञ्जलिना अपो न पिबेत् ॥ १५ ॥

अञ्जलिनेत्यादि । सोपानत्तिष्ठन् अकृताचमनः दक्षिणाभिमुख आस्येन वा एकहस्तेन वा पात्रमुद्धृत्य वा न पिबेत् ।

उच्छिष्टाशुच्यशौचिपतितैः स्पृष्टं सूतके प्रेतके चान्नञ्च नाश्नीयात् ॥ १६ ॥

उच्छिष्टेत्यादि । उच्छिष्टं – भुक्तशेषमन्नं भक्ष्यं वा । अशुचि – अमेध्यम । प्रमादादशने प्रायश्चित्तमाचरेत । उच्छिष्टोऽशुचीति पाठान्तरम् ।

इति वाजपेयीये नवमप्रश्ने चतुर्दशः खण्डः ।

## अथ पञ्चदशः खण्डः

-xox-

तिलसक्तुदधिलाजश्च रात्रौ न भक्ष्यम् ॥ १ ॥

तिलेत्यादि । अभक्ष्यसंग्रहमाह ।

अन्नं पर्युषितमाज्येन दध्ना वा युक्तं भोज्यम् ॥ २ ॥

कृमिकीटकेशयुतं पक्षिजग्धश्च भस्मादिभिः प्रोक्षितं शुद्धम् ॥ ३

श्वकाकाद्युपहते बह्वन्ने तस्मिन् पुरुषाशनमात्रं तत्रैवोद्धृत्य व्यपोह्य 'पवमानस्सुवर्जनः' इति भस्मजलैः प्रोक्ष्य दर्भोल्कया स्पर्शयित्वा गृह्णीयात् ॥ ४ ॥

प्रसूते अन्तर्दशाहे गोक्षीरं मदैकशफोष्ट्रस्त्रीणां पयश्च पलाण्डुकवकलशुनगृञ्जनविड्जमनुक्तं मत्स्यं मांसञ्च वर्जनीयम् ॥ ५ ॥

यज्ञशिष्टं मांसं भक्षणीयम् ॥ ६ ॥

उदक्या स्पृष्टं शूद्रानुलोमैः स्पृष्टं तेषामन्नञ्च वर्जयेत् ॥ ७ ॥

स्वधर्मानुवर्तिनां शूद्रानुलोमानामामं क्षुधितस्य संग्राह्यम् ॥ ८ ॥

सर्वेषां प्रतिलोमान्तरालव्रात्यानामामं पक्वञ्च क्षुधितोऽपि यत्नान्न गृह्णीयात् ॥ ९ ॥

तैः स्पृष्टिसंमिश्रं परपक्वञ्च सन्त्यजति ॥ १० ॥

नित्यं श्रुतिस्मृत्युदितं कर्म कुर्वन मनोवाक्कायकर्मभिः शनैः धर्मं समाचरतीति विज्ञायते ॥ ११ ॥

नित्यमित्यादि । मनोवाक्कायकर्मभिः — मानसमहिंसादिचिन्तनम् । वाचिकं — वेदाध्यनस्तोत्रजपादि । कायिकं — भगवदाराधनम् । शनैः — क्रमेण अभ्यासेन । धर्मं — उक्तं सदाचारं समाचरति । विध्यर्थोऽयं लकारः ।

अथ वानप्रस्थस्य, अग्ने प्रतीच्यां, तत्पत्नी च तथा, अग्न्यायतने प्रोक्ष्य, रात्रौ नाश्नीयात्, अथ संन्यासक्रमं, स्रुचिस्रुवेण, देवस्यत्वो, धर्म्यं सदाचारं, ब्राह्मणो हृद्गाभिः, अन्ये बान्धवाः, तद्भार्यापुत्रयोः, मध्याह्ने जले, पारक्योदकं मृत्पिण्डान्, तिलसक्तुलाजं चेति पञ्चदश ॥

इति वाजपेयीये नवमप्रश्ने (षष्ठः पटलः) पञ्चदशः खण्डः ।

॥ इति नवमः प्रश्नः ॥

# अथ दशमः प्रश्नः

(धर्मसूत्रे तृतीयः प्रश्नः)

## अथ प्रथमः खण्डः

गृहस्थाश्रमी द्वे यज्ञोपवीते वैणवं दण्डं कमण्डलुश्च धारयेत् ॥ १

स्नात्वा सभार्यो गृह्याग्नौ गार्ह्याणि कर्माणि श्रौताग्निषु श्रौतानि ॥ २ ॥

सायञ्च होमान्ते अतिथीनभ्यागतान् प्राशयित्वां मितं प्राश्य पत्न्या शयीत ॥ ३ ॥

आर्द्रपादः प्रत्यगुत्तरशिराश्च न स्वपिति ॥ ४ ॥

आर्द्रेत्यादि । चकारात् नग्नोऽशुचिर्वा न स्वपिति ।

ऋतुरात्रिषु स्वभार्यामुपगच्छेत् ॥ ५ ॥

आदौ त्रिरात्रमृतुमतीगमनसहाऽसनशयनानि वर्जयेत् ॥ ६ ॥

परदारान् न संगच्छेत् ॥ ७ ॥

परदारगमनादायुश्श्रीर्ब्रह्मवर्चसं विनश्यति ॥ ८ ॥

भार्यया सह नाश्नाति ॥ ९ ॥

अश्नन्तीं तां जृम्भमाणां नग्नाञ्च नावलोकयेत् ॥ १० ॥

असत्यवादं वर्जयति ॥ ११ ॥

असत्यात्परं पापं सत्यात्परो धर्मश्च नास्ति ॥ १२ ॥

सर्वप्राणिहितोऽद्रोहेणैव जीवेत् ॥ १३ ॥

शुद्धार्थवान् कुसूलधान्यः कुंभीधान्योऽश्वस्तनिको वा स्यात् ॥ १४

शुद्धार्थवानित्यादि । शुद्धार्थवान् – अनिंद्यकर्मार्जितवित्तः । कुसूल-धान्यः – कुसूलं धान्यसञ्चयार्थक्लृप्तलघुपात्रविशेषः, तत्परिमितधान्यवान् । कुंभी – पात्रविशेषः तत्परिमिताल्पतरधान्यवान् कुंभीपात्रः । अश्वस्तनिकः – एकदिनमात्रपर्याप्तधान्यवान् ।

**द्विजातिः पतितान्त्यजातान् न स्पृशेत् ॥ १५ ॥**

**उदयेऽस्तमये च सूर्यं नेक्षेत ॥ १६ ॥**

**देवगुरुविप्रघृतक्षीरदधिमृत्तोयशमिदर्भाग्निवनस्पतीन् प्रदक्षिणं कुर्यात् ॥ १७ ॥**

देवेत्यादि । देवोऽर्चाममाश्रौ भगवद्दिव्यमंगलविग्रहः, देवालयादिश्च । गुरवः – पित्रादयः । विप्राः – ब्राह्मणाः । घृतादयः – कुंभगताः लक्ष्यन्ते । अग्निः – औपासनादिः ।

इति वाजपेयीये दशमप्रश्ने प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः

स्नातकराजगुरुश्रेष्ठरोगिभारभृदन्तर्वत्नीनां पन्था देयः ॥ १ ॥

स्नातकेत्यादि । स्नातकः -- व्रती । राजा -- मण्डलाधिपः । श्रेष्ठः -- वयसा ज्ञानेन कर्मणा वा वृद्धः ।

वातार्करश्मिभिः पन्थानः शुद्ध्यन्ति ॥ २ ॥

परस्यासनशयनान्यदनानि नोपयुञ्जीत ॥ ३ ॥

अदत्तेषूपयुक्तेषु स्वपुण्यचतुर्थांशो जहाति ॥ ४ ॥

अन्योपयुक्तानि वस्त्रमाल्योपानच्छत्राणि नैव धारयेत् ॥ ५ ॥

अग्नौ पादं न तापयेत् ॥ ६ ॥

नैनं मुखेन धमेत् ॥ ७ ॥

न पादेन स्पृशेत् ॥ ८ ॥

अधः पादतो न कुर्यात् ॥ ९ ॥

अग्नावपि जलं वा देवालयेऽग्नौ जले च मूत्रपुरीषपूयशोणितरेतःश्लेष्मोच्छिष्टांगानिष्ठीवान न प्रक्षिपेत् ॥ १० ॥

नग्नां परस्त्रियं विण्मूत्रे च न पश्येत् ॥ ११ ॥

उच्छिष्टो देवार्कचन्द्रग्रहर्क्षतारान् नेक्षेत ॥ १२ ॥

देवगुरुस्नातकदीक्षितराजगोश्रेष्ठानां छायां नाक्रामेत् ॥ १३ ॥

इन्द्रधनुः परस्मै न दर्शयेत् ॥ १४ ॥

न वदेत् ॥ १५ ॥

स्वपन्तं नावबोधयति ॥ १६ ॥

एकोऽध्वानं न गच्छेत् ॥ १७ ॥

परक्षेत्रे चरन्तीं गां धयन्तं वत्सञ्च न वारयेत् ॥ १८ ॥

नैवाचक्षीत ॥ १९ ॥

जीर्णमलवासा न स्यात् ॥ २० ॥

जीर्णेत्यादि । 'न जीर्णमलवद्वासा भवेच्च विभवे सति' इति मनुः ।

इति वाजपेयीये दशमप्रश्ने द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः

अक्षैः क्रीडां प्रेतधूमं बालातपञ्च वर्जयेत् ॥ १ ॥

केशरोमतुषांगारकपालास्थिविण्मूत्रपूयशोणितरेतःश्लेष्मोच्छिष्टान् नाधितिष्ठेत् ॥ २ ॥

अमेध्यलिप्ते अंगे यावत्तल्लेपगन्धमनश्शंका न स्युः तावन्मृत्तोयैः शोधयेत् ॥ ३ ॥

पतितान्त्यजमूर्खाधार्मिकवैरिभिस्सार्धं न वसेत् ॥ ४ ॥

उच्छिष्टोऽशुचिर्वा देवगोविप्राग्नीन् न स्पृशेत् ॥ ५ ॥

देवान् वेदान् राजगुरुमातापितॄन् विद्वा(ंसंब्रा)ह्मणान् नावमन्येत ॥ ६ ॥

न निन्देत् ॥ ७ ॥

अवमन्ता निन्दकश्च विनश्यति ॥ ८ ॥

सर्वभूतकुत्सां ताडनञ्च न कुर्वीत ॥ ९ ॥

गुरुणा मातापितृभ्यां तत्पित्राद्यैः भ्रातृपितृमातुलाचार्यर्त्विगाद्यैः विवादं नाचरेत् ॥ १० ॥

सर्वशुद्धिषु पुरुषस्यार्थशुद्धिः स्त्रीशुद्धिरन्नशुद्धिश्च श्रेष्ठतमा स्यात् ॥

सर्वेत्यादि । अर्थशुद्धिः — अस्तेयादिना संपादितार्थवत्त्वम् । स्त्रीशुद्धिः — परदारगमनादिराहित्यम् । अन्नशुद्धिः — अभोज्यभोजनादिविरहः ।

द्रव्येषु रत्नसौवर्णरजताश्ममयान्यद्भिः शोधयति ॥ १२ ॥

अग्नौ वा स्पर्शयेत् ॥ १३ ॥

ताम्रत्रपुसीसायसाद्यान्याम्लवारिभिः दारुदन्तजातानि तक्षणात् धावनाद्वा यज्ञपात्राणि दक्षिणपाणिना मार्जनात् क्षालनाद्वा संशोध्यानि ॥

स्पष्टम् ।

इति वाजपेयीये दशमप्रश्ने तृतीयः खण्डः ।

## चतुर्थः खण्डः

चर्ममयानि संहतानि वस्त्राणि शाकमूलफलानि च प्रोक्षयेत् ॥ १

अल्पानि क्षालयेत् ॥ २ ॥

घृतादीनि द्रव्याण्युत्पूयोल्कया दर्शयेत् ॥ ३ ॥

कौशेयाविकान्यरुष्करैः, अंशुकपट्टानि श्रीफलैः, शंखशुक्तिगोशृंगाणि सर्षपैः सवारिभिः, मृन्मयानि पुनर्दाहेन, गृहं मार्जनोपलेपनाप्सेकैः, भूमिं खननाऽन्यमृत्पूरणगोवासकाद्यैः मार्जनाद्यैश्च शोधयेत् ॥ ४ ॥

गोतृप्तिकरं भूगतं तोयं दोषविहीनं सुपूतम् ॥ ५ ॥

वाक्शस्तं वारिनिर्णिक्तमदृष्टम् ॥ ६ ॥

वागित्यादि । वाचा शस्तं । निर्णिक्तं—रजकधौतं वस्त्रमनार्द्रमपि शुद्धम् । अदृष्टं सर्वं वस्तु शुद्धम् ।

योषिदास्यं कारुहस्तः प्रसारितपण्यश्च सर्वदा शुद्धम् ॥ ७ ॥

शकुन्युच्छिष्टं फलमनिन्द्यम् ॥ ८ ॥

मशकमक्षिकादिलीनं तद्विप्रुषश्च न दूष्याणि ॥ ९ ॥

वाय्वग्निसूर्यरश्मिभिः स्पृष्टं मेध्यम् ॥ १० ॥

आतुरे बाले पचनालये च शौचं न विचारणीयम् ॥ ११ ॥

आतुरेत्यादि । चकारात् उत्सवे तीर्थयात्रायां विवाहे ग्रामदाहे यागकाले च शौचं स्पृष्टिदोषादिकं न विचारणीयम् ।

यथाशक्ति स्यात् ॥ १२ ॥

विण्मूत्राभ्यां ब्रह्मापो न दूष्याः ॥ १३ ॥

परस्याचामतस्तोयबिन्दुभिः भूमौ निपत्योद्गतैः पादस्पृष्टैराचामयन् नाशुद्धिस्स्यात् ॥ १४ ॥

परस्येत्यादि। आचामयन् – पुनराचमनं कुर्वन् शुचिः स्यात्। अन्यत्र स्नानादेव शुचिः।

इति वाजपेयीये दशमप्रश्ने (प्रथमः पटलः) चतुर्थः खण्डः।

## अथ पञ्चमः खण्डः

—xox—

वानप्रस्थो नित्यस्वाध्यायी कुशेध्मादीनग्न्यर्थं, शाकमूलफलादीनशनार्थंश्च शुचौ जातानाहरेत् ॥ १ ॥

अन्याधीनमन्योत्सृष्टमशुचौ जातं गोरसञ्च वर्जयेत् ॥ २ ॥

अन्येत्यादि । कुशेध्मादीनां विशेषणम् । गोरसं—तक्रम् ।

कृष्टां भूमिं नाक्रामति ॥ ३ ॥

धान्यधनसञ्चयं न कुर्वीत ॥ ४ ॥

धान्येत्यादि । अहन्यहनि भोजनार्थादधिकं धान्यं धनं वा न सञ्चिनोति ।

वस्त्रं नाच्छादयेत् । ५ ॥

वस्त्रमित्यादि । वल्कलमेव वसीत ।

मधूक्तं तोयं मांसोक्ते पैष्टिकञ्च गृह्णाति ॥ ६ ॥

मधूक्त इत्यादि । प्रतिनिधिं गृह्णीयात् ।

सर्वभूतेषु दयालुः समः क्षान्तः शुचिः निरसूयकः सुखे निस्स्पृहः मङ्गल्यवान् ईर्ष्याकार्पण्यवर्जो मत्स्यादीन् दंशकान् सीरकृष्टजातानि कन्दमूलफलशाकादीनि च त्यजन् जटाश्मश्रुरोमनखानि धारयन् त्रिकालस्नानी धाराशयः वन्यैरेव चरुपुरोडाशैर्निर्वपेत् ॥ ७ ॥

पलंड्वादीन् निर्यासं श्वेतवृन्ताकं सुनिषण्णकं श्लेष्मातकं व्रजकलिं छत्राकं शिग्रु भूस्तृणं कोविदारं मूलक(न्द)ञ्च वर्जयति ॥ ८ ॥

मुनेस्सर्वं मांसं गोमांसतुल्यम् ॥ ९ ॥

धान्याम्लं सुरासमं भवति ॥ १० ॥

पूर्वसञ्चिताशनं पूर्वाणि वसनानि आश्वयुजे मासि त्यजति ॥ ११

पूर्वेत्यादि । पूर्वसञ्चितांस्त्यक्त्वा पुनः पूर्ववत्संगृह्णीयात् ।

वेदवेदान्ते(ङ्गे)न ध्यानयोगी तपस्समाचरति ॥ १२ ॥

अपत्नीको निरग्निरदारोऽनिकेतनो वृक्षमूले वसन् वनस्थाश्रमेषु गृहस्थानां गृहेषु वा भिक्षां भिक्षित्वा अम्बुपार्श्वे शुद्धे पर्णे प्राणयात्रामात्रमन्नं भिक्षुवदश्नाति ॥ १३ ॥

शरीरं शोषयन्नुत्तरमुत्तरं तीव्रं तपः कुर्यात् ॥ १४ ॥

स्पष्टम् ।

इति वाजपेयांगे दशमप्रश्ने पञ्चमः खण्डः ।

## अथ षष्ठः खण्डः

भिक्षुः स्नात्वा नित्यं प्रणवेनाऽऽत्मानं तर्पयेत् ॥ १ ॥

भिक्षुरित्यादि । स्नात्वा – त्रिषवणं – त्रिकालम् । भिक्षुभेदानां सर्वेषां स्नानादिविहितम् ।

तेनैव तं नमस्कुर्यात् ॥ २ ॥

षडवरान् प्राणायामान् कृत्वा शतावरां सावित्रीं जप्त्वा सन्ध्यामुपासीत ॥ ३ ॥

अप्पवित्रेणोत्पूताभिरद्भिराचामेत् ॥ ४ ॥

काषायधारणं सर्वत्यागं मैथुनवर्जनमस्तैन्यादीनप्याचरेत् ॥ ५

काषायेत्यादि । सर्वत्यागं -- स्नानशौचभिक्षाध्यानवर्जम् । त्यागेऽप्याचरणीयान्येतान्युच्यन्ते ।

असहायोऽनग्निरनिकेतनो निस्सञ्चयः सम्मानावमानसमो विवादक्रोधलोभमोहानृतवर्जी ग्रामाद्बहिर्विविक्ते मठे देवालये वृक्षमूले वा निवसेत् ॥ ६ ॥

चातुर्मास्यादन्यत्र एकाहादूर्ध्वमेकस्मिन् देशे न वसेत् ॥ ७ ॥

वर्षाः शरच्चातुर्मास्यमेकत्रैव वसेत् ॥ ८ ॥

वर्षा इत्यादि । 'प्रावृट्छरदृतू चातुर्मास्यम् ।

त्रिदण्डे काषायाप्पवित्रादिन् योजयित्वा कंठे वामहस्तेन धारयन् दक्षिणेन भिक्षापात्रं गृहीत्वा एककाले विप्राणां शुद्धानां गृहेषु वैश्वदेवान्ते भिक्षां चरेत् ॥ ९ ॥

**भूमौ वीक्ष्य जन्तून् परिहरन् पादं न्यसेत् ॥ १० ॥**

**अधोमुखस्तिष्ठन् भिक्षामाकिंक्षेत ॥ ११ ॥**

**अधोमुख** इत्यादि । नतशिराः स्त्रियोऽनवेक्ष्य गृहांकणे तिष्ठन् भिक्षामाकांक्षेत् ।

इति वाजपेयीये दशमप्रश्ने षष्ठः खण्डः ।

## अथ सप्तमः खण्डः

—xox—

गोदोहनकालमात्रं तदर्धं वा स्थित्वा व्रजेत् ॥ १ ॥

अलाभे अवमानेऽप्यविषादी लब्धे सम्मानेऽप्यसन्तोषी स्यात् ॥ २ ॥

द्रुतं विलंबितं वा न गच्छेत् ॥ ३ ॥

भिक्षाकालादन्यत्र परवेश्म न गन्तव्यम् ॥ ४ ॥

भिक्षितुं क्रोशादूर्ध्वं न गच्छेत् ॥ ५ ॥

भिक्षां चरित्वा तोयपार्श्वे प्रक्षालितपाणिपादः आचम्य 'उदुत्य' मित्यादित्याय 'अतो देवा' इति विष्णवे 'ब्रह्मजज्ञान'मिति ब्रह्मणे च भिक्षाग्रं दत्वा 'सर्वभूतेभ्य' इति बलिं प्रक्षिपेत् ॥ ६ ॥

प्राणाग्निहोत्रविधिना आत्मयज्ञं संकल्प्य प्राणयात्रामात्रमष्टौ ग्रासान्वा अश्नीयात् ॥ ७ ॥

कामं नाश्नाति ॥ ८ ॥

वस्त्रपूतं जलं पीत्वा आचम्याचामति ॥ ९ ॥

निन्दाक्रोशौ न कुर्वीत ॥ १० ॥

बन्धून् ज्ञातींस्त्यजेत् ॥ ११ ॥

वंशचारित्रं तपः श्रुतं न वदेत् ॥ १२ ॥

संगं त्यक्त्वा नियमयमी प्रियं सत्यं वदन् सर्वभूतस्याविरोधी समस्सदाध्यात्मरतो ध्यानयोगी नारायणं परं ब्रह्म पश्यन् धारणां धारयेत् ॥ १३ ॥

अक्षरं परं ब्रह्माप्नोति 'नारायणपरं ब्रह्मे' ति श्रुतिः ॥ १४ ॥

अक्षरमित्यादि । 'वेदान्तविज्ञान सुनिश्चितार्थाः' 'न कर्मणा न प्रजया धने' नेत्यादयः श्रुतयः,

'त्रिंशत्पूर्वान् त्रिंशदपरान् त्रिंशच्च परतः परान् ।
सद्यस्सन्न्यसनादेव नरकात्त्रायते द्विजः' ॥

इत्याद्याः स्मृतयश्च सन्न्यासविधिं प्रशंसन्ति ।

इति वाजपेयीये दशमप्रश्ने (द्वितीयः पटलः) सप्तमः खण्डः

## अथ अष्टमः खण्डः

सन्न्यासिनोऽनाहिताग्नेर्देहं मृतं पुत्रोऽन्यो वा तृणैरन्तरीकृत्य शुद्धैः ब्राह्मणैः यन्त्रेण वा मन्त्रीय समुद्रगायां नद्यां तीरे वा सैकते देशे सृगालादिभिरस्पृश्यं यथा, तथा अवटं खनति ॥ १ ॥

गायत्र्या स्नापयित्वा तया अवटे तत्रासयित्वा शाययित्वा वा दक्षिणे हस्ते वैष्णवैर्मन्त्रैस्त्रिदण्डं सन्न्यस्य मध्ये 'यदस्य पारे रजसः' इति शिक्यमप्पवित्रं चोदरे सावित्र्या भिक्षापात्रं गुह्यप्रदेशे 'भूमिर्भूमि' मिति काषायं मृद्ग्रहणीं कमंडलुश्च सन्न्यस्य पिदध्यात् ॥ २ ॥

तस्मिन् सृगालादिभिः स्पृष्टे तत्कर्ता पापीयान् भवति ॥ ३ ॥

आहिताग्नेः अग्नीनात्मन्यारोप्य सन्न्यासिनो मृतं देहं गायत्र्या स्नापयित्वा पूर्ववत् वाहयित्वा शुद्धे देशे निधाय लौकिकाग्नौ तदग्नीन् 'उपावरो' हेत्यवरोप्य 'पवित्रं ते' इति घृतक्षीरमास्ये प्रक्षिप्य पूर्ववत् त्रिदण्डादीन्विन्यस्य ब्रह्ममेधेन पितृमेधेन वा आहिताग्निमन्त्रैः तदग्नि-भिर्दहनमाचरति ॥ ४ ॥

तयोराशौचोदकबलिपिण्डदानैकोद्दिष्टादीन् नैव कुर्यात् ॥ ५ ॥

नारायणबलिं करोति ॥ ६ ॥

तद्दहनं खनित्वा पिधानं दहनं नारायणबलिं वा यः कुर्यात् सोऽश्वमेधफलं समाप्नुयात् ॥ ७ ॥

स्पष्टम्

इति वाजपेयीये दशमप्रश्ने अष्टमः खण्डः

## अथ नवमः खण्डः

अथ नारायणबलिम् ॥ १ ॥

व्याख्यास्याम इति शेषः ।

'नारायणादेव सर्वार्थसिद्धिः' इति । ब्राह्मणाद्यैर्नरैर्हतस्य आत्मघातिनः रज्जुशस्त्रोदकाशनिदंष्ट्रिपशुसर्पादिभिः सर्वपापमृतस्य अदाह्यानामन्येषां भिक्षोश्च एकादशदिनादूर्ध्वं महापातकिनां पञ्चानां द्वादशसंवत्सरादूर्ध्वं सपिंडीकरणस्थाने मृतकार्थमपरपक्षे द्वादश्यां श्रवणे वा करोति ॥ २ ॥

सर्वार्थसिद्धिरितीति । श्रुतिषु विज्ञायत इति शेषः ।

पूर्वेऽहनि द्वादश ब्राह्मणान् निमन्त्रयेत् ॥ ३ ॥

अपरेऽहनि विष्णोरालयपार्श्वे नदीतीरे गृहे वा अग्न्यायतनं कृत्वा आघारं जुहुयात् ॥ ४ ॥

अग्निं परिस्तीर्याग्नेर्वायव्यां विष्टरे दर्भेषु तद्रूपं सुवर्णं वा संस्थाप्य पुरुषं ध्यायन् 'ओं भूः पुरुष' मित्याद्यैः प्राङ्मुखं देवं नारायणमावाह्य आसनपाद्याचमनानि दद्यात् ॥ ५ ॥

पुरुषसूक्तेन स्नापयित्वा 'नारायणाय विद्महे' इत्यष्टाक्षरमन्त्रेण वा वस्त्रोत्तरीयाभरणपाद्याचमन पुष्पगन्धधूपदीपाक्षताचमनैरर्चयति ॥ ६

स्पष्टम् ।

इति वाजपेयीये दशमप्रश्ने नवमः खण्डः ।

## अथ दशमः खण्डः

केशवाद्यैर्द्वादशनामभिरद्भिस्तर्पयेत् ॥ १ ॥

अग्निं परिषिच्य सहस्रशीर्षाद्यैः विष्णोर्नुकाद्यैर्द्वादशनामभिश्च आज्यं चरुञ्च जुहुयात् ॥ २ ॥

अग्निमित्यादि । होमान्ते तर्पणं केचिदिच्छन्ति । तर्पणञ्च 'प्रेताय केशवं तर्पयामी'त्यादि ।

गुडाज्यफलयुक्तं पायसं हविर्विष्णुगायत्र्या देवेशाय निवेद्य पाद्याचमनीयं मुखवासं दद्यात् ॥ ३ ॥

अग्नेर्दक्षिणे दर्भेषूत्तराग्रेषु दक्षिणाद्यर्चयित्वा 'नारायणाय'–'सहस्रशीर्षाय'–'सहस्राक्षाय'–'सहस्रपादाय'–'परमपुरुषाय'–'परमात्मने'–'परंज्योतिषे' 'परब्रह्मणे'–'अव्यक्ताय'–'सर्वकारणाय–'यज्ञेश्वराय'–'यज्ञात्मने'–'विश्वेभ्यो देवेभ्यः'–'सर्वाभ्यो देवताभ्यः'–'साध्येभ्यः' इत्येतैर्नम इत्यन्तैः पायसं बलिं दत्वा आज्यमेभिर्जुहोति ॥ ४ ॥

अग्नेरित्यादि । मन्त्रेण तूष्णीं वा अर्चनादिकम् । नम इत्यन्तैरिति । पृथक् पृथक् नमइत्यन्तैर्नामभिरर्चनम्, बलिदानादिकं चतुर्थ्यन्तैः स्वाहान्तैश्च होमः ।

ब्राह्मणान् पादौ प्रक्षाल्याचम्य नववस्त्रोत्तरीयाभरणानि दत्वा पुष्पाद्यैः पूजयित्वा द्वादशमूर्तिं ध्यायन् उपदंश घृत गुडदधिफलयुक्तं श्वेतमन्नं भोजयित्वा यथाशक्ति सुवर्णं दक्षिणां ददाति ॥ ५ ॥

सहस्रशीर्षाद्यैः (पूजयित्वा) स्तुत्वा द्वादशनामभिः प्रणमेत् ॥ ६ ॥

अन्तहोमं जुहोति ॥ ७ ॥

अभीष्टां परमां गतिं स गत्वा विष्णोर्लोके महीयते ॥ ८ ॥

स्पष्टम् ।

इति वाजपेयीये दशमप्रश्ने (तृतीयः पटलः) दशमः खण्डः ।

## अथ एकादशः खण्डः

अथ चातुर्वर्ण्यसंकरेणोत्पन्नानामनुलोमप्रतिलोमान्तरालव्रात्यानामुत्पत्तिं नाम वृत्तिश्च ॥ १ ॥

ऊर्ध्वजातादधोजातायां जातोऽनुलोमः ॥ २ ॥

अधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः ॥ ३ ॥

ततोऽनुलोमादनुलोम्यां जातोऽन्तरालः ॥ ४ ॥

प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति ॥ ५ ॥

ब्रह्मणो मुखादुद्भूताः ब्राह्मणाः ब्राह्मण्यश्च ॥ ६ ॥

ब्रह्मर्षयः पत्न्यो बभूवुः। तेषां गोत्रोत्पन्नात् ब्राह्मणात् ब्राह्मण्यामसगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत् ॥ ७ ॥

विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलकः, जीवभर्तृकायां कुण्डश्च विप्रौ द्वौ निन्दितौ स्याताम् ॥ ८ ॥

तस्मादधो बाहुभ्यामुत्पन्नात् क्षत्रियात् क्षत्रियायां विधिवज्जातः क्षत्रियः शुद्धः ॥ ९ ॥

तयोरविधिकं गूढोत्पन्नः अशुद्धो भोजाख्यो नैवाभिषिच्यः ॥ १०

अपट्टबद्धो राज्ञस्सैनापत्यं करोति ॥ ११ ॥

शुद्धाभावे अपट्टबद्धो नॄन् पायात् ॥ १२ ॥

तद्वृत्तं राजवत् स्यात् ॥ १३ ॥

अधस्तादूरुभ्यामुत्पन्नात् वैश्यायां तथा वैश्यः शुद्धः ॥ १४ ॥

विधिवर्ज्जं मणिकारोऽशुद्धः। मणिमुक्तादिवेधशंखवलयकारी स्यात् ॥ १५ ॥

स्पष्टम्।

इति वाजपेयीये दशमप्रश्ने एकादशः खण्डः ॥

## अथ द्वादशः खण्डः

—xox—

अथ पद्भ्यामुत्पन्नात् शूद्रात् शूद्रायां न्यायेन शूद्रः शुद्धः ॥१॥

जारान्मालवको निन्दितः शूद्रोऽश्वपालकोऽश्वतृणहारी च ॥२॥

इत्येते चातुर्वर्णिकाः ॥ ३ ॥

तेषामेव संकरेणोत्पन्नास्सर्वेऽनुलोमाद्याः ॥ ४ ॥

ब्राह्मणात् क्षत्रियकन्यायां जातस्सवर्णोऽनुलोमेषु मुख्यः ॥५॥

अस्य वृत्तिराथर्वणं कर्म । अश्वहस्तिरथसंवाहनमारोहणं राज्ञस्सैनापत्यञ्च, आयुर्वेदकृत्यं वा ॥ ६ ॥

गूढोत्पन्नः अभिषिक्ताख्यः ॥ ७ ॥

अभिषिक्तश्चेत् नृपो भूयात् ॥ ८ ॥

(अष्टाङ्गं) आयुर्वेदं भूततन्त्रं वा संपठेत् ॥ ९ ॥

तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधानेन सर्वप्राणिहितं कुर्यात् ॥ १० ॥

ज्योतिर्गणनादिकवृत्तिर्वा ॥ ११ ॥

विप्राद्वैश्यायामंबष्ठः ॥ १२ ॥

कक्ष्याजीवी आग्नेयनर्तको ध्वजविश्रावकः शल्यचिकित्सी वा ॥ १३ ॥

जारात्कुंभकारः ॥ १४ ॥

कुलालवृत्तिर्नापितो नाभेरूर्ध्ववप्ता च ॥ १५ ॥

क्षत्रियात् वैश्यायां मद्गुः ॥ १६ ॥

श्रेष्ठित्वं प्राप्तो महावर्माख्यश्च वैश्यवृत्तिः क्षात्रं कर्म नाचरति ॥ १७ ॥

गूढादाश्विकः ॥ १८ ॥

अश्वक्रयविक्रयी स्यात् ॥ १९ ॥

इति वाजपेयीये दशमप्रश्ने (चतुर्थः पटलः) द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

—****—

विप्रात् शूद्रायां पारशवः ॥ १ ॥

भद्रकालीपूजनचित्रकर्माङ्गविद्यातूर्यघोषणमर्दनवृत्तिः ॥ २ ॥

जारोत्पन्नो निषादः ॥ ३ ॥

व्यालादिमृगहिंसाकारी ॥ ४ ॥

राजन्यतः शूद्रायामुग्रः ॥ ५ ॥

सुदण्ड्यदण्डनकृत्यः ॥ ६ ॥

जाराच्छूलिकः ॥ ७ ॥

शूलारोहणादियातनाकृत्यः ॥ ८ ॥

वैश्यतः शूद्रायां चूचुकः ॥ ९ ॥

क्रमुकतांबूलशाककाष्ठादिक्रयविक्रयी ॥ १० ॥

गूढात्कटकारः ॥ ११ ॥

कटकारी चेति ॥ १२ ॥

ततोऽनुलोमादनुलोमायां जातश्चान्तरालः ॥ १३ ॥

पितुर्मातुर्वा जातिं वृत्तिं भजेत ॥ १४ ॥

क्षत्रियाद्विप्रकन्यायां मन्त्रवज्जातस्सूतः ॥ १५ ॥

प्रतिलोमेषु मुख्योऽयं मन्त्रहीनोऽनुपनीतो द्विजधर्महीनः ॥ १६

अस्य वृत्तिर्धर्मानुबोधनं राज्ञोऽन्नसंस्कारश्च ॥ १७ ॥

जारेण मन्त्रहीनजो रथकारो द्विजत्वहीनः शूद्रकृत्यः अश्वानां पोषणदमनादिपरिचर्याजीवी ॥ १८ ॥

वैश्यात् ब्राह्मण्यां मागधः ॥ १९ ॥

शूद्रैरप्यभोज्यान्नः अस्पृश्यः सर्वबन्दी प्रशंसाकीर्तनगान-प्रेषणवृत्तिः ॥ २० ॥

शूद्रात् चक्री ॥ २१ ॥

लवणतैलविक्रेता स्यात् ॥ २२ ॥

इति वाजपेयीये दशमप्रश्ने त्रयोदशः खण्डः ।

## अथ चतुर्दशः खण्डः

वैश्यात् नृपायामायोगवस्तन्तुवायः ॥ १ ॥

पटकर्ता वस्त्रकांस्योपजीवी ॥ २ ॥

गूढाचारात्पुलिन्दः ॥ ३ ॥

आरण्यवृत्तिः दुष्टमृगसत्त्वघाती ॥ ४ ॥

शूद्रात् क्षत्रियायां पुल्कसः ॥ ५ ॥

कृतकां वार्क्षीं वा सुरां हत्वा पाचको विक्रीणाति ॥ ६ ॥

चोरवृत्तात् वेलवः ॥ ७ ॥

जंभननर्तनगानकृत्यः ॥ ८ ॥

शूद्रात् वैश्यायां वैदेहकः ॥ ९ ॥

शूद्रास्पृश्यस्तैरप्यभोज्यान्नो वन्यवृत्तिः अजमहिषगोपालः तद्रसविक्रयी ॥ १० ॥

चौर्यात् चाक्रिकः ॥ ११ ॥

लवणतैलपिण्याकजीवी ॥ १२ ॥

शूद्रात् ब्राह्मण्यां चण्डालः ॥ १३ ॥

सीसकालायसाभरणो वर्ध्रावद्धकण्ठः कक्षे झल्लारीयुक्तो यतस्ततस्सञ्चरत् सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति ॥ १४ ॥

ग्रामाद्दूरे बहिः स्वजातीयैः निवसेत ॥ १५ ॥

मध्याह्नात्परं ग्रामं न विशत्ययम् ॥ १६ ॥

प्रविशेच्चेत् राज्ञा वद्धयः ॥ १७ ॥

अन्यथा भ्रूणहत्यामवाप्नोति ॥ १८ ॥

अन्तरालव्रात्याश्च ॥ १९ ॥

अन्तरालेत्यादि – पूर्वमेवोक्ताः नात्र विशेषः इति शेषः ।

चूचुकाद्विप्रायां तक्षकः ॥ २० ॥

अस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारः अयस्कारः कांस्यकारो वा ॥ २१ ॥

क्षत्रियायां मत्स्यबन्धुः ॥ २२ ॥

मत्स्यबन्धी ॥ २३ ॥

वैश्यायां सामुद्रः ॥ २४ ॥

समुद्रपण्यजीवी मत्स्यघाती च स्यात् ॥ २५ ॥

इति वाजपेयीये दशमप्रश्ने चतुर्दशः खण्डः ।

## अथ पञ्चदशः खण्डः

अंबष्ठाद्विप्रायां नाविकः ॥ १ ॥

समुद्रपण्यमत्स्यजीवी समुद्रलंघनात् नावं प्लावयति ॥ २ ॥

क्षत्रियायामधोनापितः ॥ ३ ॥

नाभेरधोरोमवप्ता ॥ ४ ॥

मद्गोर्विप्रायां वेणुकः ॥ ५ ॥

वेणुवीणावादी ॥ ६ ॥

क्षत्रियायां कर्मकारः ॥ ७ ॥

कर्म(र्मार)कारी ॥ ८ ॥

वैदेहाद्विप्रायां चर्मकारः ॥ ९ ॥

चर्मजीवी ॥ १० ॥

नृपायां सूचिकः ॥ ११ ॥

सूचीवेधनकृत्यवान् ॥ १२ ॥

आयोगवाद्विप्रायां ताम्रः ॥ १३ ॥

ताम्रजीवी ॥ १४ ॥

नृपायां जातः खनकः ॥ १५ ॥

खननजीवी ॥ १६ ॥

खनकात् नृपायामुद्बन्धकः ॥ १७ ॥

शूद्रास्पृश्यो वस्त्रनिर्णेजकः ॥ १८ ॥

पुल्कसाद्विप्रायां रजकः ॥ १९ ॥

वस्त्राणां रजोनिर्णेजकः ॥ २० ॥

चण्डालाद्विप्रायां श्वपचः ॥ २१ ॥

चण्डालवत् चिह्नयुक्तो नित्यनिन्द्यः सर्वकर्मबहिष्कार्यो नगर्यादौ मलापोहकः श्मशाने वसन् हेयपात्रग्राही प्रेतबन्धकं (प्रेतमबन्धुकं) विसृजेत् ॥ २२ ॥

वध्यान् हत्वा तद्वस्त्रादीन् गृह्णीयात् ॥ २३ ॥

पराधीनाहारो भिन्नपात्रभोजी श्वमांसभक्षी चर्मवारवाणवाणिज्यकारी स्यात् ॥ २४ ॥

तस्मान्निकृष्टे सुते समुत्पन्ने पतितो नष्टो घोरान् नरकान् व्रजति ॥ २५ ॥

सत्पुत्रो नरकेभ्यस्त्रायकः पितॄन् पावयित्वा शुभान् नयति ॥ २६

तस्मात् ब्राह्मणाद्याः सवर्णायां विधिवत्पुत्रमुत्पादयेयुरित्याह भगवान् विखनाः ॥ २७ ॥

इति वाजपेयीये दशमप्रश्ने (पञ्चमः पटलः) पञ्चदशः खण्डः ।

गृहस्थाश्रमी – स्नातकराज – अक्षैः क्रीडां – चर्ममयसंहितानि – वानप्रस्थो – भिक्षुस्स्नात्वा – गोदोहकालमात्रं – सन्न्यासिनः – अथ नारायणबलिं – केशवाद्यैः – अथ चातुर्वर्ण्यसंकरेण – अथ पञ्चयां – विप्राच्छूद्रायां – वैश्यान्नृपायां – अम्बष्ठाद्विप्रायामिति पञ्चदश ॥

# अथ एकादशः प्रश्नः

(प्रवर प्रश्नः)

## अथ प्रथमः खण्डः

अथ ऋषिगोत्रप्रवरान् व्याख्यास्यामः ॥ १ ॥

विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकाश्यपानां सप्तर्षीणामगस्त्याष्टमानां यदपत्यं गोत्रं तस्मिन् गोत्रे वराणामृषीणां प्रवराणां प्रवरः ॥ २ ॥

प्रवरकाले यजमानस्य प्रवरं यथोक्तं होता चाध्वर्युश्च शंसति ॥ ३

तेषां विश्वामित्रकौशिकानां त्र्यार्षेयः प्रवरो भवति वैश्वामित्रदैवरात औदलेति (देवलेति) होता, उदलवत् (देवलवत्) देवरातवत् विश्वामित्रवदित्यध्वर्युः ॥ ४ ॥

रौक्षकाणां (रौकथ्यकानां) त्र्यार्षेयः वैश्वामित्ररौक्षक(रौकथ्य) रैवणेति होता, रेवणवत् रौक्षकवत् (रौकथ्यवत्) विश्वामित्रवदित्यध्वर्युः ॥ ५ ॥

वैश्वामित्रदैवश्रवसदैवतरसानां त्र्यार्षेयः वैश्वामित्रदैवश्रवसदैवतरसेति होता, देवतरसवत् देवश्रवोवत् विश्वामित्रवदित्यध्वर्युः ॥ ६ ॥

लोहितानां त्र्यार्षेयः वैश्वामित्राष्टकलौहितेति होता, लोहितवत् अष्टकवत् विश्वामित्रवदित्यध्वर्युः ॥ ७ ।

आजानां त्र्यार्षेयः वैश्वामित्रमाधुच्छन्दसाजेति होता, अजवन्मधुच्छन्दोवत् विश्वामित्रवदित्यध्वर्युः ॥ ८ ॥

कातानां त्र्यार्षेयः वैश्वामित्रकात्याक्षीलेति होता, अक्षीलवत् कतवत् विश्वामित्रवदित्यध्वर्युः ॥ ९ ॥

अघमर्षणकौशिकानां त्र्यार्षेयः वैश्वामित्राघमर्षणकौशिकेति होता कुशिकवदघमर्षणवत् विश्वामित्रवदित्यध्वर्युः ॥ १० ॥

इन्द्रकौशिकानां त्र्यार्षेयः वैश्वामित्रैन्द्रकौशिकेति होता कुशिकवदिन्द्रवत विश्वामित्रवदित्यध्वर्युः ॥ ११ ॥

पौरणानां द्व्यार्षेयः वैश्वामित्रपौरणेति होता, पूरणवत् विश्वामित्रवदित्यध्वर्युः ॥ १२ ॥

इति एकादशप्रश्ने प्रथमः खण्डः ॥

## अथ द्वितीयः खण्डः

भार्गवजामदग्न्यवत्स्यानां पञ्चार्षेयः सप्तार्षेयो वा भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता भार्गवच्यावनजामदग्न्यवात्स्याप्नवानौर्वैदलेति वा, जमदग्निवदूर्ववत् अप्नवानवत् च्यवनवत् भृगुवदित्यध्वर्युः विदलवदूर्ववत् अप्नवानवत वत्सवत् जमदग्निवत् च्यवनवत् भृगुवदिति वा ॥ १ ॥

आर्ष्टिषेणानां पञ्चार्षेयः भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति (भार्गवच्यावनाप्नवानैन्द्रार्ष्टिषेणेति) होता, अनूपवदार्ष्टिषेणवत् (आर्ष्टिषेणवत् अप्नवानवत् च्यवनवत् भृगुवदित्यध्वर्युः ॥ २ ॥

यास्कानां त्र्यार्षेयः भार्गववैतहव्य सावेदसेति होता, सवेदसवत् वीतहव्यवत् भृगुवदित्यध्वर्युः ॥ ३ ॥

(मित्रयुवानां) भृगूणां त्र्यार्षेयः भार्गववाध्र्यश्व दैवोदासेति होता, दिवोदासवत् वध्र्यश्ववत् भृगुवदित्यध्वर्युः ॥ ४ ॥

वैन्यानां त्र्योर्षेयः भार्गववैन्यपार्थेति होता, पृथुवत् वेनवत् भृगुवदित्यध्वर्युः ॥ ५ ॥

शौनकानामेकार्षेयः शौनकेति होता, शुनकवदित्यध्वर्युः ॥ ६ ॥

गार्त्समदानामेकार्षेयः गार्त्समदेति होता गृत्समदवदित्यध्वर्युः ॥ ७ ॥

इति एकादशप्रश्ने द्वितीयः खण्डः ॥

## अथ तृतीयः खण्डः

भारद्वाजानां त्र्यार्षेयः आंगिरसबार्हस्पत्यभारद्वाजेति होता भरद्वाजवत् बृहस्पतिवदंगिरोवदित्यध्वर्युः ॥ १ ॥

ऋक्षाणां (रौक्ष्यानां) पञ्चार्षेयः आंगिरसबार्हस्पत्य भारद्वाज वा(द)न्दन मातवचसेति होता मतवचोवत् वन्द(द)नवत् भरद्वाजवत् बृहस्पतिवत् अंगिरोवदित्यध्वर्युः ॥ २ ॥

गार्ग्याणां त्र्यार्षेयः आंगिरस शैन्य गार्ग्येति होता गर्गवत् शिनिवत् अंगिरोवदित्यध्वर्युः ॥ ३ ॥

विष्णुवृद्धानां त्र्यार्षेयः आंगिरस पौरुकुत्स त्रासदस्येति होता त्रसदस्युवत् पुरुकुत्सवत् अंगिरोवदित्यध्वर्युः ॥ ४ ॥

कण्वानां त्र्यार्षेयः आंगिरस आजमीढ काण्वेति होता कण्ववत् अजमीढवत् अंगिरोवदित्यध्वर्युः ॥ ५ ॥

हारीतानां त्र्यार्षेयः आंगिरस आंबरीष यौवनाश्वेति होता युवनाश्ववत् अंबरीषवत् अंगिरोवदित्यध्वर्युः ॥ ६ ॥

सांकृत्यनां त्र्यार्षेयः आंगिरस गौरुवीत सांकृत्येति होता संकृतिवत् गुरुवीतवत् अंगिरोवदित्यध्वर्युः ॥ ७ ॥

राथीतराणां त्र्यार्षेयः आंगिरस वैरूप राथीतरेति होता रथीतरवत् विरूपवत् अंगिरोवदित्यध्वर्युः ॥ ८ ॥

मौद्गल्यानां त्र्यार्षेयः आंगिरस भार्म्यश्व मौद्गल्येति होता मुद्गलवत् भर्म्यश्ववत् अंगिरोवदित्यध्वर्युः ॥ ९ ॥

इति एकादशप्रश्ने तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः

आंगिरसगौतमानां त्र्यार्षेयः आंगिरसऽऽयास्य गौतमेति होता गौतमवत् अयास्यवत् अंगिरोवदित्यध्वर्युः ॥ १ ॥

शारद्वतानां त्र्यार्षेयः आंगिरस गौतम शारद्वतेति होता शरद्वत् गौतमवत् अंगिरोवदित्यध्वर्युः ॥ २ ॥

कौमंडगौतमानां पञ्चार्षेयः आंगिरसौचथ्यकाक्षीवत गौतम कौमण्डेति होता कुमण्डवत् गौतमवत् कक्षीवतवदुचथ्यवत अंगिरोवदित्यध्वर्युः ॥ ३ ॥

दीर्घतमानां पञ्चार्षेयः आंगिरसौचथ्य काक्षीवत गौतम दैर्घतमेति होता दीर्घतमवत् गौतमवत कक्षीवतवत् उचथ्यवत् अंगिरोवदित्यध्वर्युः ॥ ४ ॥

कारेणुपालानां त्र्यार्षेयः आंगिरस गौतम कारेणुपालेति होता करेणुपालवत् गौतमवत् अंगिरोवदित्यध्वर्युः ॥ ५ ॥

औशनसगौतमानां त्र्यार्षेयः आंगिरस गौतम औशनसेति होता उशनसवत् गौतमवत् अंगिरोवदित्यध्वर्युः ॥ ६ ॥

वामदेवानां त्र्यार्षेयः आंगिरस गौतम वामदेवेति होता वामदेववत् गौतमवत् अंगिरोवदित्यध्वर्युः ॥ ७ ॥

इति एकादशप्रश्ने चतुर्थः खण्डः ।

## अथ पञ्चमः खण्डः

आत्रेयाणां त्र्यार्षेयः आत्रेयार्चनानस श्यावाश्वेति होता श्यावाश्ववत् अर्चनानसवत् अत्रिवदित्यध्वर्युः ॥ १ ॥

वाद्भुतकानां त्र्यार्षेयः आत्रेयार्चनानस वाद्भुतकेति होता वद्भुतकवत् अर्चनानसवत् अत्रिवदित्यध्वर्युः ॥ २ ॥

गाविष्ठिराणां त्र्यार्षेयः आत्रेयार्चनानस गाविष्ठिरेति होता गविष्ठिरवत् अर्चनानसवत् अत्रिवदित्यध्वर्युः ॥ ३ ॥

वामदेवानां त्र्यार्षेयः आत्रेयार्चनानस वामदेवेति होता वामदेववत् अर्चनानसवत् अत्रिवदित्यध्वर्युः ॥ ४ ॥

पौर्वातिथ्यानां त्र्यार्षेयः आत्रेय आर्चनानस पौर्वातिथ्येति होता पूर्वातिथिवत् अर्चनानसवत् अत्रिवदित्यध्वर्युः ॥ ५ ॥

इति एकादशप्रश्ने पञ्चमः खण्डः ।

## अथ षष्ठः खण्डः

—xox—

वासिष्ठानामेकार्षेयः वासिष्ठेति होता वसिष्ठवदित्यध्वर्युः ॥ १ ॥

(वासिष्ठानां त्र्यार्षेयः वासिष्ठशाक्त्यपाराशर्येति होता पराशरवत् शक्तिवत् वसिष्ठवदित्यध्वर्युः ॥)

कौण्डिन्यानां त्र्यार्षेयः वासिष्ठमैत्रावरुण कौण्डिन्येति होता कुण्डिनवत् मित्रावरुणवत् वसिष्ठवदित्यध्वर्युः ॥ २ ॥

औपमन्यवानां (रौपमन्यपानां) त्र्यार्षेयः वासिष्ठैन्द्रप्रमद भारद्वसवेति (रौपमन्यपेति) होता (रौपमन्यपवत्) भरद्वसववदिन्द्रप्रमदवद्वसिष्ठवदित्यध्वर्युः ॥ ३ ॥

पाराशर्याणां त्र्यार्षेयः वासिष्ठ शाक्त्य पाराशर्येति होता पराशरवत् शक्तिवत् वसिष्ठवदित्यध्वर्युः ॥ ४ ॥

इति एकादशप्रश्ने षष्ठः खण्डः ।

## अथ सप्तमः खण्डः

निध्रुवकाश्यपानां (काश्यपानां) त्र्यार्षेयः काश्यपावत्सार नैध्रुवेति होता निध्रुववत् अवत्सारवत् कश्यपवदित्यध्वर्युः ॥ १ ॥

रैफाणां (रैभपाणां) त्र्यार्षेयः काश्यपावत्सार रैफेति (रैभपेति) होता रेफवत् (रेभपवत्) अवत्सारवत् कश्यपवदित्यध्वर्युः ॥ २ ॥

शाण्डिल्यानां त्र्यार्षेयः काश्यपावत्सार शाण्डिल्येति होता शण्डिलवत् अवत्सारवत् कश्यपवदित्यध्वर्युः। शाण्डिल्य आवत्सार काश्यपेति वा कश्यपवत् अवत्सारवत् शण्डिलवदित्यध्वर्युः ॥ ३ ॥

दैवलानां त्र्यार्षेयः काश्यपासित दैवलेति होता देवलवत् असितवत् कश्यपवदित्यध्वर्युः। शाण्डिलासित दैवलेति वा देवलवत् असितवत् शण्डिलवदित्यध्वर्युः। दैवलावत्सार काश्यपेति वा कश्यपवत् अवत्सारवत् देवलवत् इत्यध्वर्युः। आसितावत्सार काश्यपेति वा कश्यपवत् अवत्सारवत् असितवदित्यध्वर्युः ॥ ४ ॥

लौगाक्षिकाश्यपानां (लोकाक्षीणां) त्र्यार्षेयः अहर्वासिष्ठाः नक्तं काश्यपाः, तेषां वासिष्ठकाश्यपैः विवाहो न स्यात्। काश्यपावत्सार वासिष्ठेति (नैध्रुवेति) होता वसिष्ठवत् (निध्रुववत्) अवत्सारवत् कश्यपवदित्यध्वर्युः ॥ ५ ॥

इति एकादशप्रश्ने सप्तमः खण्डः।

## अथ अष्टमः खण्डः

आगस्त्यानां इध्मवाहानां त्र्यार्षेयः आगस्त्य दार्ढ्यच्युत ऐध्मवाहेति होता इध्मवाहवत् दृढच्युतवत् अगस्त्यवदित्यध्वर्युः ॥ १ ॥

सांभवाहानां त्र्यार्षेयः आगस्त्य दार्ढ्यच्युत सांभवाहेति होता संभवाहवत् दृढच्युतवत् अगस्त्यवदित्यध्वर्युः ॥ २ ॥

याज्ञवाहानां त्र्यार्षेयः आगस्त्य दार्ढ्यच्युत याज्ञवाहेति होता यज्ञवाहवत् दृढच्युतवत् अगस्त्यवदित्यध्वर्युः ॥ ३ ॥

सौमवाहानां त्र्यार्षेयः प्रवरो भवति आगस्त्य दार्ढ्यच्युत सौमवाहेति होता सोमवाहवत् दृढच्युतवत् अगस्त्यवदित्यध्वर्युः शंसति ॥ ४ ॥

विश्वामित्राद्यानामष्टानामृषीणां एकगोत्रोत्पन्ना ब्रह्मर्षयः समानर्षयो भवन्ति ॥ ५ ॥

विप्राणां समानर्षिगोत्र(त्रे)कन्याविवाहः प्रतिषिद्ध्यते ॥ ६ ॥

ब्रह्मर्षिवंश्यानां ब्राह्मणानामार्षेयगोत्रस्मृतिः नान्येषाम् ॥ ७ ॥

यस्मात् 'किं गोत्रो नु सौम्यासि' इति सत्यकामब्राह्मणम् ॥८

'ज्ञातुर्गौतमेच्छाया' छान्दोग्यश्रुतिः ॥ ९ ॥

तानूनपात्रा(दा)नां केषाञ्चित् क्षत्रियाणां त्र्यार्षेयः प्रवरो भवति, मानवै(ड्ड)ल पौरूरवसेति होता पुरूरवोवत् इल(ड्ड)वत् मनुवदित्यध्वर्युः ॥ १० ॥

केषाञ्चिद्वैश्यानां त्र्यार्षेयः प्रवरो भवति, बा(भा)लन्धव वात्स प्रीतिमांकिलेति होता मांकिलवत् वत्सप्रीतिवत् च(भ)लन्धववदित्यध्वर्युः ॥ ११ ॥

तानूनपा(द)तान्येषां सर्वेषां क्षत्रियाणां वैश्यानाञ्च पुरोहित-गोत्रप्रवरः प्रवरो भवतीत्याह भगवान् विखनाः ॥

अथ ऋषिगोत्रप्रवरान् भार्गवजामदग्न्यवात्स्यानां भारद्वाजानां आंगिरसगौतमानां आत्रेयाणां वासिष्ठानां निध्रुवकाश्यपानां आगस्त्यानामिध्मवाहानामित्यष्टौ ॥

इति एकादशप्रश्ने अष्टमः खण्डः ।

॥ प्रवरसूत्रं समाप्तम् ॥

# अनुबन्धः

—xox—

सूले चतुर्थप्रश्ने दशमखण्डविवरणावसरे 'षडंगुलादहीनं तद्रूपं कल्प-य' तीति सूले अयं ग्रन्थः व्याख्यात्रा संगृहीतः । द्रमिडभाषया अयं ग्रन्थः परिवृत्तश्च । तत्र द्रामिडग्रन्थभागं विहाय संस्कृतग्रन्थोऽत्रनिविष्टः ।

## आगस्त्यसकलाधिकारः–प्रथमाध्यायः ।

सकलनिष्कलमिश्रविभागतः
त्रिविधमेव वपुः परमेष्ठिनः ।
विधिमिमं सकलस्य यथोदितं
शशिधरेण तथा कथयाम्यहम् ॥ १ ॥

तदचलञ्च चलं द्विविधं वपुः
सुतरुसन्मणिधातुशिलासुधम् ।
विविधलोहमृदुत्तमशर्करा-
विरचितं स्वयमष्टविधं भवेत् ॥ २ ॥

पार्थिवं शार्करं सौधं बेरं स्थावरमिष्यते ।
चलाचलं शिलादारुधातुजं रत्नलोहजम् ॥ ३ ॥

चलमेवं प्रयुञ्जीयादाभासं धातुजं भवेत् ।
चित्रार्धं सौधजञ्चान्यच्चित्रं चित्रार्धमेव वा ॥ ४ ॥

चित्रं सर्वाङ्गदृष्टं स्यादर्धमर्धाङ्गदर्शनम् ।
निम्नोन्नतविहीनेन पटभित्त्यादिकल्पनात् ॥ ५ ॥

चित्राभासमिदं प्रोक्तं फलं श्रेष्ठान्तराधमम् ।
सोमास्कन्देश्वरश्चेन्दुशेखरं वृषवाहनम् ॥ ६ ॥

नटेश्वरं तथा गङ्गाधरं तु त्रिपुरान्तकम् ।
कल्याणसुन्दरश्चार्धनारी पाशुपतं तथा ॥ ७ ॥

कंकालं केशवार्धञ्च भिक्षाटनमतः परम् ।
चण्डेशानुग्रहं दक्षिणेशं कालविनाशनम् ॥ ८ ॥

लिंगोद्भवञ्च मूर्तीनां भेदाः षोडशधा भवेत् ।
एतेषां प्रतिरूपाणां मानकल्पमथोच्यते ॥ ९ ॥

लिंगमानञ्च गर्भञ्च द्वाराधिष्ठानपादकम् ।
हस्तमानञ्च तालञ्च यजमानोदयेन च ॥ १० ॥

मूलबेरांगुलं प्रोक्तं मानमात्रांगुलं तथा ।
मानन्तु रुद्रभेदं स्यात् तद्भेदं बहुधा भवेत् ॥ ११ ॥

पूर्णांशोभयतारनाहसदृशञ्चाष्टद्वयांशं भवेत्
    तद्भागेन गुणेषुधातुनवरुद्रांशाधि (कांशो)कं वोदयम् ।
हीनं वापि समेन मानमुदितं संख्या त्रयस्त्रिंशतिः
    बेराणां हि शिवांशमानवशतः स्वायंभुवे मानवे ॥ १२ ॥

गर्भे नन्दविभाजिते नवविधं गर्भप्रमाणं भवेत्
    शुद्धद्वारसमञ्च पादरहितं पादाधिकं व्यन्तरे ।
वेदांशं विभजेन्नवोदयमिदं द्वारप्रमाणं तथाऽ
    धिष्ठानांघ्रिवशात्प्रमाणमुदितं चाष्टादशोच्चं विदुः ॥ १३ ॥

एकहस्तप्रमाणेन हस्तैकेन प्रवर्धनात् ।
नवहस्तान्तमुत्सेधं नवधा हस्तमानकम् ॥ १४ ॥

एकतालं समारभ्य तालैकेन प्रवर्धनात् ।
नवतालान्तमुत्तुंगं नवधा तालमानकम् ॥ १५ ॥

यजमानसमोत्तुंगं नेत्रान्तञ्चास्यसीमकम् ।
हन्वन्तं बाहुसीमान्तं स्तनान्तं हृदयान्तकम् ॥ १६ ॥

सप्तमानमिदं ज्ञेयं यजमानवशाद्विदुः ।
लिंगे स्वायंभुवे मूर्ध्नि मानं वारादिनिश्चितम् ॥ १७ ॥

न विद्यते चेदुत्तुंगं शिरसा सह मनकम् ।
नाहतारं तथा स्थूलं देशे संग्राह्य कल्पयेत् ॥ १८ ॥

लिंगांशोदयतुंगन्तु चतुर्विंशच्छतं कुरु ।
तदेकमंगुलं ज्ञात्वा मूलबेरांगुलं मतम् ॥ १९ ॥

यन्मूलबेरांगुलमानमात्रप्रमाणमुक्तं प्रतिमादितुंगम् ।
तत्संख्यया चायशुभादियोगं विधेयमन्यत्र विधेयमार्यैः ॥ २० ॥

षट्सप्तकाष्टयवतारविहीनमध्यं
चोत्कृष्टकं त्रिविधमंगुलमानमन्यत ।
शाल्यायतं त्रिगुणसार्धचतुर्गुणन्तु
मानांगुलं रसविधं विधिना विदध्यात् ॥ २१ ॥

यजमानदक्षिणे हस्ते मध्यमांगुलिमध्यमे ।
पर्वदीर्घं ततं वापि मालं मात्रमितीष्यते ॥ २२ ॥

मानवे निष्कले बेरे शिरोमानं विनोदयम् ।
संग्राह्य मानं निश्चित्य कल्पयेत्सकलस्य तु ॥ २३ ॥

सप्तांगुलं समारभ्य द्विद्व्यंगुलविवर्धनात् ।
त्रयोविंशच्छतान्तञ्च मानं स्यात् त्रिभिरंगुलैः ॥ २४ ॥

मात्रांगुलैः गृहार्चानां प्रतिमानाञ्च नान्यथा ।
त्रिष्वंगुलिप्रमाणेषु जात्यंशन्तु न रोपयेत् ॥ २५ ॥

सामान्यं सर्वजातीनां तन्मानेष्वायनिश्चयः ।
अन्यमानन्तु संग्राह्यं तत्प्रमाणविशेषतः ॥ २६ ॥

अष्ट षट् द्व्येकपंक्त्यूर्ध्वे वेदद्वियुगषड्विधम् ।
भागं कृत्वैकभागेन युक्तं जात्यंशकोन्नतम् ॥ २७ ॥

भूसुरादि चतुर्णान्तु मानमृक्षक्रमाद्विदुः ।
अष्टाभिर्वर्धिते ऋक्षहृते चे द्दक्षमिष्यते ॥ २८ ॥

तत्तज्जातिदिनं प्रोक्तं तद्दिनं सर्वसंयुतम् ।
शुभमानं न युक्तं चेत् राजग्रामादिवास्तुषु ॥ २९ ॥

तदुत्सेधं पंक्तिपंक्त्या भजेत्पञ्चषडन्तकम् ।
भागैकं वर्धयेद्यावत् शुभायादिसुसंभवम् ॥ ३० ॥

तन्मानं देवमानं स्यात् पादादुष्णीषसीमकम् ।
तेनोऽष्टनन्दवसुनन्दचतुर्विवृध्ध्यया
हृत्वाऽष्टमं मुनिदिनेशदशप्रवेशैः ।
शिष्टं हि योनिदिनवारधनव्ययांश
केत्वश्विभानुबहुलाधवतस्कराद्याः ॥ ३१ ॥

ध्वजहरिवृषमेभा योनयस्ते शुभास्स्युः
जननयुगलवेदत्वष्टनन्दाः शुभर्क्षाः ।
सितगुरुशशिबुधानां वारमुख्यांशकाख्याः
द्वयमशुभशुभं स्यात्कर्तृजन्मादिसंख्या ॥ ३२ ॥

शिष्टं विना समं क्षीणे आयादिः शोभनं विदुः ।
सौरवारादिसंयुक्तं विशाखादि चतुश्चतुः ॥ ३३ ॥

वियोगं मरणं नाशममृतं योगमिष्यते ।
गणन्त्वसुरमानुष्यं वर्जयेच्छुभमन्यथा ॥ ३४ ॥

इत्यागस्त्ये सकलाधिकारे मानसंग्रहविशेषो नाम प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः

उष्णीषात्पादपर्यन्तं गृहीतोदयमानकम् ।
सवेदवेदबाणद्वादशाष्टार्धाधिकं भवेत् ॥ १ ॥

तदंशं देहमात्रं स्यात् तन्मात्रे दशभाजिते ।
यवास्यैकन्तु तन्मात्रैश्चांगमानं प्रमीयते ॥ २ ॥

यवत्रयांशमुष्णीषतुंगं तस्मात् त्रियंशकम् ।
केशान्तन्तु ततोऽधोऽक्षिवर्मद्वयसमागमम् ॥ ३ ॥

नासापुटावसानञ्च ततो हन्वन्तमानकम् ।
युगांशं त्रियवं तस्मादर्धांशं गलमानकम् ॥ ४ ॥

यवहीनचतुर्भागं कंठं रुद्रयवाधिकम् ।
भान्वंशं हृत् ततो नाभिः नाभेर्मेढ्रस्य मूलकम् ॥ ५ ॥

समं तस्मादधश्चोरुर्नक्षत्रांशं युगांशकम् ।
अंगुष्ठात् पाणिपर्यन्तं तलं सप्तदशांगुलम् ॥ ६ ॥

हिक्काधो ऋक्षभागं स्यात् बाहुः कोर्परकं द्वयम् ।
सैकवेदेषु भागं स्यात् प्रकोष्ठं त्रयोदशार्धकम् ॥ ७ ॥

मध्यांगुल्यग्रपर्यन्तं तलं तिर्यङ्मुखस्य तु ।
भानुभागं नवांशं स्यात् ग्रीवाग्रं ग्रीवमूलकम् ॥ ८ ॥

त्रिन्यर्धं बाहुसीमान्तं चत्वारिंशार्धमात्रकम् ।
चतुष्पञ्चद्वयोपेतं कक्षान्तरमुदाहृतम् ॥ ९ ॥

सार्धवेदेषुभागं स्यात् स्तनरोहितदेशके ।
हृदयावधि तारं स्यात् सार्धं त्रित्रिद्वयांशकम् ॥ १० ॥

मध्यं द्विरष्टभागं स्यात् हृदयावधि तारवत् ।
श्रोणीतारं कटीतारं विंशांशञ्चोरुमूलकम् ॥ ११ ॥

जंघामूलं द्विवेदांशं जंघामध्यं षडर्धकम् ।
नलका चतुर्यवोपेता वेदांशा स्याद्यवाधिका ॥ १२ ॥

पञ्चांशं कुक्षिगुल्फान्तं वेदार्धांशं तलोच्छ्रयम् ।
पार्ष्णिश्च प्रपदं तारं षडंशं षड्यवाधिकम् ॥ १३ ॥

(षडंशं तलाग्रविस्तारं वेदांशं द्वियवाधिकम्)
अंगुष्ठस्यायतं तारं यवोपेतद्वियंशकम् ।
तस्यार्धं नखविस्तारं पादोनायतवर्तुलम् ॥ १४ ॥

मुखोन्नतांगुलं पार्श्वद्वयं मुखं (?) समांसलम् ।
त्रियवोपेतवेदांशं त्रियंशं षड्यवाधिकम् ॥ १५ ॥

यवोपेतत्रयांशश्च व्यर्धांशश्चांगुलायतम् ।
प्रदेशिन्यादिविस्तारं नव सप्तार्धसप्त षट् ॥ १६ ॥

सपादाष्टांशकं बाहुमध्यं तारं तु कोर्परम् ।
मुनिभागं प्रकोष्ठश्च बाणार्धांशं त्रियर्धकम् ॥ १७ ॥

मणिबन्धं त्रयं सप्तमात्रन्तु तलदीर्घकम् ।
षडंगुलार्धकं मध्यमातलदीर्घं प्रशस्यते ॥ १८ ॥

अनामिका सद्वियवं शरांशं तद्वदायतम् ।
प्रदेशिनीचतुर्भागं पादांगुष्ठकनिष्ठिके ॥ १९ ॥

एतदायामविस्तारमंगुष्ठादीनि वक्ष्यते ।
सपादांशकमंशश्च यवांशश्चांशषड्यवम् ॥ २० ॥

मूलाग्रवृद्धिक्षपणं षोडशांशेऽशमिष्यते ।
अग्रतारेऽग्निभागेऽक्षिनखतारं तदायतम् ॥ २१ ॥

तत्पादादेकमन्यांशं द्विधा पार्श्वद्वयोर्भवेत् ।
नखायामद्वयश्चाग्रपर्वदीर्घं प्रशस्यते ॥ २२ ॥

अंगुष्ठमूलपर्वन्तु सयवद्व्यंशमिष्यते ।
तर्जनीमूलपर्वन्तु अनाम्न्याश्च द्विर्यवाकम् ॥ २३ ॥

पादोनत्र्यंशकं मध्यमूलपर्वकनिष्ठिके ।
अग्रं पञ्चयवोपेतं मूलपर्वं विधीयते ॥ २४ ॥

मूलाग्रपर्वयोर्मध्यमानं मध्यस्थपर्वकम् ।
अंगुष्ठे तु द्विपर्वं स्यात् अन्यांगुल्यस्त्रिपर्वकाः ॥ २५ ॥

बाणार्धांशं तलाग्रं स्यात् तारमध्ये षडंशकम् ।
तलमूलविशालन्तु तस्मादर्धांशमाधिकम् ॥ २६ ॥

अंगुष्ठमूलादूर्ध्वन्तु तर्जनीमूलपर्वकम् ।
त्र्यंशार्धांगुष्ठमूलन्तु चतुरंशं शुकोदरम् ॥ २७ ॥

मणिबन्धावसानन्तु घनं द्व्यर्धांशकं भवेत् ।
पार्ष्णिहस्तघनं त्र्यंशमग्रमंगुलवत् क्षयम् ॥ २८ ॥

अंगुलीनामधो द्व्यर्धांशकं तन्मांसलं तलम् ।
द्व्यंशेन पार्ष्णिहस्तं स्यात् शुकोदरविशालकम् ॥ २९

निम्नं मध्यं तलं तस्मिन् चक्रवत् सूक्ष्मरेखया ।
कर्णबन्धोर्ध्वमाने तु शिरोनाहः प्रशस्यते ॥ ३० ॥

अष्टत्रिंशांशकं कर्णबन्धात् पूर्वन्तु नाहकम् ।
द्वाविंशदंशकं पृष्ठे भान्वंशं शेषयोर्द्वयोः ॥ ३१ ॥

स्थाने कर्णस्थितिं सम्यक् शिरोमध्यात् पुरोगतम् ।
चतुर्दशार्धकं मूर्ध्नि तस्मात् कर्णद्वयोर्द्वयोः ॥ ३२

केशान्तात्तत् त्रिभागं स्यात् पुरोगं तत् त्रियंशकं
केशान्तादक्षिसूत्रस्य द्वयोर्मध्ये भ्रुवोः स्थितिः ॥

भ्रूमध्यमं समं कर्णस्योर्ध्वतुंगमथांगुलम् ।
भ्रूपुच्छावनतिर्वक्रं चापाकारं मनोहरम् ॥ ३४ ॥

भ्रुवोऽन्तरार्धमात्रं स्यात् त्राणांशन्तु भ्रुवायतम् ।
द्वियवं भ्रूमध्यविस्तारमग्रक्षयविशालकम् ॥ ३५ ॥

कनीनिकाया (?) अर्धं .... यवं तस्मात्सितांशकम् ।
षड्यवं कृष्णमध्ये तु अपरे तु सितांशकम् ॥ ३६ ॥

सममेव विजानीयाद्विस्तारं षड्यवाधिकम् ।
नेत्रान्तेऽर्धयवं रक्तं ज्योतिर्यवप्रमाणकम् ॥ ३७ ॥

द्वियवार्धयवोपेतमूर्ध्वाधोवर्मविस्तरम् ।
अक्षिद्व्यन्तरमानन्तु द्व्यंशं द्वियवाधिकम् ॥ ३८ ॥

नेत्राद्भ्रूपुच्छयोर्मध्यं पादोनद्व्यंशमिष्यते ।
सपादद्व्यंशकं तारं नासिकापुटबाह्यतः ॥ ३९ ॥

तदर्धञ्च तदर्धञ्च मध्यं मूलं क्रमाद्विदुः ।
गोजीमूलात्तु नासाग्रं तुंगं द्व्यंशं पुटोर्ध्वतः ॥ ४० ॥

नास्यग्रविपुलं रन्ध्रं यवमानं पुटस्य तु ।
बहुलन्तु (?) यवं तस्य द्वारं तिर्यग्विशालकम् ॥ ४१ ॥

सप्तार्धं यवमुत्सेधं श्रोतस्यो (?) यवपञ्चकम् ।
तिलपुष्पाकृतिर्नासापुटं निष्पावबीजवत् ॥ ४२ ॥

पुष्करोत्सेधमंशं स्यात् पादांशं मध्यविस्तरम् ।
अध्यर्धमेवमालंब्य नासाग्रं पुटसूत्रकम् ॥ ४३ ॥

वेदार्धयवदीर्घं तत् गोजीतारं तदर्धकम् ।
उत्तरोष्ठायतं वेदांशाधिकं द्वियवं भवेत् ॥ ४४ ॥

पालितारं यवं त्र्यर्धं यवं तस्य विशालकम् ।
आनुपूर्व्यात् क्षयं तारमास्त्रकान्तं तथाऽऽयतम् ॥ ४५ ॥

त्रिवक्रा चोत्तरा पाली तदेवास्यायतं मतम् ।
नवाष्टदशषट्सार्धयवैस्तारायतोन्नतम् ॥ ४६ ॥

अधरं पालिकासार्धं यवतारमथोऽङ्गुलम् ।
चिबुकाधरतुङ्गन्तु तस्माद्दशयवाधिकम् ।। ४७ ।।

हनुश्चिबुकनिम्नात्तु त्रियवोन्नतमिष्यते ।
षड्धायनविस्तारं हनुरायतवर्तुलम् ।। ४८ ।।

हनुसन्धेः कर्णबन्धान्तं ह्यन्तरं दशभागिकम् ।
हनोर्गलं सपादांशं द्व्यर्धांशं कण्ठवंशनम् ।। ४९ ।।

नेत्रान्तात्कर्णबन्धान्तं सप्तांशं कर्णविस्तृतम् ।
तदर्धं कर्णबन्धोर्ध्वमधस्तात्कर्णबन्धनम् ।। ५०

सयवद्व्यंशकं तस्माद्वेदांशार्धावलंबिनौ ।
नालौ पूर्वापरावर्धांशकौ सार्धांशकौ घनौ ।। ५१ ।।

नालान्तरं त्रिपादं स्यात् द्वगायामन्तु पिप्पली ।
तदर्धतारं पिंचूष्यायामं द्व्यर्धांशहीनकम् ।। ५२ ।।

विस्तीर्णञ्चाक्षिसूत्रात्तु कर्णस्रोतश्चतुर्यवम् ।
घनं सार्धयवं कर्णावर्तपालिश्चतुर्यवम् ।। ५३ ।।

पृष्ठकर्णात्तु सार्धांशं करपृष्ठे निट्टस्तथा (?) ।
कृकाटिकासमं कर्णतारमष्टांशकं परे ।। ५४ ।।

केशान्तात् पृष्ठकर्णोर्ध्वेऽर्धांशनिम्ना कृकाटिका ।
तस्याधोग्रीवमानं स्यात् त्रियवं चतुरंगुलम् ।। ५५ ।।

हिक्कासूत्रोपरि स्कन्धसन्धिर्वेदांशमुन्नतम् ।
कर्णबन्धादथ स्कन्धार्धांशं स्यात् स्कन्धसीमकम् ।। ५६ ।।

सप्तांशं बहुलौ स्कन्धौ हिक्का सूत्रान्तवत् क्षयः ।
कर्णाधस्तात्तु भागं स्यात् ककुन्मानमिति स्मृतम् ।। ५७ ।।

तस्मात्तु कटिसन्ध्यन्तं वंशमृक्षांशमायतम् ।
ककुन्मानादधो वेदांशं नीत्वा कक्षस्य विस्तरम् ।। ५८ ।।

नक्षत्रांशमथो बाहुः षड्यवन्तु रसांशकम् ।
अंसपीठं भवेत् स्कन्धसन्धिर्वेदांशमुन्नतम् ॥ ५९ ॥

स्तनसूत्रसमश्चांसफलका द्वादशांगुलम् ।
ककुद्बोधो दशांगुल्यं फलकान्तरमिष्यते ॥ ६० ॥

अधस्तात् त्र्यंशकं द्वारं वंशं द्व्यंशेन निम्नकम् ।
वंशपार्श्वोस्यसीमान्ते बृहत्यौ सप्तांशकौ घनौ ॥ ६१ ॥

बृहतीस्तनयोर्मध्ये घनं षोडशमात्रकम् ।
बृहत्यधः कटिसीमान्तमायामं सप्तभागिकम् ॥ ६२ ॥

घनं षोडशमात्रं तत् तदधोऽशोऽधिको भवेत् ।
त्रयोदशार्धभागन्तु कटिसन्धेः कण्टकान्तकम् (?) ॥ ६३ ॥

नवपंक्त्यर्धभागं स्यात् कटिबन्धस्य विस्तृतम् ।
नवार्धांशकविस्तारौ स्फिक्पिंडौ द्वौ सुवृत्तकौ ॥ ६४ ॥

चतुरर्धांशकावूरू मूलान्निर्गममिष्यते ।
मेढ्रसूत्रादधो वेदांशार्धौजघनलंबनौ ॥ ६५ ॥

सुवृत्तग्रीवनाहे तु द्विरेखापरिवेष्टिता ।
स्तनान्तरं तथा हिक्का हिक्कात् कक्षान्तरं तथा ॥ ६६ ॥

सार्धत्रयोदशांशं स्यात् कक्षात् कक्षान्तरानतिः ।
सपादद्व्यंशकं सार्धांशकं हृदयनिम्नकम् ॥ ६७ ॥

स्तनपीठोन्नतं द्व्यंशं सयवं स्तनवृत्तकम् ।
उन्नतं द्वियवं तारं सुवृत्तं स्तनचूचुकम् ॥ ६८ ॥

हिक्का द्वियवनिम्नं स्यात् अग्रो जत्रुः द्वियंशकम् ।
नाभिः प्रदक्षिणावर्ता तारं निम्नांशपादनम् (?) ॥ ६९ ॥

नाभेः सयवपञ्चांशो श्रोणिपार्श्वे षडंशकम् ।
त्र्यंशार्धांशं कटिश्रेण्याः शेषांशं मेढ्रपीठकम् ॥ ७० ॥

बाणांशद्वियवं दीर्घं नारं त्र्यंशयवाधिकम् ।
लिंगं मुष्कावलंबन्तु सपादं चतुरंशकम् ॥ ७१ ॥

तावदेव विशालं स्यात् तन्मूलश्चोरुबन्धनम् ।
त्रियंशं त्रियवाधिक्यं वेदांशं भानुमण्डलम् ॥ ७२ ॥

घनं त्र्यंशार्धकं पार्श्वबन्धन्तु चतुरंशकम् ।
पृष्ठजानून्नतिर्व्यर्धांशकं वेदविशालकम् ॥ ७३ ॥

मध्यपार्श्वद्वयोश्शेषमनुक्तमपि चिन्त्यताम् ।
संपूर्णनाहविपुलायतमांसलांगं
श्रृंगारसौम्यपरिपूर्णविशिष्टवक्त्रम् ।
तारायताक्षसमकोमलतुंगघोषं
सत्यादिमिश्रसकलं सकलेश्वरं स्यात् ॥ ७४ ॥

इत्यागस्त्ये सकलाधिकारे शिल्पे उत्तमदशतालकथनं द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः

बेरोच्छ्रयं द्वादशपङ्क्तिभागं
  कृत्वैकभागं सकलांगुलं स्यात् ।
तदष्टभागं यवमुक्तरीत्या
  श्रीमानमुक्तं समपंक्तितारे (?) ॥ १ ॥

उष्णीषात्केशपर्यन्तं चतुर्मात्रं प्रशस्यते ।
षड्यवाधिकभागन्तु तस्मान्निलान्तमुच्यते ॥ २ ॥

पुटान्तं चतुर्यवं भागं पड्यवं त्र्यंगुलं तथा ।
हन्वन्तन्तु ततः कण्ठभागमेवं विधीयते ॥ ३ ॥

कंठाद्भृत हृदयान्नाभिः नाभेर्योनिस्त्रयोदश ।
ऊरुः षड्विंशदंगुल्यं जानुर्भागं प्रशस्यते ॥ ४ ॥

ऊरुतुल्यं ततो जंघा भागं पादतलं भवेत् ।
तलायामं चतुर्भागं भागमंगुष्ठदैर्घ्यकम् ॥ ५ ॥

तर्जनी तत्समं शेषमर्धार्धांगुलहीनकम् ।
द्विरष्टसार्धपातालपातालरसभिर्यवैः (?) ॥ ६ ॥

अंगुष्ठादिकनिष्ठान्तं पादांगुल्यग्रविस्तरम् ।
तद्विस्ताराधविस्तारं नखं तस्य मुखोन्नतम् ॥ ७ ॥

पादाग्रस्य तु विस्तारं रसमात्रं प्रशस्यते ।
प्रपदं पञ्चांगुलं पार्ष्णि भूत्र (?) तारं कलाद्वयम् ॥ ८

अक्षिगुल्फान्तविस्तारं पञ्चमात्रं प्रशस्यते ।
नलकाभागविस्तारं जंघाषण्मात्रमिष्यते ॥ ९ ॥

जानु सप्तांगुलं तारं मुखमूरुविशालकम् ।
चतुर्विंशतिमात्रं स्यात्कटिविस्तारमुच्यते ॥ १० ॥

पीठं सप्तांगुलं तिर्यक् गुह्यमश्वत्थपत्रवत् ।
विपुलं मांसलं योनिः विंशच्छ्रोणिविशालकम् ॥ ११ ॥

षड्यवन्त्वतिगंभीरं नाभिरेखा दशांगुलम् ।
मध्योदरं स्तनाधस्तात् त्रयोदशार्धांगुलं मतम् ॥ १२ ॥

स्तनायत्तं नवांगुल्यं द्व्यंगुलं चूचुकं मतम् ।
चतुरर्धांगुलोत्तुंगमक्षमर्धांगुलं विदुः ॥ १३ ॥

उन्नतं द्वियवं विद्यात् कक्षयोरन्तरं मतम् ।
सप्तदशांगुलं प्रोक्तं बाहुपर्यन्तविस्तृतम् ॥ १४ ॥

एकत्रिंशतिमात्रं स्यात् द्विमुखं द्वियवाधिकम् ।
बाहुदीर्घं त्रियंगुल्यं कोर्परन्तु विधीयते ॥ १५ ॥

प्रकोष्ठं द्विनवांगुल्यं तलं सप्तांगुलायतम् ।
षडंशं मध्यमांगुल्यं पञ्चमात्रा तु तर्जनी ॥ १६ ॥

अनामिकासमं भागं कनिष्ठांगुष्ठदैर्घ्यकम् ।
( नवसप्तार्धं सप्तार्धन्तु यवैस्तारयथाक्रमम् ) (?)
वह्निभूतरसं धातुमात्रतारं यथाक्रमम् ॥ १७ ॥

मणिबन्धं कोर्परञ्च बाहुमध्यमूलं विधीयते ।
सप्तांगुलन्तु विस्तारं ग्रीवमेकादशांगुलम् ॥ १८ ॥

मुखविस्तारमेवं स्यात् कुक्कुटाण्डसमाकृति ।
केशान्तात् भ्रुवसूत्रान्तं द्व्यर्धांशं द्वियवकोल्कम् (?) ॥ १९ ॥

अक्षिसूत्रान्तमेवं स्यात् पुटादास्यान्तमिष्यते ।
यवाधिकांगुलं प्रोक्तं तदर्धं गोजिदीर्घकम् ॥ २० ॥

अधरन्तु ( त्रि ) यवांगुल्यं शेषं हन्वन्तमिष्यते ।
कण्ठाद्धनुस्तिमात्रार्धं कण्ठतारं कला भवेत् ॥ २१ ॥

अनुबन्धः

द्वियवाधिकभागन्तु कर्णदैर्घ्यं प्रशस्यते ।
नालालंबं भवेद्घ्राणमालं मण्डनसंयुतम् ॥ २२ ॥

गजहस्तसमं पादं गोवालाकारहस्तकम् ।
शेषं पूर्ववदुद्दिष्टं देवीमानं विचक्षणैः ॥ २३ ॥

इत्यागस्त्ये सकलाधिकारे मध्यमदशतालस्त्रीमानकथनं
तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः

मध्यमे दशताले च पौरुषं मानमुच्यते ।
बिंबोच्छ्रयं शतं विंशं एकांश द्वियवं शिरः ॥ १ ॥

कण्ठजानुतलोच्चञ्च द्वियवं चतुरङ्गुलम् ।
नेत्रान्तं पुटहन्वन्तमानमेतत्समं त्रिषु ॥ २ ॥

षडयवं द्वादशांगुल्यं स्यात्
नाभ्यन्तं मेढ्रान्तं त्रयोदशांगुल्यं स्यात् ।
षडयवं द्वादशं नाभिमेढ्रान्तं
त्रयोदशांशं स्यात् ॥ ३ ॥

ऊरुदीर्घं तद्द्विगुणद्वियवहीनन्तु तत्समम् ।
एवं तु जंघादैर्घ्यं स्यात् तलं सप्तदशांगुलम् ॥ ४ ॥

कूर्परं द्व्यंगुलं प्रोक्तं प्रकोष्ठं विंशदंगुलायतम् ।
बाहुदैर्घ्यञ्च षड्विंशदंगुलं कूर्परं द्वयम् ॥ ५ ॥

प्रकोष्ठञ्च विजानीयात् विंशदंगुलमायतम् ।
तलं त्रयोदशांशञ्च बाहुपर्यन्तविस्तरम् ॥ ६ ॥

नवत्रिंशांगुलञ्च स्यात् मुखं रुद्रार्धविस्तरम् ।
कर्णमूलं बाहुमूलं जानुमध्यमक्षान्तम् ॥ ७ ॥

एकैकं नवांगुलं स्यात् कक्षान्तरं द्वियंगुलम् ।
वक्षःस्थलमेकविंशतिः विस्तारं मध्योदरस्य तु ॥ ८ ॥

पञ्चविंशत्यंगुलाधिकं श्रोणिदेशस्य विस्तरम् ।
तस्मात्पुनर्द्व्यंगुलाधिकं कटिविस्तार उच्यते ॥ ९ ॥

ऊरुमूलविशालं स्यात् त्रयोदशमथांगुलम् ।
ऊरुमध्यविशालन्तु दशार्धमंगुलं तथा ॥ १० ॥

जंघामध्यं सप्तांगुलं नलका तत्समायता ।
ललाटे पूर्वविस्तारं अष्टांशञ्च यवाधिकम् ॥ ११ ॥

अक्षिगुल्फान्तं पञ्चमात्रं पार्ष्णिः सद्वियवं चतुरंगुलम् ।
त्रियवयुतं चतुरंगुलं विस्तारोत्सेध एव च ॥ १२ ॥

सद्वियवं पञ्चांगुलं पादमध्यविस्तार एव च ।
षडर्धांगुलमानं स्यात् पादाग्रतलविस्तरम् ॥ १३ ॥

अंगुष्ठादिकनिष्ठान्तमंगुलीदीर्घ एव च ।
सद्वियवं चतुरं सत्रियवं त्र्यंगुलार्धकम् ॥ १४ ॥

तेषां नवतिविस्तारमंगुलं पंचयवं तथा ।
चतुस्त्र्यर्धत्रियवदीर्घमष्टांशहीनमेव च ॥ १५ ॥

अष्टमात्रं सप्तमात्रं षण्मात्रं पञ्चद्वित्रियवम् ।
सार्धत्रिमात्रं बाहुमध्यं कूर्परञ्च प्रकोष्ठकम् ॥ १६ ॥

पञ्चांगुलद्वियवदीर्घं प्रदेशिन्यास्तत्समं स्यादनामिका ।
सयवं चतुरंगुलं अंगुष्ठकनिष्ठिकादैर्घ्यं स्यात् ॥ १७ ॥

तलविस्तारं षडंगुलार्धं घनं द्व्यर्धमात्रं स्यात् ।
दशाष्टनवषड्यवाः क्रमेण अंगुष्ठादिकनिष्ठिकान्तम् ॥ १८ ॥

अष्टपञ्चपञ्चार्धपञ्चत्रियवार्धविस्तरम् ।
नखविस्तारं नखदीर्घं द्वियवाधिकं स्यात् ॥ १९ ॥

दीर्घं यवाधिकं पञ्चांगुलं द्व्यंगुलार्धविस्तरम् ।
लिंगं च मुष्कविस्तारं चतुरंगुलं तत्समालम्बम् ॥ २० ॥

ललाटे पुरोगविस्तारमष्टांगुलं कर्णयोर्बाह्यविस्तृतिः ।
त्रयोदशांशं तयोरन्तरं नेत्रदीर्घं सद्वियवद्वियंगुलम् ॥ २१ ॥

कृष्णमडलमध्ये तु ज्योतिर्यवप्रमाणकम् ।
दृष्टिस्तु यूकमात्रा तु मध्ये यवायतकनीनिका ॥ २२ ॥

अपांगे रक्तिमा द्वियवं अर्धयवमूर्ध्ववर्म द्वियवम् ।
अधोगमर्धयवं स्यात् नेत्रसूत्रं तदूर्ध्वे यवाधिकम् ॥ २३ ॥

द्व्यंगुलं भ्रुवोर्मध्यं स्यात् सममेवं कर्णसूत्रकम् ।
भ्रूदैर्घ्यं पञ्चमात्रं स्यात् भ्रूमध्यविस्तारं सार्धयवम् ॥ २४ ॥

भ्रुवोऽन्तरनमनमंगुलं चापाकारं
श्रितरोम सन्नतञ्च स्यात् ।
कर्णञ्च मूलनालान्तं द्वियवं चतुरंगुलं
नालालंबं मण्डलसंयुक्तं भवेद्वेदांगुलायतम् ॥ २५ ॥

द्व्यन्तरं सप्तांगुलं गोजीमूलाच्च साग्रतुंगम् ।
यवोन्नतं द्व्यंगुलञ्च पुष्करोत्सेधं षड्यवम् ॥ २६ ॥

तस्य तारं यवं मुक्त्वा द्विनासिकांगुलायामम् ।
विस्तारं पुटस्यार्धमात्रं स्यात् तथा पुटघनं यवम् ॥ २७ ॥

गोज्यायामं चतुर्यवं विस्तारं द्वियवं तथा ।
उत्तरोष्ठस्य विस्तारं चतुर्यवं पालि यवतारम् ॥ २८ ॥

तस्यायामं यवाधिकचतुरंगुलमधरस्य ।
विस्तारं सयवमंशं स्यात् तस्यायामम् ॥ २९ ॥

अनुबन्धः

द्वियवाधिकं द्व्यंगुलं पालिका यवतारकम् ।
षड्यवं तस्य तूत्सेधं रक्तं शेषं भविष्यति ॥ ३० ॥

हनुप्रमाणं हनुबाह्यगलसीमान्तं द्वियवाधिकं सयवमात्रम् ।
गलात्कर्णान्तं द्व्यंगुलं द्वियवं शेषं स्याद्दशतालवत् ॥ ३१ ॥

इति चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः

अधमे दशताले च श्रीमानमिह कथ्यते ।
वेदवेदशतांगुल्यं पादमुष्णीषसीमकम् ॥ १ ॥

उष्णीषकंठजानु च तलोच्चं चतुरंगुलम् ।
अक्ष्यन्तं पुटसीमान्तं हनु द्वियवसंयुतम् ॥ २ ॥

उष्णीषकंठजानु च तलोच्चं चतुरंगुलम् ।
अक्ष्यन्तं पुटसीमान्तं हनु द्वियवसंयुतम् ॥ ३ ॥

कंठातु हृदयं नाभिः नाभेर्मेढ्रान्तदीर्घकम् ।
एकैकं मुखमायं स्यात् पञ्चविंशांगुलायतम् ॥ ४ ॥

ऊरुजंघाबाहुसममायतं षोडशांगुलम् ।
पादायामं बाहूरुतुल्यं द्व्यंगुलं कूर्परं तथा ॥ ५ ॥

प्रकोष्ठमेकोनविंशं षडर्धं तलदीर्घकम् ।
मध्यांगुलन्तु षण्मात्रं मुखं रुद्रांशतारकम् ॥ ६ ॥

ग्रीवा सप्तांगुलं तारं बाहुमूलं तथा भवेत् ।
तत्समं जानुविस्तारं कक्षान्तरमुदाहृतम् ॥ ७ ॥

सप्तदशांगुलं प्रोक्तं स्तनतारं नवांगुलम् ।
तदर्धं चोन्नतं विद्यात् चूचुकं त्रियवं भवेत् ॥ ८ ॥

स्तनाक्षञ्चार्धमात्रन्तु उन्नतं द्वियवं भवेत् ।
सुवृत्तं मुखोन्नतं पीनपुटं शुभतरं स्तनम् ॥ ९ ॥

त्रयोदशांगुलं तारं स्तनतो हृदयावधि ।
मध्यमेकादशांगुल्यं श्रोणिर्विंशतिमात्रकम् ॥ १० ॥

चतुर्विंशतिरंगुल्यं कटिश्चोरुविस्तरम् ।
नलका चतुरंगुल्यं पंचमात्रांगुलं भवेत् ॥ ११ ॥

द्वादशांगुलमेवं स्यात् जंघामध्यं रसांगुलम् ।
पार्ष्णितारोच्चमात्रं स्यात् चतुरंगुलं यवाधिकम् ॥ १२ ॥

प्रपदं पञ्चमात्रं स्यात् तलाग्रन्तु षडंगुलम् ।
वेदमंगुष्ठदीर्घं स्यात् सयवन्तु प्रदेशिनी ॥ १३ ॥

त्रिमात्रार्धं मध्यांगुल्यमनामा तु त्रिमात्रिका ।
कनिष्ठा व्यर्धमात्रन्तु क्रमेण ततमिष्यते ॥ १४ ॥

व्येकमात्रं सार्धसप्तसप्तषड्यवसार्धकम् ।
तत्तारार्धन्तु विस्तारं नखं पादोनदीर्घकम् ॥ १५ ॥

षट्पञ्चचतुरग्निश्च बाहुकूर्परमध्यमम् ।
प्रकोष्ठं मणिबन्धश्च क्रमेण विस्तृतं भवेत् ॥ १६ ॥

तलतारं षडंगुल्यं तद्धनं व्यंगुलं भवेत् ।
प्रदेशिनी प्राणमात्रमनामा च समं भवेत् ॥ १७ ॥

कनिष्ठा चतुरंगुल्यमंगुष्ठं तत्समं भवेत् ।
अंगुष्ठादि ततं द्वारसप्ताष्टषड्यवाः ॥ १८ ॥

अग्रे षडंशवेदांशविस्तारं नखदीर्घकम् ।
यवाधिकं भवेत्सीमा भ्रुवोर्मात्रं तथान्तरम् ॥ १९ ॥

द्विमात्रद्वियवं प्रोक्तं पुटमंगुलमास्यकम् ।
गोज्यायामं तदर्धं स्यात् आस्यायामं त्रिमात्रकम् ॥ २० ॥

त्रिवक्रोत्तरपाली स्यात् उत्तरं व्यंगुलं भवेत् ।
तदर्धविस्तृतं पाली यवं शेषन्तु रक्तभाक् ॥ २१ ॥

सयवद्व्यंगुलं नेत्रदीर्घं षडयवकान्तरम् ।
यूका दृष्टिस्तथा नासापुटं तु द्व्यंगुलं भवेत् ॥ २२ ॥

कर्णार्धन्तु त्रिमात्रार्धं तुंगं षडयवमंगुलम् ।
गोजीमूलन्तु नासाग्रं तुंगमस्य विशालकम् ॥ २३ ॥

तद्वृद्धिमात्रद्वियवोपेतं चतुरंगुलमायतम् ।
नालालंबं तथा शेषमेवमूह्यं विचक्षणैः ॥ २४ ॥

उत्तमे दशताले चेत् देवो देव्योश्च मध्यमे ।
मध्यमे दशताले चेद्देवो देव्यौ कनिष्ठिके ॥ २५ ॥

ब्रह्मेशाकेशवानाञ्च देवीनाञ्च प्रमाणकम् ।
श्रेष्ठमध्यमहीनेन दशतालेन कारयेत् ॥ २६ ॥

वेदोर्ध्वं विंशतिशतं शतं विंशतिश्च ।
वेदोनविंशतिरिति क्रमेण त्रिविधं मतम् ॥ २७ ॥

इति पञ्चमोऽध्यायः ।

सा या ब्रह्मणि चिति या व्यष्टिः तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद । स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा नोपजनं स्मरन्निदं शरीर' मित्यादि । अर्चिरादिमार्गेण गतस्य न पुनरावृत्तिः । यथा क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति ।' इति देवयानमार्गं प्रतिपाद्य धूमादिमार्गश्च कथ्यते । धूमः कृष्ण इत्यादि । छान्दोग्ये यथा । 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षडुदक्षिणैति मासान् तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते असौ वै खलु दुर्निष्प्रपतरं यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति । तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा' इत्यादि । गती चोभे विज्ञायेत्यादि । चकारात् यमलोकगामिनी गतिरपि ज्ञातव्यं इति स्मारयति । तथा छान्दोग्ये । 'अथ य इह निषिद्धकारिणो मृताः क्रूरैः यमकिंकरैः निर्दयं बद्धाः निशितशूलतप्तवालुकांगारकीर्णेन छायाजलरहितेन तमोवृतेन यममार्गेण नीयमानाः निर्दयं स्वकर्मानुरूपं यमेन चोदिताः रौरवादिषु बहुबाधामनुभूय अतो निवृत्ताः दुष्टचरणाः अभ्याशोह यत्ते कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । अथैतयोः पथोर्न कतरेण पथा तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्मात् जुगुप्सेत' इति । एवं तिस्रो गतीर्विज्ञाय शान्तिं ज्योतिष्मतीं जपति । यममार्गगमननिरसनार्थं ज्योतिर्जपः ।

यत्तु—

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतन्तु गर्हितम्' ॥